गांधीनाथारंग-जैनग्रंथमाला ।



श्रीमद्विद्यानंदिस्वामिविरचितं

# तत्त्वार्थश्लोकवार्तिकम् ।



न्यायवाचस्पतिस्वर्गीयगुरुवर-गोपालदासांतेवासिना

जैनग्रंथ-उद्धारककार्यालय-व्यवस्थापकेन

पं० मनोहरलाल-न्यायशास्त्रिणा

संपादितं संशोधितं च



तच्च श्रेष्ठिवर्य-रामचंद्रनाथारंगजी-इत्येतैः

मुम्बापुर्यां

निर्णयसागराख्यमुद्रणयंत्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

श्रावण शुक्ला ७, वीरनिर्वाण सं० २४४४ विक्र० सं० १९७५ सन् १९१८

मूल्य रु. ४०—००

# गांधीनाथारंग-जैनग्रंथमालाद्वारा प्रकाशितग्रंथसूची।

१ अष्टसहस्री—आचार्यविद्यानंदिकृत महान् न्यायग्रंथ। मू० २॥)

२ श्लोकवार्तिक—आचार्यविद्यानंदिकृत तत्त्वार्थसूत्रकी सबसे बड़ीटीका। मू० ४) रु० लागतमात्र.

३ पार्श्वाभ्युदय—भगवज्जिनसेनाचार्यकृत, मेघदूतकाव्यकी समस्यापूर्तिरूप, सटीक। मू० ॥)

४ परीक्षामुख—(प्रमेयरत्नमालाटीका) माणिक्यनंदि आचार्यकृत मूल तथा अनंतवीर्यकृत टीका। मू० ॥)

५ विश्वलोचनकोश—आचार्य श्रीधरसेनकृत मूल तथा हिंदी अर्थ सहित। मू० १।≈)

६ गोंमटसार जीवकांड—मूल संस्कृत छाया उत्थानिकासहित। मू० ।≈)

७ जैनेंद्रप्रक्रिया—(पूर्वार्ध) पं० वंशीधरजी-न्यायतीर्थकृत। मू० १॥)

मिलनेके पते—

१ मैनेजर—गांधीनाथारंगजैनग्रंथालय,
पो० मांडवी—बंबई.

२ मैनेजर—जैनग्रंथउद्धारककार्यालय,
खत्तरगली हौदावाड़ी
पो० गिरगांव—बंबई.

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press, 23, Kolbhat Lane Bombay.

Published by Ramchandra Natharangji, Gandhi, 2nd floor, over Central Bank,
Post Mandvi, Bombay.

# प्रस्तावना ।

प्रियविज्ञपाठकाः! अथाहं श्रीजिनेंद्रदेवकृपया गुरुकृपया च भवत्संमुखमीदृशं ग्रंथरत्नमुपस्थापयामि यद्द्वादशांगश्रुतस्य सारभूतमस्ति । एतन्मूलमात्रं तत्त्वार्थसूत्रनाम्ना प्रथितं तज्जैनदर्शनापरनाम्नाप्युच्यते । एतन्मूलग्रंथस्य रचयिता भगवानुमास्वाम्याचार्यः सत्तपोयोगात् प्राप्तचारणर्द्धिः पद्मनंद्याद्यपराभिधानो बभूव । श्वेताम्बरसंप्रदायेऽस्याचार्यस्य उमास्वातिरिति ख्यातिः, अनेन ज्ञायतेऽस्याचार्यस्य सर्वत्र जैनसंप्रदाये मान्यतास्ति । ख्रिस्तशतकात्पूर्वं महावीरशतकं षट्शतवार्षिकमिति प्रसिद्धिस्तत्प्रमाणत्वेन गृहीतं चेदितोऽष्टादशशतवर्षतः पूर्वमयमुमास्वामी बभूवेति निश्चीयते । एकदा स जैनसिद्धांतविषयिणीं स्वमनोगतां कांचिच्छंकामपाकर्तुं श्रीमदर्हत्परमेश्वरश्रीमंधरतीर्थकरचरणाराधनार्थं चारणर्द्धिबलादाकाशमार्गेण विदेहक्षेत्रं गतवान्, गमनसंभ्रमात्तस्य हस्तन्यस्ता मयूरपिच्छिका कापि निःसृत्याधः पतिता, तदानीमाकाशे विहरतः कस्यचिद्गृद्ध्रस्य पिच्छं गृहीत्वा स्वकार्यं विधायाग्रे गतवानिति तेन गृद्ध्रपिच्छ इत्यपरं नाम संप्राप्तमिति कथा वृद्धपरंपरया श्रूयतेऽस्माभिः । एतद्विषयेऽन्यत्राप्युक्तं । "तत्त्वार्थसूत्रकर्तारं गृद्ध्रपिच्छोपलक्षितं । वंदे गणीन्द्रसंजातमुमास्वामिमुनीश्वरं" इति । अयं भगवानुमास्वामी स्वजन्मना कां भूमिमलंचकारेति नास्माभिर्ज्ञायते साधनाभावात् । एतद्ग्रंथरचने निमित्तमुभयप्रकारेण दर्शितमन्यत्र तदिह समुद्ध्रियते । तथाहि—कश्चित् शिवकुमारमहाराजनामा निकटभव्यः चतुर्गतिसंसारदुःखभयभीतः प्रज्ञावान् स्वहितमुपलिप्सुः समुत्पन्नपरमभेदविज्ञानप्रकाशातिशयसामर्थ्येन समस्तदुर्नयैकांतनिराकृतदुराग्रहः अत्यंतमध्यस्थो भूत्वा विविक्ते परमरम्ये भव्यसत्त्वविश्रामास्पदे क्वचिदाश्रमपदे मुनिपरिषन्मध्ये सन्निषण्णं मूर्तमिव मोक्षमार्गमवाग्विसर्गं वपुषा निरूपयंतं युक्त्यागमकुशलं परहितप्रतिपादनैककार्यमार्यनिषेव्यं पूर्वोक्तनिर्ग्रंथाचार्यवर्यमुपसद्य सविनयं परिपृच्छतिस्म । भगवन्! किं नु खलु आत्मने हितं स्यादिति? स आह मोक्ष इति । स एव पुनः प्रत्याह—सर्ववाद्यभिमतस्य कृत्स्नकर्मविप्रमोक्षसामान्यस्वरूपमोक्षस्य कः प्राप्त्युपायः? स आह सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः इति । एतत्सूत्रव्याख्यानाभिप्रायेणैवास्य ग्रंथस्य रचना इत्येकं निमित्तं । अथवा आरातीयपुरुषशक्त्यपेक्षत्वात् सिद्धांतप्रक्रियाविष्करणार्थं मोक्षकारणनिर्देशसंबंधेन शास्त्रानुपूर्वीं रचयितुमन्विच्छन्निदं कृतवान्नात्र शिष्याचार्यसंबंधो विवक्षितः, किंतु संसारसागरनिमग्नानेकप्राणिगणाभ्युज्जिहीर्षा प्रत्यागूर्णोन्तरेण मोक्षमार्गोपदेशं हितोपदेशो दुष्प्राप इति निश्चित्य स्वयं मोक्षमार्गं व्याचिख्यासुरिदं ग्रंथसदर्भं कृतवानिति द्वितीयं निमित्तम् ।

तत्त्वार्थसूत्रनाम्नाख्यातस्यैतस्य जैनदर्शनस्योपरि बह्व्यष्टीकाः श्रीमदनेकाचार्यवर्यैर्निर्मिताः परं तास्विदानीं या उपलभ्यंते तासां नामोल्लेखः क्रियते । **सर्वार्थसिद्धिनाम्नी** वृत्तिः श्रीमत्पूज्यपादस्वामिविरचिता १, **तत्त्वार्थवार्तिकालंकारः** श्रीमदकलंकदेवविरचितः षोडशसहस्रपरिमितः २, **तत्त्वार्थश्लोकवार्तिकालंकारः** श्रीमद्विद्यानंदिस्वामिविरचितः विंशतिसहस्रपरिमितः ३, **गंधहस्तिमहाभाष्यं** श्रीमत्समंतस्वामिविरचितं चतुरशीतिसहस्रपरिमितं ४, **श्रुतसागरीटीका** श्रीश्रुतसागरसूरिविरचिता ५, इति । एतासु टीकासु श्रुतसागरीनाम्नी सुबोधिनीटीका मुद्रितैव न, परं लिखिता तु यत्र तत्र सरस्वतीभवने वर्तते । गंधहस्तिमहाभाष्यं तु लुप्तप्रायमेवेति तदवलोकनस्यापि निराशैव । केवलमधुनातनसमये सर्वोपरि बृहट्टीका तत्त्वार्थश्लोकवार्तिकनाम्नी एव मुमुक्षुभाग्योदयेन श्रीश्रेष्ठिवर्यनाथारंगगांधी—ग्रंथमालातः प्राकाश्यपदवीं नीता । अस्यामेव महाभाष्यदर्शनाभिलाषिणः सहृदया हृदयं संतोषयंतु ।

एतत्कर्तुः विद्यानंदिस्वामिनः पात्रकेसरीत्यपराख्यस्य परिचयः—**"जीयान्निरस्तनिःशेषसर्वथैकांतशासनं । सदा श्रीवर्द्धमानस्य विद्यानंदस्य शासनं ॥"** इति पत्रपरीक्षायाम् । विद्यानंदिन एवाप-

रनाम पात्रकेसरी अस्तीति सम्यक्त्वप्रकाशस्थितोल्लेखेन ज्ञातव्यं। यथा—"तथा श्लोकवार्तिके विद्यानंद-परनामपात्रकेसरिस्वामिना यदुक्तं तच्च लिख्यते—तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्यत्र सूत्रे ननु सम्यग्दर्शनेत्यादि। अनेनोल्लेखेन विद्यानंदिन एव पात्रकेसरित्वं सूचितं तेन द्वितीयः पात्रकेसरीतिनामकश्चि-त्कवीनां भ्रमो निरस्तः। वादिचंद्रसूरिणा स्वकीयज्ञानसूर्योदयनाटके चतुर्थेऽङ्के अष्टशतीनामकस्त्रीपात्रात् पुरुषं प्रति ईदृग्वक्तुं प्रेरणा कृता—"देव! ततोऽहमुत्पालितहृदया श्रीमत्पात्रकेसरिमुखकमलं गता तेन साक्षात्कृतसकलस्याद्वादाभिप्रायेण लालिता पालिताष्टसहस्रीतया पुष्टिं नीता, देव! स यदि नापालयिष्यत्तदा कथं त्वामद्राक्षं?" अस्यायमभिप्रायः—अकलंकदेवविरचितः अष्टशतीनामकग्रंथो वर्तते तमवलोक्य जैनेतरे विद्वांसः क्रुद्धाः संजाताः तस्योपर्याक्रमितुमारब्धं तैः। एतद्दृष्ट्वा पात्रकेसरी-स्वामिना अष्टसहस्रीटीकां विरच्य तदभिप्रायः संपुष्टिं नीतः। अनेन विज्ञायते यदष्टसहस्रीप्रणेता विद्यानंद्येव पात्रकेसरी नान्यः। केषांचिदयं निश्चयः यदयं विद्यानंदिस्वामी नंदिसंघीयाचार्य आसीत्। अनेन कस्मात्सकाशाद्दीक्षा गृहीता कश्चास्य गुरुरिति न किमपि विज्ञायते। स्वीयग्रंथेष्वप्यनेन गुरुपरं-पराया: परिचयो न दत्तः। अस्य कथा भट्टारकप्रभाचंद्रेण ब्रह्मनेमिदत्तेन च स्वकीयकथाकोशेषु पात्रके-सरिणः कथा निबद्धा, तेन किंचिदेव प्रतीतिर्भवति। आराधनाकथाकोशे यथा—

अत्रैव भरतक्षेत्रे पवित्रे श्रीजिनेशिनाम्। विचित्रैः पंचकल्याणैः सर्वभव्यप्रशर्मदैः॥ १७॥
निवासे सारसम्पत्तेर्देशे श्रीमगधाभिधे। अहिच्छत्रे जगच्चित्रे नागरैर्नगरे वरे॥ १८॥
पुण्यादवनिपालाख्यो राजा राजकलान्वितः। प्राज्यं राज्यं करोत्युच्चैर्विप्रैः पञ्चशतैर्वृतः॥ १९॥
विप्रास्ते वेदवेदाङ्गपारगाः कुलगर्विताः। कृत्वा सन्ध्याद्वये सन्ध्यावन्दनां च निरन्तरम्॥ २०॥
विनोदेन जगत्पूज्यश्रीमत्पार्श्वजिनालये। दृष्ट्वा पार्श्वजिनं पूतं प्रवर्तन्ते स्वकर्मसु॥ २१॥
एकदा ते तथा कृत्वा सन्ध्यायां वन्दनां द्विजाः। जिनं द्रष्टुं समायाताः कौतुकाज्जिनमन्दिरे॥२२॥
देवागमाभिधं स्तोत्रं पठन्तं मुनिसत्तमम्। चारित्रभूषणं तत्र श्रीमत्पार्श्वजिनाग्रतः॥ २३॥
दृष्ट्वा सम्पृष्टवानित्थं तन्मुख्यः पात्रकेसरी। स्वामिन्निमं स्तवं पूतं बुध्यसे? स मुनिस्ततः॥ २४॥
नाहं बुध्येऽर्थतश्चेति संजगौ प्राह स द्विजः। पुनः सम्पठ्यते स्तोत्रं भो मुने यतिसत्तम॥ २५॥
ततस्तेन मुनीन्द्रेण देवागमनसंस्तवः। पठितः पदविश्रामैः सतां चेतोनुरञ्जनैः॥ २६॥
शब्दतश्चैकसंस्थत्वात्तदासौ पात्रकेसरी। हेलया मानसे कृत्वा देवागमनसंस्तवम्॥ २७॥
तदर्थं चिन्तयामास स्वचित्ते चतुरोत्तमः। ततो दर्शनमोहस्य क्षयोपशमलब्धितः॥ २८॥
यदुक्तं श्रीजिनेन्द्रस्य शासने वस्तुलक्षणम्। जीवाजीवादिकं सत्यं तदेवात्र त्रिविष्टपे॥ २९॥
नान्यथेति समुत्पन्नजैनतत्त्वार्थसद्रुचिः। गत्वा गृहे पुनर्धीमान् स विप्रो वस्तुलक्षणम्॥ ३०॥
चित्ते सचिन्तनं कुर्वन्रात्रौ विप्रकुलाग्रणीः। जीवाजीवादिकं वस्तु प्रमेयं जिनशासने॥ ३१॥
तत्त्वज्ञानं प्रमाणं च प्रोक्तं तत्त्वार्थवेदिभिः। लक्षणं नानुमानस्य भाषितं तच्च कीदृशम्॥ ३२॥
श्रीमज्जिनमतेऽस्तीति सन्देहव्यग्रमानसः। यावत्सन्तिष्ठते तावन्निजासनप्रकम्पनात्॥ ३३॥
पद्मावत्या महादेव्या तत्रागत्य ससम्भ्रमम्। स द्विजो भणितस्तूर्णं भो श्रीमन्पात्रकेसरिन्॥ ३४॥
प्रातः श्रीपार्श्वनाथस्य दर्शनादेव निश्चयः। लक्षणे चानुमानस्य सम्भविष्यति ते तराम्॥ ३५॥
इत्युक्त्वा संलिलिखित्वेति पार्श्वेशफणमण्डपे। सा गता ह्यनुमानस्य लक्षणं श्लोकमुत्तमम्॥ ३६॥
"अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्। नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्॥"
देवतादर्शनादेव सञ्जाता तस्य शर्मदा। श्रीमज्जैनमते श्रद्धा भवभ्रमणनाशिनी॥ ३७॥

प्रभाते परमानन्दात्पार्श्वनाथं प्रपश्यतः । फणाटोपेऽनुमानस्य लक्षणश्लोकदर्शनात् ॥ ३८ ॥
जातस्तल्लक्षणोत्कृष्टनिश्चयश्च द्विजन्मनः । भास्करस्योदये जाते न तिष्ठति तमो यथा ॥ ३९ ॥
ततोऽसौ ब्राह्मणाधीशः पवित्रः पात्रकेसरी । प्रहर्षाञ्चितसर्वाङ्गो जिनधर्ममहारुचिः ॥ ४० ॥
देवोऽर्हन्नेव निर्दोषः संसाराम्भोधितारकः । अयमेव महाधर्मो लोकद्वयसुखप्रदः ॥ ४१ ॥
एवं दर्शनमोहस्य क्षयोपशमयोगतः । अभूदुत्पन्नसम्यक्त्वरत्नरञ्जितमानसः ॥ ४२ ॥
तथानिशं जिनेन्द्रोक्तं तत्त्वं त्रैलोक्यपूजितम् । पुनःपुनर्महाप्रीत्या भावयन्पात्रकेसरी ॥ ४३ ॥
तैर्द्विजैर्भणितश्चैवं किं मीमांसादिकं त्वया । त्यक्त्वा संसर्यते जैनमतं नित्यमहो हृदि ॥ ४४ ॥
तच्छ्रुत्वा भणितास्तेन ते विप्रा वेदगर्विताः । अहो द्विजा जिनेन्द्राणां मतं सर्वमतोत्तमम् ॥ ४५ ॥
अतः कारणतः कष्टं त्यक्त्वा मिथ्याकुमार्गकम् । भवद्भिश्चापि विद्वद्भिः संग्राह्यं जैनशासनम् ॥४६॥
ततो राजादिसान्निध्ये पात्रकेसरिणा मुदा । जित्वा सर्वद्विजांस्तांश्च विवादेन स्वलीलया ॥ ४७ ॥
समर्थ्य शासनं जैनं त्रैलोक्यप्राणिशर्मदम् । स्वसम्यक्त्वगुणं सारं सम्प्रकाश्य पुनः पुनः ॥ ४८ ॥
कृतोऽन्यमतविध्वंसो जिनेन्द्रगुणसंस्तुतिः । संस्तवः परमानन्दात्समस्तसुखदायकः ॥ ४९ ॥
पात्रकेसरिणं दृष्ट्वा ततः सर्वगुणाकरम् । सारपण्डितसन्दोहसमर्चितपदद्वयम् ॥ ५० ॥
ते सर्वेऽवनिपालाद्यास्त्यक्त्वा मिथ्यामतं द्रुतम् । भूत्वा जैनमतेऽत्यन्तं संसक्ताः शुद्धमानसाः ॥५१॥
गृहीत्वा सारसम्यक्त्वं संसाराम्भोधितारणम् । प्राप्य श्रीजैनसद्धर्मं स्वर्मोक्षसुखकारणम् ॥ ५२ ॥
त्वं भो द्विजोत्तम श्रीमज्जैनधर्मे विचक्षणः । त्वमेव श्रीजिनेन्द्रोक्तसारतत्त्वप्रवीक्षणः ॥ ५३ ॥
त्वं हि श्रीजिनपादाब्जसेवनैकमधुव्रतः । इत्युच्चैः स्तवनाद्यैस्तं पूजयन्ति स्म भक्तितः ॥ ५४ ॥
इत्थं श्रीशिवशर्मदं शुचितरं सम्यक्त्वमुद्योतनं कृत्वा प्राप नरेन्द्रपूजनपदं पात्रादिकः केसरी ।
अन्यश्चापि जिनेन्द्रशासनरतः सद्दर्शनोद्योतनं भक्त्या यस्तु करोति निर्मलयशाः स स्वर्गमोक्षं भजेत् ५५

अनया कथया विद्यानंदिस्वामिविषये केवलमित्येव प्रतीयते यत्स मगधदेशराज्यांतर्गताहिच्छत्राख्यनगरनिवासी ब्राह्मणकुलोत्पन्नश्च, जैनधर्मधारणात्पूर्वं स नैयायिकमीमांसकादिमतानुयाय्यपि इति । 'अहिच्छत्र' इत्यस्यापरनामाधुनापि 'अहिक्षितिपार्श्वनाथ' इत्याख्यया प्रसिद्धमासीत् । एवं रामनगरेति नाम्नापि व्यवहरंति । अयं च यू. पी. प्रांतस्थ-बरेलीमंडलांतर्गतः, एनं जैनाः स्वीयपूज्यक्षेत्रमामनंति । जैनाभिमतभगवत्पार्श्वनाथतीर्थंकरस्य केवलज्ञानोत्पत्तिरत्रैव बभूव, तदुपरि पूर्वजन्मवैरिणा कमठेनेहैव महानुपसर्गः कृतः, तदानींतनसमये धरणेंद्रनामकाहिना नागकुमारदेवपतिना छत्रस्वरूपीभूय भगवतो रक्षा कृता, तत्रेदानीमपि पार्श्वनाथजिनालयो विद्यते तेनैव पूर्वोक्ततीर्थस्य ख्यातिरिति । पूर्वोक्तकथायां विद्यानंदिस्वामी उत्तरभारतनिवासीति सूचितं, परं कतिपयकथानकैरित्यपि सूच्यते यत्स दक्षिणकर्णाटकनिवासीति । तथाहि—कर्णाटकदेशस्थ**शिमोगा**प्रांतांतर्वर्ति**हुमचा**ग्रामे प्राप्तशिलालेख इत्थं—"नगरराजपट्टणमहीपतिनंजपरिषदि श्रीमद्विद्यानंदिस्वामिना नंदनमल्लिभट्टाभिधो विदग्धो विहितानवद्यविवादेन विजिग्ये" इत्यादिना शिलालेखेन कर्णाटकनिवासित्वं सूचितं, कथाकोशानुसारेण तु मगधदेशीयत्वं दर्शितं, अनयोर्विषये इत्येव संभाव्यते यद्विद्यानंदिस्वामिनो जन्मभूमिर्मगधदेशः स्यात्, पश्चात् पर्यटनं कृत्वा कर्णाटकदेशमलंकृत्य तत्रैव दिग्विजयप्राप्तिः कृता स्यात्तेन । विरोधिप्रमाणाभावान्न किंचिदसंभवः ।

अस्य समयनिर्णयस्त्वित्थं—विद्यानंदिस्वामिना स्वनिर्मिताष्टसहस्रीग्रंथे भर्तृहरिरचितवाक्यपदीयग्रंथस्य निम्नलिखितश्लोक उद्धृतः ॥ "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितम् ॥" इति । भर्तृहरिसमयः प्रो०पाठकादिविद्वद्भिः ६५० ऐशवीयनिकटवर्तीति निश्चितं,

चीनदेशस्थो हुएनसंगः ६२९ ऐश्वीयसंवत्सरे भारतभ्रमणार्थं समागतः स्थितश्च ६४५ पर्यंतं, तेन स्वप्रवासवर्णने लिखितं—"अधुनातनसमये व्याकरणशास्त्रपांडित्यविषये भर्तृहरिरेव प्रसिद्धः"। अनेन ज्ञायते यद्विद्यानंदी ६५० ऐशवीयसंवत्सरात्पश्चात् प्रादुर्बभूव। अष्टसहस्रीमध्ये प्रसिद्धवेदांतविशारदकुमारिलभट्टस्य "भावना यदी" त्यादिपद्ययोर्भट्टशब्देनोल्लेखः कृतः, तत्सिद्धांतानां च प्रतिस्थानं खंडनं कृतं। कुमारिलभट्टस्य समयः ७६० ऐशवीयपर्यंतं निश्चितः, अतोपि विद्यानंदी तत्समकालीनस्तदनुगश्च प्रादुर्भूतः स्यात्। चिद्विलासकृत-शंकरदिग्विजयात् प्रतीयते यन्मंडनमिश्रस्यापरनाम सुरेश्वर आसीत्, सुरेश्वरश्च शंकराचार्यस्य शिष्य इति सुप्रसिद्धमेव। आद्यशंकराचार्यसमयः ७५०—८३८ ऐशवीयपर्यंतं निश्चितः अत एव मंडनमिश्रस्यापि एतन्निकटवर्ती समयो मंतव्यः। मंडनमिश्रनिर्मितं बृहदारण्यकोपनिषद्वार्तिकं नाम ग्रंथो वर्तते, एतत्तृतीयाध्यायश्लोकानां स्वीयाष्टसहस्रीनाम्नि ग्रंथे उद्धारं कृत्वा खंडनं कृतं। तथाहि—"यदुक्तं बृहदारण्यकवार्तिके—"आत्मापि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितं। ब्रह्मापि स तथैवात्मा स द्वितीयतयेक्ष्यते॥ आत्मा ब्रह्मेति पारोक्ष्यः स द्वितीयत्वबाधनात्। पुमर्थे निश्चितं शास्त्रमिति सिद्धं समीहितं॥ त्वत्पक्षे बहुकल्प्यं स्यात्सर्वं ज्ञानविरोधि च। कल्प्या विद्यैव मत्पक्षे सा चानुभवसंश्रये॥" इति कश्चित्, सोपि न प्रेक्षावान्। "ब्रह्म विद्यावदिष्टं चेन्ननु दोषो महानयं। निरवद्ये च विद्याया आनर्थक्यं प्रसज्यते"। अनेन विद्यानंदिसमयोपि मंडनमिश्रसमयसमवर्ती ८३८ ऐशवीयोनुमंतव्यः॥ कालिकातापत्तनस्थराजकीयसंस्कृतमहाविद्यालयप्रबंधकर्तृभिः (प्रिन्सिपाल) महामहोपाध्याय एम्. ए. पदवीप्रतिष्ठितैः विद्वद्वरैः **श्रीसतीशचंद्र**विद्याभूषणमहोदयैः स्वनिर्मित'इंडियन् मेडिकल लॉजिक' नाम्नि ग्रंथेपि विद्यानंदिस्वामिसमयः ८०० ऐशवीयनिकटवर्ती एव निश्चितः। इत्याद्यन्यैरपि निखिलप्रमाणैर्विद्यानंदिसमयः पूर्वोदितो अष्टमशताब्द्याः शेषार्धे नवम्या प्रारंभ इत्युभयवर्ती एव सिद्धः॥ एतत्स्वामिना दार्शनिकेन नैयायिकेन विदुषा पूर्वं तु **अष्टसहस्री**नामक आप्तमीमांसालंकारो निर्मितः, तदनु एष **श्लोकवार्तिकालंकारः**, तृतीयः **युक्त्यनुशासनटीके**ति प्रथितः, चतुर्थः **आप्तपरीक्षा**नामक इति, एतेभ्योन्येपि पत्रपरीक्षा-प्रमाणपरीक्षा-प्रमाणनिर्णयादिबहवो ग्रंथा अनेनैव प्राज्ञवरेण स्वामिना निर्मिताः॥

एतद्ग्रंथसंशोधनकार्ये पुस्तकमेकमतीवप्राचीनं जयपुरनगराल्लब्धं, द्वितीयं मुम्बईपट्टनस्थं किंचिदशुद्धप्रायं। तयोः साहाय्येन स्वज्ञानावरणक्षयोपशमानुसारेण च संशोधितं। किंचिद्भागस्य संशोधने **पं० खूबचंद्र**शास्त्रिणा साहाय्यं कृतमिति तं शतशो धन्यवादं ददे। प्रस्तावनाविषये **श्रीनाथूराम-प्रेमी**तः सहायता प्राप्तातस्तमपि हार्दिकधन्यवादेन प्रीणये। तदनु ददे च धन्यवादं कोटिशः **श्रीमन्नाथारंगजीश्रेष्ठी** इत्येतेषां कुटुम्बिनः **श्रीरामचंद्रसूरचंद्रश्रेष्ठिवर्यान्** यत्साहाय्येनायं महान् ग्रंथो मुद्रितो मुमुक्षुभव्यजीवानामवलोकनपथं प्राप्तः। तदनु च महामहोपाध्यायकालिकाताराजकीय**परीक्षालयाधिकारिणश्च** कोटिशो धन्यवादमभिभाषये येषां साहाय्येनायं ग्रंथराजः न्यायतीर्थपरीक्षायां पठनपाठनपदवीं प्राप्तः। तत्पश्चान्मद्विद्यागुरून् स्वर्गीय**गोपालदास** इत्येतान् स्मारं स्मारं हृदये निदधे येषां कृपाभारेणाहमेतद्ग्रंथसंशोधने क्षमो जातः। अंते चेत्येवं प्रार्थये सज्जनपाठकेभ्यः सुमेधोभ्यो यत्प्रमादात् दृष्टिदोषादन्यैश्च बहुभिः कारणैरशुद्धयो जाताश्चेत्तर्हि ते सुमेधसो मामल्पबुद्धिं विज्ञाय कृपां विधाय क्षमिष्यंतीति। कृतं पल्लवितेन विज्ञेषु।

**जैनग्रंथउद्धारककार्यालय**
खत्तरगली हौदावाड़ी पो० गिरगांव-**बंबई**
ता० १४।८।१८ ई०

विदुषामनुचरो
**मनोहरलालः।**

# अथ तत्त्वार्थश्लोकवार्तिकस्य विषयसूची ।

## पञ्चमोऽध्यायः ॥ ५ ॥



## षष्ठोऽध्यायः ॥ ६ ॥



## सप्तमोऽध्यायः ॥ ७ ॥



## अष्टमोऽध्यायः ॥ ८ ॥



## नवमोऽध्यायः ॥ ९ ॥



## दशमोऽध्यायः ॥ १० ॥



श्रीपरमात्मने नमः ।

## श्रीमद्विद्यानंदिस्वामिविरचितं

# तत्त्वार्थश्लोकवार्तिकम् ।



## प्रथमोऽध्यायः ।

**श्रीवर्धमानमाध्याय घातिसंघातघातनम् ।**
**विद्यास्पदं प्रवक्ष्यामि तत्त्वार्थश्लोकवार्तिकम् ॥ १ ॥**

श्रेयस्तत्त्वार्थश्लोकवार्तिकप्रवचनात्पूर्वं परापरगुरुप्रवाहस्याध्यानं तत्सिद्धिनिबंधनत्वात् । तत्र परमो गुरुस्तीर्थकरत्वश्रियोपलक्षितो वर्धमानो भगवान् घातिसंघातघातनत्वाद्यस्तु न परमो गुरुः स न घातिसंघातघातनो यथास्मदादिः । घातिसंघातघातनोसौ विद्यास्पदत्वाद्विद्यैकदेशास्पदेनास्मदादिनानैकांतिक इति चेन्न, सकलविद्यास्पदत्वस्य हेतुत्वाद्व्यभिचारानुपपत्तेः । प्रसिद्धं च सकलविद्यास्पदत्वं भगवतः सर्वज्ञत्वसाधनादतो नान्यः परमगुरुरेकांततत्त्वप्रकाशनाद् दृष्टेष्टविरुद्धवचनत्वादविद्यास्पदत्वादक्षीणकल्मषसमूहत्वाच्चेति न तस्याध्यानं युक्तम् । एतेनापरगुरुर्गणधरादिः सूत्रकारपर्यंतो व्याख्यातस्तस्यैकदेशविद्यास्पदत्वेन देशतो घातिसंघातघातनत्वसिद्धेस्सामर्थ्यादपरगुरुत्वोपपत्तेः । नन्वेवं प्रसिद्धोऽपि परापरगुरुप्रवाहः कथं तत्त्वार्थश्लोकवार्तिकप्रवचनस्य सिद्धिनिबंधनं यतस्तस्य ततः पूर्वमाध्यानं साधीय इति कश्चित्, तदाध्यानाद्धर्मविशेषोत्पत्तेरधर्मध्वंसात्तद्धेतुकविघ्नोपशमनादभिमतशास्त्रपरिसमाप्तिस्तत्सिद्धिनिबंधनमित्येके । तान् प्रति समादधते । तेषां पात्रदानादिकमपि शास्त्रारंभात्प्रथममाचरणीयं परापरगुरुप्रवाहाध्यानवत्तस्यापि धर्मविशेषोत्पत्तिहेतुत्वाविशेषाद्यथोक्तक्रमेण शास्त्रसिद्धिनिबंधनत्वोपपत्तेः । परममंगलत्वादाप्तानुध्यानं शास्त्रसिद्धिनिबंधनमित्यन्ये, तदपि तादृगेव । सत्पात्रदानादेरपि मंगलतोपपत्तेः, न हि जिनेंद्रगुणस्तोत्रमेव मंगलमिति नियमोस्ति स्वाध्यायादेरेव मंगलत्वाभावप्रसंगात् । परमात्मानुध्यानाद्ग्रंथकारस्य नास्तिकतापरिहारसिद्धिस्तद्वचनस्यास्तिकैरादरणीयत्वेन सर्वत्र स्यात्युपपत्तेस्तदाध्यानं तत्सिद्धिनिबंधनमित्यपरे । तदप्यसारं । श्रेयोमार्गसमर्थनादेव वक्तुर्नास्तिकतापरिहारघटनात् । तदभावे सत्यपि शास्त्रारंभे परमात्मानुध्यानवचने तदनुपपत्तेः । शिष्टाचारपरिपालनसाधनत्वात्तदनुध्यानवचनं तत्सिद्धिनिबंधनमिति केचित् । तदपि तादृशमेव । स्वाध्यायादेरेव सकलशिष्टाचारपरिपालनसाधनत्वनिर्णयात् । ततः शास्त्रस्योत्पत्तिहेतुत्वात्तदर्थनिर्णयसाधनत्वाच्च परापरगुरुप्रवाहस्तत्सिद्धिनिबंधममिति धीमद्धृतिकरं । सम्यग्बोध एव वक्तुः शास्त्रोत्पत्तिज्ञप्तिनिमित्तमिति चेन्न, तस्य गुरूपदेशायत्तत्वात् । श्रुतज्ञानावरणक्षयोपशमाद्गुरूपदेशस्यापायेपि श्रुतज्ञानस्योत्पत्तेर्न तत्तदायत्तमिति चेन्न, द्रव्यभावश्रुतस्याप्तोपदेशविरहे कस्यचिदभावात् । द्रव्यश्रुतं हि द्वादशांगं वचनात्मकमाप्तोपदेशरूपमेव, तदर्थज्ञानं तु भावश्रुतं, तदुभयमपि गणधरदेवानां भगवदर्हत्सर्वज्ञवचनातिशयप्रसादात्स्वमतिश्रुतज्ञानावरणवीर्यांतरायक्षयोपशमातिशयाच्चोत्पद्यमानं कथमाप्ता-

यत्तं न भवेत् । यच्च चक्षुरादिमतिपूर्वकं श्रुतं तन्नेह प्रस्तुतं, श्रोत्रमतिपूर्वकस्य भावश्रुतस्य प्रस्तुतत्वात्तस्य चाप्तोपदेशायत्ततामतिष्ठानात्परापरासप्रवाहनिबंधन एव परापरशास्त्रप्रवाहस्तन्निबंधनश्च सम्यगवबोधः स्वयमभिमतशास्त्रकरणलक्षणफलसिद्धेरभ्युपाय इति तत्कामैराप्तस्सकलोप्याध्यातव्य एव । तदुक्तं । "अभिमतफलसिद्धेरभ्युपायः सुबोधः प्रभवति स च शास्त्रात्तस्य चोत्पत्तिराप्तात् । इति भवति स पूज्यस्तत्प्रसादप्रबुद्धैर्न हि कृतमुपकारं साधवो विस्मरंति ॥" ननु यथा गुरूपदेशः शास्त्रसिद्धेर्निबंधनं तथाप्तानुध्यानकृतनास्तिकतापरिहारशिष्टाचारपरिपालनमंगलधर्मविशेषाश्च तत्सहकारित्वाविशेषादिति चेत् । सत्यं । केवलमाप्तानुध्यानकृता एव ते तस्य सहकारिण इति नियमो निषिध्यते, साधनांतरकृतानामपि तेषां तत्सहकारितोपपत्तेः कदाचित्तदभावेपि पूर्वोपात्तधर्मविशेषेभ्यस्तन्निष्पत्तेश्च । परापरगुरूपदेशस्तु नैवमनियतः, शास्त्रकरणे तस्यावश्यमपेक्षणीयत्वादन्यथा तदघटनात् । ततः सूक्तं परापरगुरुप्रवाहस्याध्यानं तत्त्वार्थश्लोकवार्तिकप्रवचनात् पूर्वं श्रेयस्तत्सिद्धिनिबंधनत्वादिति प्रधानप्रयोजनापेक्षया नान्यथा, मंगलकरणादेरप्यनिवारणात् पात्रदानादिवत् । कथं पुनस्तत्त्वार्थः शास्त्रं तस्य श्लोकवार्तिकं वा तद्व्याख्यानं वा, येन तदारंभे परमेष्ठिनामाध्यानं विधीयत इति चेत्, तल्लक्षणयोगत्वात् । वर्णात्मकं हि पदं, पदसमुदायविशेषः सूत्रं, सूत्रसमूहः प्रकरणं, प्रकरणसमितिराह्निकं, आह्निकसंघातो अध्यायः, अध्यायसमुदायः शास्त्रमिति शास्त्रलक्षणं । तच्च तत्त्वार्थस्य दशाध्यायीरूपस्यास्तीति शास्त्रं तत्त्वार्थः । शास्त्राभासत्वशंकाप्यत्र न कार्यान्वर्थसंज्ञाकरणात् । तत्त्वार्थविषयत्वाद्धि तत्त्वार्थो ग्रंथः प्रसिद्धो न च शास्त्राभासस्य तत्त्वार्थविषयता विरोधात्सर्वथैकांतसंभवात् । प्रसिद्धे च तत्त्वार्थस्य शास्त्रत्वे तद्वार्तिकस्य शास्त्रत्वं सिद्धमेव तदर्थत्वात् । वार्तिकं हि सूत्राणामनुपपत्तिचोदना तत्परिहारो विशेषाभिधानं प्रसिद्धं, तत्कथमन्यार्थं भवेत् । तदनेन तद्व्याख्यानस्य शास्त्रत्वं निवेदितं । ततोऽन्यत्र कुतः शास्त्रव्यवहार इतिचेत्, तदेकदेशे शास्त्रत्वोपचारात् । यत्पुनर्द्वादशांगं श्रुतं तदेवंविधानेकशास्त्रसमूहरूपत्वान्महाशास्त्रमनेकस्कंधाधारसमूहमहास्कंधाधारवत् । येषां तु शिष्यंते शिष्या येन तच्छास्त्रमिति शास्त्रलक्षणं तेषामेकमपि वाक्यं शास्त्रव्यवहारभाग् भवेदन्यथाभिप्रेतमपि माभूदिति यथोक्तलक्षणमेव शास्त्रमेतदवबोद्धव्यं । ततस्तदारंभे युक्तं परापरगुरुप्रवाहस्याध्यानं । अथवा यद्यपूर्वार्थमिदं तत्त्वार्थश्लोकवार्तिकं न तदा वक्तव्यं, सतामनादेयत्वप्रसंगात् स्वरुचिविरचितस्य प्रेक्षवतामनादरणीयत्वात् । पूर्वप्रसिद्धार्थं तु सुतरामेतन्न वाच्यं, पिष्टपेषणवद्वैयर्थ्यादिति ब्रुवाणं प्रत्येतदुच्यते । "विद्यास्पदं तत्त्वार्थश्लोकवार्तिकं प्रवक्ष्यामीति ।" विद्या पूर्वाचार्यशास्त्राणि सम्यग्ज्ञानलक्षणविद्यापूर्वकत्वात्ता एवास्पदमस्येति विद्यास्पदं । न पूर्वशास्त्रानाश्रयं, यतः स्वरुचिविरचितत्वादनादेयं प्रेक्षावतां भवेदिति यावत् । पिष्टपेषणवद्व्यर्थं तथा स्यादित्यप्यचोद्यं, आध्यायघातिसंघातघातनमिति विशेषणेन साफल्यप्रतिपादनात् । धियः समागमो हि ध्यायः समंताद्ध्यायोस्मादित्याध्यायं तच्च तद्घातिसंघातघातनं चेत्याध्यायघातिसंघातघातनं । यस्माच्च प्रेक्षावतां समंततः प्रज्ञासमागमो यच्च मुमुक्षून् स्वयं घातिसंघातं प्रतः प्रयोजयति तन्निमित्तकारणत्वात् । तत्कथमफलमावेदयितुं शक्यं । प्रज्ञातिशयसकलकल्मषक्षयकरणलक्षणेन फलेन फलवत्त्वात् । कुतस्तदाध्यायघातिसंघातघातनं सिद्धं ? विद्यास्पदत्वात् । यत्पुनर्न तथाविधं न तद्विद्यास्पदं यथा पापानुष्ठानमिति समर्थयिष्यते । विद्यास्पदं कुतस्तदिति चेत्, श्रीवर्धमानत्वात् । प्रतिस्थानमविसंवादलक्षणया हि श्रिया वर्धमानं कथमविद्यास्पदं नामातिप्रसंगात् । तदेवं सप्रयोजनत्वप्रतिपादनपरमिदमादिश्लोकवाक्यं प्रयुक्तमवगम्यते । ननु किमर्थमिदं प्रयुज्यते ? श्रोतृजनानां प्रवर्तनार्थमिति चेत्, ते यदि श्रद्धानुसारिणस्तदा व्यर्थस्तत्प्रयोगस्तमंतरेणापि यथाकथंचित् तेषां शास्त्रश्रवणे प्रवर्तयितुं शक्यत्वात् । यदि प्रेक्षावंतस्ते तदा कथमप्रमाणकाद्वाक्यात्प्र-

वर्तेते प्रेक्षावत्त्वविरोधादिति केचित्। तदसारं। प्रयोजनवाक्यस्य सप्रमाणकत्वनिश्चयात्। प्रवचनानुमानमूलं हि शास्त्रकारास्तत्प्रथमं प्रयुंजते नान्यथा, अनादेयवचनत्वप्रसंगात् तथाविधाच्च। ततः श्रद्धानुसारिणां प्रेक्षावतां च प्रवृत्तिर्न विरुध्यते। श्रद्धानुसारिणोपि ह्यागमादेव प्रवर्तयितुं शक्या, न यथा कथंचित् प्रवचनोपदिष्टतत्त्वे श्रद्धामनुसरतां श्रद्धानुसारित्वादन्यादृशामतिमूढमनस्कत्वात् तत्त्वार्थश्रवणेऽनधिकृतत्वाददतिविपर्यस्तवत् तेषां तदनुरूपोपदेशयोग्यत्वात् सिद्धमातृकोपदेशयोग्यदारकवत्। प्रेक्षावंतः पुनरागमादनुमानाच्च प्रवर्तमानास्तत्त्वं लभंते, न केवलादनुमानात्प्रत्यक्षादितस्तेषामप्रवृत्तिप्रसंगात्। नापि केवलादागमादेव विरुद्धार्थमतेभ्योपि प्रवर्तमानानां प्रेक्षावत्त्वप्रसक्तेः। तदुक्तं। "सिद्धं चेद्धेतुतः सर्वं न प्रत्यक्षादितो गतिः। सिद्धं चेदागमात्सर्वं विरुद्धार्थमतान्यपि" इति। तस्मादाप्ते वक्तरि संप्रदायाव्यवच्छेदेन निश्चिते तद्वाक्यात्प्रवर्तनमागमादेव। वक्तर्यनाप्ते तु यत्तद्वाक्यात्प्रवर्तनं तदनुमानादिति विभागः साधीयान्। तदप्युक्तं। "वक्तर्यनाप्ते यद्धेतोः साध्यं तद्धेतुसाधितं। आप्ते वक्तरि तद्वाक्यात्साध्यमागमसाधितं।" न चैवं प्रमाणसंप्लववादिविरोधः, क्वचिदुभाभ्यामागमानुमानाभ्यां प्रवर्तनस्येष्टत्वात्। प्रवचनस्याहेतुहेतुमदात्मकत्वात्। स्वसमयप्रज्ञापकत्वस्य तत्परिज्ञाननिबंधनत्वादपरिज्ञाताहेतुवादागमस्य सिद्धांतविरोधकत्वात्। तथा चाभ्यधायि। "जो हेदुवादपरकम्मि हेदुओ आगमम्मि आगमओ। सो ससमयपण्णवओ सिद्धंतविरोहओ अण्णोत्ति॥" तत्रागममूलमिदमादिवाक्यं परापरगुरुप्रवाहमाध्याय प्रवचनस्य प्रवर्तकं तत्त्वार्थश्लोकवार्तिकं प्रवक्ष्यामीति वचनस्यागमपूर्वकागमार्थत्वात्। प्रामाण्यं पुनरस्याभ्यस्तप्रवक्तृगुणान् प्रतिपाद्यान् प्रति स्वत एवाभ्यस्तकारणगुणान् प्रति प्रत्यक्षादिवत्। स्वयमनभ्यस्तवक्तृगुणांस्तु विनेयान् प्रति सुनिश्चितासंभवद्बाधकत्वादनुमानात्स्वयं प्रतिपन्नाप्तांतरवचनाद्वा निश्चितप्रामाण्यात्। नचैवमनवस्था परस्पराश्रयदोषो वा। अभ्यस्तविषये प्रमाणस्य स्वतः प्रामाण्यनिश्चयादनवस्थाया निवृत्तेः, पूर्वस्यानभ्यस्तविषयस्य परस्मादभ्यस्तविषयात्प्रमाणत्वप्रतिपत्तेः। तथानुमानमूलमेतद्वाक्यं, स्वयं स्वार्थानुमानेन निश्चितस्यार्थस्य परार्थानुमानरूपेण प्रयुक्तत्वात्। समर्थनापेक्षसाधनत्वान्न प्रयोजनवाक्यं परार्थानुमानरूपमिति चेत् न, स्वेष्टानुमानेन व्यभिचारात्। न हि तत्समर्थनापेक्षसाधनं न भवति प्रतिवादिविप्रतिपत्तौ तद्विनिवृत्तये साधनसमर्थनस्यावश्यं भावित्वात्, केषांचिदसमर्थितसाधनवचने असाधनांगवचनस्येष्टेः। प्रकृतानुमानहेतोरशक्यसमर्थनत्वमपि नाशंकनीयं, सदुत्तरग्रंथेन तद्धेतोः समर्थननिश्चयात्। सकलशास्त्रव्याख्यानात्तद्धेतुसमर्थनप्रवणात्तत्त्वार्थश्लोकवार्तिकस्य प्रयोजनवत्त्वसिद्धेः। प्रागेवापार्थकं प्रयोजनवचनमितिचेत्, तर्हि स्वेष्टानुमाने हेत्वर्थसमर्थनप्रपंचाभिधानादेव साध्यार्थसिद्धेस्ततः पूर्वं हेतूपन्यासोपार्थकः किन्न भवेत्। साधनस्यानभिधाने समर्थनमनाश्रयमेवेति चेत्, प्रयोजनवत्त्वस्यावचने तत्समर्थनं कथमनाश्रयं न स्यात्। ये तु प्रतिज्ञामनभिधाय तत्साधनाय हेतूपन्यासं कुर्वाणाः साधनमभिहितमेव समर्थयंते ते कथं स्वस्थाः। पक्षस्य गम्यमानस्य साधनावदोष इति चेत्, प्रयोजनवत्साधनस्य गम्यमानस्य समर्थने को दोषः संभाव्यते। सर्वत्र गम्यमानस्यैव तस्य समर्थमसिद्धेः प्रयोगो न युक्त इति चेत्, संक्षिप्तशास्त्रप्रवृत्तौ सविस्तरशास्त्रप्रवृत्तौ वा? प्रथमपक्षे न किंचिदनिष्टं, सूत्रकारेण तस्याप्रयोगात् सामर्थ्याद्गम्यमानस्यैव सूत्रसंदर्भेण समर्थनात्। द्वितीयपक्षे तु तस्याप्रयोगे प्रतिज्ञोपनयनिगमनप्रयोगविरोधः। प्रतिज्ञानिगमनयोरप्रयोग एवेति चेत्, तद्वत्पक्षधर्मोपसंहारस्यापि प्रयोगो मा भूत्। यत्सत्तत्सर्वं क्षणिकमित्युक्ते शब्दादौ सत्त्वस्य सामर्थ्याद्गम्यमानत्वात्। तस्यापि क्वचित्प्रयोगेऽभीष्ट एव विदुषां "वाच्यो हेतुरेव हि केवल" इति वचनात्। तर्हि सविस्तरवचने गम्यमानस्यापि सिद्धः प्रयोगः, संक्षिप्तवचनप्रवृत्तावेव तस्याप्रयोगात्। ततः क्वचिद्गम्यमानं सम-

योजनत्वसाधनमप्रयुक्तमपि सकलशास्त्रव्याख्यानेन समर्थ्यते क्वचित्प्रयुज्यमानमिति नैकांतः, स्याद्वादिनामविरोधात् । सर्वथैकांतवादिनां तु न प्रयोजनवाक्योपन्यासो युक्तस्तस्याप्रमाणत्वात् । तदागमः प्रमाणमिति चेत् । सोऽपौरुषेयः पौरुषेयो वा ? न तावदाद्यपक्षकक्षीकरणं "अथातो धर्मजिज्ञासे"ति प्रयोजनवाक्यस्यापौरुषेयत्वासिद्धेः । स्वरूपेर्थे तस्य प्रामाण्यानिष्टेश्चान्यथातिप्रसंगात् । पौरुषेय एवागमः प्रयोजनवाक्यमिति चेत् । कुतोस्य प्रामाण्यनिश्चयः । स्वत एवेति न, स्वतः प्रामाण्यैकांतस्य निराकरिष्यमाणत्वात् । परत एवागमस्य प्रामाण्यमित्यन्ये, तेषामपि नेदं प्रमाणं सिद्ध्यति । परतः प्रामाण्यस्यानवस्थादिदोषदूषितत्वेम प्रतिक्षेप्स्यमानत्वात् प्रतीतिविरोधात् । परार्थानुमानमावौ प्रयोजनवचनमित्यपरे । तेपि न युक्तिवादिनः, साध्यसाधनयोर्व्याप्तिप्रतिपत्तौ तर्कस्य प्रमाणस्यानभ्युपगमात् । प्रत्यक्षस्यानुमानस्य वा तत्रासमर्थत्वेन साधयिष्यमाणत्वात् । ये त्वप्रमाणकादेव विकल्पज्ञानात्तयोर्व्याप्तिप्रतिपत्तिमाहुस्तेषां प्रत्यक्षानुमानप्रमाणत्वसमर्थनमनर्थकमेव, प्रमाणादेव प्रत्यक्षानुमेयार्थप्रतिपत्तिप्रसंगात् । ततो न प्रयोजनवाक्यं स्याद्वादविद्विषां किंचित्प्रमाणं प्रमाणादिव्यवस्थानासंभवाच्च न तेषां तत्प्रमाणमिति शास्त्रप्रणयनमेवासंभवि विभाव्यतां किं पुनः प्रयोजनवाक्योपन्यसनं । श्रद्धाकुतूहलोत्पादनार्थं तदित्येके । तदप्यनेनैव निरस्तं, तस्य प्रमाणत्वाप्रमाणत्वपक्षयोस्तदुत्पादकत्वायोगात् । अर्थसंशयोत्पादनार्थं तदित्यप्यसारं, क्वचिदर्थसंशयात् प्रवृत्तौ प्रमाणव्यवस्थापनानर्थक्यात् । प्रमाणपूर्वकोर्थसंशयः प्रवर्तक इति प्रमाणव्यवस्थापनस्य साफल्ये कथमप्रमाणकात् प्रयोजनवाक्यादुपजातोर्थसंशयः । प्रवृत्त्यंगं विरुद्धं च संशयफलस्य प्रमाणत्वं विपर्यासफलवत्, स्वार्थव्यवसायफलस्यैव ज्ञानस्य प्रमाणत्वप्रसिद्धेः । ये त्वाहुर्यन्निष्प्रयोजनं तन्नारंभणीयं यथा काकदंतपरीक्षाशास्त्रं निष्प्रयोजनं चेदं शास्त्रमिति । व्यापकानुपलब्ध्या प्रत्यवतिष्ठमानात्प्रतिव्यापकानुपलब्धेरसिद्धतोद्भावनार्थं प्रयोजनवाक्यमिति । तेपि न परीक्षकाः । स्वयमप्रमाणकेन तदसिद्धतोद्भावनाऽसंभवात्, तत्प्रमाणत्वस्य परैर्व्यवस्थापयितुमशक्तेः । सकलशास्त्रार्थोद्देशकरणार्थमादिवाक्यमित्यपि फल्गुप्रायं, तदुद्देशस्याप्रमाणात् प्रतिपत्तुमशक्तेस्तल्लक्षणपरीक्षावत् । ततो नोद्देशो लक्षणं परीक्षा चेति त्रिविधा व्याख्या व्यवतिष्ठते । समासतोऽर्थप्रतिपत्त्यर्थमादिवाक्यं व्यासतस्तदुत्तरशास्त्रमित्यप्यनेनैव प्रतिक्षिप्तमप्रमाणाद्व्यासत इव समासतोप्यर्थप्रतिपत्तेरयोगात् । स्याद्वादिनां तु सर्वमनवद्यं तस्यागमानुमानरूपत्वसमर्थनादित्यलं प्रसंगेन ।

ननु च तत्त्वार्थशास्त्रस्यादिसूत्रं तावदनुपपन्नं प्रवक्तृविशेषस्याभावेपि प्रतिपाद्यविशेषस्य च कस्यचित् प्रतिपित्सायामसत्यामेव प्रवृत्तत्वादित्यनुपपत्तिचोदनायामुत्तरमाह;—

प्रबुद्धाशेषतत्त्वार्थे साक्षात् प्रक्षीणकल्मषे ।
सिद्धे मुनीन्द्रसंस्तुत्ये मोक्षमार्गस्य नेतरि ॥ २ ॥
सत्यां तत्प्रतिपित्सायामुपयोगात्मकात्मनः ।
श्रेयसा योक्ष्यमाणस्य प्रवृत्तं सूत्रमादिमम् ॥ ३ ॥

तेनोपपन्नमेवेति तात्पर्यं । सिद्धे प्रणेतरि मोक्षमार्गस्य प्रकाशकं वचनं प्रवृत्तं तत्कार्यत्वादन्यथा प्रणेतृव्यापारानपेक्षत्वप्रसंगात् तद्व्यंग्यत्वात्तत्तदपेक्षमितिचेत् । न । कूटस्थस्य सर्वथाभिव्यंग्यत्वविरोधात्तदभिव्यक्तेरव्यवस्थितेः । सा हि यदि वचनस्य संस्काराधानं तदा ततो भिन्नोऽन्यो वा संस्कारः प्रणेतृव्यापारेणाधीयते, यद्यभिन्नस्तदा वचनमेव तेनाधीयत इति कथं कूटस्थं नाम । भिन्नश्चेत्पूर्ववत् तस्य सर्वदाप्यश्रवणप्रसंगः । प्राक् पश्चाद्वा श्रवणानुषंगः स्वस्वभावापरित्यागात् । संस्काराधानकाले प्राच्याश्राव-

पत्वस्वभावस्य परित्यागे श्रावणस्वभावोपादाने च शब्दस्य परिणामित्वसिद्धिः, पूर्वापरस्वभावपरिहारावाप्तिस्थितिलक्षणत्वात्परिणामित्वस्य । तथा च वचनस्य किमभिव्यक्तिपक्षकक्षीकरणेन, उत्पत्तिपक्षस्यैव सुघटत्वात् । शब्दाद्भिन्नोऽभिन्नश्च संस्कारः प्रणेतृव्यापारेणाधीयत इति चेत् । न । सर्वथा भेदाभेदयोरेकत्वविरोधात् । यदि पुनः कथंचिदभिन्नो भिन्नश्च शब्दात् संस्कारस्तस्य तेनाधीयत इति मतं, तदा स्यात्पौरुषेयं तत्त्वार्थशासनमित्यायातमर्हन्मतं । ननु च वर्णसंस्कारोऽभिव्यक्तिस्तदावारकवाय्वपनयनं घटाद्यावारकतमोपनयनवत्तिरोभावश्च तदावारकोत्पत्तिर्नचान्योत्पत्तिविनाशौ शब्दस्य तिरोभावाविर्भावौ कौटस्थ्यविरोधिनौ येन परमतप्रसिद्धिरिति चेत् तर्हि किंकुर्वन्नावारकः शब्दस्य वायुरुपेयते न तावत्स्वरूपं खंडयन्नित्यैकांतत्वविरोधात् । तद्बुद्धिप्रतिघ्नन्निति चेत्, तत्प्रतिघाते शब्दस्योपलभ्यता प्रतिहन्यते वा न वा? प्रतिहन्यते चेत् सा शब्दादभिन्ना प्रतिहन्यते न पुनः शब्द इति प्रलापमात्रं । ततोसौ भिन्नैवेति चेत्, सर्वदानुपलभ्यतास्वभावः शब्दः स्यात् । तत्संबंधादुपलभ्यः स इति चेत् कस्तया तस्य संबंधः । धर्मधर्मिभाव इति चेत् नात्यंतं भिन्नयोस्तयोस्तद्भावविरोधात् । भेदाभेदोपगमादविरुद्धस्तद्भाव इति चेत्, तर्हि येनांशेनाभिन्नोपलभ्यता ततः प्रतिहन्यते तेन शब्दोपीति नैकांतनित्योसौ । द्वितीयविकल्पे सत्यप्यावारके शब्दस्योपलब्धिप्रसंगस्तदुपलभ्यतायाः प्रतिघाताभावात् । तथा च न तद्बुद्धिप्रतिघाती कश्चिदावारकः कूटस्थस्य युक्तो यतस्तदपनयनमभिव्यक्तिः सिध्येत् । एतेन शब्दस्योपलब्ध्युत्पत्तिरभिव्यक्तिरिति ब्रुवन् प्रतिक्षिप्तः, तस्यां तदुपलभ्यतोत्पत्त्यनुत्पत्त्योः शब्दस्योत्पत्त्यप्रतिपत्तिप्रसंगात् । न हि शब्दस्योपलब्धेरुत्पत्तौ तदभिन्नोपलभ्यतोत्पद्यते न पुनः शब्द इति ब्रुवाणः स्वस्थः, तस्यास्ततो भेदे सदानुपलभ्यस्वभावतापत्तेर्धर्मधर्मिभावसंबंधायोगात्तत्संबंधादप्युपलभ्यत्वासंभवात् । भेदाभेदोपगमे कथंचिदुत्पत्तिप्रसिद्धेरेकांतनित्यताविरोधात् । शब्दस्योपलब्ध्युत्पत्तावप्युपलभ्यतानुत्पत्तौ स्यादप्रतिपत्तिरिति व्यर्थाभिव्यक्तिः । श्रोत्रसंस्कारोऽभिव्यक्तिरित्यन्ये; तेषामपि श्रोत्रस्यावारकापनयनं संस्कारः, शब्दग्रहणयोग्यतोत्पत्तिर्वा । तदा तद्भावे तस्योपलभ्यतोत्पत्त्यनुत्पत्त्योः स एव दोषः । तदुभयसंस्कारोऽभिव्यक्तिरित्ययं पक्षोऽनेनैव प्रतिक्षेप्तव्यः प्रवाहनित्यतोपगमादभिधानस्याभिव्यक्तौ नोक्तो दोष इति चेत् न, पुरुषव्यापारात् प्राक् तत्प्रवाहसद्भावे प्रमाणाभावात् । प्रत्यभिज्ञानं प्रमाणमिति चेत्, तत्सादृश्यनिबंधनमेकत्वनिबंधनं वा? । न तावदाद्यः पक्षः सादृश्यनिबंधनात्प्रत्यभिज्ञानादेकशब्दप्रवाहासिद्धेः । द्वितीयपक्षे तु कुतस्तदेकत्वनिबंधनत्वसिद्धिः । स एवायं शब्द इत्येकशब्दपरामर्शिप्रत्ययस्य बाधकाभावात्तन्निबंधनत्वसिद्धिस्तत एव नीलज्ञानस्य नीलनिबंधनत्वसिद्धिवदिति चेत् । स्यादेवं यदि तदेकत्वपरामर्शिनः प्रत्ययस्य बाधकं न स्यात्, स एवायं देवदत्त इत्याद्येकत्वपरामर्शिप्रत्ययवत् । अस्ति च बाधकं नाना गोशब्दो बाधकाभावे सति युगपद्भिन्नदेशतयोपलभ्यमानत्वाद् ब्रह्मवृक्षादिवदिति । न तावदिदमेकेन पुरुषेण क्रमशोऽनेकदेशतयोपलभ्यमानेनानैकांतिकं, युगपद्ग्रहणात् । नाप्येकेनादित्येन नानापुरुषैः सकृद्भिन्नदेशतयोपलभ्यमानेन प्रत्यक्षानुमानाभ्यामेकपुरुषेण वा नानाजलपात्रसंक्रांतादित्यबिंबेन प्रत्यक्षतो दृश्यमानेनेति युक्तं वक्तुं, बाधकाभावे सतीति विशेषणात् । न ह्येकस्मिन्नादित्ये सर्वथा भिन्नदेशतयोपलभ्यमाने बाधकाभावः, प्रतिपुरुषमादित्यमात्रानुपलंभस्य बाधकस्य सद्भावात् । पर्वतादिनैकेन व्यभिचारीदमनुमानमिति चेत् । न । तस्य नानावयवात्मकस्य सतो बाधकाभावे सति युगपद्भिन्नदेशतयोपलभ्यमानत्वं व्यवतिष्ठते । निरवयवत्वे तथाभावविरोधादेकपरमाणुवत् । व्योमादिना तदनैकांतिकत्वमनेन प्रत्युक्तं, तस्याप्यनेकप्रदेशत्वसिद्धेः । खादेरनेकप्रदेशत्वादेकद्रव्यविरोध इति चेत् । न । नानादेशस्यापि घटादेरेकद्रव्यत्वप्रतीतेः । न ह्येकप्रदेशत्वेनैवैकद्रव्यत्वं व्याप्तं येन परमाणोरेवैकद्रव्यता । नापि नानाप्रदेशत्वेनैव

यतो घटादेरेवेति व्यवतिष्ठते, एकद्रव्यत्वपरिणामेन तस्याः व्याप्तत्वदर्शनात् । सकललोकप्रसिद्धा ह्येकद्रव्यत्वपरिणतस्यैकद्रव्यता, नानाद्रव्यत्वपरिणतानामर्थानां नानाद्रव्यतावत् । स्यादेतद्बाधकाभावे सतीति हेतुविशेषणमसिद्धं गौरित्यादिशब्दस्य सर्वगतस्य युगपद्व्यंजकस्य देशभेदाद्भिन्नदेशतयोपलभ्यमानस्य स्वतो देशविच्छिन्नतयोपलंभासंभवादिति । तदयुक्तं । तस्य सर्वगतत्वासिद्धेः कूटस्थत्वेनाभिव्यंग्यत्वप्रतिषेधाच्च । सर्वगतः शब्दो नित्यद्रव्यत्वे सत्यमूर्तत्वादाकाशवदित्येतदपि न शब्दसर्वगतत्वसाधनायालं, जीवद्रव्येणानैकांतिकत्वात् । तस्यापि पक्षीकरणान्न तेनानैकांत इति चेत् न, प्रत्यक्षादिविरोधात् । श्रोत्रं हि प्रत्यक्षं नियतदेशतया शब्दमुपलभते स्वसंवेदनाध्यक्षं चात्मानं शरीरपरिमाणानुविधायितयेति कालात्ययापदिष्टो हेतुस्तेजोनुष्णत्वे द्रव्यत्ववत् । स्वरूपासिद्धश्च सर्वथा नित्यद्रव्यत्वामूर्तत्वयोर्धर्मिण्यसंभवात् । तथाहि । परिणामी शब्दो वस्तुत्वान्यथानुपपत्तेः, न वस्तुनः प्रतिक्षणविवर्तेनैकेन व्यभिचारस्तस्य वस्त्वेकदेशतया वस्तुत्वाव्यवस्थितेः । न च तस्या वस्तुत्वं वस्त्वेकदेशत्वाभावप्रसंगात् । वस्तुत्वस्यान्यथानुपपत्तिरसिद्धेति चेत् । न । एकांतनित्यत्वादौ पूर्वापरस्वभावत्यागोपादानस्थितिलक्षणपरिणामाभावे क्रमयौगपद्याभ्यामर्थक्रियाविरोधाद्वस्तुत्वासंभवादिति नैकांतनित्यः शब्दो, नापि सर्वथा द्रव्यं पर्यायात्मतास्वीकरणात् । स हि पुद्गलस्य पर्यायः क्रमशस्तत्रोद्भवत्वात् छायातपादिवत् कथंचिद्द्रव्यं शब्दः क्रियावत्त्वाद्बाणादिवत् । धात्वर्थलक्षणया क्रियया क्रियावता गुणादिनानैकांत इति चेत् । न । परिस्पंदरूपया क्रियया क्रियावत्त्वस्य हेतुत्ववचनात् । क्रियावत्त्वमसिद्धमिति चेत् । न । देशांतरप्राप्त्या तस्य तत्सिद्धेरन्यथा बाणादेरपि निःक्रियत्वप्रसंगान्मतांतरप्रवेशाच्च । ततो द्रव्यपर्यायात्मकत्वाच्छब्दस्यैकांतेन द्रव्यत्वासिद्धिः । अमूर्तत्वं वासिद्धं तस्य मूर्तिमद्द्रव्यपर्यायत्वात् । मूर्तिमद्द्रव्यपर्यायोसौ सामान्यविशेषवत्त्वे सति बाह्येंद्रियविषयत्वादातपादिवत् । न घटत्वादिसामान्येन व्यभिचारः, सामान्यविशेषवत्त्वे सतीति विशेषणात् । परमतापेक्षं चेदं विशेषणं । स्वमते घटत्वादिसामान्यस्यापि सदृशपरिणामलक्षणस्य द्रव्यपर्यायात्मकत्वेन स्थितेस्तेन व्यभिचाराभावात् । कर्मणानैकांत इति चेत् न, तस्यापि द्रव्यपर्यायात्मकत्वेनेष्टेः । स्पर्शादिना गुणेन व्यभिचारचोदनमनेनापास्तं । ततो हेतोरसिद्धिरेवेति नातोभिलापस्य सर्वगतत्वसाधनं यतो युगपद्भिन्नदेशतयोपलभ्यमानता अस्याबाधिता न भवेत् । प्रत्यभिज्ञानस्य वा तदेकत्वपरामर्शिनोनुमानबाधितत्वेन पुरुषव्यापारात्प्राक् सद्भावावेदकत्वाभावात्तदभिव्यंग्यत्वाभाव इति तज्जन्यमेव वचनं सिद्धं पर्यायार्थतः पौरुषेयं । वचनसामान्यस्य पौरुषेयत्वसिद्धौ विशिष्टं सूत्रवचनं सत्प्रणेतृकं प्रसिद्ध्यत्येवेति सूक्तं "सिद्धे मोक्षमार्गस्य नेतरि प्रबंधेन वृत्तं सूत्रमादिमं शास्त्रस्येति" । तथाप्यनाप्तमूलमिदं वक्तृसामान्ये सति प्रवृत्तत्वाद्दुष्टपुरुषवचनवदिति न मतव्यं, साक्षात्प्रबुद्धाशेषतत्त्वार्थे प्रक्षीणकल्मषे चेति विशेषणात् । सूत्रं हि सत्यं सयुक्तिकं चोच्यते हेतुमत्तथ्यमिति सूत्रलक्षणवचनात् । तच्च कथमसर्वज्ञे दोषवति च वक्तरि प्रवर्तते सूत्राभासत्वप्रसंगाद्बृहस्पत्यादिसूत्रवत्ततोर्थतः सर्वज्ञवीतरागप्रणेतृकमिदं सूत्रं सूत्रत्वान्यथानुपपत्तेः । गणाधिपप्रत्येकबुद्धश्रुतकेवल्यभिन्नदशपूर्वधरसूत्रेण स्वयं संमतेन व्यभिचार इति चेत् न, तस्याप्यर्थतः सर्वज्ञवीतरागप्रणेतृकत्वसिद्धेरर्हद्भाषितार्थं गणधरदेवैर्ग्रथितमिति वचनात् । एतेन गृद्धपिच्छाचार्यपर्यंतमुनिसूत्रेण व्यभिचारिता निरस्ता । प्रकृतसूत्रे सूत्रत्वमसिद्धमिति चेत् न, सुनिश्चितासंभवद्बाधकत्वेन तथास्य सूत्रत्वप्रसिद्धेः सकलशास्त्रार्थाधिकरणाच्च । न हि मोक्षमार्गविशेषप्रतिपादकं सूत्रमस्मदादिप्रत्यक्षेण बाध्यते तस्य तदविषयत्वात् यद्धि यदविषयं न तत्तद्वचसो बाधकं यथा रूपाविषयं रसनज्ञानं रूपवचसः श्रेयोमार्गविशेषाविषयं चास्मदादिप्रत्यक्षमिति । एतेनानुमानं तद्बाधकमिति प्रत्युक्तं, तस्याननुमानविषयत्वात् । श्रेयोमार्गसामान्यं हि तद्विषयो न पुनस्तद्विशेषः प्रव-

चनविशेषसमधिगम्यः प्रवचनैकदेशस्तद्बाधक इति चेत् न, तस्यातिसंक्षेपविस्तराभ्यां प्रवृत्तस्याप्येतदर्थानतिक्रमात्तद्बाधकत्वायोगात् पूर्वापरप्रवचनैकदेशयोरन्योन्यमनुग्राहकत्वसिद्धेश्च । यथा चाधुनात्र चार्वाकादीनां प्रत्यक्षादिति न तद्बाधकं तथान्यत्रान्यदान्येषां च विशेषाभावादिति सिद्धं सुनिश्चितासंभवद्बाधकत्वमस्य तथ्यतां साधयति । सा च सूत्रत्वं तत्सर्वज्ञवीतरागप्रणेतृकत्वमिति निरवद्यं प्रणेतुः साक्षात्प्रबुद्धाशेषतत्त्वार्थतया प्रक्षीणकल्मषतया च विशेषणं । मुनींद्रसंस्तुतत्वविशेषणं च विनेयमुख्यसेव्यतामंतरेण सतोपि सर्वज्ञवीतरागस्य मोक्षमार्गप्रणेतृत्वानुपपत्तेः, प्रतिग्राहकाभावेपि तस्य तत्प्रणयने अधुना यावत्तत्प्रवर्तनानुपपत्तेः । तत एवोपयोगात्मकस्यात्मनः श्रेयसा योक्ष्यमाणस्य विनेयमुख्यस्य प्रतिपित्सायां सत्यां सूत्रं प्रवृत्तमित्युच्यते । सतोपि विनेयमुख्यस्य यथोक्तस्य प्रतिपित्साभावे श्रेयोधर्मप्रतिपत्तेरयोगात् प्रतिग्राहकत्वासिद्धेरिदानीं यावत्तत्सूत्रप्रवर्तनाघटनात्, प्रवृत्तं चेदं प्रमाणभूतं सूत्रं । तस्मात्सिद्धे यथोक्ते प्रणेतरि यथोदितप्रतिपित्सायां च सत्यामिति प्रत्येयम् ।

नन्वपौरुषेयाम्नायमूलत्वेपि जैमिन्यादिसूत्रस्य प्रमाणभूतत्वसिद्धेर्नेदं सर्वज्ञवीतदोषपुरुषप्रणेतृकं सिद्ध्यतीत्यारेकायामाह;—

**नैकांताकृत्रिमाम्नायमूलत्वेस्य प्रमाणता ।**
**तद्व्याख्यातुरसर्वज्ञे रागित्वे विप्रलंभनात् ॥ ४ ॥**

संभवन्नपि ह्यकृत्रिमाम्नायो न स्वयं स्वार्थं प्रकाशयितुमीशस्तदर्थविप्रतिपत्त्यभावानुषंगादिति तद्व्याख्यातानुमंतव्यः । स च यदि सर्वज्ञो वीतरागश्च स्यात्तदाम्नायस्य तत्परतंत्रतया प्रवृत्तेः किमकृत्रिमत्वमकारणं प्रोष्यते । तद्व्याख्यातुरसर्वज्ञत्वे रागित्वे वाश्रीयमाणे तन्मूलस्य सूत्रस्य नैव प्रमाणता युक्ता, तस्य विप्रलंभनात् । दोषवद्व्याख्यातृकस्यापि प्रमाणत्वे किमर्थमदुष्टकारणजन्यत्वं प्रमाणस्य विशेषणं । यथैव हि स्वारपटिकशास्त्रं दुष्टकारणजन्यं तथाम्नायव्याख्यानमपीति तद्विसंवादकत्वसिद्धेर्न तन्मूलं वचः प्रमाणभूतं सत्यं । सर्वज्ञवीतरागे च वक्तरि सिद्धे श्रेयोमार्गस्याभिधायकं वचनं प्रवृत्तं न तु कस्यचित्प्रतिपित्सायां सत्याम् ।

चेतनारहितस्य चात्मनः प्रधानस्य वा बुभुत्सायां तत्प्रवृत्तमिति कश्चित्तं प्रत्याह;—

**नाप्यसत्यां बुभुत्सायामात्मनोऽचेतनात्मनः ।**
**खस्येव मुक्तिमार्गोपदेशायोग्यत्वनिश्चयात् ॥ ५ ॥**

नैव विनेयजनस्य संसारदुःखाभिभूतस्य बुभुत्सायामप्यसत्यां श्रेयोमार्गे परमकारुणिकस्य करुणामात्रात्तत्प्रकाशकं वचनं प्रवृत्तमिदिति युक्तं, तस्योपदेशायोग्यत्वनिर्णीतेः । न हि तत्प्रतिपित्सारहितस्तदुपदेशाय योग्यो नामातिप्रसंगात् तदुपदेशकस्य च कारुणिकत्वायोगात् । ज्ञात्वा हि बुभुत्सां परेषामनुग्रहे प्रवर्तमानः कारुणिकः स्यात् क्वचिदप्रतिपित्सावति परप्रतिपित्सावति वा तत्प्रतिपादनाय प्रयतमानस्तु न स्वस्थः । परस्य प्रतिपित्सामंतरेणोपदेशप्रवृत्तौ तत्प्रश्नानुरूपप्रतिवचनविरोधश्च । योपि चाज्ञत्वान्न स्वहितं प्रतिपित्सते तस्य हि तत् प्रतिपित्सा करणीया । न च कश्चिदात्मनः प्रतिकूलं बुभुत्सते मिथ्याज्ञानादपि स्वप्रतिकूले अनुकूलाभिमानादनुकूलमहं प्रतिपित्से सर्वदेति प्रत्ययात् । तत्र नेदं भवतोनुकूलं किंत्विदमित्यनुकूलं प्रतिपित्सोत्पाद्यते । समुत्पन्नानुकूलप्रतिपित्सस्तदुपदेशयोग्यतामात्मसात् कुरुते । ततः श्रेयोमार्गप्रतिपित्सावानेवाधिकृतस्तत्प्रतिपादने नान्य इति सूक्तं । प्रधानस्यात्मनो वा चेतनारहितस्य बुभुत्सायां न प्रथमं सूत्रं प्रवृत्तं तस्याप्युपदेशायोग्यत्वनिश्चयात्खादिवत् । चैतन्यसंबंधात्तस्य चेतनतोपगमादुपदेशयोग्यत्वनिश्चय इति चेन्न । तस्य चेतनासंबंधेपि परमार्थतश्चेतनतानुपपत्तेः शरीरादिवत् । उपचारात्तु

चेतनस्योपदेशयोग्यतायामतिप्रसंगः शरीरादिषु तन्निवारणाघटनात् । तत्संबंधविशेषात्परमार्थतः कथंचिच्चेतनत्वमितिचेत्, स कोन्योन्यत्र कथंचिच्चेतनातादात्म्यात् । ततो ज्ञानाद्युपयोगलक्षणस्यैव श्रेयसा योक्ष्यमाणस्य श्रेयोमार्गप्रतिपित्सायां सत्यामिदं प्रकृतं सूत्रं प्रवृत्तमिति निश्चयः । प्रमाणभूतस्य प्रबंधेन वृत्तेः श्रोतृविशेषाभावे वक्तृविशेषासिद्धौ विधानानुपपद्यमानत्वात् ।

किं पुनः प्रमाणमिदमित्याह;—

संप्रदायाव्यवच्छेदाविरोधादधुना नृणाम् ।
सद्गोत्राद्युपदेशोत्र यद्वत्सद्भिर्विचारतः ॥ ६ ॥
प्रमाणमागमः सूत्रमाप्तमूलत्वसिद्धितः ।
लैंगिकं वाविनाभाविलिंगात्साध्यस्य निर्णयात् ॥ ७ ॥

प्रमाणमिदं सूत्रमागमस्तावदाप्तमूलत्वसिद्धेः सद्गोत्राद्युपदेशवत् । कुतस्तदाप्तमूलत्वसिद्धिरिति चेत् संप्रदायाव्यवच्छेदस्याविरोधात् तद्वदेवेति ब्रूमः । कथमधुनाततानां नृणां तत्संप्रदायाव्यवच्छेदाविरोधः । सिद्ध इति चेत् सद्गोत्राद्युपदेशस्य कथं? विचारादिति चेत् मोक्षमार्गोपदेशस्यापि तत एव । कः पुनरत्र विचारः सद्गोत्राद्युपदेशे कः? प्रत्यक्षानुमानागमैः परीक्षणमत्र विचारोऽभिधीयते सोमवंशः क्षत्रियोयमिति हि कश्चित्प्रत्यक्षतोतींद्रियादध्यवस्यति तदुच्चैर्गोत्रोदयस्य सद्गोत्रव्यवहारनिमित्तस्य साक्षात्करणात् । कश्चित्तु कार्यविशेषदर्शनादनुमिनोति । तथागमादपरः प्रतिपद्यते ततोप्यपरस्तदुपदेशादिति संप्रदायस्याव्यवच्छेदः सर्वदा तदन्यथोपदेशाभावात् । तस्याविरोधः पुनः प्रत्यक्षादिविरोधस्यासंभवादिति तदेतन्मोक्षमार्गोपदेशेपि समानं । तत्राप्येवंविधविशेषाक्रांतानि सम्यग्दर्शनादीनि मोक्षमार्ग इत्यशेषतोतींद्रियप्रत्यक्षतो भगवान् परममुनिः साक्षात्कुरुते, तदुपदेशाद्गणाधिपः प्रत्येति, तदुपदेशादप्यन्यस्तदुपदेशाच्चापर इति संप्रदायस्याव्यवच्छेदः सदा तदन्यथोपदेशाभावात् । तस्याविरोधश्च प्रत्यक्षादिविरोधस्याभावादिति । सद्गोत्राद्युपदेशस्य यत्र यदा यथा यस्याव्यवच्छेदस्तत्र तदा तथा तस्य प्रमाणत्वमपीष्टमिति चेत्, मोक्षमार्गोपदेशस्य किमनिष्टं । केवलमत्रेदानीमेवमस्मदादेस्तद्व्यवच्छेदाभावात्प्रमाणता साध्यते । कपिलाद्युपदेशस्यैवं प्रमाणता स्यादिति चेत् न, तस्य प्रत्यक्षादिविरोधसद्भावात् । नन्वाप्तमूलस्याप्युपदेशस्य कुतोर्थनिश्चयोऽस्मदादीनां? न तावत्स्वत एव वैदिकवचनादिवत्पुरुषव्याख्यानादिति चेत् । स पुरुषोऽसर्वज्ञो रागादिमांश्च यदि तदा तद्व्याख्यानादर्थनिश्चयानुपपत्तिरयथार्थाभिधानशंकनात् । सर्वज्ञो वीतरागश्च न सोत्रेदानीमिष्टो यतस्तदर्थनिश्चयः स्यादिति कश्चित् । तदसत् । प्रकृतार्थपरिज्ञाने तद्विषयरागद्वेषाभावे च सति तद्व्याख्यातुर्विप्रलंभनासंभवात्तद्व्याख्यानादर्थनिश्चयोपपत्तेः । अपौरुषेयागमार्थनिश्चयस्तद्वदस्तु । मन्वादेस्तद्व्याख्यातुस्तदर्थपरिज्ञानस्य तद्विषयरागद्वेषाभावस्य च प्रसिद्धत्वादिति चेत् न, प्रथमतः कस्यचिदतींद्रियवेदार्थपरिच्छेदिनोऽनिष्टेरन्वर्थपरंपरातोर्थनिर्णयानुपपत्तेः । ननु च व्याकरणाद्यभ्यासाल्लौकिकपदार्थनिश्चये तदविशिष्टवैदिकपदार्थनिश्चयस्य स्वतः सिद्धेः पदार्थप्रतिपत्तौ च तद्वाक्यार्थप्रतिपत्तिसंभवादश्रुतकाव्यादिवन्न वेदार्थनिश्चयेतींद्रियार्थदर्शी कश्चिदपेक्ष्यते, नाप्यंधपरंपरा यतस्तदर्थनिर्णयानुपपत्तिरिति चेत् । न । लौकिकवैदिकपदानामेकत्वेपि नानार्थत्वावस्थितेरेकार्थपरिहारेण व्याख्यांगमिति तस्यार्थस्य निगमयितुमशक्यत्वात् । प्रकरणादिभ्यस्तन्नियम इति चेन्न, तेषामप्यनेकधा प्रवृत्तेः पंचसंधानादिवदेकार्थस्य व्यवस्थानायोगात् । यदि पुनर्वेदवाक्यानि सनिबंधनान्येवानादिकालप्रवृत्तानि न व्याख्यानांतरापेक्षाणि देशभाषावदिति मतं, तदा कुतो व्याख्याविप्रतिपत्तयस्तत्र भवेयुः । प्रतिपत्तुर्मांद्यादिति चेत् ।

कथं तदर्थसंप्रतिपत्तिरमंदस्य प्रतिपत्तुर्जातुचिदसंभवात् । सातिशयप्रज्ञो मन्वादिस्तत्प्रतिपत्ता संप्रतिपत्तिहेतुरस्त्येवेति चेत् । कुतस्तस्य तादृशः प्रज्ञातिशयः ? श्रुत्यर्थस्मृत्यतिशयादिति चेत् । सोपि कुतः । पूर्वजन्मनि श्रुत्यभ्यासादिति चेत्, स तस्य स्वतोऽन्यतो वा ? स्वतश्चेत् सर्वस्य स्यात् तस्याद्दृष्टविशेषाद्वेदाभ्यासः स्वतो युक्तो न सर्वस्य तदभावादिति चेत् कुतोस्यैवादृष्टविशेषस्तादृग्वेदार्थानुष्ठानादिति चेत् । तर्हि स वेदार्थस्य स्वयं ज्ञातस्यानुष्ठाता स्यादज्ञातस्य वापि । न तावदुत्तरः पक्षोतिप्रसंगात् । स्वयं ज्ञातस्य चेत् परस्पराश्रयः, सति वेदार्थस्य ज्ञाने तदनुष्ठानाददृष्टविशेषः सति वादृष्टविशेषे स्वयं वेदार्थस्य परिज्ञानमिति । मन्वादेर्वेदाभ्यासोन्यत एवेति चेत् । स कोन्यः ? ब्रह्मेति चेत् । तस्य कुतो वेदार्थज्ञानं धर्मविशेषादिति चेत् स एवान्योन्याश्रयः । वेदार्थपरिज्ञानाभावे तत्पूर्वकानुष्ठानजनितधर्मविशेषानुत्पत्तौ वेदार्थपरिज्ञानायोगादिति । स्यान्मतं । सहस्रशाखो वेदः स्वर्गलोके ब्रह्मणाधीयते चिरं पुनस्ततोवतीर्य मर्त्ये मन्वादिभ्यः प्रकाश्यते पुनः स्वर्गं गत्वा चिरमधीयते पुनर्मर्त्यावतीर्णेभ्यो मन्वादिभ्योऽवतीर्य प्रकाश्यत इत्यनाद्यनंतो ब्रह्ममन्वादिसंतानो वेदार्थविप्रतिपत्तिनिराकरणसमर्थोऽधपरंपरामपि परिहरतीति वेदे तद्व्याहृतं, सर्वपुरुषाणामतींद्रियार्थज्ञानविकलत्वोपगमाद्ब्रह्मादेरतींद्रियार्थज्ञानायोगात् । चोदनाजनितमतींद्रियार्थज्ञानं पुंसोभ्युपेयते चेत्, योगिप्रत्यक्षेण कोपराधः कृतः । तदन्तरेणापि हेयोपादेयतत्त्वनिश्चयात् किमस्यादृष्टस्य कल्पनयेति चेत् ब्रह्मादेरतींद्रियार्थज्ञानस्य किमिति दृष्टस्य कल्पना । संभाव्यमानस्येति चेत् योगिप्रत्यक्षस्य किमसंभावना । यथैव हि शास्त्रार्थस्याक्षाद्यगोचरस्य परिज्ञानं केषांचिद्दृष्टमिति ब्रह्मादेर्वेदार्थस्य ज्ञानं तादृशस्य संभाव्यते तथा केवलज्ञानमपीति निवेदयिष्यते । ततः सकलागमार्थविदामिव सर्वविदां प्रमाणसिद्धत्वान्नानुपलभ्यमानानां परिकल्पना । नापि तैर्विनैव हेयोपादेयतत्त्वनिर्णयः सकलार्थविशेषसाक्षात्करणमंतरेण कस्यचिदर्थस्याक्षूणविधानायोगात् । सामान्यतस्तत्त्वोपदेशस्याक्षूणविधानमाम्नायादेवेति चेत् तर्ह्यनुमानादेव तत्तथास्त्विति किमागमप्रामाण्यसाधनायासेन । प्रत्यक्षानुमानाविषयत्वनिर्णयो नागमाद्विनेति तत्प्रामाण्यसाधने प्रत्यक्षानुमानागमाविषयत्वविशेषनिश्चयोपि न केवलज्ञानाद्विनेति तत्प्रामाण्यं किं न साध्यते । न हि तृतीयस्थानसंक्रांतार्थभेदनिर्णयासंभवेनुमेयार्थनिर्णयो नोपपद्यत इत्यागमगम्यार्थनिश्चयस्तत्त्वोपदेशहेतुर्न पुनश्चतुर्थस्थानसंक्रांतार्थनिश्चयोपीति युक्तं वक्तुं । तदा केवलज्ञानासंभवे तदर्थनिश्चयायोगात् । न च चोदनाविषयत्वमतिक्रांतश्चतुर्थस्थानसंक्रांतः कश्चिदर्थविशेषो न विद्यत एवेति युक्तं, सर्वार्थविशेषाणां चोदनया विषयीकर्तुमशक्तेस्तस्याः सामान्यभेदविषयत्वात् । ततोऽशेषार्थविशेषाणां साक्षात्करणक्षमः प्रवचनस्याद्यो व्याख्याताभ्युपेयस्तद्वितेयमुख्यश्च सकलागमार्थस्य परिच्छेदीति तत्संप्रदायाव्यवच्छेदादविरुद्धात्सिद्धोसदादेरागमार्थनिश्चयो न पुनरपौरुषेयागमसंप्रदायाव्यवच्छेदात्तत्सूक्तमागमः प्रमाणमिदं सूत्रमिति । ननु च सन्नप्यासः प्रवचनस्य प्रणेतास्येति ज्ञातुमशक्यस्तद्व्यापारादेर्व्यभिचारित्वात् सरागा अपि हि वीतरागा इव चेष्टंते वीतरागाश्च सरागा इवेति कश्चित् । सोप्यसंबद्धप्रलापी । सरागत्ववीतरागत्वनिश्चयस्य क्वचिदसंभवे तथा वक्तुमशक्तेः । सोयं वीतरागं सरागवच्चेष्टमानं कथंचिन्निश्चिन्वन् वीतरागनिश्चयं प्रतिक्षिपतीति कथमप्रमत्तः स्वयमात्मानं कदाचिद्वीतरागं सरागवच्चेष्टमानं संवेदयते न पुनः परमिति चेत् । कुतः सुगतसंवित्तिः कार्यानुमानादिति चेत् न । तत्कार्यस्य व्याहारादेर्व्यभिचारित्ववचनात् विप्रकृष्टस्वभावस्य सुगतस्य नास्तित्वं प्रतिक्षिप्यते । बाधकाभावान्न तु तदस्तित्वनिश्चयः क्रियत इति चेत् कथमनिश्चितसद्भावः स्तुत्यः प्रेक्षावतामिति साश्चर्यं नश्चेतः । कथं वा संतानांतरक्षणक्षितिस्वर्गप्रापणशक्त्यादेः सत्तानिश्चयः स्वभावविप्रकृष्टस्य क्रियेत तदकरणे सर्वत्र संशयाच्चाभिमततत्त्वनिश्चयः संवेदनाद्वैतमत एव श्रेयस्तस्यैव सुगतत्वात् संस्तुत्यतोपपत्तेरित्यपरः । सोपि यदि संवेद्याद्याकाररहितं निरंश-

क्षणिकवेदनं विप्रकृष्टस्वभावं क्रियात्तदा न तत्सत्तासिद्धिः स्वयमुपलम्भ्यस्वभावं चेन्न तत्र विभ्रमः स्वयमुपलब्धस्यापि निश्चयाभावाद्विभ्रमः स्यादिति चेत् । कथमनिश्चितं स्वतः सिद्धं नाम येन स्वरूपस्य स्वतो गतिर्व्यवतिष्ठेतेति क्वायं तिष्ठेद्विप्रकृष्टसंशयवादी । अनाद्यविद्यातृष्णाक्षयाददद्वयसंवेदने विभ्रमाभावो न निश्चयोत्पादात् सकलकल्पनाविकल्पत्वात्तस्येति चेत्, सा तर्ह्यविद्या तृष्णा च यद्युपलभ्यस्वभावा तदा न संवेदनाद्वैतं तस्यास्ततोन्यस्याः प्रसिद्धेः। सानुपलभ्यस्वभावा चेत्, कुतस्तद्भावाभावनिश्चयो यतो द्वयसंवेदने विभ्रमाविभ्रमव्यवस्था । निरंशसंवेदनसिद्धिरेवाविद्यातृष्णानिवृत्तिसिद्धिरित्यपि न सम्यक् । विप्रकृष्टेतरस्वभावयोरर्थयोरेकतरसिद्धावन्यतरसद्भावासद्भावसिद्धेरयोगात्। कथमन्यथा व्याहारदिविशेषोपलंभात्कस्यचिद्विज्ञानाद्यतिशयसद्भावो न सिद्ध्येत्। तदयं प्रतिपत्ता स्वस्मिन् व्याहारादिकार्यं रागित्वारागित्वयोः संकीर्णमुपलभ्य परत्र रागित्वनियमभावं साधयति न पुनररागित्वं। रागित्वं चेति ब्रुवाणः परीक्षकत्वमभिमन्यत इति किमपि महाद्भुतं । यथैव हि रागित्वाद्यतींद्रियं तथा तदनियतत्वमपीति । कुतश्चित्तत्साधने वीतरागित्वाद्यतिशयसाधनं साधीयः । ततोयमस्य प्रवचनस्य प्रणेताप्त इति ज्ञातुं शक्यत्वादाप्तमूलत्वं तत्प्रामाण्यनिबंधनं सिध्यत्येव । अथवानुमानमिदं सूत्रमविनाभाविना भाविनो मोक्षमार्गत्वलिंगान्मोक्षमार्गधर्मिणि सम्यग्दर्शनादित्रयात्मकत्वस्य साध्यस्य निर्णयात् । तथाहि । सम्यग्दर्शनज्ञानचारित्रात्मको मोक्षमार्गो मोक्षमार्गत्वान्यथानुपपत्तेः। न तावदत्राप्रसिद्धो धर्मी हेतुर्वा मोक्षवादिनामशेषाणामविप्रतिपत्तेः । मोक्षाभाववादिनस्तु प्रति तत्सिद्धेः प्रमाणतः करिष्यमाणत्वात् । प्रतिज्ञार्थैकदेशो हेतुरिति चेत्। कः पुनः प्रतिज्ञार्थस्तदेकदेशो वा? साध्यधर्मधर्मिसमुदायः प्रतिज्ञार्थस्तदेकदेशः साध्यं धर्मो यथानित्यः शब्दोऽनित्यत्वादिति धर्मी वा तदेकदेशो यथा नश्वरः शब्दः शब्दत्वादिति । सोयं हेतुत्वेनोपादीयमानो न साध्यसाधनायालं स्वयमसिद्धमिति चेत्। कथं धर्मिणोऽसिद्धता प्रसिद्धो धर्मीति वचनव्याघातात्। सत्यं। प्रसिद्ध एव धर्मीति चेत् स तर्हि हेतुत्वेनोपादीयमानोपि न स्वयमसिद्धो यतो न साध्यं साधयेत् स हेतुस्तदन्वयः स्यात् धर्मिणोन्यत्रानुगमनाभावादिति चेत् सर्वमनित्यं सत्त्वादिति धर्मः किमन्वयी येन स्वसाध्यसाधने हेतुरिष्यते सत्त्वादिधर्मसामान्यमशेषधर्मिव्यक्तिष्वन्वयीति चेत् तथा धर्मिसामान्यमपि दृष्टांतधर्मिण्यनन्वयः पुनरुभयत्रेति यत्किंचिदेतत् । साध्यधर्मः पुनः प्रतिज्ञार्थैकदेशत्वान्न हेतुर्धर्मिणा व्यभिचारात् । किं तर्हि स्वरूपासिद्धत्वादेवेति न प्रतिज्ञार्थैकदेशो नाम हेत्वाभासोस्ति योत्राशंक्यते श्रावणत्वादिवदसाधारणत्वादनैकांतिकोयं हेतुरिति चेन्न असाधारणत्वस्यानैकांतिकत्वेन व्याप्त्यसिद्धेः। सपक्षविपक्षयोर्हि हेतुरसत्त्वेन निश्चितोऽसाधारणः संशयितो वा? निश्चितश्चेत् कथमनैकांतिकः पक्षे साध्यासंभवे अनुपपद्यमानतयास्तित्वेन निश्चितत्वात् संशयहेतुत्वाभावात् । न च सपक्षविपक्षयोरसत्त्वेन निश्चिते पक्षे साध्याविनाभावित्वेन निश्चेतुमशक्यः सर्वानित्यत्वादौ सत्त्वादेरहेतुत्वप्रसंगात् । न हि सत्त्वादिविपक्ष एवासत्त्वेन निश्चितः सपक्षेपि तदसत्त्वनिश्चयात् सपक्षस्याभावात्तत्र सर्वानित्यत्वादौ साध्ये सत्त्वादेरसत्त्वनिश्चयान्निश्चयहेतुत्वं न पुनः श्रावणत्वादेस्तद्भावेपीति चेत् । ननु श्रावणत्वादिरपि यदि सपक्षे स्यात्तदा तं व्याप्नुयादेवेति समानांतर्व्याप्तिः । सति विपक्षे धूमादिश्चासत्त्वेन निश्चितो निश्चयहेतुर्माभूत् । विपक्षे सत्यसति वा सत्त्वेन निश्चितः साध्याविनाभावित्वाद्धेतुरेवेति चेत्, सपक्षे सत्यसति वा सत्त्वेन निर्णीतो हेतुरस्तु तत एव सपक्षे तदेकदेशे वा सन् कथं हेतुरिति चेत्; सपक्षे असन्नेव हेतुरित्यनवधारणात् । विपक्षे तदसत्त्वानवधारणमस्त्वित्ययुक्तं साध्याविनाभावित्वव्याघातात् । नैवं । सपक्षे तदसत्त्वानवधारणे व्याघातः कश्चिदिति । तत्र सन्नसन् वा साध्याविनाभावी हेतुरेव श्रावणत्वादिः सत्त्वादिवत् । तद्वन्मोक्षमार्गत्वादिति हेतुर्नासाधारणत्वादगमकः साध्यस्य सम्यग्दर्शनज्ञानचारित्रात्मकत्वस्याभावे ज्ञानमात्रात्मकत्वादौ

सर्वथानुपपन्नत्वसाधनात् । यदि पुनः सपक्षविपक्षयोरसत्त्वेन संशयितो साधारण इति मतं तदा पक्षत्र-यवृत्तितया निश्चितया संशयितया वानैकांतिकत्वं हेतोरित्यायातं । न च प्रकृतहेतोः सास्तीति गमक-त्वमेव विरुद्धतानेन प्रत्युक्ता विपक्षे बाधकस्य भावाच्च । न चैवं हेतोरानर्थक्यं ततो विधिमुखेन साध्यस्य सिद्धेरन्यथा गमकत्ववित्तौ तदापत्तेस्ततः सूक्तं लैंगिकं वा प्रमाणमिदं सूत्रमविनाभाविलिंगात्साध्यस्य निर्णयादिति । प्रमाणत्वाच्च साक्षात्प्रबुद्धाशेषतत्त्वार्थे प्रक्षीणकल्मषे सिद्धे प्रवृत्तमन्यथा प्रमाणत्वानुपपत्तेः ।

नेदं सर्वज्ञे सिद्धे प्रवृत्तं तस्य ज्ञापकानुपलंभादभावसिद्धेरिति परस्य महामोहविचेष्टितमाचष्टे;—

**नत्र नास्त्येव सर्वज्ञो ज्ञापकानुपलंभनात् ।**
**व्योमांभोजवदित्येतत्तमस्तमविजृंभितम् ॥ ८ ॥**

नास्ति सर्वज्ञो ज्ञापकानुलब्धेः खपुष्पवदिति ब्रुवन्नात्मनो महामोहविलासमावेदयति ।

यस्मादिदं ज्ञापकमुपलभ्यत इत्याह;—

**सूक्ष्माद्यर्थोपदेशो हि तत्साक्षात्कर्तृपूर्वकः ।**
**परोपदेशलिंगाक्षानपेक्षावितथत्वतः ॥ ९ ॥**

शीतं जलमित्याद्युपदेशेनाक्षापेक्षेणावितथेन व्यभिचारोऽनुपचरिततत्साक्षात्कर्तृपूर्वकत्वस्य साध्यस्या-भावेपि भावादवितथत्वस्य हेतोरुपचारतस्तत्साक्षात्कर्तृपूर्वकत्वसाधने स्वसिद्धांतविरोधात् । तत्सामान्यस्य साधने स्वाभिमतविशेषसिद्धौ प्रमाणांतरापेक्षणात्प्रकृतानुमानवैयर्थ्यापत्तिरिति न मंतव्यमक्षानपेक्षत्व-विशेषणात् । सर्वज्ञविज्ञानस्याप्यक्षजत्वादसिद्धं विशेषणमित्यपरः । सोप्यपरीक्षकः । सकलार्थसाक्षा-त्करणस्याक्षजज्ञानेनासंभवात्, धर्मादीनामक्षैरसंबंधात् । स हि साक्षान्न युक्तः पृथिव्याद्यवयविवत् । नापि परंपरया रूपरूपित्वादिवत् स्वयमनुमेयत्ववचनात् । योगजधर्मानुगृहीतान्यक्षाणि सूक्ष्माद्यर्थे धर्मादौ प्रवर्तंते महेश्वरस्येत्यप्यसारं स्वविषये प्रवर्तमानानामतिशयाधानस्यानुग्रहत्वेन व्यवस्थितेः सूक्षाद्यर्थेक्षाणा-मप्रवर्तनात्तदघटनात् । यदि पुनस्तेषामविषयेपि प्रवर्तनमनुग्रहस्तदैकमेवेंद्रियं सर्वार्थे ग्रहीष्यतां । सत्य-मंतःकरणमेकं योगजधर्मानुगृहीतं युगपत्सर्वार्थसाक्षात्करणक्षममिष्टमिति चेत् । कथमणोर्मनसः सर्वार्थ-संबंधः सकृदुपपद्यते दीर्घशष्कुलीभक्षणादौ सकृच्चक्षुरादिभिस्तत्संबंधप्रसक्तेः रूपादिज्ञानपंचकस्य क्रमोत्पत्ति-विरोधात् । क्रमशोन्यत्र तस्य दर्शनादिह क्रमपरिकल्पनायां सर्वार्थेषु योगिमनःसंबंधस्य क्रमकल्पनास्तु सर्वार्थानां साक्षात्करणसमर्थस्येश्वरविज्ञानस्यानुमानसिद्धत्वात्तैरीशमनसः सकृत्संबंधसिद्धिरिति चेत् । रूपा-दिज्ञानपंचकस्य क्वचिद्यौगपद्येनानुभवादनीशमनसोपि सकृच्चक्षुरादिभिः संबंधोस्तु कुतश्चिद्धर्मविशेषात्त-थोपपत्तेः । तादृशो धर्मविशेषः कुतोऽनीशस्य सिद्ध इति चेत्, ईशस्य कुतः? सकृत्सर्वार्थज्ञानात्तत्कार्य-विशेषादिति चेत्, तर्हि सकृद्रूपादिज्ञानपंचकात् कार्यविशेषादनीशस्य तद्धेतुर्धर्मविशेषोस्तीति किं न सिध्येत् । तथा सति तस्य रूपादिज्ञानपंचकं नेंद्रियजं स्यात् । किं तर्हि धर्मविशेषजमेवेति चेत्, सर्वार्थज्ञानमप्येवमीशस्यांतःकरणजं माभूत् समाधिविशेषोत्थधर्मविशेषजत्वात्तस्य मनोनपेक्षस्य ज्ञानस्या-दर्शनाददृष्टकल्पना स्यादिति चेत् । मनोपेक्षस्य वेदनस्य सकृत्सर्वार्थसाक्षात्कारिणः क्वचिद्दर्शनं किमस्ति येनादृष्टस्य कल्पना न स्यात् । सर्वार्थज्ञानं मनोपेक्षं ज्ञानत्वादस्मदादिज्ञानवदिति चेत् न, हेतोः काला-त्ययापदिष्टत्वात् पक्षस्यानुमानबाधितत्वात् । तथाहि—सर्वज्ञविज्ञानं मनोक्षानपेक्षं सकृत्सर्वार्थपरिच्छेद-कत्वात् यन्मनोक्षापेक्षं तत्तु न सकृत्सर्वार्थपरिच्छेदकं दृष्टं यथास्मदादिज्ञानं न च तथेदमिति मनोपेक्षत्वस्य निराकरणात् । नन्वेवं शष्कुलीभक्षणादौ रूपादिज्ञानपंचकं मनोक्षानपेक्षं सकृद्रूपादिपंचकपरिच्छेदकत्वाद्य-

नैवं तथैवं दृष्टं यथान्यत्र क्रमशो रूपादिज्ञानं न च तथेदमतोक्षमनोनपेक्षमित्यप्यनिष्टं सिध्येदिति मा मंस्थाः साधनस्यासिद्धत्वात्, परस्यापि हि नैकांतेन शष्कुलीभक्षणादौ रूपादिज्ञानपंचकस्य सकृद्रूपादिपंचकपरिच्छेदकत्वं सिद्धं। सोपयोगस्यानेकज्ञानस्यैकत्रात्मनि क्रमभावित्ववचनात्। शक्तितोनुपयुक्तस्य यौगपद्यस्याप्रसिद्धेः। प्रतीतिविरुद्धं चास्याक्षमनोनपेक्षत्वसाधनं तदन्वयव्यतिरेकानुविधायितया तदपेक्षत्वसिद्धेरन्यथा कस्यचित्तदपेक्षत्वायोगात्। ततः कस्यचित् सकृत्सूक्ष्माद्यर्थसाक्षात्करणमिच्छता मनोक्षानपेक्षमेषितव्यमिति नाक्षानपेक्षत्वविशेषणं सूक्ष्माद्यर्थोपदेशस्यासिद्धं सिद्धमप्येतदनर्थकं तत् साक्षात्कर्तृपूर्वकत्वसामान्यस्य साधयितुमभिप्रेतत्वान्न वा सर्वज्ञवादिनः सिद्धसाध्यता, नापि साध्याविकलत्वादुदाहरणस्यानुपपत्तिरित्यन्ये। तेपि स्वमतानपेक्षं ब्रुवाणा न प्रतिषिध्यंते परानुरोधात्तथाभिधानात्। स्वसिद्धांतानुसारिणां तु सफलमक्षानपेक्षत्वविशेषणमित्युक्तमेव। सदनुमातृपूर्वकसूक्ष्माद्यर्थोपदेशे नाक्षानपेक्षावितथत्वमनैकांतिकमित्यपि न शंकनीयं। लिंगानपेक्षत्वविशेषणात्। न चेदमसिद्धं परोपदेशपूर्वके सूक्ष्माद्यर्थोपदेशे लिंगानपेक्षावितथत्वप्रसिद्धेः। तेनैव व्यभिचारीदमिति चेत् न, परोपदेशानपेक्षत्वविशेषणात्। तदसिद्धं धर्माद्युपदेशस्य सर्वदा परोपदेशपूर्वकत्वात्। तदुक्तं। धर्मे चोदनैव प्रमाणं नान्यत्। किं च। नेन्द्रियमिति कश्चित्। तत्र केयं चोदना नाम? क्रियायाः प्रवर्तकं वचनमिति चेत् तत् पुरुषेण व्याख्यातं स्वतो वा क्रियायाः प्रवर्तकं श्रोतुः स्यात्? न तावत्स्वत एवाचार्यचोदितः करोमीति हि दृश्यते न वचनचोदित इति। नन्वपौरुषेयाद्वचनात्प्रवर्तमानो वचनचोदितः करोमीति प्रतिपद्यते पौरुषेयादाचार्यचोदित इति विशेषोस्त्येवेति चेत्। स्यादेवं यदि मेघध्वानवदपौरुषेयं वचनं पुरुषप्रयत्ननिरपेक्षं प्रवर्तकं क्रियायाः प्रतीयेत, न च प्रतीयते। सर्वदा पुरुषव्यापारापेक्षत्वात्तत्स्वरूपलाभस्य। पुरुषप्रयत्नोभिव्यंजकस्तस्येति चेन्नैकांतनित्यस्याभिव्यक्त्यसंभवस्य समर्थितत्वात्। पुरुषेण व्याख्यातमपौरुषेयं वचः क्रियायाः प्रवर्तकमिति चेत्, स पुरुषः प्रत्ययितोऽप्रत्ययितो वा? न तावत्प्रत्ययितोतीन्द्रियार्थज्ञानविकलस्य रागद्वेषवतः सत्यवादितया प्रत्येतुमशक्तेः। स्यादतींद्रियगोचरेर्थेऽनुमानगोचरे वा पुरुषस्य प्रत्ययिता ननु तृतीयस्थानं संक्रांते जात्यंधस्येव रूपविशेषेषु। न च ब्रह्मा मन्वादिर्वातीन्द्रियार्थदर्शी रागद्वेषविकलो वा सर्वदोषगतो यतोसात्प्रत्ययिताच्चोदनाव्याख्यानं प्रमाण्यमुपेयादित्युक्तं प्राक्। स्वयमप्रत्ययितात्तु पुरुषात् तद्व्याख्यानं प्रवर्तमानमसत्यमेव नद्यास्तीरे फलानि सतीति लौकिकवचनवत्। न चापौरुषेयं वचनमतथाभूतमप्यर्थं ब्रूयादिति विप्रतिषिद्धं यतस्तद्व्याख्यानमसत्यं न स्यात्। लौकिकमपि हि वचनमर्थं ब्रवीति बोधयति बुध्यमानस्य निमित्तं भवतीत्युच्यते वितथार्थाभ्यधायि च दृष्टमविप्रतिषेधात्। तद्यदार्थं ब्रवीति न तदा वितथार्थाभिधायि। यदा तु बाधकप्रत्ययोत्पत्तौ वितथार्थाभिधायि न तदा यथार्थं ब्रवीत्यविप्रतिषेधे वेदवचनेपि तथा विप्रतिषेधो मा भूत्, तत्र बाधकप्रत्ययोत्पत्तेरसंभवाद्विप्रतिषेध एवेति चेत्, नाग्निहोत्रात्स्वर्गो भवतीति चोदनायां बाधकसद्भावात्। तथाहि। नाग्निहोत्रं स्वर्गसाधनं हिंसाहेतुत्वात्साधनवधवत् साधनवधो वा न स्वर्गसाधनस्तत एवाग्निहोत्रवत्। विधिपूर्वकस्य पश्वादिवधस्य विहितानुष्ठानत्वेन हिंसाहेतुत्वाभावात् असिद्धो हेतुरिति चेत्, तर्हि विधिपूर्वकस्य साधनवधस्य खारपटिकानां विहितानुष्ठानत्वेन हिंसाहेतुत्वं माभूदिति सधनवधात्स्वर्गो भवतीति वचनं प्रमाणमस्तु तस्याप्यैहिकप्रत्यवायपरिहारसमर्थेतिकर्तव्यतालक्षणविधिपूर्वकत्वाविशेषात्। न हि वेदविहितमेव विहितानुष्ठानं, न पुनः खरपटशास्त्रविहितमित्यत्र प्रमाणमस्ति यागः। श्रेयोर्थिनां विहितानुष्ठानं श्रेयस्करत्वान्न सधनवधस्तद्विपरीतत्वादिति चेत्। कुतो यागस्य श्रेयस्करत्वं? धर्मशब्देनोच्यमानत्वात्। यो हि यागमनुतिष्ठति तं 'धार्मिक' इति समाचक्षते, यश्च यस्य कर्ता स तेन समाख्यायते यथा याचको लावक इति। तेन यः पुरुषं निःश्रेय-

सेन संयुनक्ति स धर्मशब्देनोच्यते । न केवलं लोके, वेदेपि "यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन्निति" यजतिशब्दवाच्य एवार्थे धर्मशब्दं समामनंतीति शबराः । सोऽयं यथार्थनामा शिष्टविचारबहिर्भूतत्वात् । न हि शिष्टाः कश्चिद् धर्माधर्मव्यपदेशमात्रादेव श्रेयस्करत्वमश्रेयस्करत्वं वा प्रतियंति, तस्य व्यभिचारात् । कचिदश्रेयस्करेपि हि धर्मव्यपदेशो दृष्टो यथा मांसविक्रयिणां मांसदाने श्रेयस्करेपि वा धर्मव्यपदेशो, यथा संन्यासे स्वघाती पापकर्मेति तद्विधायिनि कैश्चिद्भाषणात् । सर्वैर्यस्य धर्मव्यपदेशः प्रतिपद्यते स श्रेयस्करो नान्य इति चेत् । तर्हि न यागः श्रेयस्करस्तस्य सौगतादिभिरधर्मत्वेन व्यपदिश्यमानत्वात् । सकलैर्वेदवादिभिर्यागस्य धर्मत्वेन व्यपदिश्यमानत्वाच्छ्रेयस्करत्वे सर्वैः खारपटिकैः सधनवधस्य धर्मत्वेन व्यपदिश्यमानतया श्रेयस्करत्वं किं न भवेत्, यतः श्रेयोर्थिनां संविहितानुष्ठानं न स्यात् । लोकगर्हितत्वमुभयत्र समानम् । केषांचिदगर्हितत्वं चेति ततो न सधनवधाग्निहोत्रयोः प्रत्यवायेतरसाधनत्वव्यवस्था । प्रत्यक्षादिप्रमाणबलात्तु नाग्निहोत्रस्य श्रेयस्करत्वसिद्धिरिति नास्यैव विहितानुष्ठानत्वं, यतो हिंसाहेतुत्वाभावादसिद्धो हेतुः स्यात् । तत्र प्रकृतचोदनायां बाधकभावनिश्चयाद्यर्थतस्तथाभावे संशयानुदयः पुरुषवचनविशेषवदिति न तदुपदेशपूर्वक एव सर्वदा धर्माद्युपदेशो येनास्य परोपदेशानपेक्षत्वविशेषणमसिद्धं नाम । न च परोपदेशलिंगज्ञानापेक्षा वितथत्वेपि तत्साक्षात्कर्तृपूर्वकत्वं सूक्ष्माद्यर्थोपदेशस्य प्रसिद्धस्य नोपपद्यते तथा विनाभावं संदेहायोगादित्यनवद्यं सर्वविदो ज्ञापकम् ।

अथवा—

**सूक्ष्माद्यर्थोपि वाध्यक्षः कस्यचित्सकलः स्फुटम् ।**
**श्रुतज्ञानाधिगम्यत्वान्नदीद्वीपादिदेशवत् ॥ १० ॥**

धर्माधर्मावेव सोपायहेयोपादेयतत्त्वमेव वा कस्यचिदध्यक्षं साधनीयं न तु सकलोर्थ इति न साधीयः सकलार्थप्रत्यक्षत्वासाधने तदध्यक्षासिद्धेः । संवृत्या सकलार्थः प्रत्यक्षः साध्य इत्युन्मत्तभाषितं स्फुटं तस्य तथाभावासिद्धौ कस्यचित्प्रमाणतानुपपत्तेः ।

**न हेतोः सर्वथैकांतैरनेकांतः कथंचन ।**
**श्रुतज्ञानाधिगम्यत्वात्तेषां दृष्टेष्टबाधनात् ॥ ११ ॥**
**स्थानत्रयाविसंवादिश्रुतज्ञानं हि वक्ष्यते ।**
**तेनाधिगम्यमानत्वं सिद्धं सर्वत्र वस्तुनि ॥ १२ ॥**

ततः प्रकृतहेतोरव्यभिचारिता पक्षव्यापकता च सामान्यतो बोद्धव्या । यतश्चैवं सर्वज्ञसाधनमनवद्यम् ।

**ततोऽसिद्धं परस्यात्र ज्ञापकानुपलंभनम् ।**
**नो भावसाधनायालं सर्वतत्त्वार्थवेदिनः ॥ १३ ॥**

स्वयं सिद्धं हि किंचित्कस्यचित्साधकं नान्यथातिप्रसंगात् । सिद्धमपि—

**स्वसंबंधि यदीदं स्याद्व्यभिचारिपयोनिधेः ।**
**अंभः कुंभादिसंख्यानैः सद्भिरज्ञायमानकैः ॥ १४ ॥**

न हि पयोनिधेरंभः कुंभादिसंख्यानं बह्वंभस्त्वात् कूपांभोवदित्यनुमानात् । तत्तेषामज्ञायमानतेतिचेत्, नातो विशेषेणासिद्धेस्तत्संख्यानमात्रेणाव्यभिचाराचोदनात् । एतेनार्थापत्त्युपमानाभ्यां ज्ञायमानता प्रत्युक्ता । चोदनातस्तत्प्रतिसिद्धिरितिचेत् । न । तस्याः कार्यार्थादन्यत्र प्रमाणतानिष्टेः । परेषां तु तानि संतीत्यागमात्प्रतिपत्तेर्युक्तं तैर्व्यभिचारचोदनम् ।

**सर्वसंबंधि तद्बोद्धुं किंचिद्बोधैर्न शक्यते ।**
**सर्वबोद्धास्ति चेत्कश्चित्तद्बोद्धा किं निषिध्यते ॥ १५ ॥**

सर्वसंबंधि तद् ज्ञातासिद्धं, किंचिद्ज्ञैर्ज्ञातुमशक्यत्वात् । न च सर्वज्ञस्तद्बोद्धास्ति तत्प्रतिषेधविरोधात् । षड्भिः प्रमाणैः सर्वज्ञो न वार्यत इति चायुक्तं । यस्मात्—

**सर्वसंबंधिसर्वज्ञज्ञापकानुपलंभनम् ।**
**न चक्षुरादिभिर्वेद्यमत्यक्षत्वाददृष्टवत् ॥ १६ ॥**
**नानुमानादलिंगत्वात्कार्थापत्त्युपमागतिः ।**
**सर्वस्यानन्यथाभावसादृश्यानुपपत्तितः ॥ १७ ॥**
**सर्वप्रमातृसंबंधि प्रत्यक्षादिनिवारणात् ।**
**केवलागमगम्यं च कथं मीमांसकस्य तत् ॥ १८ ॥**
**कार्येर्थे चोदनाज्ञानं प्रमाणं यस्य संमतम् ।**
**तस्य स्वरूपसत्तायां तन्नैवातिप्रसंगतः ॥ १९ ॥**
**तद्ज्ञापकोपलंभस्याभावोऽभावप्रमाणतः ।**
**साध्यते चेन्न तस्यापि सर्वत्राप्यप्रवृत्तितः ॥ २० ॥**
**गृहीत्वा वस्तुसद्भावं स्मृत्वा तत्प्रतियोगिनम् ।**
**मानसं नास्तिताज्ञानं येषामक्षानपेक्षया ॥ २१ ॥**
**तेषामशेषनृज्ञाते स्मृते तद्ज्ञापके क्षणे ।**
**जायते नास्तिताज्ञानं मानसं तत्र नान्यथा ॥ २२ ॥**
**न चाशेषनरज्ञानं सकृत्साक्षादुपेयते ।**
**न क्रमादन्यसंतानप्रत्यक्षत्वानभीष्टितः ॥ २३ ॥**

यदाप्तस्तदधिकरणस्य वचनाद्यनुमानात्सिद्धिसद्भावात्तदभिप्रायस्य च तदनुपलंभनान्निषेधे साध्ये कुतो न दोष इति न वाच्यम् ।

**अनेकांते हि विज्ञानमेकांतानुपलंभनम् ।**
**तद्विधिस्तन्निषेधश्च मतो नैवान्यथामतिः ॥ २४ ॥**

अनेकांतोपलब्धिरेव हि प्रतिपत्तुरेकांतानुलब्धिः प्रसिद्धैव स्वसंबंधिनी सा चैकांताभावमंतरेणानुपपद्यमाना तत्साधनीया । न चानेकांतोपलंभादेवानेकांतविधिरभिमतः स एव चैकांतप्रतिषेध इति नानुमानतः साधनीयस्तस्य तत्र वैयर्थ्यात् । सत्यमेतत् । कस्यचित्तु कुतश्चित्साक्षात्कृतेप्यनेकांते विपरीतारोपदर्शनात्तद्व्यवच्छेदोनुपलब्धेः साध्यते । ततोस्याः साफल्यमेव प्रमाणसंप्लवोपगमाद्वा न दोषः । परस्याप्ययं न्यायः समान इति चेत्—

**नैवं सर्वस्य सर्वज्ञज्ञापकानुपदर्शनम् ।**
**सिद्धं तद्दर्शनारोपो येन तत्र निषिध्यते ॥ २५ ॥**

सर्वसंबंधिनि सर्वज्ञज्ञापकानुपलंभे हि प्रतिपत्तुः स्वयं सिद्धे कुतश्चित्कस्यचित्सर्वज्ञज्ञापकोपलंभसमारोपो यदि व्यवच्छेदेन तदा समानो न्यायः स्यान्न चैवं सर्वज्ञाभाववादिनां तदसिद्धेः ।

**आसन् संति भविष्यंति बोद्धारो विश्वदृश्वनः ।**
**मदन्येपीति निर्णीतिर्यथा सर्वज्ञवादिनः ॥ २६ ॥**

**किंचिज्ज्ञस्यापि तद्वन्मे तेनैवेति विनिश्चयः ।**
**इत्ययुक्तमशेषज्ञसाधनोपायसंभवात् ॥ २७ ॥**

स्वयमसर्वज्ञस्यापि सर्वविदो बोद्धारो वृत्ता वर्तंते वर्तिष्यंते मत्तोऽन्येपीति युक्तं वक्तुं, तत्सिद्ध्युपायघटनात् । तत्पुनरसर्वज्ञवादिनस्ते पूर्वे नासन्न संति न भविष्यंतीति प्रमाणाभावात् । कथम्—

**यथाहमनुमानादेः सर्वज्ञं वेद्मि तत्त्वतः ।**
**तथान्येपि नराः संतस्तद्बोद्धारो निरंकुशाः ॥ २८ ॥**

संतः प्रशस्याः प्रेक्षावंतः पुरुषास्ते मदन्येप्यनुमानादिना सर्वज्ञस्य बोद्धारः प्रेक्षावत्त्वात् यथाहमिति ब्रुवतो न किंचिद्बाधकमस्ति । न च प्रेक्षावत्त्वं ममासिद्धं निरवद्यं सर्वविद्यावेदकप्रमाणवादित्वात् । यो हि यत्र निरवद्यं प्रमाणं वक्ति स तत्र प्रेक्षावानिति सुप्रसिद्धम् ।

**यथा मम न तद्ज्ञप्तेरुपलंभोस्ति जातुचित् ।**
**तथा सर्वनृणामित्यज्ञानस्यैव विचेष्टितम् ॥ २९ ॥**
**हेतोर्नरत्वकायादिमत्त्वादेर्व्यभिचारतः ।**
**स्याद्वादिनैव विश्वज्ञमनुमानेन जानता ॥ ३० ॥**

मदन्ये पुरुषाः सर्वज्ञज्ञापकोपलंभशून्याः पुरुषत्वात्कायादिमत्त्वाद् यथाहमिति वचस्तमोविलसितमेव । हेतोः स्याद्वादिनानैकांतात् । तस्य पक्षीकरणाददोष इति चेत् । न । पक्षस्य प्रत्यक्षानुमानबाधप्रसक्तेः । सर्वज्ञवादिनो हि सर्वज्ञज्ञापकमनुमानादिस्वसंवेदनप्रत्यक्षं प्रतिवादिनश्च तद्वचनविशेषोत्थानुमानसिद्धं सर्वपुरुषाणां सकलवित्साधनानुभवनशून्यत्वं बाधते हेतुश्चातीतकालः स्यादिति नासर्वज्ञवादिनां सर्वविदो बोद्धारो न केचिदिति वक्तुं युक्तम् ।

**ज्ञापकानुपलंभोस्ति तन्न तत्प्रतिषेधतः ।**
**कारकानुपलंभस्तु प्रतिघातीष्यतेऽग्रतः ॥ ३१ ॥**

तदेवं सिद्धो विश्वतत्त्वानां ज्ञाता तदभावसाधनस्य ज्ञापकानुपलंभस्य कारकानुपलंभस्य च निराकरणात् ।

**कल्मषप्रक्षयश्चास्य विश्वतत्त्वात्प्रतीयते ।**
**तमंतरेण तद्भावानुपपत्तिप्रसिद्धितः ॥ ३२ ॥**

सर्वतत्त्वार्थज्ञानं च कस्यचित्स्यात् कल्मषप्रक्षयश्च न स्यादिति न शंकनीयं तद्भाव एव तस्य सद्भावोपपत्तिसिद्धेः ।

**जायते तद्विधं ज्ञानं स्वे सति प्रतिबंधरि ।**
**स्पष्टस्वार्थावभासित्वान्निर्दोषनयनादिवत् ॥ ३३ ॥**

सर्वज्ञविज्ञानस्य स्वं प्रतिबंधकं कल्मषं तस्मिन्नसत्येव तद्भवति स्पष्टस्वविषयावभासित्वात् निर्दोषचक्षुरादिवदित्यत्र नासिद्धं साधनं प्रमाणसद्भावात् ।

नन्वामूलकल्मषस्य क्षये किं प्रमाणमिति चेदिमं ब्रूमहे;—

**क्षीयते क्वचिदामूलं ज्ञानस्य प्रतिबंधकम् ।**
**समग्रक्षयहेतुत्वाल्लोचने तिमिरादिवत् ॥ ३४ ॥**

समग्रक्षयहेतुकं हि चक्षुषि तिमिरादि न पुनरुद्भवदृष्टं तद्वत्सर्वविदो ज्ञानप्रतिबंधकमिति । ननु क्षयमात्रसिद्धावप्यामूलक्षयोस्य न सिध्येत्। पुनर्नयने तिमिरमुद्भवद् दृष्टमेवेति चेन्न, तदा तस्य समग्रक्षयहेतुत्वाभावात् । समग्रक्षयहेतुकमेव हि तिमिरादिकमिहोदाहरणं नान्यत् । न चामेन हेतोरनैकांतिकता तत्र तदभावात् । किं पुनः केवलस्य प्रतिबंधकं यस्मात्यंतपरिक्षयः क्वचित्साध्यत इति नाक्षेप्तव्यम् ।

**मोहो ज्ञानदृगावृत्त्यंतरायाः प्रतिबंधकाः ।**
**केवलस्य हि वक्ष्यंते तद्भावे तदनुद्भवात् ॥ ३५ ॥**

यद्भावे नियमेन यस्यानुद्भवस्तत्तस्य प्रतिबंधकं यथा तिमिरं नेत्रविज्ञानस्य मोहादिभावेसदादेश्च- क्षुर्ज्ञानानुद्भवश्च केवलस्येति मोहादयस्तत्प्रतिबंधकाः प्रवक्ष्यंते । ततो न धर्मिणोऽसिद्धिः ।

कः पुनरेतत्क्षयहेतुः समग्रो यद्भावाद्धेतुसिद्धिरिति चेत्;—

**तेषां प्रक्षयहेतू च पूर्णौ संवरनिर्जरे ।**
**ते तपोतिशयात्साधोः कस्यचिद्भवतो ध्रुवम् ॥ ३६ ॥**
**तपो ह्यनागताघौघप्रवर्तननिरोधनम् ।**
**तज्जन्महेतुसंघातप्रतिपक्षयतो यथा ॥ ३७ ॥**
**भविष्यत्कालकूटादिविकारौघनिरोधनम् ।**
**मंत्रध्यानविधानादि स्फुटं लोके प्रतीयते ॥ ३८ ॥**
**नृणामप्यघसंबंधो रागद्वेषादिहेतुकः ।**
**दुःखादिफलहेतुत्वादतिभुक्तिविषादिवत् ॥ ३९ ॥**
**तन्निरोधिविरागादिरूपं तप इहोच्यते ।**
**तदसिद्धावतज्जन्मकारणप्रतिपक्षता ॥ ४० ॥**
**तदा दुःखफलं कर्मसंचितं प्रतिहन्यते ।**
**कायक्लेशादिरूपेण तपसा तत्सजातिना ॥ ४१ ॥**
**स्वाध्यायादिस्वभावेन परप्रशममूर्तिना ।**
**बद्धं सातादिकृत्कर्म शक्रादिसुखजातिना ॥ ४२ ॥**

केवलप्रतिबंधकस्यानागतस्य संचितस्य वात्यंतिकक्षयहेतू समग्रौ संवरनिर्जरे तपोतिशयात् कस्यचिद- वश्यं भवत एवेति प्रमाणसिद्धं तस्य समग्रक्षयहेतुत्वसाधनं यतः ।

**ततो निःशेषतत्त्वार्थवेदी प्रक्षीणकल्मषः ।**
**श्रेयोमार्गस्य नेतास्ति स संस्तुत्यस्तदर्थिभिः ॥ ४३ ॥**

ननु निःशेषतत्त्वार्थवेदित्वे प्रक्षीणकल्मषत्वे च चारित्राख्ये सम्यग्दर्शनाविनाभाविनि सिद्धेपि भगवतः शरीरत्वेनावस्थानासंभवान्न श्रेयोमार्गोपदेशित्वं तथापि तदवस्थाने शरीरत्वाभावस्य रत्नत्रय- निबंधनत्वविरोधात् तद्भावेप्यभावात् । कारणांतरापेक्षायां न रत्नत्रयमेव संसारक्षयनिमित्तमिति कश्चित् । सोपि न विपश्चित् । यस्मात्—

**तस्य दर्शनशुद्ध्यादिभावनोपात्तमूर्तिना ।**
**पुण्यतीर्थकरत्वेन नाम्ना संपादितश्रियः ॥ ४४ ॥**
**स्थितस्य च चिरं स्वायुर्विशेषवशवर्तिनः ।**
**श्रेयोमार्गोपदेशित्वं कथंचिन्न विरुध्यते ॥ ४५ ॥**

तस्य निःशेषतत्त्वार्थवेदिनः समुद्भूतरत्नत्रयस्यापि शरीरित्वेनावस्थानं स्वायुर्विशेषवशवर्तित्वात् । न हि तदायुरपवर्तनीयं येनोपक्रमवशात् क्षीयेत, तदक्षये च तदविनाभाविनामादिकर्मत्रयोदयोपि तस्यावतिष्ठते । ततः स्थितस्य भगवतः श्रेयोमार्गोपदेशित्वं कथमपि न विरुध्यते । कुतस्तर्हि तस्यायुःक्षयः शेषाघातिकर्मक्षयश्च स्याद्यतो मुक्तिरिति चेत् फलोपभोगादायुषो निर्जरोपवर्णनादघातिकर्मत्रयस्य च शेषस्याधिकस्थितेर्दंडकपाटादिकरणविशेषादपकर्षणादिकर्मविशेषाद्वेति ब्रूमः । न चैवं रत्नत्रयहेतुता मुक्तेर्व्याहन्यते निश्चयनयादयोगिकेवलिचरमसमयवर्तिनो रत्नत्रयस्य मुक्तिहेतुत्वव्यवस्थितेः । ननु स्थितस्याप्यमोहस्य मोहविशेषात्मकविवक्षानुपपत्तेः कुतः श्रेयोमार्गवचनप्रवृत्तिरिति च न मंतव्यं । तीर्थकरत्वनामकर्मणा पुण्यातिशयेन तस्यागमलक्षणतीर्थकरत्वश्रियः सपादनात्तीर्थकरत्वनामकर्म तु दर्शनविशुद्ध्यादिभावनाबलभावि विभावयिष्यते । न च मोहवति विवक्षानांतरीयकत्वं वचनप्रवृत्तेरुपलभ्य प्रक्षीणमोहेपि तस्य तत्पूर्वकत्वसाधनं श्रेयः शरीरत्वादेः पूर्वसर्वज्ञत्वादिसाधनानुषंगात् वचोविवक्षानांतरीयकत्वासिद्धेश्चेति निरवद्यं सम्यग्दर्शनादित्रयहेतुकमुक्तिवादिनां श्रेयोमार्गोपदेशित्वम् ॥

**ज्ञानमात्रात्तु यो नाम मुक्तिमभ्येति कश्चन ।**
**तस्य तन्न ततः पूर्वमज्ञत्वात्पामरादिवत् ॥ ४६ ॥**
**नापि पश्चादवस्थानाभावाद्वाग्वृत्त्ययोगतः ।**
**आकाशस्येव मुक्तस्य क्वोपदेशप्रवर्तनम् ॥ ४७ ॥**

साक्षादशेषतत्त्वज्ञानात्पूर्वमागमज्ञानबलाद्योगिनः श्रेयोमार्गोपदेशित्वमविरुद्धमज्ञत्वासिद्धेरिति न मंतव्यं । सर्वज्ञकल्पनानर्थक्यात्, परमतानुसरणप्रसक्तेश्च । योगिज्ञानसमकालं तस्य तदित्यप्यसारं तत्त्वज्ञानपूर्वत्वविरोधात्तदुपदेशस्य तत्त्वज्ञानात्पश्चात्तु मुक्तेः खस्येव वाग्वृत्त्यघटनात् शरीरत्वेनावस्थानासंभवाद्दूरे सन्मार्गोपदेशः ॥

**संस्कारस्याक्षयात्तस्य यद्यवस्थानमिष्यते ।**
**तत्क्षये कारणं वाच्यं तत्त्वज्ञानात्परं त्वया ॥ ४८ ॥**

न हि तत्त्वज्ञानमेव संस्कारक्षये कारणमवस्थानविरोधस्य तदवस्थत्वात् ।

**संस्कारस्यायुराख्यस्य परिक्षयनिबंधनम् ।**
**धर्ममेव समाधिः स्यादिति केचित्प्रचक्षते ॥ ४९ ॥**
**विज्ञानात्सोपि यद्यन्यः प्रतिज्ञाव्याहतिस्तदा ।**
**स चारित्रविशेषो हि मुक्तेर्मार्गः स्थितो भवेत् ॥ ५० ॥**

तत्त्वज्ञानादन्यत एव संप्रज्ञातयोगात्संसारक्षये मुक्तिसिद्धिस्तत्त्वज्ञानान्मुक्तिरिति प्रतिज्ञा हीयते समाधिविशेषश्च चारित्रविशेषः स्याद्वादिनां मुक्तिमार्गो व्यवस्थितः स्यात् ॥

**ज्ञानमेव स्थिरीभूतं समाधिरिति चेन्मतम् ।**
**तस्य प्रधानधर्मत्वे निवृत्तिस्तत्क्षयाद्यदि ॥ ५१ ॥**
**तदा सोपि कुतो ज्ञानादुक्तदोषानुषंगतः ।**
**समाध्यंतरतश्चेन्न तुल्यपर्यनुयोगतः ॥ ५२ ॥**
**तस्य पुंसः स्वरूपत्वे प्रागेव स्यात्परिक्षयः ।**
**संस्कारस्यास्य नित्यत्वान्न कदाचित्संभवः ॥ ५३ ॥**

**आविर्भावतिरोभावावपि नात्मस्वभावगौ ।**
**परिणामो हि तस्य स्यात्तथा प्रकृतिवन्न तौ ॥ ५४ ॥**
**ततः स्याद्वादिनां सिद्धं मतं नैकांतवादिनाम् ।**
**बहिरंतश्च वस्तूनां परिणामव्यवस्थितेः ॥ ५५ ॥**

न स्थिरज्ञानात्मकः संप्रज्ञातो योगः संस्कारक्षयकारणमिष्यते यतस्तस्य प्रधानधर्मत्वात्तत्क्षयान्मुक्तिः स्यात् । सोपि च तत्क्षयो ज्ञानादज्ञानाद्वा समाधेरिति पर्यनुयोगस्य समानत्वादनवस्थानमाशंक्यते । नापि पुरुषस्वरूपमात्रं समाधिर्येन तस्य नित्यत्वान्नित्यं मुक्तिरापाद्यते तदाविर्भावतिरोभावाभावादन्यथा प्रधानवत्पुंसोपि परिणामसिद्धेः सर्वपरिणामीति स्याद्वादाश्रयणं प्रसज्येत । किं तर्हि ? विशिष्टं पुरुषस्वरूपमसंप्रज्ञातयोगः संस्कारक्षयकारणं । न च प्रतिज्ञाव्याघातस्तत्त्वज्ञानाज्जीवन्मुक्तेरास्थानांतकाले तत्त्वोपदेशघटनात्परमनिःश्रेयसस्य समाधिविशेषात्संस्कारक्षये प्रतिज्ञानादिति वदन्नंधसर्पबिलप्रवेशन्यायेन स्याद्वादिदर्शनं समाश्रयतीत्युपदर्श्यते ॥

**मिथ्यार्थाभिनिवेशेन मिथ्याज्ञानेन वर्जितम् ।**
**यत्पुंरूपमुदासीनं तच्चेद्ध्यानं मतं तव ॥ ५६ ॥**
**हंत रत्नत्रयं किं न ततः परमिहेष्यते ।**
**यतो न तन्निमित्तत्वं मुक्तेरास्थीयते त्वया ॥ ५७ ॥**

ननु च मिथ्यार्थाभिनिवेशेन वर्जितं पुरुषस्य स्वरूपं न सम्यग्दर्शनं तस्य तत्त्वार्थश्रद्धानलक्षणत्वात्, नापि मिथ्याज्ञानेन वर्जितं तत्सम्यग्ज्ञानं तस्य स्वार्थावायलक्षणत्वात्, उदासीनं च न पुंरूपं सम्यक्चारित्रं तस्य गुप्तिसमितिव्रतभेदस्य बाह्याभ्यंतरक्रियाविशेषोपरमलक्षणत्वात् येन तथाभूतरत्नत्रयमेव मोक्षस्य कारणमस्माभिरास्थीयते । मिथ्याभिनिवेशमिथ्याज्ञानयोः प्रधानविवर्तितया समाधिविशेषकाले प्रधानसंसर्गाभावे पुरुषस्य तद्वर्जितत्वेपि स्वरूपमात्रावस्थानात् । तदुक्तं । "तदा द्रष्टुः स्वरूपेवस्थान"मिति कश्चित् । तदसत् । सप्रज्ञातयोगकालेपि तादृशः पुंरूपस्याभावात्परमनिःश्रेयसप्रसक्तेः । तदा वैराग्यतत्त्वज्ञानाभिनिवेशात्मकप्रधानसंसर्गासद्भावान्नासप्रज्ञातयोगोस्ति, यतः परममुक्तिरिति चेत्तर्हि रत्नत्रयाज्जीवन्मुक्तिरित्यायातः प्रतिज्ञाव्याघातः परमतप्रवेशात् । तत्त्वार्थश्रद्धानतत्त्वज्ञानवैराग्याणां रत्नत्रयत्वात्ततो जीवन्मुक्तेरार्हंत्यरूपायाः परैरिष्टत्वात् । यदपि द्रष्टुरात्मनः स्वरूपेवस्थानं ध्यानं परममुक्तिनिबंधनं तदपि न रत्नत्रयात्मकतां व्यभिचरति, सम्यग्ज्ञानस्य पुंरूपत्वात्, तस्य तत्त्वार्थश्रद्धानसहचरितत्वात्, परमौदासीन्यस्य च परमचारित्रत्वात् ॥

पुरुषो न ज्ञानस्वभाव इति न शक्यव्यवस्थं । तथाहि;—

**यद्यज्ञानस्वभावः स्यात्कपिलो नोपदेशकृत् ।**
**सुषुप्तवत्प्रधानं वाचेतनत्वाद् घटादिवत् ॥ ५८ ॥**

यथैव हि सुषुप्तवत्तत्त्वज्ञानरहितः कपिलोऽन्यो वा नोपदेशकारी परस्य घटते तथा प्रधानमपि स्वयमचेतनत्वात्कुटादिवत् ।

तत्त्वज्ञानसंसर्गाद्योगी ज्ञानस्वभाव इति चेत्;—

**ज्ञानसंसर्गतोप्येष नैव ज्ञानस्वभावकः ।**
**व्योम तद्वद्विशेषस्य सर्वथानुपपत्तितः ॥ ५९ ॥**

यस्य सर्वथा निरतिशयः पुरुषस्तस्य ज्ञानसंसर्गादपि न ज्ञानस्वभावोसौ गगनवत् । कथमन्यथा चैतन्यं पुरुषस्य स्वरूपमिति न विरुध्यते? ततो न कपिलो मोक्षमार्गस्य प्रणेता येन संस्तुत्यः स्यात् ।

**एतेनैवेश्वरः श्रेयःपथप्रख्यापनेऽप्रभुः ।**
**व्याख्यातोऽचेतनो ह्येष ज्ञानादर्थांतरत्वतः ॥ ६० ॥**

नेश्वरः श्रेयोमार्गोपदेशी स्वयमचेतनत्वादाकाशवत् । स्वयमचेतनोसौ ज्ञानादर्थांतरत्वात् तद्वत् । नात्राश्रयासिद्धो हेतुरीश्वरस्य पुरुषविशेषस्य स्याद्वादिभिरभिप्रेतत्वात् । नापि धर्मिग्राहकप्रमाणबाधितः पक्षस्तद्ग्राहिणा प्रमाणेन तस्य श्रेयोमार्गोपदेशित्वेनाप्रतिपत्तेः । परोपगमतः साधनाभिधानाद्वा न प्रकृत-चोद्यावतारः सर्वस्य तथा तद्वचनाप्रतिक्षेपात् ।

**विज्ञानसमवायाच्चेच्चेतनोऽयमुपेयते ।**
**तत्संसर्गात्कथं न ज्ञः कपिलोपि प्रसिद्ध्यति ॥ ६१ ॥**

यथेश्वरो ज्ञानसमवायाच्चेतनस्तथा ज्ञानसंसर्गात्कपिलोपि ज्ञोस्तु । तथापि तस्याज्ञत्वे कथमीश्वरश्चेतनो यतोऽसिद्धो हेतुः स्यात् ।

**प्रधानाश्रयि विज्ञानं न पुंसो ज्ञत्वसाधनम् ।**
**यदि भिन्नं कथं पुंसस्तत्तथेष्टं जडात्मभिः ॥ ६२ ॥**

प्रधानाश्रितं ज्ञानं नात्मनो ज्ञत्वसाधनं ततो भिन्नाश्रयत्वात्पुरुषांतरसंसर्गिज्ञानवदिति चेत्? तर्हि न ज्ञानमीश्वरस्य ज्ञत्वसाधनं ततो भिन्नपदार्थत्वादनीश्वरज्ञानवदिति किं नानुमन्यसे ।

**ज्ञानाश्रयत्वतो वेधा नित्यं ज्ञो यदि कथ्यते ।**
**तदेव किंकृतं तस्य ततो भेदेपि तत्त्वतः ॥ ६३ ॥**

स्रष्टा ज्ञो नित्यं ज्ञानाश्रयत्वात् यस्तु न ज्ञः स न नित्यं ज्ञानाश्रयो यथा व्योमादिः, न च तथा स्रष्टा ततो नित्यं ज्ञ इति चेत् । किंकृतं तदा स्रष्टुर्ज्ञानाश्रयत्वं ज्ञानाद्भेदेपि वस्तुत इति चिंत्यम् । समवायकृत-मितिचेत् । समवायः किमविशिष्टो विशिष्टो वा? प्रथमविकल्पोनुपपन्नः ।

कस्मात्;—

**समवायो हि सर्वत्र न विशेषकृदेककः ।**
**कथं खादीनि संत्यज्य पुंसि ज्ञानं नियोजयेत् ॥ ६४ ॥**

यस्मात् "सर्वेषु समवायिष्वेक एव समवायस्तत्त्वं भवेन व्याख्यातम्" इति वचनात् । तस्मात्तेषां विशेषकृन्न नाम येन पुंस्येव ज्ञानं नियोजयेदाकाशादिपरिहारेण इति बुध्यामहे । सत्तावदेकत्वेपि समवायस्य प्रतिविशिष्टपदार्थविशेषणतया विशेषकारित्वमिति चेत्, तर्हि विशिष्टः समवायः प्रति विशेष्यं सत्तावदेव इति प्राप्तो द्वितीयः पक्षः । तत्र च—

**विशिष्टः समवायोऽयमीश्वरज्ञानयोर्यदि ।**
**तदा नानात्वमेतस्य प्राप्तं संयोगवत्तकम् ॥ ६५ ॥**

न हि, संयोगः प्रतिविशेष्यं विशिष्टो नाना न भवति दंडपुरुषसंयोगात् पटधूपसंयोगस्याभेदा-प्रतीतेः । संयोगत्वेनाभेद एवेति चेत्, तदपि ततो यदि भिन्नमेव तदा कथमस्यैकत्वे संयोगयोरेकत्वं? तन्नाना संयोगोभ्युपेयोऽन्यथा स्वमतविरोधात् । तद्वत्समवायोनेकः प्रतिपद्यतां; ईश्वरज्ञानयोः समवायः, पटरूपयोः समवाय इति विशिष्टप्रत्ययोत्पत्तेः । समवायिविशेषात्समवाये विशिष्टः प्रत्यय इति चेत्,

तर्हि संयोगिविशेषात्संयोगे विशिष्टप्रत्ययोस्तु । शिथिलः संयोगो निबिडः संयोग इति प्रत्ययो यथा संयोगे तथा नित्यं समवायः कदाचित्समवाय इति समवायेपि । समवायिनो नित्यत्वकादाचित्कत्वाभ्यां समवाये तत्प्रत्ययोत्पत्तौ संयोगिनोः शिथिलत्वनिबिडत्वाभ्यां संयोगे तथा प्रत्ययः स्यात् । स्वतः संयोगिनोर्निबिडत्वे संयोगोनर्थक इति चेत्, स्वतः समवायिनोर्नित्यत्वे समवायोनर्थकः किं न स्यात् । इहेदं समवेतमिति प्रतीतिः समवायस्यार्थ इति चेत्, संयोगस्येहेदं संयुक्तमिति प्रतीतिरर्थोस्तु । ततो न संयोगसमवाययोर्विशेषोन्यत्र विष्वग्भावाविष्वग्भावस्वभावाभ्यामिति तयोर्नानात्वं कथंचित्सिद्धं । समवायस्य नानात्वे अनित्यत्वप्रसंगः संयोगवदिति चेत् । न । आत्मभिर्व्यभिचारात्, कथंचिदनित्यत्वस्येष्टत्वाच्च । किं च—

**अनाश्रयः कथं चायमाश्रयैर्युज्यतेंजसा ।**
**तद्विशेषणता येन समवायस्य गम्यते ॥ ६६ ॥**

येषामनाश्रयः समवाय इति मतं तेषामात्मज्ञानादिभिः समवायिभिः कथं संबध्यते? संयोगेनेति चेन्न । तस्याद्रव्यत्वेन संयोगानाश्रयत्वात् । समवायेनेति चायुक्तं । स्वयं समवायांतरानिष्टेः । विशेषणभावेनेति चेत्, कथं समवायिभिरसंबद्धस्य तस्य तद्विशेषणभावो निश्चीयते? समवायिनो विशेष्यात्समवायो विशेषणमिति प्रतीतेर्विशेषणविशेष्यभाव एव संबंधः समवायिभिः समवायस्येति चेत् । स तर्हि ततो यद्यभिन्नस्तद्वद्वा समवायिनां तादात्म्यसिद्धिरभिन्नादभिन्नानां तेषां तद्वद्भेदविरोधात् । भिन्न एवेति चेत् कथं तैर्व्यपदिश्यते? परस्माद्विशेषणविशेष्यभावादिति चेत्, स एव पर्यनुयोगोऽनवस्थानं च । सुदूरमपि गत्वा स्वसंबंधिभिः संबंधस्य तादात्म्योपगमे परमतप्रसिद्धेर्न समवायिविशेषणत्वं नाम ॥

**विशेषणत्वे चैतस्य विचित्रसमवायिनाम् ।**
**विशेषणत्वे नानात्वप्रासिर्दंडकटादिवत् ॥ ६७ ॥**

सत्यपि समवायस्य नानासमवायिनां विशेषणत्वे नानात्वप्राप्तिर्दंडकटादिवत् । न हि युगपन्नानार्थविशेषणमेकं दृष्टं । सत्त्वं दृष्टमिति चेन्न । तस्य कथंचिन्नानारूपत्वात् । तदेकत्वैकांते घटः सन्निति प्रत्ययोत्पत्तौ सर्वथा सत्त्वस्य प्रतीतत्वात् सर्वार्थसत्त्वप्रतीत्यनुषंगात्क्वचित्सत्तासंदेहो न स्यात् । सत्त्वं सर्वात्मना प्रतिपन्नं न तु सर्वार्थास्तद्विशेष्या इति । तदा क्वचित्सत्तासंदेहे घटविशेषणत्वं सत्त्वस्यान्यदन्यदर्थांतरविशेषणत्वमित्यायातमनेकरूपत्वं । नानार्थविशेषणत्वं नाना न पुनः सत्त्वं तस्य ततो भेदादितिचेत् । तर्हि घटविशेषणत्वाधारत्वेन सत्त्वस्य प्रतीतौ सर्वार्थविशेषणत्वाधारत्वेनापि प्रतिपत्तेः स एव संशयापायः सर्वार्थविशेषणत्वाधारत्वस्य ततोनर्थांतरत्वात् । तस्यापि नानारूपस्य सत्त्वाद्भेदे नानार्थविशेषणत्वान्नानारूपादनर्थांतरत्वसिद्धेः । सिद्धं नानास्वभावं सत्त्वं सकृन्नानार्थविशेषणं । तद्वत्समवायोस्तु । द्रव्यत्वादिसामान्यं द्वित्वादिसंख्यानं पृथक्त्वाद्यवयविद्रव्यमाकाशादि विभुद्रव्यं च स्वयमेकमपि पुरा यदनेकार्थविशेषणमित्येतदनेन निरस्तं । सर्वथैकस्य तथाभावविरोधसिद्धेरिति न परपरिकल्पितस्वभावः समवायोस्ति, येनेश्वरस्य सदा ज्ञानसमवायितोपपत्तेर्ज्ञत्वं सिध्येत् ।

कीदृशस्तर्हि समवायोऽस्तु?—

**ततोऽर्थस्यैव पर्यायः समवायो गुणादिवत् ।**
**तादात्म्यपरिणामेन कथंचिदवभासनात् ॥ ६८ ॥**

भ्रांतं कथंचिद्द्रव्यभेदेन प्रतिभासनं समवायस्येति न मंतव्यं तद्भेदैकांतस्य ग्राहकाभावात् । न हि

प्रत्यक्षं तद्ग्राहकं तत्रेदं द्रव्यमयं गुणादिरयं समवाय इति भेदप्रतिभासाभावात् । नाप्यनुमानं लिंगाभावात् । इहेदमिति प्रत्ययो लिंगमिति चेत् । न । तस्य समवायितादात्म्यस्वभावसमवायसाधकत्वेन विरुद्धत्वात् । नित्यसर्वगतैकरूपस्य समवायेनानांतरीयकत्वात् गुणादीनां द्रव्यत्वात्कथंचित्तादात्म्याभासनस्य द्रव्यपरिणामत्वस्य भावात्साधनशून्यं साध्यशून्यं च निदर्शनमिति चेन्न, अत्यंतभेदस्य ततस्तेषामनिश्चयात्तदसिद्धेः । गुणगुणिनौ क्रियातद्वंतौ जातितद्वंतौ च परस्परमत्यंतं भिन्नौ भिन्नप्रतिभासत्वात् घटपटवदित्यनुमानमपि न तद्भेदैकांतसाधनं, कथंचिद्भिन्नप्रतिभासत्वस्य हेतोः कथंचित्तद्भेदसाधनतया विरुद्धत्वात् सिद्ध्यभावात् । न हि गुणगुण्यादीनां सर्वथा भेदप्रतिभासोस्ति कथंचित्तादात्म्यप्रतिभासनात् । तथाहि । गुणादयस्तद्वतः कथंचिदभिन्नास्ततोशक्यविवेचनत्वान्यथानुपपत्तेः । किमिदमशक्यविवेचनत्वं नाम? विवेकेन ग्रहीतुमशक्यत्वमितिचेदसिद्धं गुणादीनां द्रव्याद्भेदेन ग्रहणात् । तद्बुद्धौ द्रव्यस्याप्रतिभासनात् द्रव्यबुद्धौ च गुणादीनामप्रतीतेः । देशभेदेन विवेचयितुमशक्यत्वं तदिति चेत्, कालाकाशादिभिरनैकांतिकं साधनमिति कश्चित् । तदनवबोधविजृंभितं । स्वाश्रयद्रव्याद्द्रव्यांतरं नेतुमशक्यत्वस्याशक्यविवेचनत्वस्य कथनात् । न च तदसिद्धमनैकांतिकत्वं साध्यधर्मिणि सद्भावाद्विपक्षाद्व्यावृत्तेश्च । तन्न गुणादीनां कथंचिद्द्रव्यतादात्म्यपरिणामेनावभासनमसिद्धं, नापि द्रव्यपरिणामत्वं येन साध्यशून्यं साधनशून्यं वा निदर्शनमनुमन्यते । समवायो वार्थस्यैव पर्यायो न सिद्ध्येत्, सिद्धेपि समवायस्य द्रव्यपरिणामत्वे नानात्वे च किं सिद्धमिति प्रदर्शयति;—

**तदीश्वरस्य विज्ञानसमवायेन या ज्ञता ।**
**सा कथंचित्तदात्मत्वपरिणामेन नान्यथा ॥ ६९ ॥**
**तथानेकांतवादस्य प्रसिद्धिः केन वार्यते ।**
**प्रमाणबाधनाद्भिन्नसमवायस्य तद्वतः ॥ ७० ॥**

तदेवं समवायस्य तत्त्वतो भिन्नस्य सर्वथा प्रत्यक्षादिबाधनात्तदबाधितद्रव्यपरिणामविशेषस्य समवायप्रसिद्धेर्ज्ञानसमवायाद् ज्ञो महेश्वर इति कथंचित्तादात्म्यपरिणामादेवोक्तः स्यात् । स च मोक्षमार्गस्य प्रणेतेति भगवानर्हन्नेव नामांतरेण स्तूयमानः केनापि वारयितुमशक्यः । परस्तु कपिलादिवदज्ञो न तत्प्रणेता नाम ।

**सुगतोपि न मार्गस्य प्रणेता व्यवतिष्ठते ।**
**तृष्णाविद्याविनिर्मुक्तेस्तत्समाख्यातखड्गिवत् ॥ ७१ ॥**

योप्याह । अविद्यातृष्णाभ्यां विनिर्मुक्तत्वात्प्रमाणभूतो जगद्धितैषी सुगतो मार्गस्य शास्तेति । सोपि न प्रेक्षावान् । तथा व्यवस्थित्यघटनात् । न हि शोभनं संपूर्णं वा गतः सुगतो व्यवतिष्ठते, क्षणिकनिरास्रवचित्तस्य प्रज्ञापारमितस्य शोभनत्वसंपूर्णत्वाभ्यामिष्टस्य सिद्ध्युपायापायात् । भावनाप्रकर्षपर्यंतस्तत्सिद्ध्युपाय इति चेत् । न । भावनाया विकल्पात्मकत्वेनातत्त्वविषयायाः प्रकर्षपर्यंतप्राप्तायास्तत्त्वज्ञानवैतृष्ण्यस्वभावोदयविरोधात् । न हि सा श्रुतमयी तत्त्वविषया श्रुतस्य प्रमाणत्वानुषंगात् । तत्त्वविवक्षायां प्रमाणं सेति चेत् तर्हि चिंतामयी स्यात् । तथा च न श्रुतमयी भावना नाम । परार्थानुमानरूपा श्रुतमयी स्वार्थानुमानात्मिका चिंतामयीति विभागोपि न श्रेयान् । सर्वथा भावनायास्तत्त्वविषयत्वायोगात् । तत्त्वप्रापकत्वाद्वस्तुविषयत्वमिति चेत्, कथमवस्त्वालंबना सा वस्तुनः प्रापिका । तदध्यवसायात्तत्र प्रवर्तकत्वादिति चेत् । किं पुनरध्यवसायो वस्तु विषयीकुरुते यतोस्य तत्र प्रवर्तकत्वं । स्वलक्षणदर्शनबलप्रभावोऽ-

ध्यवसायः प्रवृत्तिविषयोपदर्शकत्वात्प्रवर्तक इति चेत्, प्रत्यक्षपृष्ठभावी विकल्पस्तथास्तु समारोपव्यवच्छेदकत्वादनुमानाध्यवसायस्य तथाभावे दर्शनोत्थाध्यवसायस्य किमतथाभावस्तदविशेषात् । प्रवृत्तस्यारोपस्य व्यवच्छेदोध्यवसायः प्रवर्तको न पुनः प्रवर्तिष्यमाणस्य व्यवच्छेदक इति ब्रुवाणः कथं परीक्षको नाम तत्त्वार्थवासनाजनिताध्यवसायस्य वस्तुविषयतायामनुमानाध्यवसायस्यापि सेष्टेति तदात्मिकाभावना न तत्त्वविषयतो नाविद्याप्रसूतिहेतुरविज्ञातो विद्योदयविरोधात् । नन्वविद्यानुकूलाया एवाविद्याया विद्याप्रसवनहेतुत्वं विरुद्धं न पुनर्विद्यानुकूलायाः सर्वस्य तत एव विद्योदयोपरमादन्यथा विद्यानादित्वप्रसक्तेः संसारप्रवृत्त्ययोगादिति चेत् । न । स्याद्वादिनां विद्याप्रतिबंधकाभावाद्विद्योदयस्येष्टेः । विद्यास्वभावो ह्यात्मा तदावरणोदये स्यादविद्याविवर्तः स्वप्रतिबंधकाभावे तु स्वरूपे व्यवतिष्ठत इति नाविद्यैवानादिर्विद्योदयनिमित्ता सकलविद्यामुपेयामपेक्ष्य देशविद्या तदुपायरूपा भवत्यविद्यैवेति चेत् । न । देशविद्याया देशतः प्रतिबंधकाभावादविद्यात्वविरोधात् । या तु केनचिदंशेन प्रतिबंधकस्य सद्भावादविद्यात्मनः सापि न विद्योदयकारणं तदभाव एव विद्याप्रसूतेरिति न विद्यात्मिका भावना गुरुणोपदिष्टा साध्यमाना सुगतत्वहेतुर्यतः सुगतो व्यवतिष्ठते । भवतु वा सुगतस्य विद्यावैतृष्ण्यसंप्राप्तिस्तथापि न शास्तृत्वं व्यवस्थानाभावात् । तथाहि । सुगतो न मार्गस्य शास्ता व्यवस्थानविकलत्वात् खड्गिवत् । व्यवस्थानविकलोसावविद्यातृष्णाविनिर्मुक्तत्वात्तद्वत् ।

जगद्धितैषितासक्तेर्बुद्धो यद्यवतिष्ठते ।
तथैवात्महितैषित्वबलात् खड्गीह तिष्ठतु ॥ ७२ ॥

बुद्धो भवेयं जगतो हितायेति भावनासामर्थ्यादविद्यातृष्णाप्रक्षयेपि सुगतस्य व्यवस्थाने खड्गिनोप्यात्मानं शमयिष्यामीति भावनाबलाद्व्यवस्थानमस्तु विशेषाभावात् ।

तथागतोपकार्यस्य जगतोऽनंतता यदि ।
सर्वदावस्थितौ हेतुर्मतः सुगतसंततेः ॥ ७३ ॥
खड्गिनोप्युपकार्यस्य स्वसंतानस्य किं पुनः ।
न स्यादनंतता येन तन्निरन्वयनिर्वृतिः ॥ ७४ ॥
स्वचित्तशमनात्तस्य संतानो नोत्तरत्र चेत् ।
नात्मानं शमयिष्यामीत्यभ्यासस्य विधानतः ॥ ७५ ॥
न चांत्यचित्तनिष्पत्तौ तत्समाप्तिर्विभाव्यते ।
तत्रापि शमयिष्यामीत्येष्यचित्तव्यपेक्षणात् ॥ ७६ ॥
चिंतांतरसमारंभि नांत्यं चित्तमनास्रवम् ।
सहकारिविहीनत्वात्तादृग्दीपशिखा यथा ॥ ७७ ॥
इत्ययुक्तमनैकांताद्बुद्धचित्तेन तादृशा ।
हितैषित्वनिमित्तस्य सद्भावोपि समो द्वयोः ॥ ७८ ॥
चरमत्वविशेषस्तु नेतरस्य प्रसिद्ध्यति ।
ततोऽनंतरनिर्वाणसिद्ध्यभावात्प्रमाणतः ॥ ७९ ॥

खड्गिनो निरास्रवं चित्तं चित्तांतरं नारभते जगद्धितैषित्वाभावे चरमत्वे च सति सहकारिरहितत्वात् तादृग्दीपशिखावदित्ययुक्तं, सहकारिरहितत्वस्य हेतोर्बुद्धचित्तेनानैकांतात्, तद्विशेषणस्य हितैषित्वाभावस्य

चरमत्वस्य वासिद्धत्वात् । समानं हि तावद्धितैषित्वं खड्गिसुगतयोरात्मजगद्विषयं । सर्वविषयं हितैषित्वं खड्गिनो नास्त्येवेति चेत्, सुगतस्यापि कृतकृत्येषु तदभावात् । तत्र तद्भावे वा सुगतस्य यत्किंचन-कारित्वं प्रवृत्तिनैष्फल्यात् । यत्तु देशतोऽकृतकृत्येषु तस्य हितैषित्वं तत्खड्गिनोपि स्वचित्तेषूत्तरे-ष्वस्तीति न जगद्धितैषित्वाभावः सिद्धः । नापि चरमत्वं प्रमाणाभावात् । चरमं निरास्रवं खड्गिचित्तं स्वोपादेयानारंभकत्वाद्वर्तिस्नेहादिशून्यदीपादिक्षणवदिति चेत् । न । अन्योन्याश्रयणात् । सति हि तस्य स्वोपादेयानारंभकत्वे चरमत्वस्य सिद्धिस्तत्सिद्धौ च स्वोपादेयानारंभकत्वसिद्धिरिति नाप्रमाणसिद्ध-विशेषणो हेतुर्विपक्षवृत्तिश्च । खड्गिसंतानस्यानंतत्वप्रतिषेधायालं येनोत्तरोत्तरैष्यच्चिंतापेक्षयात्मानं शमयिष्या-मीत्यभ्यासविधानात्स्वचित्तैकस्य शमनेपि तत्संतानस्यापरिसमाप्तिसिद्धेर्निरन्वयनिर्वाणाभावः । सुगतस्ये-वानंतजगदुपकारस्य न व्यवतिष्ठेत तथापि कस्यचित्प्रशांतनिर्वाणे सुगतस्य तदस्तु । ततः सुष्ठु गत एव सुगतः । स च कथं मार्गस्य प्रणेता नाम ॥

**माभूत्तच्छांतनिर्वाणं सुगतोस्तु प्रमात्मकः ।**
**शास्तेति चेन्न तस्यापि वाक्प्रवृत्तिविरोधतः ॥ ८० ॥**

न कस्यचिच्छांतनिर्वाणमस्ति येन सुगतस्य तद्वत्तदापाद्यते निरास्रवचित्तोत्पादलक्षणस्य निर्वाणस्येष्ट-त्वात् । ततः शोभनं संपूर्णं वा गतः सुगतः प्रमात्मकः शास्ता मार्गस्येति चेत् । न । तस्यापि विधूतक-ल्पनाजालस्य विवक्षाविरहाद्वाचःप्रवृत्तिविरोधात् ॥

**विशिष्टभावनोद्भूतपुण्यातिशयतो ध्रुवम् ।**
**विवक्षामंतरेणापि वाग्वृत्तिः सुगतस्य चेत् ॥ ८१ ॥**

बुद्धभावनोद्भूतत्वाद्बुद्धत्वं संवर्तकाद्धर्मविशेषाद्विनापि विवक्षाया बुद्धस्य स्फुटं वाग्वृत्तिर्यदि तदा स सान्वयो निरन्वयो वा स्यात् । किं चातः—

**सिद्धं परमतं तस्य सान्वयत्वे जिनत्वतः ।**
**प्रतिक्षणविनाशित्वे सर्वथार्थक्रियाक्षतिः ॥ ८२ ॥**

न सान्वयः सुगतो येन तीर्थकरत्वभावनोपात्तात्तीर्थकरत्वनामकर्मणोतिशयवतः पुण्यादागमलक्षणं तीर्थं प्रवर्तयतोऽर्हतो विवक्षारहितस्य नामांतरकरणात् स्याद्वादिमतं सिध्येत् । नापि प्रतिक्षणविनाशी सुगतः क्षणे शास्ता येनास्य क्रमयौगपद्याभ्यामर्थक्रियाक्षतिरापाद्यते । किं तर्हि ? सुगतसंतानः शास्तेति यो ब्रूयात्तस्यापि स संतानः किमवस्तु वस्तु वा स्यात् ? उभयत्रार्थक्रियाक्षतिपरमतसिद्धी तदवस्थे । तथाहि—

**संतानस्याप्यवस्तुत्वादन्यथात्मा तथोच्यताम् ।**
**कथंचिद्द्रव्यतादात्म्याद्विनाशस्तस्य संभवात् ॥ ८३ ॥**

स्वयमपरामृष्टभेदाः पूर्वोत्तरक्षणाः संतान इति चेत् तर्हि तस्यावस्तुत्वादर्थक्रियाक्षतिः संतानिभ्यस्त-त्त्वातत्त्वाभ्यामवाच्यत्वस्यावस्तुत्वेन व्यवस्थापनात् । संतानस्य वस्तुत्वे वा सिद्धं परमतमात्मनस्तथाभि-धानात् । कथंचिद्द्रव्यतादात्म्येनैव पूर्वोत्तरक्षणानां संतानत्वसिद्धेः प्रत्यासत्त्यंतरस्य व्यभिचारात्, तात्त्विक-तानभ्युपगमाच्च ।

**पूर्वकालविवक्षातो नष्टाया अपि तत्त्वतः ।**
**सुगतस्य प्रवर्तंते वाच इत्यपरे विदुः ॥ ८४ ॥**

यथा जाग्रद्विज्ञानान्नष्टादपि प्रबुद्धविज्ञानं दृष्टं तथा नष्टायाः पूर्वविवक्षायाः सुगतस्य वाचोपि प्रवर्तमानाः संभाव्या इति चेत्—

**तेषां सवासनं नष्टं कल्पनाजालमर्थकृत् ।**
**कथं न युक्तिमध्यास्ते शुद्धस्यातिप्रसंगतः ॥ ८५ ॥**

यत्सवासनं नष्टं तन्न कार्यकारि यथात्मीयाभिनिवेशलक्षणं कल्पनाजालं । सुगतस्य सवासनं नष्टं च विवक्षाख्यकल्पनाजालमिति न पूर्वविवक्षातोस्य वाग्वृत्तिर्युक्तिमधिवसति । जाग्रद्विज्ञानेन व्यभिचारी हेतुरिति चेत् । न । सवासनग्रहणात् । तस्य हि वासनाप्रबोधे सति स्वकार्यकारित्वमन्यथातिप्रसंगात् । सुगतस्य विवक्षा वासनाप्रबोधोपगमे तु विवक्षोत्पत्तिप्रसक्तेः कुतोऽत्यंतं कल्पनाविलयः । स्यान्मतं । सुगतवाचो विवक्षापूर्विका वाक्त्वादस्मदादिवाग्वत् । तद्विवक्षा च बुद्धदशायां न संभवति, तत्संभवे बुद्धत्वविरोधात् । सामर्थ्यात् पूर्वकालभाविनी विवक्षा वाग्वृत्तिकारणं गोत्रस्खलनवदिति । तदयुक्तम् । गोत्रस्खलनस्य तत्कालविवक्षापूर्वकत्वप्रतीतेः, तद्धि पद्मावतीतिवचनकाले वासवदत्तेतिवचनं । न च वासवदत्ताविवक्षा तद्वचनहेतुरन्यदा च तद्वचनमिति युक्तं । प्रथमं पद्मावतीविवक्षा हि वत्सराजस्य जाता तदनंतरमाश्वेवात्यंताभ्यासवशाद्वासवदत्ताविवक्षा तद्वचनं चेति सर्वजनप्रसिद्धं । कथमन्यथान्यमनस्केन मया प्रस्तुतातिक्रमेणान्यदुक्तमिति संप्रत्ययः स्यात् । तथा च कथमतीतविवक्षापूर्वकत्वे सुगतवचनस्य गोत्रस्खलनमुदाहरणं येन विवक्षामंतरेणैव सुगतवाचो न प्रवर्तेरन् । सुषुप्तवचोवत् प्रकारांतरासंभवात् । न हि सुषुप्तस्य सुषुप्तदशायां विवक्षासंवेदनमस्ति तदभावप्रसंगात् । पश्चादनुमानांतरविवक्षासंवेदनमिति चेत् । न । लिंगाभावात् । वचनादि लिंगमिति चेत्, सुषुप्तवचनादिर्जाग्रद्वचनादिर्वा ? प्रथमपक्षे व्याप्त्यसिद्धिः, स्वतः परतो वा सुषुप्तवचनादेर्विवक्षापूर्वकत्वेन प्रतिपत्तुमशक्तेः । जाग्रद्वचनादिस्तु न सुषुप्तविवक्षापूर्वको दृष्ट इति तदगमक एव । सन्निवेशादिवज्जगत्कृतकत्वसाधने यादृशामभिनवकूपादीनां सन्निवेशादि धीमत्कारणकं दृष्टं तादृशामदृष्टधीमत्कारणानामपि जीर्णकूपादीनां तद्गमकं नान्यादृशानां भूधरादीनामिति ब्रुवाणा यादृशां जाग्रदादीनां विवक्षापूर्वकं वचनादि दृष्टं तादृशामेव देशांतरादिवर्तिनां तत्तद्गमकं नान्यादृशां सुषुप्तादीनामिति कथं न प्रतिपद्यते । तथा प्रतिपत्तौ च न सुगतस्य विवक्षापूर्विका वाग्वृत्तिः साक्षात्परंपरया वा शुद्धस्य विवक्षापायादन्यथातिप्रसंगात् ।

**सान्निध्यमात्रतस्तस्य चिंतारत्नोपमस्य चेत् ।**
**कुड्यादिभ्योपि वाचः स्युर्विनेयजनसंमताः ॥ ८६ ॥**

सत्यं न सुगतस्य वाचो विवक्षापूर्विकास्तत्सन्निधानमात्रात् कुड्यादिभ्योपि यथा प्रतिपत्तुरभिप्रायं तदुद्भूतेश्चिंतारत्नोपमत्वात्सुगतस्य । तदुक्तं । "चिंतारत्नोपमानो जगति विजयते विश्वरूपोप्यरूपः" इति केचित् । ते कथमीश्वरस्यापि सन्निधानाज्जगदुद्भवतीति प्रतिषेद्धुं समर्थाः, सुगतेश्वरयोरनुपकारकत्वादिना सर्वथा विशेषाभावात् ।

तथाहि—

**किमेवमीश्वरस्यापि सांनिध्याज्जगदुद्भवत् ।**
**निषिध्यते तदा चैव प्राणिनां भोगभूतये ॥ ८७ ॥**
**सर्वथानुपकारित्वान्नित्यस्येशस्य तन्न चेत् ।**
**सुगतस्योपकारित्वं देशनासु किमस्ति ते ॥ ८८ ॥**

**तद्भावभाविता मात्रा तस्य ता इति चेन्मतम् ।**
**पिशाचादेस्तथैवैताः किं न स्युरविशेषतः ॥ ८९ ॥**
**तस्यादृश्यस्य तद्धेतुभावनिश्चित्यसंभवे ।**
**सुगतः किं नु दृश्यस्ते येनासौ तन्निबंधनम् ॥ ९० ॥**
**ततोनाश्वास एवैतद्देशनासु परीक्षया ।**
**सतां प्रवर्तमानामिति कैश्चित्सुभाषितम् ॥ ९१ ॥**

तदेवं न सुगतो मार्गस्योपदेष्टा प्रमाणत्वाभावादीश्वरवत् । न प्रमाणमसौ तत्त्वपरिच्छेदकत्वाभावात्तद्वत् । न तत्त्वपरिच्छेदकोसौ सर्वथार्थक्रियारहितत्वात्तद्वदेव । न वार्थक्रियारहितत्वमसिद्धं क्षणिकस्य क्रमाक्रमाभ्यां तद्विरोधान्नित्यवत् । स्यान्मतं । संवृत्त्यैव सुगतः शास्ता मार्गस्येष्यते न वस्तुतश्चित्राद्वैतस्य सुगतत्वादिति । तदसत् । सुतरां तस्य शास्तृत्वायोगात् । तथाहि—

**चित्राद्यद्वैतवादे च दूरे सन्मार्गदेशना ।**
**प्रत्यक्षादिविरोधश्च भेदस्यैव प्रसिद्धितः ॥ ९२ ॥**

परमार्थतश्चित्राद्वैतं तावन्न संभवत्येव चित्रस्याद्वैतत्वविरोधात् । तद्वद्बहिरर्थस्याप्यन्यथा नानैकत्वसिद्धेः । स्यान्मतं । चित्राकाराप्येका बुद्धिर्बाह्यचित्रविलक्षणत्वात् । शक्यविवेचनं हि बाह्यं चित्रमशक्यविवेचना स्वबुद्धिर्नीलाद्याकारा इति । तदसत् । बाह्यद्रव्यस्य चित्रपर्यायात्मकस्याशक्यविवेचनत्वाविशेषाच्चित्रैकरूपतापत्तेः । यथैव हि ज्ञानस्याकारास्ततो विवेचयितुमशक्यास्तथा पुद्गलादेरपि रूपादयः । नानारत्नराशौ बाह्ये पद्मरागमणिरयं चंद्रकांतमणिश्चायमिति विवेचनं प्रतीतमेवेति चेत् । तर्हि नीलाद्याकारैकज्ञानेपि नीलाकारोयं पीताकारश्चायमिति विवेचनं किं न प्रतीतं? चित्रप्रतिभासकाले तन्न प्रतीयत एव पश्चात्तु नीलाद्याभासानि ज्ञानांतराण्यविद्योदयाद्विवेकेन प्रतीयंत इति चेत् । तर्हि मणिराशिप्रतिभासकाले पद्मरागादिविवेचनं न प्रतीयत एव, पश्चात्तु तत्प्रतीतिरविद्योदयादिति शक्यं वक्तुं । मणिराशेर्देशभेदेन विभजनं विवेचनमिति चेत् । भिन्नज्ञानसंतानराशेः समं । एकज्ञानाकारेषु तदभाव इति चेत् । एकमण्याकारेष्वपि । मणेरेकस्य खंडने तदाकारेषु तदस्तीति चेत् । ज्ञानस्यैकस्य खंडने समानं । पराण्येव ज्ञानानि तत्खंडने तथेति चेत् । पराण्येव मणिखंडद्रव्याणि मणिखंडने तानीति समानम् । नन्वेवं विचित्रज्ञानं विवेचयन्नर्थे पततीति तदविवेचनमेवेति चेत् । तर्हि एकत्वपरिणतद्रव्याकारानेवं विवेचयन्नानाद्रव्याकारेषु पततीति तदविवेचनमस्तु । ततो यथैकज्ञानाकाराणामशक्यविवेचनत्वं तथैकपुद्गलादिद्रव्याकाराणामपीति ज्ञानवद्बाह्यमपि चित्रं सिद्ध्यत्कथं प्रतिषेध्यं येन चित्राद्वैतं सिद्ध्येत् । न च सिद्धेपि तस्मिन् मार्गोपदेशनास्ति, तत्त्वतो मोक्षतन्मार्गादेरभावात् । संवेदनाद्वैते तदभावोऽनेन निवेदितः । प्रत्यक्षादिभिर्भेदप्रसिद्धेः । तद्विरुद्धं च चित्राद्यद्वैतमिति सुगतमतादन्य एवोपशमविधेर्मार्गः सिद्धः । ततो न सुगतस्तत्प्रणेता ब्रह्मवत् ।

**न निरोधो न चोत्पत्तिर्न बद्धो न च मोचकः ।**
**न बंधोस्ति न वै मुक्तिरित्येषा परमार्थता ॥ ९३ ॥**
**न ब्रह्मवादिनां सिद्धा विज्ञानाद्वैतवत्स्वयम् ।**
**नित्यसर्वगतैकात्माप्रसिद्धेः परतोपि वा ॥ ९४ ॥**

न हि नित्यादिरूपस्य ब्रह्मणः स्वतः सिद्धिः क्षणिकानंशसंवेदनवत् । नापि परतस्तस्यानिष्टेः । अन्यथा

द्वैतप्रसक्तेः। कल्पितादनुमानादेः तत्साधने न तात्त्विकी सिद्धिर्यतो निरोधोत्पत्तिबद्धमोचकबंधमुक्तिरहितं प्रतिभासमात्रमास्थाय मार्गदेशना दूरोत्सारितैवेत्यनुमन्यते। तदेवं तत्त्वार्थशासनारंभेऽर्हन्नेव स्याद्वादनायकः स्तुतियोग्योऽस्तदोषत्वात्। अस्तदोषोऽसौ सर्वविच्वात्। सर्वविदसौ प्रमाणान्वितमोक्षमार्गप्रणायकत्वात्। ये तु कपिलादयोऽसर्वज्ञास्ते न प्रमाणान्वितमोक्षमार्गप्रणायकास्तत एवासर्वज्ञत्वादनस्तदोषा इति न परीक्षकजनस्तवनयोग्यास्तेषां सर्वथेहितहीनमार्गत्वात् सर्वथैकांतवादिनां मोक्षमार्गव्यवस्थानुपपत्तेरित्युपसंह्रियते॥

**ततः प्रमाणान्वितमोक्षमार्गप्रणायकः सर्वविदस्तदोषः।**
**स्याद्वादभागेव नुतेरिहार्हः सोऽर्हन्परे नेहितहीनमार्गाः॥ ९५॥**

इति शास्त्रादौ स्तोतव्यविशेषसिद्धिः॥

**स्वसंवेदनतः सिद्धः सदात्मा बाधवर्जितात्।**
**तस्य क्ष्मादिविवर्तात्मन्यात्मन्यनुपपत्तितः॥ ९६॥**

क्षित्यादिपरिणामविशेषश्चेतनात्मकः सकललोकप्रसिद्धमूर्तिरात्मा ततोन्यो न कश्चित्प्रमाणाभावादिति कस्य सर्वज्ञत्ववीतरागत्वे मोक्षो मोक्षमार्गप्रणेतृत्वं स्तुत्यता मोक्षमार्गप्रतिपित्सा वा सिध्येत्। तदसिद्धौ च नादिसूत्रप्रवर्तनं श्रेय इति योप्याक्षिपति सोपि न परीक्षकः। स्वसंवेदनादात्मनः सिद्धत्वात्। स्वसंवेदनं भ्रांतमिति चेत्। न। तस्य सर्वदा बाधवर्जितत्वात्। प्रतिनियतदेशपुरुषकालबाधवर्जितेन विपरीतसंवेदनेन व्यभिचार इति न मंतव्यं, सर्वदेति विशेषणात्। न च क्ष्मादिविवर्तात्मके चैतन्यविशिष्टकायलक्षणे पुंसि स्वसंवेदनं संभवति, येन ततोर्थांतरमात्मानं न प्रसाधयेत्।

स्वसंवेदनमसिद्धमित्यत्रोच्यते;—

**स्वसंवेदनमप्यस्य बहिःकरणवर्जनात्।**
**अहंकारास्पदं स्पष्टमबाधमनुभूयते॥ ९७॥**

न हीदं नीलमित्यादि प्रतिभासनं स्वसंवेदनं बाह्येंद्रियजत्वादनहंकारास्पदत्वात्, न च तथाहं सुखीति प्रतिभासनमिति स्पष्टं तदनुभूयते। गौरोहमित्यवभासनमनेन प्रत्युक्तं, करणापेक्षत्वादहं गुल्मीत्यवभासनवत्। करणापेक्षं हीदं शरीरांतःस्पर्शनेंद्रियनिमित्तत्वात्। सुख्यहमित्यवभासनमिति तथास्तु तत एवेति चेत्। न। तस्याहंकारमात्राश्रयत्वात्। भ्रांतं तदिति हि चेन्न। अबाधत्वात्। नन्वहं सुखीति वेदनं करणापेक्षं वेदनत्वादहं गुल्मीत्यादिवेदनवदित्यनुमानबाधस्य सद्भावात्सबाधमेवेति चेत्। किमिदमनुमानं करणमात्रापेक्षत्वस्य साधकं बहिःकरणापेक्षत्वस्य साधकं वा? प्रथमपक्षे न तत्साधकं स्वसंवेदनस्यांतकरणापेक्षस्येष्टत्वात्। द्वितीयपक्षे प्रतीतिविरोधः स्वतस्तस्य बहिःकरणापेक्षत्वाप्रतीतेः। स्वरूपमात्रपरामर्शि वाहं सुखीत्यावेदनमित्यनुमानादपि तस्य तथाभावासिद्धेः। स्वात्मनि क्रियाविरोधात् स्वरूपपरामर्शणमस्यासिद्धमिति चेत्।

**तद्विलोपे न वै किंचित्कस्यचिद्व्यवतिष्ठते।**
**स्वसंवेदनमूलत्वात्स्वेष्टतत्त्वव्यवस्थितेः॥ ९८॥**

पृथिव्यापस्तेजोवायुरिति तत्त्वानि, सर्वमुपप्लवमात्रमिति वा स्वेष्टं तत्त्वं व्यवस्थापयत्स्वसंवेदनं स्वीकर्तुमर्हत्येव, अन्यथा तदसिद्धेः। परपर्यनुयोगमात्रं कुरुते न पुनस्तत्त्वं व्यवस्थापयतीति चेत्, व्याहतमिदं तस्यैवेष्टत्वात्। परोपगमात् परपर्यनुयोगमात्रं कुरुते न तु स्वयमिष्टे येन तदेव तत्त्वं व्यवस्थापितं

भवेदिति चेत् । स परोपगमो यद्युपप्लुतस्तदा न ततः परपर्यनुयोगो युक्तः । सोनुपप्लुतश्चेत् कथं न स्वयमिष्टः । परोपगमांतराद्नुपप्लुतो न स्वयमिष्टत्वादिति चेत् । तदपि परोपगमांतरमुपप्लुतं न वेद्यनिवृत्तेः पर्यनुयोगः । सुदूरमपि गत्वा कस्यचित्स्वयमिष्टौ सिद्धमिष्टतत्त्वव्यवस्थापनं स्वसंविदितं प्रमाणमन्वाकर्षत्यन्यथा घटादेरिव तद्व्यवस्थापकत्वायोगात् । न हि स्वयमसंविदितं वेदनं परोपगमेनापि विषयपरिच्छेदकं । वेदनांतरविदितं तदिष्टसिद्धिनिबंधनमिति चेन्न । अनवस्थानात् । तथाहि—

**संवेदनांतरेणैव विदिताद्वेदनाद्यदि ।**
**स्वेष्टसिद्धिरुपेयेत तदा स्यादनवस्थितिः ॥ ९९ ॥**
**प्राच्यं हि वेदनं तावन्नार्थं वेदयते ध्रुवम् ।**
**यावन्नान्येन बोधेन बुद्ध्यं सोप्येवमेव तु ॥ १०० ॥**
**नार्थस्य दर्शनं सिद्ध्येत् प्रत्यक्षं सुरमंत्रिणः ।**
**तथा सति कृतश्च स्यान्मतांतरसमाश्रयः ॥ १०१ ॥**

अर्थदर्शनं प्रत्यक्षमिति बृहस्पतिमतं परित्यज्यैकार्थसमवेतानंतरज्ञानवेद्यमर्थज्ञानमिति ब्रुवाणः कथं चार्वाको नाम ! परोपगमात्तथावचनमिति चेन्न । स्वसंविदितज्ञानवादिनः परत्वात्, ततोपि मतांतरसमाश्रयस्य दुर्निवारत्वात् । न च तदुपपन्नमनवस्थानात् । इति सिद्धं स्वसंवेदनं बाधवर्जितं सुख्यहमित्यादि कायात्तत्त्वांतरतयात्मनो भेदं साधयतीति किं नश्चिंतया ।

**विभिन्नलक्षणत्वाच्च भेदश्चैतन्यदेहयोः ।**
**तत्त्वांतरतया तोयतेजोवदिति मीयते ॥ १०२ ॥**

चैतन्यदेहौ तत्त्वांतरत्वेन भिन्नौ भिन्नलक्षणत्वात् तोयतेजोवत् । इत्यत्र नासिद्धो हेतुः, स्वसंवेदनलक्षणत्वाच्चैतन्यस्य, काठिन्यलक्षणत्वात् क्षित्यादिपरिणामात्मनो देहस्य, तयोर्भिन्नलक्षणत्वस्य सिद्धेः । परिणामिपरिणामभावेन भेदसाधने सिद्धसाधनमित्ययुक्तं तत्त्वांतरतयेति साध्यदेहचैतन्ययोः तत्त्वान्तरतया भेदसाधममस्ति विशेषणात् । कुटपटाभ्यां भिन्नलक्षणाभ्यां तत्त्वांतरत्वेन भेदरहिताभ्यामनेकांत इति चेन्न । तत्र परेषां भिन्नलक्षणत्वासिद्धेरन्यथा चत्त्वार्येव तत्त्वानीति व्यवस्थानुपपत्तेः । कुटपटादीनां भिन्नलक्षणत्वेपि तत्त्वांतराभावे क्षित्यादीनामपि तत्त्वांतराभावात् । धारणादिलक्षणसामान्यभेदात्तेषां तत्त्वांतरत्वं न लक्षणविशेषभेदाद्येन घटपटादीनां तत्प्रसंग इति चेत्, तर्हि स्वसंविदत्वेतरत्वलक्षणसामान्यभेदाद्देहचैतन्ययोस्तत्त्वांतरत्वसाधनात् कथं कुटपटाभ्यां तस्य व्यभिचारः ? स्याद्वादिनां पुनर्विशेषलक्षणभेदाद्भेदसाधनेपि न ताभ्यामनेकांतः, कथंचित्तत्त्वांतरतया तयोर्भेदोपगमात् । सत्त्वादिसामान्यलक्षणभेदे हेतुरसिद्ध इति चेन्न । कथमन्यथा क्षित्यादिभेदसाधनेपि सोऽसिद्धो न भवेत् ? असाधारणलक्षणभेदस्य हेतुत्वान्नैवमिति चेत्, समानमन्यत्र, सर्वथा विशेषाभावात् ॥

**भिन्नप्रमाणवेद्यत्वादित्यप्येतेन वर्णितम् ।**
**साधितं बहिरंतश्च प्रत्यक्षस्य विभेदतः ॥ १०३ ॥**

बहिरंतर्मुखाकारयोरिंद्रियजस्वसंवेदनयोर्भेदेन प्रसिद्धौ सिद्धमिदं साधनं वर्णनीयं देहचैतन्ये भिन्ने भिन्नप्रमाणवेद्यत्वादिति । करणजज्ञानवेद्यो हि देहः स्वसंवेदनवेद्यं चैतन्यं प्रतीतमिति सिद्धं साधनं स्वयं स्वसंवेदनवेद्येन परैरनुमेयेन भिन्नेन चैतन्येन व्यभिचारीति न युक्तं, स्वसंवेद्यानुमेयस्वभावाभ्यां तस्य भेदात् । तत एवैकस्य प्रत्यक्षानुमानपरिच्छेद्येनाग्निना न तदनैकांतिकं, नापि मारणशक्त्यात्मकविषद्रव्येण

शक्र तादृशा(?) शक्तिशक्तिमतोः कथंचिद्भेदप्रसिद्धेः । सर्वथा भेदस्य देहचैतन्ययोरप्यसाधनत्वात् । तथा साधने सद्द्रव्यत्वादिनापि भेदप्रसक्तेर्नोभयोरपि सत्त्वद्रव्यत्वादयोरव्यवतिष्ठेरन् । यथा हि देहस्य चैतन्यात् सत्त्वेन व्यावृत्तौ सत्त्वविरोधस्तथा चैतन्यस्यापि देहात् । एवं द्रव्यत्वादिभिर्व्यावृत्तौ चोद्यं । भिन्नप्रमाणवेद्यत्वादेवेत्यवधारणाद्वा न केनचिद्व्यभिचारचोदना हेतोः संभवति येन विशेषणमेकेनेत्यादि प्रयुज्यते । संदिग्धविपक्षव्यावृत्तिकत्वमपि नास्य शंकनीयं, कुत्रचिदभिन्नरूपे भिन्नप्रमाणवेद्यत्वासंभवात् । तादृशः सर्वस्यानेकस्वभावत्वसिद्धेरन्यथार्थक्रियानुपपत्तेरवस्तुत्वप्रसक्तेः । यदप्यभ्यधायि ॥

**क्षित्यादिसमुदायार्थाः शरीरेंद्रियगोचराः ।**
**तेभ्यश्चैतन्यमित्येतन्न परीक्षाक्षमेरितम् ॥ १०४ ॥**

पृथिव्यापस्तेजोवायुरिति तत्त्वानि, तत्समुदायः शरीरेंद्रियसञ्ज्ञाविषयः, तेभ्यश्चैतन्यमित्येतदपि न परीक्षाक्षमेरितं । शरीरादीना चैतन्यव्यंजकत्वकारकत्वयोरयोगात् । कुतस्तदयोगः ?

**व्यंजका न हि ते तावच्चितो नित्यत्वशक्तितः ।**
**क्षित्यादितत्त्ववद् ज्ञातुः कार्यत्वस्याप्यनिष्टितः ॥ १०६ ॥**

नित्यं चैतन्यं शश्वदभिव्यंग्यत्वात् क्षित्यादितत्त्ववत्, शश्वदभिव्यंग्यं तत्कार्यतानुपगमात् । कदाचित्कार्यत्वोपगमे वाभिव्यक्तिवादविरोधात्, तदभिव्यक्तिकाल एतस्याभिव्यंगत्वं नान्यथेत्यसिद्धं सर्वदाभिव्यंगत्वं न मंतव्य, अभिव्यक्तियोग्यत्वस्य हेतुत्वात् । तत एव न परस्य घटादिभिरनैकांतिकं तेषां कार्यत्वे सत्यभिव्यंग्यत्वस्याशाश्वतिकत्वात् । स्याद्वादिना तु सर्वस्य कथंचिन्नित्यत्वान्न केनचिद्व्यभिचारः ।

**कुंभादिभिरनेकांतो न स्यादेव कथंचन ।**
**तेषां मतं गुरुत्वेन परैरिष्टः प्रतीतितः ॥ १०५ ॥**

न ह्येकांतनश्वरा घटादयः प्रदीपादिभिरभिव्यंग्या नाम नाशैकांतेऽभिव्यंग्याभिव्यंजकभावस्य विरोधान्नित्यैकांतवत् । जात्यंतरे तस्य प्रतीयमानत्वादिति प्रतिपक्षापेक्षया न घटादिभिरनेकांतः साधनस्य । ततः कथंचिच्चैतन्यनित्यताप्रसक्तिभयान्न शरीरादयश्चित्ताभिव्यंजकाः प्रतिपादनीयाः । शब्दस्य ताल्वादिवत् तेभ्यश्चैतन्यमुत्पाद्यत इति क्रियाध्याहाराद्व्यंजत इति क्रियाध्याहारस्य पौरंदरस्यायुक्तत्वात् कारका एव शरीरादयस्तस्येति चानुपपन्नं, तेषां सहकारित्वेनोपादानत्वेन वा कारकत्वायोगादित्युपदर्शयन्नाह—

**नापि ते कारका वित्तेर्भवंति सहकारिणः ।**
**स्वोपादानविहीनायास्तस्यास्तेभ्योऽप्रसूतितः ॥ १०७ ॥**

स्वोपादानरहिताया वित्तेः शरीरादयः कारकाः शब्दादेस्ताल्वादिवदिति चेन्न । असिद्धत्वात् । तथाहि—

**नोपादानाद्विना शब्दो विद्युदादेः प्रवर्तते ।**
**कार्यत्वात्कुंभवद्यद्वदृष्टकल्पनमत्र ते ॥ १०८ ॥**
**क्व काष्ठांतर्गतादग्नेरभ्यंतरसमुद्भवः ।**
**तस्याविशेषतो येन तत्त्वसंख्या न हीयते ॥ १०९ ॥**

प्रत्यक्षतोऽप्रतीतस्य शब्दाद्युपादानस्यानुमानात्साधने परस्य यद्यदृष्टकल्पनं तदा प्रत्यक्षतोऽप्रतीतात्काष्ठांतर्गतादग्नेरनुमीयमानादभ्यंतरसमुद्भवसाधने तददृष्टकल्पनं कथं न स्याद्भूतवादिनः सर्वथा विशेषाभावात् । काष्ठादेवानलोत्पत्तौ क्व तत्त्वसंख्याव्यवस्था काष्ठोपादेयस्यानलस्य काष्ठेतरत्वाभावात् पृथिवीत्व-

प्रसक्तेः । पार्थिवानां च मुक्ताफलानां सोपादाने जलेऽन्तर्भावाज्जलत्वापत्तेर्जलस्य च चंद्रकांतादुद्भवतः पार्थिवत्त्वानतिक्रमात् । यदि पुनः काष्ठादयोऽनलादीनां सोपादानहेतवस्तदानुपादानानलाद्युत्पत्तिः कल्पनीया । सा च न युक्ता प्रमाणविरोधात् । ततः स्वयमदृष्टस्यापि पावकाद्युपादानस्य कल्पनायां चितोप्युपादानमवश्यमभ्युपेयम् ।

सूक्ष्मो भूतविशेषश्चेदुपादानं चितो मतम् ।
स एवात्मास्तु विजातिसमन्वितवपुर्यदि ॥ ११० ॥
तद्विजातिः कथं नाम चिदुपादानकारणम् ।
भवतस्तेजसोंभोवत्तथैवादृष्टकल्पना ॥ १११ ॥
सत्त्वादिना समानत्वाच्चिदुपादानकल्पने ।
क्ष्मादीनामपि तत्केन निवार्येत परस्परम् ॥ ११२ ॥
येन नैकं भवेत्तत्त्वं क्रियाकारकघाति ते ।
पृथिव्यादेरशेषस्य तत्रैवानुप्रवेशतः ॥ ११३ ॥

सूक्ष्मभूतविशेषश्चैतन्येन सजातीयो विजातीयो वा तदुपादानं भवेत्? सजातीयश्चेदात्मनो नामांतरेणाभिधानात्परमतसिद्धिः । विजातीयश्चेत् कथमुपादानमग्नेर्जलवत् । सर्वथा विजातीयस्याप्युपादानत्वे सैवादृष्टकल्पना । गोमयादेर्वृश्चिकस्योत्पत्तिदर्शनान्नादृष्टकल्पनेति चेत्, न । वृश्चिकशरीरगोमययोः पुद्गलद्रव्यत्वेन सजातीयत्वात्, तयोरुपादानोपादेयतापायाच्च । वृश्चिकशरीरारंभका हि पुद्गलास्तदुपादानं न पुनर्गोमयादिस्तस्य सहकारित्वात् । सत्त्वेन द्रव्यत्वादिना वा सूक्ष्मभूतविशेषस्य सजातीयत्वाच्चेतनोपादानत्वमिति, तत एव क्ष्मादीनामन्योन्यमुपादानत्वमस्तु निवारकाभावात् । तथा सति तेषां परस्परमनंतर्भावः तदंतर्भावो वा स्यात्? प्रथमपक्षे चैतन्यस्यापि भूतेष्वंतर्भावाभावात् तत्त्वांतरत्वसिद्धिः । द्वितीयपक्षे तत्त्वमेकं प्रसिध्येत् पृथिव्यादेः सर्वत्र तत्रैवानुप्रवेशनात् । तच्चायुक्तं क्रियाकारकघातित्वात् ।

तस्माद्द्रव्यांतरापोढस्वभावान्वयि कथ्यताम् ।
उपादानं विकार्यस्य तत्त्वभेदोऽन्यथा कुतः ॥ ११४ ॥

तत्त्वमुपादानत्वं विकार्यत्वं च तद्भेदो द्रव्यांतरव्यावृत्तेन स्वभावेनान्वयित्वे सत्युपादानोपादेययोर्युक्तोर्नान्यथातिप्रसंगादित्युपसंहर्तव्यं । तथा च सूक्ष्मस्य भूतविशेषस्याचेतनद्रव्यव्यावृत्तस्वभावेन चैतन्यमनुगच्छतस्तदुपादानत्वमिति वर्णादिरहितः स्वसंवेद्योऽनुमेयो वा स एवात्मा पंचमतत्त्वमनात्मज्ञस्य परलोकप्रतिषेधासंभवव्यवस्थापनपरतया प्रसिध्यत्येवेति निगद्यते ॥

सूक्ष्मो भूतविशेषश्च वर्णादिपरिवर्जितः ।
स्वसंवेदनवेद्योयमनुमेयोथवा यदि ॥ ११५ ॥
सर्वथा पंचमं भूतमनात्मज्ञस्य सिद्ध्यति ।
स एव परलोकीति परलोकक्षतिः कथम् ॥ ११६ ॥

नेदृशो भूतविशेषश्चैतन्यस्योपादानं किंतु शरीरादय एव तेषां सहकारित्वेन कारकत्वपक्षानाश्रयादिति चेत् ।

शरीरादय एवास्य यद्युपादानहेतवः ।
तदा तद्भावभावित्वं विज्ञानस्य प्रसज्यते ॥ ११७ ॥

व्यतीतेप्यींद्रियेऽर्थे च विकल्पज्ञानसंभवात् ।
न तद्धेतुत्वमेतस्य तस्मिन्सत्यप्यसंभवात् ॥ ११८ ॥

कायश्चेत्कारणं यस्य परिणामविशेषतः ।
सद्यो मृततनुः कस्मात्तथा नास्थीयतेमुना ॥ ११९ ॥

वायुविश्लेषतस्तस्य वैकल्याच्चेन्निबंधनम् ।
चैतन्यमिति संप्राप्तं तस्य सद्भावभावतः ॥ १२० ॥

सामग्रीजनिका नैकं कारणं किंचिदीक्ष्यते ।
विज्ञाने पिष्टतोयादिर्मदशक्ताविवेति चेत् ॥ १२१ ॥

संयुक्ते सति किं न स्यात्क्ष्मादिभूतचतुष्टये ।
चैतन्यस्य समुद्भूतिः सामग्र्या अपि भावतः ॥ १२२ ॥

तद्विशिष्टविवर्तस्यापायाच्चेत्स क इष्यते ।
भूतव्यक्त्यंतरासंगः पिठिरादावपीक्ष्यते ॥ १२३ ॥

कालपर्युषितत्वं चेत्पिष्टादिवदुपेयते ।
तत्किं तत्र न संभाव्यं येन नातिप्रसज्यते ॥ १२४ ॥

भूतानि कतिचित्किंचित्कर्तुं शक्तानि केनचित् ।
परिणामविशेषेण दृष्टानीति मतं यदि ॥ १२५ ॥

तदा देहींद्रियादीनि चिद्विशिष्टानि कानिचित् ।
चिद्विवर्तसमुद्भूतौ संतु शक्तानि सर्वदा ॥ १२६ ॥

तथा सति न दृष्टस्य हानिर्नादृष्टकल्पना ।
मध्यावस्थावदादौ च चिद्देहादेश्चिदुद्भवात् ॥ १२७ ॥

ततश्च चिदुपादानाच्चेतनेति विनिश्चयात् ।
न शरीरादयस्तस्याः संत्युपादानहेतवः ॥ १२८ ॥

तदेवं न शरीरादिभ्योभिव्यक्तिवदुत्पत्तिश्चैतन्यस्य घटते सर्वथा तेषां व्यंजकत्ववत्कारकत्वानुपपत्तेः ॥

एतेन देहचैतन्यभेदसाधनमिष्टकृत् ।
कार्यकारणभावेनेत्येतद्ध्वस्तं निबुद्ध्यताम् ॥ १२९ ॥

निरस्ते हि देहचैतन्ययोः कार्यकारणभावे व्यंग्यव्यंजकभावे च तेन तयोर्भेदसाधने सिद्धसाधनमित्येतन्निरस्तं भवति तत्त्वांतरत्वेन तद्भेदस्य साध्यत्वात् । न च यद्यस्य कार्यं तत्ततस्तत्त्वांतरमतिप्रसंगात् । नापि स्वात्मभूतं व्यंग्यं तस्य एव । व्यंजकाद्भिन्नं तत्तत्त्वांतरमिति चेन्न । अक्ष्यो रसनस्य ... र्वं-प्रसंगात् । रसनं हि व्यंग्यमक्ष्यो भिन्नं च ताभ्यो न च तत्त्वांतरं तस्यासत्त्वेंतर्भावात् । कार्यकारणयोः सर्वथा भेदात्तद्विशेषयोर्व्यंग्यव्यंजकयोरपि भेद एवेति चेन्न । कयोश्चिदभेदोपलब्धेः । कथमन्यथा चैतन्यस्य देहोपादानत्वेपि तत्त्वांतरता न स्यात्, देहाभिव्यंग्यत्वे वा । येन कार्यकारणभावेन देहचैतन्ययोर्भेदे साध्ये सिद्धसाधनमुद्भाव्यते ॥

देहस्य च गुणत्वेन बुद्धेर्या सिद्धसाध्यता ।
भेदे साध्ये तयोः सापि न साध्वी तदसिद्धितः ॥ १३० ॥

कथं देहगुणत्वेन बुद्धेरसिद्धिर्यतो बुद्धिदेहयोर्गुणगुणिभावेन भेदसाधने सिद्धसाधनमसाधीयः स्यादिति ब्रूमहे ।

**न विग्रहगुणो बोधस्तत्रानध्यवसायतः ।**
**स्पर्शादिवत्स्वयं तद्वदन्यस्यापि तथा गतेः ॥ १३१ ॥**

न हि यथेह देहे स्पर्शादय इति स्वस्य परस्य वाध्यवसायोस्ति तथैव देहे बुद्धिरिति येनासौ देहगुणः स्यात् । प्राणादिमति काये चेतनेत्यस्त्येवाध्यवसायः कायादन्यत्र तदभावादिति चेत् । न । तस्य बाधकसद्भावात्सत्यतानुपपत्तेः । कथम्—

**तद्गुणत्वे हि बोधस्य मृतदेहेपि वेदनम् ।**
**भवेत्त्वगादिवद्बाह्यकरणज्ञानतो न किम् ॥ १३२ ॥**

बाह्येंद्रियज्ञानग्राह्यो बोधोस्तु देहगुणत्वात् स्पर्शादिवद्विपर्ययो वा न च बोधस्य बाह्यकरणज्ञानवेद्यत्वमित्यतिप्रसंगविपर्ययौ देहगुणत्वं बुद्धेर्बाधेते ॥

**सूक्ष्मत्वान्न क्वचिद्बाह्यकरणज्ञानगोचरः ।**
**परमाणुवदेवायं बोध इत्यप्यसंगतम् ॥ १३३ ॥**
**जीवत्कायेपि तत्सिद्धेरव्यवस्थानुषंगतः ।**
**स्वसंवेदनतस्तावद् बोधसिद्धौ न तद्गुणः ॥ १३४ ॥**

न क्वचिद्बोधो बाह्यकरणज्ञानविषयः प्रसज्यतां देहगुणत्वात् तस्य देहारंभकपरमाणुरूपादिभिर्व्यभिचारात्तेषां बहिःकरणत्वाविषयत्वेपि देहगुणत्वस्य भावात् । न च देहावयवगुणा देहगुणा न भवंति सर्वथावयवावयविनोर्भेदाभावादित्यसंगतं । जीवद्देहेपि तत्सिद्धेर्व्यवस्थाभावानुषंगात् । तत्र तद्व्यवस्था हि इंद्रियजज्ञानात्स्वसंवेदनाद्वा ? न तावदाद्यः पक्षो, बोधस्याबाह्यकरणज्ञानगोचरत्ववचनात् । द्वितीयपक्षे तु न बोधो देहगुणः स्वसंवेदनवेद्यत्वादन्यथा स्पर्शादीनामपि स्वसंविदितत्वप्रसंगात् । यत्पुनर्जीवत्कायगुण एव बोधो न मृतकायगुणो येन तत्र बाह्येंद्रियाविषयत्वे जीवत्कायेपि बोधस्य तद्विषयत्वमापद्येतेति मतं । तदप्यसत् । पूर्वोदितदोषानुषंगात् । अभ्युपगम्योच्यते ॥

**जीवत्कायगुणोप्येष यद्यसाधारणो मतः ।**
**प्राणादियोगवन्नस्यात्तदानिंद्रियगोचरः ॥ १३५ ॥**

जीवत्काये सत्युपलंभादन्यत्रानुपलंभान्नायमजीवत्कायगुणोऽनुमानविरोधात् । किं तर्हि ? यथा प्राणादिसंयोगो जीवत्कायस्यैव गुणस्तथा बोधोपीति चेत्, तद्वदेवेंद्रियगोचरः स्यात् । न हि प्राणादिसंयोगः स्पर्शनेंद्रियागोचरः प्रतीतिविरोधात् । कश्चिदाह । नायं जीवच्छरीरस्यैव गुणस्ततः प्रागपि पृथिव्यादिषु भावादन्यथात्यंतासतस्तत्रोपादानायोगाद्गगनांभोजवत्, साधारणस्तु स्यात्तद्दोषाभावादिति । तदसत् ॥

**साधारणगुणत्वे तु तस्य प्रत्येकमुद्भवः ।**
**पृथिव्यादिषु किं न स्यात् स्पर्शसामान्यवत्सदा ॥ १३६ ॥**

जीवत्कायाकारेण परिणतेषु पृथिव्यादिषु बोधस्योद्भवस्तथा तेनापरिणतेष्वपि स्यादेवेति सर्वदानुद्भवो न भवेत् स्पर्शसामान्यस्येव साधारणगुणत्वोपगमात् । प्रदीपप्रभायामुष्णस्पर्शस्यानुद्भूतस्य दर्शनात् साध्यशून्यं निदर्शनमिति न शंकनीयं, तस्यासाधारणगुणत्वात्साधारणस्य तु स्पर्शमात्रस्य प्रत्येकं पृथिव्यादिभेदेष्वशेषेषूद्भवप्रसिद्धेः । परिणामविशेषाभावात् न तत्र चैतन्यस्योद्भूतिरिति चेत्, तर्हि परिणाम-

विशिष्टभूतगुणो बोध इत्यसाधारण एवाभिमतः। तत्र चोक्तो दोषः। तत्परिजिहीर्षुणावश्यमदेहगुणो बोधोऽभ्युपगंतव्यः। इति न देहचैतन्ययोर्गुणगुणिभावेन भेदः साध्यते येन सिद्धसाध्यता स्यात्, ततोऽनवद्यं तयोर्भेदसाधनं। किं च।

**अहं सुखीति संवित्तौ सुखयोगो न विग्रहे।**
**बहिःकरणवेद्यत्वप्रसंगान्नेंद्रियेष्वपि ॥ १३७ ॥**
**कर्तृस्थस्यैव संवित्तेः सुखयोगस्य तत्त्वतः।**
**पूर्वोत्तरविदां व्यापी चिद्विवर्तस्तदाश्रयः ॥ १३८ ॥**
**स्याद्गुणी चेत् स एवात्मा शरीरादिविलक्षणः।**
**कर्तानुभविता स्मर्तानुसंधाता च निश्चितः ॥ १३९ ॥**

सुखयोगात्सुख्यहमिति संवित्तिस्तावत्प्रसिद्धा। तत्र कस्य सुखयोगो न विषयस्येति प्रत्येयं(?) ततः कर्तृरूपः कश्चित्तदाश्रयो वाच्यस्तदभावे सुख्यहमिति कर्तृस्थसुखसंवित्त्यनुपपत्तेः। स्यान्मतं। पूर्वोत्तरसुखादिरूपचैतन्यविवर्तव्यापी महाचिद्विवर्तः कार्यस्येव सुखादिगुणानामाश्रयः कर्ता, निराश्रयाणां तेषामसंभवात्। निरंशसुखसंवेदने चाश्रयाश्रयिभावस्य विरोधात्तस्य भ्रांतत्वायोगात् बाधकाभावात्तथा स्वयमनिष्टश्चेति। तर्हि स एवात्मा कर्ता शरीरेंद्रियविषयविलक्षणत्वात्। तद्विलक्षणोसौ सुखादेरनुभवितृत्वात्, तदनुभवितासौ तत्स्मर्तृत्वात्, तत्स्मर्तासौ तदनुसंधातृत्वात्, तदनुसंधातसौ य एवाहं यं सुखमनुभूतवान् स एवाहं संप्रति हर्षमनुभवामीति निश्चयस्यासंभवद्बाधकस्य सद्भावात्। नन्वस्तु नाम कर्तृत्वादिस्वभावश्चैतन्यसामान्यविवर्तः कायादर्थांतरसुखादिचैतन्यविशेषाश्रयो गर्भादिमरणपर्यंतः सकलजनप्रसिद्धत्वात्तत्त्वांतरं, चत्वार्येव तत्त्वानीत्यवधारणस्याप्यविरोधात्तस्याप्रसिद्धतत्त्वप्रतिषेधपरत्वेन स्थितत्वात्, न पुनरनाद्यंतात्मा प्रमाणाभावादिति वदंतं प्रति ब्रूमहे;—

**द्रव्यतोनादिपर्यंतः सत्त्वात् क्षित्यादितत्त्ववत्।**
**स स्यान्न व्यभिचारोस्य हेतोर्नाशिन्यसंभवात् ॥ १४० ॥**
**कुंभादयो हि पर्यंता अपि नैकांतनश्वराः।**
**शाश्वतद्रव्यतादात्म्यात्कथंचिदिति नो मतम् ॥ १४१ ॥**
**यथा चानादिपर्यंततद्विपर्ययरूपता।**
**घटादेरात्मनोप्येवमिष्टा सेत्यविरुद्धता ॥ १४२ ॥**
**सर्वथैकांतरूपेण सत्त्वस्य व्याप्त्यसिद्धितः।**
**बहिरंतरनेकांतं तद्व्याप्नोति तथेक्षणात् ॥ १४३ ॥**

द्रव्यार्थिकनयादनाद्यंतः पुरुषः सत्त्वात् पृथिव्यादितत्त्ववदित्यत्र न हेतोरनैकांतिकत्वं प्रतिक्षणविनश्वरे क्वचिदपि विपक्षेऽनवतारात्। कुंभादिभिः पर्ययैरनेकांत इति चेन्न। तेषां नश्वरैकांतत्वाभावात्। तेपि हि नैकांतनाशिनः, कथंचिन्नित्यद्रव्यतादात्म्यादिति स्याद्वादिनां दर्शनं। "नित्यं तत्प्रत्यभिज्ञानान्नाकस्मात्तदविच्छिदा। क्षणिकं कालभेदात्ते बुद्ध्यसंचरदोषतः" इति वचनात्। नन्वेवं सर्वस्यानादिपर्यंततासादिपर्यंतताभ्यां व्याप्तत्वात् विरुद्धता स्यादिति चेन्न। आत्मनोनैकांतानादिपर्यंततायाः साध्यत्ववचनात्। यथैव हि घटादेरनाद्यनंततेतररूपत्वे सति सत्त्वं तथात्मन्यपीष्टमिति क्व विरुद्धत्वं? कथं तर्हि सत्त्वमनेकांतैकांतेन व्याप्तं येनात्मनोनाद्यनंततेतररूपतया साध्यत्वमिष्यत इति चेत्। सर्वथैकांतरूपेण तस्य व्याप्त्यसिद्धेः। बहिरंतश्चानेकांततयोपलंभात्, अनेकांतं वस्तु सत्त्वस्य व्यापकमिति निवेदयिष्यते ॥

**बृहस्पतिमतस्थित्या व्यभिचारो घटादिभिः ।**
**न युक्तोतस्तदुच्छित्तिप्रसिद्धेः परमार्थतः ॥ १४४ ॥**

यतश्चैवं परमार्थतो घटादीनामपि नित्यानित्यात्मकत्वं सिद्धं ततो बृहस्पतिमतानुष्ठानेनापि न सत्त्वस्य घटादिभिर्व्यभिचारो युक्तस्तेन तस्यानैकांतेनाबाधितत्वात् । न च प्रमाणासिद्धेन परोपगममात्रात् केनचिद्धेतोर्व्यभिचारचोदने कश्चिद्धेतुरव्यभिचारी स्यात् । वादिप्रतिवादिसिद्धेन तु व्यभिचारेण सत्त्वं कथंचिदनादिपर्यंतत्वे साध्ये व्यभिचारीति व्यर्थमस्याहेतुकत्वविशेषणं । अहेतुकत्वस्य हेतुकत्वे सत्त्वविशेषणवत् प्रागभावेन व्यभिचारस्य सत्त्वविशेषणेन व्यवच्छिद्यत इति तद्व्यर्थमिति चेत् । न । सर्वस्य तुच्छस्य प्रागभावत्वस्याप्रसिद्धत्वात् । भावांतरस्य भावस्य नित्यानित्यात्मकत्वाद्विपक्षतानुपपत्तेस्तेन व्यभिचारासंभवात् । ततो युक्तं सत्त्वस्याविशेषस्य हेतुत्वमहेतुकत्ववदिति । ततो भवत्येव साध्यसिद्धिः ॥

**साध्यसाधनवैकल्यं दृष्टांतेपि न वीक्ष्यते ।**
**नित्यानित्यात्मतासिद्धिः पृथिव्यादेरदोषतः ॥ १४५ ॥**

न ह्येकांतानाद्यनंतत्वमंतस्तत्त्वस्य साध्यं येन पृथिव्यादिषु तदभावात् साध्यशून्यमुदाहरणं । नापि तत्र सत्त्वमसिद्धं यतः साधनवैकल्यं । तदसिद्धौ मतांतरानुसरणप्रसंगात् । ततोऽनवद्यमनाद्यनंतत्वसाधनमात्मनस्तत्त्वांतरत्वसाधनवत् । सत्यमनाद्यनंतं चैतन्यं संतानापेक्षया न पुनरेकान्वयिद्रव्यापेक्षया क्षणिकचित्तानामन्वयानुपपत्तेरित्यपरः । सोप्यनात्मज्ञः । तदनन्वयत्वस्यानुमानबाधितत्वात् । तथाहि—

**एकसंतानगाश्चित्तपर्यायास्तत्त्वतोन्विताः ।**
**प्रत्यभिज्ञायमानत्वात् मृत्पर्याया यथेदृशाः ॥ १४६ ॥**

मृत्क्षणास्तत्त्वतोन्विताः परस्यासिद्धा इति न मंतव्यं तत्रान्वयापह्नवे प्रतीतिविरोधात् । सकललोकसाक्षिका हि मृद्भेदेषु तथान्वयप्रतीतिः । सैवेयं पूर्वं दृष्टा मृदिति प्रत्यभिज्ञानस्याविसंवादिनः सद्भावात् ॥

**सादृश्यात् प्रत्यभिज्ञानं नानासंतानभाविनाम् ।**
**भेदानामिव तत्रापीत्यदृष्टपरिकल्पनम् ॥ १४७ ॥**

यथा नानासंतानवर्तिनां मृद्भेदानां सादृश्यात् प्रत्यभिज्ञायमानत्वं तथैकसंतानवर्तिनामपीति ब्रुवतामदृष्टपरिकल्पनामात्रं प्रतिक्षणं भूयात्तथा तेषामदृष्टत्वात् । तदेकत्वमपि न दृष्टमेवेति चेन्नैतत्सत्यम् ।

**तदेवेदमिति ज्ञानादेकत्वस्य प्रसिद्धितः ।**
**सर्वस्याप्यस्खलद्रूपात् प्रत्यक्षाद्भेदसिद्धिवत् ॥ १४८ ॥**

यथैव हि सर्वस्य प्रतिपत्तुरर्थस्य चास्खलितात्प्रत्यक्षादेर्भेदसिद्धिस्तथा प्रत्यभिज्ञानादेरेकत्वसिद्धिरपीति दृष्टमेव तदेकत्वं । प्रत्यभिज्ञानमप्रमाणं संवादनाभावादिति चेत् । प्रत्यक्षमपि प्रमाणं मा भूत् तत एव । न हि प्रत्यभिज्ञानेन प्रतीते विषये प्रत्यक्षस्यावर्तमानात्तस्य संवादनाभावो न पुनः प्रत्यक्षप्रतीते प्रत्यभिज्ञानस्याप्रवृत्तेः प्रत्यक्षस्येत्याचक्षाणः परीक्षको नाम । न प्रत्यक्षस्य स्वार्थे प्रमाणांतरवृत्तिः संवादनं । किं तर्हि ? अबाधिता संवित्तिरिति चेत् ।

**यथा भेदस्य संवित्तिः संवादनमबाधिता ।**
**तथैकत्वस्य निर्णीतिः पूर्वोत्तरविवर्तयोः ॥ १४९ ॥**

कथं पूर्वोत्तरविवर्तयोरेकत्वस्य संवित्तिरबाधिताया संवादनमिति चेत् । भेदस्य कथमिति समः

पर्यनुयोगः । तस्य प्रमाणांतरत्वादतद्विषयेण बाधनासंभवादबाधिता संवित्तिरिति चेत् । तर्ह्येकत्वस्य प्रत्यभिज्ञानविषयत्वस्याध्यक्षादेरगोचरत्वात्तेन बाधनासंभवादबाधिता संवित्तिः किं न भवेत् ? कथं प्रत्यभिज्ञानविषयः प्रत्यक्षेणापरिच्छेद्यः ? प्रत्यभिज्ञानविषयः कथमिति समानं । तथा योग्यताप्रतिनियमादिति चेत्तर्हि—

**वर्तमानार्थविज्ञानं न पूर्वापरगोचरम् ।**
**योग्यतानियमात्सिद्धं प्रत्यक्षं व्यावहारिकम् ॥ १५० ॥**
**यथा तथैव संज्ञानमेकत्वविषयं मतम् ।**
**न वर्तमानपर्यायमात्रगोचरमीक्ष्यते ॥ १५१ ॥**

यद्यद्विषयतया प्रतीयते तत्तद्विषयमिति व्यवस्थायां वर्तमानार्थाकारविषयतया समीक्ष्यमाणं प्रत्यक्षं तद्विषयं, पूर्वापरविवर्तवर्त्येकद्रव्यविषयतया तु प्रतीयमानं प्रत्यभिज्ञानं तद्विषयमिति को नेच्छेत् । नन्वनुभूतानुभूयमानपरिणामवृत्तेरेकत्वस्य प्रत्यभिज्ञानविषयत्वेऽतीतानुभूताखिलपरिणामवर्तिनोऽनागतपरिणामवर्तिनश्च तद्विषयत्वप्रसक्तिः, भिन्नकालपरिणामवर्तित्वाविशेषात्, अन्यथानुभूतानुभूयमानपरिणामवर्तिनोपि तदविषयत्वापत्तेरिति चेत् । तर्हि सांप्रतिकपर्यायस्य प्रत्यक्षविषयत्वे कस्यचित्सकलदेशवर्तिनोप्यध्यक्षविषयता स्यादन्यथेष्टस्यापि तदभावः, सांप्रतिकत्वाविशेषात् । तदविशेषेपि योग्यताविशेषात् सांप्रतिकाकारस्य कस्यचिदेवाध्यक्षविषयत्वं न सर्वस्येति चेत्तर्हि—

**यथैव वर्तमानार्थग्राहकत्वेपि संविदः ।**
**सर्वसांप्रतिकार्थानां वेदकत्वं न बुध्यते ॥ १५२ ॥**
**तथैवानागतातीतपर्यायैकत्ववेदिका ।**
**विस्तिर्नानादिपर्यंतपर्यायैकत्वगोचरा ॥ १५३ ॥**

यथा वर्तमानार्थज्ञानावरणक्षयोपशमाद्वर्तमानार्थस्यैव परिच्छेदकमक्षज्ञानं तथा कतिपयातीतानागतपर्यायैकत्वज्ञानावरणक्षयोपशमात्तावदतीतानागतपर्यायैकत्वस्यैव ग्राहकं प्रत्यभिज्ञानमिति युक्तमुत्पश्यामः । तस्माच्चैकसंतानवर्तिघटकपालादिमृत्पर्यायाणामन्वयित्वसिद्धेर्नोदाहरणस्य साध्यसाधनविकलत्वं, येन चित्तक्षणसंतानव्याप्येकोऽन्वितः पुमान्न सिद्ध्येत् । कथमेकः पुरुषः क्रमेणानंतान् पर्यायान् व्याप्नोति ? न तावदेकेन स्वभावेन सर्वेषामेकरूपापत्तेः । नानास्वरूपैर्व्याप्तानां जलानलादीनां नानात्वप्रसिद्धेरन्यथानुपपत्तेः । सत्त्वाद्येकस्वभावेन व्याप्तानामर्थानां नानात्वदर्शनात् पुरुषत्वैकस्वभावेन व्याप्तानामप्यनंतपर्यायाणां नानात्वमविरुद्धमिति चायुक्तं, नानार्थव्यापिनः सत्त्वादेरेकस्वभावत्वानवस्थितेः । कथमन्यथैकस्वभावव्याप्तं किंचिदेकं सिद्ध्येत् । यदि पुनर्नानास्वभावैः पुमाननंतपर्यायान् व्याप्नुयात्तदा ततः स्वभावानामभेदे तस्य नानात्वं, तेषां चैकत्वमनुषज्येत; भेदे संबंधासिद्धेर्व्यपदेशानुपपत्तिः । संबंधकल्पनायां किमेकेन स्वभावेन पुमान् स्वस्वभावैः संबध्यते नानास्वभावैर्वा ? प्रथमकल्पनायां सर्वस्वभावानामेकतापत्तिः, द्वितीयकल्पनायां ततः स्वभावानामभेदे च स एव दोषः, अनिवृत्तस्वपर्यनुयोगः, इत्यनवस्थानात्, कुतोऽनंतपर्यायवृत्तिरात्मा व्यवतिष्ठेतेति केचित् । तेपि दूषणाभासवादिनः । कथम्—

**क्रमतोऽनंतपर्यायानेको व्याप्नोति ना सकृत् ।**
**यथा नानाविधाकारांश्चित्रज्ञानमनंशकम् ॥ १५४ ॥**

चित्रज्ञानमनंशमेकं युगपन्नानाकारान् व्याप्नोतीति स्वयमुपनयन् क्रमतोऽनंतपर्यायान् व्याप्नुवन्तमात्मानं

प्रतिक्षिपतीति कथं मध्यस्थः? तत्र समाधानाक्षेपयोः समानत्वात् । नन्वनेकोपि चित्रज्ञानाकारोऽशक्यविवेचनत्वादेको युक्त इति चेत्—

**यथानेकोपि विज्ञानाकारोऽशक्यविवेचनः ।**
**स्यादेकः पुरुषोऽनंतपर्यायोपि तथा न किम् ॥ १५५ ॥**

क्रमभुवामात्मपर्यायाणामशक्यविवेचनत्वमसिद्धमिति मानिश्चेषीः । यस्मात्—

**यथैकवेदनाकारा न शक्या वेदनांतरम् ।**
**नेतुं तथापि पर्याया जातुचित्पुरुषांतरम् ॥ १५६ ॥**

ननु चात्मपर्यायाणां भिन्नकालतया वित्तिरेव शक्यविवेचनत्वमिति चेत्तर्हि चित्रज्ञानाकाराणां भिन्नदेशतया वित्तिर्विवेचनमस्तीत्यशक्यविवेचनत्वं माभूत् । तथाहि—

**भिन्नकालतया वित्तिर्यदि तेषां विवेचनम् ।**
**भिन्नदेशतया वित्तिर्ज्ञानाकारेषु किं न तत् ॥ १५७ ॥**

न हि चित्रपटीनिरीक्षणे पीताद्याकाराश्चित्रवेदनस्य भिन्नदेशा न भवंति ततो बहिस्तेषां भिन्नदेशताप्रतिष्ठानविरोधात् । न ह्यभिन्नदेशपीताद्याकारानुकारिणश्चित्रवेदनाद्भिन्नदेशपीताद्याकारो बहिरर्थश्चित्रः प्रत्येतुं शक्योऽपीताकारादपि ज्ञानात्पीतप्रतीतिप्रसंगात् ॥

**पीताकारादिसंवित्तिः प्रत्येकं चित्रवेदना ।**
**न चेदनेकसंतानपीतादिज्ञानवन्मतम् ॥ १५८ ॥**

चित्रपटीदर्शने प्रत्येकं पीताकारादिवेदनं न चित्रज्ञानं क्रमाद्भिन्नदेशविषयत्वात्तादृशानेकसंतानपीतादिज्ञानवदिति मतं यदि ।

**सह नीलादिविज्ञानं कथं चित्रमुपेयते ।**
**युगपद्भाविरूपादिज्ञानपंचकवत्त्वया ॥ १५९ ॥**

शक्यं हि वक्तुं शष्कुलीभक्षणादौ सहभाविरूपादिज्ञानपंचकमिव नीलादिज्ञानं सकृदपि न चित्रमिति । सहभावित्वाविशेषात् । तदविशेषेपि पीतादिज्ञानं चित्रमभिन्नदेशत्वाच्चित्रपतंगादौ न पुना रूपादिज्ञानपंचकं क्वचिदिति न युक्तं वक्तुं, तस्याप्यभिन्नदेशत्वात् । न हि देशभेदेन रूपादिज्ञानपञ्चकं सकृत् स्वस्मिन् वेद्यते, युगपज्ज्ञानोत्पत्तिवादिनस्तथानभ्युपगमात् । ननु चादेशत्वाच्चित्रचैतसिकानामभिन्नाभिन्नदेशत्वचिंता श्रेयसीति चेत्, कथं भिन्नदेशत्वाच्चित्रपटीपीतादिज्ञानानां चित्रत्वाभावः साध्यते, संव्यवहारात्तेषां तत्र भिन्नदेशत्वासिद्धेः । तत्साधने तत एव शष्कुलीभक्षणादौ रूपादिज्ञानानामभिन्नदेशत्वसिद्धेः, सहभावित्वसिद्धेश्च । तद्वत्सकृदपि पीतादिज्ञानं चित्रमेकं माभूत् । यदि पुनरेकज्ञानतादात्म्येन पीताद्याभासानामनुभवनात्तद्वेदनं चित्रमेकमिति मतं, तदा रूपादिज्ञानपंचकस्यैकसंतानात्मकत्वेन संवेदनादेकं चित्रज्ञानमस्तु । तस्यानेकसंतानात्मकत्वे पूर्वविज्ञानमेकमेवोपादानं न स्यात् । पूर्वानेकविज्ञानोपादानमेकरूपादिज्ञानपंचकमिति चेत्, तर्हि भिन्नसंतानत्वात्तस्यानुसंधानविकल्पजनकत्वाभावः । पूर्वानुसंधानविकल्पवासना तज्जनिकेति चेत्, कुतोहमेवास्य द्रष्टा स्प्रष्टा घ्राता स्वादयिता श्रोतेत्यनुसंधानवेदनं? रूपादिज्ञानपंचकानंतरमेवेति नियमः संभाव्यतां, तस्य तद्वासनाप्रबोधकत्वादिति चेत्, कुतस्तदेव तस्याः प्रबोधकं? तथा दृष्टत्वादिति चेन्न, अन्यथापि दर्शनात् । प्रागपि हि रूपादिज्ञानपंचकोत्पत्तेरहमस्य द्रष्टा भविष्यामीत्याद्यनुसंधानविकल्पो दृष्टः । सत्यं दृष्टः; स तु भविष्यद्दर्शनाद्यनुसंधानवासनात एव । तत्प्रबोधकश्च

दर्शनाद्यभिमुखीभावो न तु रूपादिज्ञानपंचकमिति तदुत्पत्तेः पूर्वमन्यादृशानुसंधानदर्शनात्तासां नियमप्रतिनियतानुसंधानानां प्रतिनियतवासनाभिर्जन्यत्वात्तासां च प्रतिनियतप्रबोधकप्रत्ययायत्तप्रबोधत्वादिति चेत् । कथमेवमेकत्र पुरुषे नानानुसंधानसंताना न स्युः? प्रतिनियतत्वेप्यनुसंधानानामेकसंतानत्वं विकल्पज्ञानत्वाविशेषादिति चेत् । किमेवं रूपादिज्ञानानामेतन्न स्यात्? करणज्ञानत्वाविशेषात् । संतानांतरकरणज्ञानैर्व्यभिचार इति चेत्, तवापि संतानांतरविकल्पविज्ञानैः कुतो न व्यभिचारः? एकसामग्र्यधीनत्वे सतीति विशेषणाच्चेत्, समानमन्यत्र । तथाक्षमनोज्ञानानामेकसंतानत्वमेकसामग्र्यधीनत्वे सति स्वसंविदितत्वादिति कुतस्तेषां भिन्नसंतानत्वं, येन रूपादिज्ञानपंचकस्य युगपद्भाविनः पूर्वैकविज्ञानोपादानत्वं न सिध्येत् । तत्सिद्धौ च तस्यैकसंतानात्मकत्वादेकत्वमिति सूक्तं दूषणं नीलाद्याभासमेकं चित्रज्ञानमिच्छतां रूपादिज्ञानपंचकमप्येकं चित्रज्ञानं प्रसज्येतेति ॥

**चित्राद्वैताश्रयाच्चित्रं तदप्यस्त्विति चेन्न वै ।**
**चित्रमद्वैतमित्येतद्विरुद्धं विभाव्यते ॥ १६० ॥**

चित्रं ह्यनेकाकारमुच्यते तत्कथमेकं नाम, विरोधात् ।

**तस्य जात्यंतरत्वेन विरोधाभावभाषणे ।**
**तथैवात्मा सपर्यायैरनंतैरविरोधभाक् ॥ १६१ ॥**

नैकं नाप्यनेकं । किं तर्हि? चित्रं चित्रमेव, तस्य जात्यंतरत्वादेकत्वानेकत्वाभ्यामित्यविरुद्धं चित्राद्वैतसंवेदनमात्रं बहिरर्थशून्यमित्युपगमे, पुंसि जात्यंतरे को विरोधः । सोपि हि नैक एव नाप्यनेक एव । किं तर्हि? स्यादेकः स्यादनेक इति । ततो जात्यंतरं तथाप्रतिभासनादन्यथा सकृदप्यसंवेदनात् । इति नात्मनोनंतपर्यायात्मता विरुद्धा चित्रज्ञानस्य चित्रतावत् ॥

**भ्रांतेयं चित्रता ज्ञाने निरंशेऽनादिवासना ।–**
**सामर्थ्यादवभासेत स्वप्नादिज्ञानवद्यदि ॥ १६२ ॥**
**तदा भ्रांतेतराकारमेकं ज्ञानं प्रसिद्ध्यति ।**
**भ्रांताकारस्य वा सत्त्वे चित्तं सदसदात्मकम् ॥ १६३ ॥**
**तच्च प्रबाधतेऽवश्यं विरोधं पुंसि पर्ययैः ।**
**अक्रमैः क्रमवद्भिश्च प्रतीतत्वाविशेषतः ॥ १६४ ॥**

चित्राद्वैतमपि माभूत् संवेदनमात्रस्य सकलविकल्पशून्यस्योपगमादित्यपरः । तस्यापि किमध्यारोप्यमाणो धर्मः कल्पना, मनोविकल्पमात्रं वा, वस्तुनः स्वभावो वा? प्रथमद्वितीयपक्षयोः सिद्धसाधनमित्युच्यते—

**निःशेषकल्पनातीतं संविन्मात्रं मतं यदि ।**
**तथैवांतर्बहिर्वस्तु समस्तं तत्त्वतोस्तु नः ॥ १६५ ॥**
**समस्ताः कल्पना हीमा मिथ्यादर्शननिर्मिताः ।**
**स्पष्टं जात्यंतरे वस्तुन्यप्रबाधं चकासति ॥ १६६ ॥**
**अनेकांते ह्यपोद्धारबुद्ध्योनेकधर्मगाः ।**
**कुतश्चित्संप्रवर्ततेऽन्योन्यापेक्षाः सुनीतयः ॥ १६७ ॥**

यस्मान्मिथ्यादर्शनविशेषवशान्नित्याद्येकांताः कल्पमानाः स्पष्टं जात्यंतरे वस्तुनि निर्बाधमवभास-

माने तत्त्वतो न संतीति स्वयमिष्टं, यतश्चानेकांते प्रमाणतः प्रतिपन्ने कुतश्चित्प्रमातुर्विवक्षाभेदादपोद्धारकल्पनानि क्षणिकत्वाद्यनेकधर्मविषयाणि प्रवर्तंते परस्परापेक्षाणि सुनयव्यपदेशभांजि भवंति । तस्मादशेषकल्पनातिक्रांतं तत्त्वमिति सिद्धं साध्यते । न हि कल्प्यमाना धर्मास्तत्त्वं तत्कल्पनमात्रं वा, अतिप्रसंगात् । तेनांतर्बहिश्च तत्त्वं तद्विनिर्मुक्तमिति युक्तमेव । तृतीयपक्षे तु प्रतीतिविरोधः । कथम्—

**परोपगतसंवित्तिरनंशा नावभासते ।**
**ब्रह्मवत्तेन तन्मात्रं न प्रतिष्ठामियर्ति नः ॥ १६८ ॥**

वस्तुनः स्वभावाः कल्पनास्ताभिरशेषाभिः सुनिश्चितासंभवद्बाधाभी रहितं संविन्मात्रं तत्त्वमिति तु न व्यवतिष्ठते तस्यानंशस्य परोपवर्णितस्य ब्रह्मवदप्रतिभासनात् । नानाकारमेकं प्रतिभासनमपि विरोधादसदेवेति चेत्—

**नानाकारस्य नैकस्मिन्नध्यासोस्ति विरोधतः ।**
**ततो न सत्त्वादित्येतत्सुस्पष्टं राजचेष्टितम् ॥ १६९ ॥**
**संवेदनाविशेषेपि द्वयोः सर्वत्र सर्वदा ।**
**कस्यचिद्धि तिरस्कारे न प्रेक्षापूर्वकारिता ॥ १७० ॥**

नानाकारस्यैकत्र वस्तुनि नाध्यासो विरोधादिति ब्रुवाणो नानाकारं वा तिरस्कुर्वीतैकत्वं वा ? नानाकरं चेत्सुव्यक्तमिदं राजचेष्टितं, संविन्मात्रवादिनः स्वरुच्या संवेदनमेकमनंशं स्वीकृत्य नानाकारस्य संवेद्यमानस्यापि सर्वत्र सर्वदा प्रतिक्षेपात्, तस्य प्रेक्षापूर्वकारित्वायोगात् ॥

**तस्मादबाधिता संवित्सुखदुःखादिपर्ययैः ।**
**समाक्रांते नरे नूनं तत्साधनपटीयसी ॥ १७१ ॥**

न हि प्रत्यभिज्ञानमतिः सुखदुःखादिपर्यायात्मके पुंसि केनचिद्बाध्यते यतस्तत्साधनपटीयसी न स्यात् । ततो नाशेषस्वभावशून्यस्य संविन्मात्रस्य सिद्धिस्तद्विपरीतात्मप्रतीत्या बाधितत्वात् ॥

**नीलवासनया नीलविज्ञानं जन्यते यथा ।**
**तथैव प्रत्यभिज्ञेयं पूर्वतद्वासनोद्भवा ॥ १७२ ॥**
**तद्वासना च तत्पूर्ववासनाबलभाविनी ।**
**सापि तद्वदिति ज्ञानवादिनः संप्रचक्षते ॥ १७३ ॥**
**तेषामप्यात्मनो लोपे संतानांतरवासना ।**
**समुद्भूता कुतो न स्यात्संज्ञाभेदाविशेषतः ॥ १७४ ॥**

यथा नीलवासनया नीलविज्ञानं जन्यते तथा प्रत्यभिज्ञेयं तदेवेदं तादृशमेतदिति वा प्रतीयमाना प्रत्यभिज्ञानवासनयोद्भाव्यते न पुनर्बहिर्भूतेनैकत्वेन सादृश्येन वा येन तद्ग्राहिणी स्यात् । तद्वासना कुत इति चेत्, पूर्वतद्वासनातः, सापि पूर्वस्ववासनाबलादित्यनादित्वाद्वासनासंततेरयुक्तः पर्यनुयोगः । कथमन्यथा बहिरर्थेपि न संभवेत् । तत्र कार्यकारणभावस्यानादित्वादपर्यनुयोगे पूर्वापरवासनानामपि तत एवापर्यनुयोगोस्तु । कार्यकारणभावस्यानादित्वं हि यथा बहिस्तथांतरमपीति न विशेषः केवलं बहिरर्थोनर्थः परिहृतो भवेत् अशक्यप्रतिष्ठत्वात्तस्येति ज्ञानवादिनः । तेषामपि नेयं प्रत्यभिज्ञा पूर्वस्ववासनाप्रभवा वक्तुं युक्तान्वयिनः पुरुषस्याभावात्, संतानांतरवासनातोपि तत्प्रभवप्रसंगात्तज्ज्ञानात्वाविशेषात् ॥

**संतानैकत्वसंसिद्धिर्नियमात्स कुतो मतः ।**
**प्रत्यासत्तेर्न संतानभेदेप्यस्याः समीक्षणात् ॥ १७५ ॥**
**व्यभिचारविनिर्मुक्ता कार्यकारणभावतः ।**
**पूर्वोत्तरक्षणानां हि संताननियमो मतः ॥ १७६ ॥**
**स च बुद्धेतरज्ञानक्षणानामपि विद्यते ।**
**नान्यथा सुगतस्य स्यात्सर्वज्ञत्वं कथंचन ॥ १७७ ॥**

संतानैक्यात्पूर्ववासना प्रत्यभिज्ञाया हेतुर्न संतानांतरवासनेति चेत् । कुतः संतानैक्यं? प्रत्यासत्तेश्चेत्, साप्यव्यभिचारी कार्यकारणभाव इष्टस्ततो बुद्धेतरक्षणानामपि स्यात् । न च तेषां स व्यभिचरति बुद्धस्यासर्वज्ञत्वापत्तेः । सकलसत्त्वानां तदकारणत्वे हि न तद्विषयत्वं स्यान्नाकारणं विषय इति वचनात् । सकलसत्त्वचित्तानामालंबनप्रत्ययत्वात् सुगतचित्तस्य न तदेकसंतानतेति चेन्न । पूर्वस्वचित्तैरपि सहैकसंतानतापायप्रसक्तेस्तदालंबनप्रत्ययत्वाविशेषात् । समनंतरप्रत्ययत्वात् स्वपूर्वचित्तानां तेनैकसंतानतेति चेत्, कुतस्तेषामिव समनंतरप्रत्ययत्वं न पुनः सकलसत्त्वचित्तानामपीति नियम्यते? तेषामेकसंतानवर्तित्वादिति चेत्, सोऽयमन्योन्यसंश्रयः । सत्येकसंतानत्वे पूर्वापरसुगतचित्तानामव्यभिचारी कार्यकारणभावस्तस्मिन्सति तदेकसंतानत्वमिति । ततः पूर्वक्षणाभावेनुत्पत्तिरेवोत्तरक्षणस्याव्यभिचारी कार्यकारणभावोभ्युपगंतव्यः । स च स्वचित्तैरिव सकलसत्त्वचित्तैरपि सहास्ति सुगतचित्तस्येति कथं न तदेकसंतानतापत्तिः ॥

**स्वसंवेदनमेवास्य सर्वज्ञत्वं यदीष्यते ।**
**संवेदनाद्वयास्थानाद्गता संतानसंकथा ॥ १७८ ॥**

न ह्यद्वये संतानो नाम लक्षणभेदे तदुपपत्तेः, अन्यथा सकलव्यवहारलोपात् प्रमाणप्रमेयविचारानवतारात् प्रलापमात्रमवशिष्यते । अभ्युगम्य वा व्यभिचारी कार्यकारणभावं सुगतेतरसंतानैकत्वापत्तेः संताननियमो निरस्यते । तत्त्वतस्तु स एव भेदवादिनोसंभवी केषांचिदेव क्षणानामव्यभिचारी कार्यकारणभाव इति निवेदयति—

**कथं चाव्यभिचारेण कार्यकारणरूपता ।**
**केषांचिदेव युज्येत क्षणानां भेदवादिनः ॥ १७९ ॥**

कालदेशभावप्रत्यासत्तेः कस्यचित्केनचिद्भावाद्भावेपि व्यभिचारान्न भेदैकांतवादिनामव्यभिचारी कार्यकारणभावो नाम । तथाहि—

**कालानंतर्यमात्राच्चेत्सर्वार्थानां प्रसज्यते ।**
**देशानंतर्यतोप्येषा केन स्कंधेषु पंचसु ॥ १८० ॥**
**भावाः संति विशेषाच्चेत् समानाकारचेतसाम् ।**
**विभिन्नसंततीनां वै किं नेयं संप्रतीयते ॥ १८१ ॥**

यतश्चैव सव्यभिचारेण कार्यकारणरूपता देशानंतर्यादिभ्यो नैकसंतानात्मकत्वाभिमतानां क्षणानां व्यवतिष्ठते तस्मादेवमुपादानोपादेयनियमो द्रव्यप्रत्यासत्तेरेवेति परिशेषसिद्धं दर्शयतिः—

**एकद्रव्यस्वभावत्वात्कथंचित्पूर्वपर्ययः ।**
**उपादानमुपादेयश्चोत्तरो नियमात्ततः ॥ १८२ ॥**

विवादापन्नः पूर्वपर्यायः स्यादुपादानं कथंचिदुपादेयानुयायिद्रव्यस्वभावत्वे सति पूर्वपर्यायत्वात्, यस्तु नोपादानं स नैवं यथा तदुत्तरपर्यायः । पूर्वपूर्वपर्यायः कार्यश्च आत्मा वा तदुपादेयाननुयायिद्रव्यस्वभावो वा सहकार्यादिपर्यायो वा । तथा विवादापन्नस्तदुत्तरपर्याय उपादेयः कथंचित्पूर्वपर्यायानुयायिद्रव्यस्वभावत्वे सत्युत्तरपर्यायत्वात् यस्तु नोपादेयः स नैवं यथा तत्पूर्वपर्यायः । तदुत्तरोत्तरपर्यायो वा पूर्वपर्यायानुयायिद्रव्यस्वभावो वा तत्स्वात्मा वा तथा चासाविति नियमात् । ततः सिद्धमुपादानमुपादेयश्च, अन्यथा तत्सिद्धेरयोगात् ॥

एकसंतानवर्तित्वात्तथा नियमकल्पने ।
पूर्वापरविदोर्व्यक्तमन्योन्याश्रयणं भवेत् ॥ १८३ ॥
कार्यकारणभावस्य नियमादेकसंततिः ।
ततस्तन्नियमश्च स्यान्नान्यातो विद्यते गतिः ॥ १८४ ॥

संतानैक्यादुपादानोपादेयताया नियमे परस्पराश्रयणात्सैव माभूदित्यपि न धीरचेष्टितं, पूर्वापरविदोस्तत्परिच्छेद्ययोर्वा नियमेनोपादानोपादेयतायाः समीक्षणात् । तदन्यथानुपपत्त्या तद्व्याप्येकद्रव्यस्थितेरिति तद्विषयं प्रत्यभिज्ञानं तत्परिच्छेदकमित्युपसंहरति—

तस्मात्स्वावृत्तिविश्लेषविशेषवशवर्तिनः ।
पुंसः प्रवर्तते स्वार्थैकत्वज्ञानमिति स्थितम् ॥ १८५ ॥
संतानवासनाभेदनियमस्तु क्व लभ्यते ।
नैरात्म्यवादिभिर्न स्याद्येनात्मद्रव्यनिर्णयः ॥ १८६ ॥

तस्मान्न द्रव्यनैरात्म्यवादिनां संतानविशेषाद्वासनाविशेषाद्वा प्रत्यभिज्ञानप्रवृत्तिस्तन्नियमस्य लब्धुमशक्तेः । किं तर्हि ? पुरुषादेवोपादानकारणात् स एवाहं तदेवेदमिति वा स्वार्थैकत्वपरिच्छेदकं प्रत्यभिज्ञानं प्रवर्तते स्वावरणक्षयोपशमवशादिति व्यवतिष्ठते । तस्माच्च मृत्पर्यायाणामिवैकसंतानवर्तिनां चित्पर्यायाणामपि तत्त्वतोन्वितत्वसिद्धेः सिद्धमात्मद्रव्यमुदाहरणस्य साध्यविकलतानुपपत्तेः ॥

सिद्धोप्यात्मोपयोगात्मा यदि न स्यात्तदा कुतः ।
श्रेयोमार्गप्रजिज्ञासा खस्येवाचेतनत्वतः ॥ १८७ ॥

येषामात्मानुपयोगस्वभावस्तेषां नासौ श्रेयोमार्गजिज्ञासा वाचेतनत्वादाकाशवत् । नोपयोगस्वभावत्वं चेतनत्वं किंतु चैतन्ययोगतः स चात्मनोस्तीत्यसिद्धमचेतनत्वं न साध्यसाधनायालमिति शंकामपनुदति—

चैतन्ययोगतस्तस्य चेतनत्वं यदीर्यते ।
खादीनामपि किं न स्यात्तद्योगस्याविशेषतः ॥ १८८ ॥

पुंसि चैतन्यस्य समवायो योगः स च खादिष्वपि समानः, समवायस्य स्वयमविशिष्टस्यैकस्य प्रतिनियमहेत्वभावादात्मन्येव ज्ञानं समवेतं नाकाशादिष्विति विशेषाव्यवस्थितेः ॥

मयि ज्ञानमपीहेदं प्रत्ययानुमितो नरि ।
ज्ञानस्य समवायोस्ति न खादिष्वित्ययुक्तिकम् ॥ १८९ ॥

यथेह कुंडे दधीति प्रत्ययान्न तत्कुंडादन्यत्र तद्दधिसंयोगः शक्यापादानस्तथेह मयि ज्ञानमितीहेदं प्रत्ययादात्मनोऽन्यत्र खादिषु ज्ञानसमवाय इत्ययुक्तिकमेव यौगस्य ॥

**खादयोपि हि किं नैव प्रतीयुस्तावके मते ।**
**ज्ञानमस्मास्विति क्वात्मा जडस्तेभ्यो विशेषभाक् ॥ १९० ॥**

खादयो ज्ञानमस्मास्विति प्रतीयंतु स्वयमचेतनत्वादात्मवत् । आत्मनो वा मैवं प्रतीयुस्तत एव खादिवदिति । जडात्मवादिमते सन्नपि ज्ञानमिहेदमिति प्रत्ययः प्रत्यात्मवेद्यो न ज्ञानस्यात्मनि समवायं नियमयति विशेषाभावात् । नन्विह पृथिव्यादिषु रूपादय इति प्रत्ययोपि न रूपादीनां पृथिव्यादिषु समवायं साधयेद्यथा खादिषु, तत्र वा सत्त्वं साधयेत् पृथिव्यादिष्विवेति न कचित्प्रत्ययविशेषात्कस्यचिद्व्यवस्था । किंचित्साधर्म्यस्य सर्वत्र भावादिति चेत् । सत्यं ।-अयमपरोस्य दोषोस्तु, पृथिव्यादीनां रूपाद्यनात्मकत्वे खादिभ्यो विशिष्टतया व्यवस्थापयितुमशक्तेः । स्यान्मतं । आत्मानो ज्ञानमस्मास्विति प्रतीयंति आत्मत्वात् ये तु न तथा ते नात्मानो यथा खादयः । आत्मानश्चैतेऽहंप्रत्ययग्राह्यास्तस्मात्तथेत्यात्मत्वमेव खादिभ्यो विशेषमात्मानं साधयति पृथिवीत्वादिवत् । पृथिव्यादीनां पृथिवीत्वादियोगाद्धि पृथिव्यादयस्तद्वदात्मत्वयोगादात्मान इति । तदयुक्तम् । आत्मत्वादिजातीनामपि जातिमदनात्मकत्वे तत्समवायनियमासिद्धेः । प्रत्ययविशेषात्तत्सिद्धिरिति चेत्, स एव विचारयितुमारब्धः । परस्परमत्यंतभेदाविशेषेपि जातितद्वतामात्मत्वजातिरात्मनि प्रत्ययविशेषमुपजनयति न पृथिव्यादिषु पृथिवीत्वादिजातयश्च तत्रैव प्रत्ययमुत्पादयंति नात्मनीति कोत्र नियमहेतुः ? समवाय इति चेत्, सोऽयमन्योन्यसंश्रयः । सति प्रत्ययविशेषे जातिविशेषस्य जातिमति समवायः सति च समवाये प्रत्ययविशेष इति । प्रत्यासत्तिविशेषादन्यत एव तत्प्रत्ययविशेष इति चेत् । स कोऽन्योऽन्यत्र कथंचित्तादात्म्यपरिणामादिति स एव प्रत्ययविशेषहेतुरेषितव्यः । तदभावे तदघटनाज्जातिविशेषस्य क्वचिदेव समवायासिद्धेरात्मादिविभागानुपपत्तेरात्मन्येव ज्ञानं समवेतमिहेदमिति प्रत्ययं कुरुते न पुनः खादिष्विति प्रतिपत्तुमशक्तेर्न चैतन्ययोगादात्मनश्चेतनत्वं सिद्ध्येत् यतोऽसिद्धो हेतुः स्यात् ।

**प्रतीतिः शरणं तत्र केनाप्याश्रीयते यदि ।**
**तदा पुंसश्चिदात्मत्वं प्रसिद्धमविगानतः ॥ १९१ ॥**
**ज्ञाताहमिति निर्णीतेः कथंचिच्चेतनात्मताम् ।**
**अंतरेण व्यवस्थानासंभवात् कलशादिवत् ॥ १९२ ॥**

प्रतीतिविलोपो हि स्याद्वादिभिर्न क्षम्यते न पुनः प्रतीत्याश्रयणं । ततो निःप्रतिद्वन्द्वमुपयोगात्मकस्यात्मनः सिद्धेर्न हि जातुचित्स्वयमचेतनोहं चेतनायोगाच्चेतनोऽचेतने वा मयि चेतनायाः समवाय इति प्रतीतिरस्ति । ज्ञाताहमिति समानाधिकरणतया प्रतीतेः । भेदे तथा प्रतीतिरिति चेन्न । कथंचित्तादात्म्याभावे तददर्शनात् । यष्टिः पुरुषः इत्यादिप्रतीतिस्तु भेदे सत्युपचाराद् दृष्टा न पुनस्तात्त्विकी । तथा चात्मनि ज्ञाताहमिति प्रतीतिः कथंचिच्चेतनात्मतां गमयति, तामंतरेणानुपपद्यमानत्वात् कलशादिवत् । न हि कलशादिरचेतनात्मको ज्ञाताहमिति प्रत्येति । चैतन्ययोगाभावादसौ न तथा प्रत्येतीति चेत्, चेतनस्यापि चैतन्ययोगाच्चेतनोहमिति प्रतिपत्तेर्निरस्तत्वात् । ननु च ज्ञानवानहमिति प्रत्ययादात्मज्ञानयोर्भेदोऽन्यथा धनवानिति प्रत्ययादपि धनतद्वतोर्भेदाभावानुषंगादिति कश्चित् । तदसत् ।

**ज्ञानवानहमित्येष प्रत्ययोपि न युज्यते ।**
**सर्वथैव जडस्यास्य पुंसोभिमनने तथा ॥ १९३ ॥**

ज्ञानवानहमिति नात्मा प्रत्येति जडत्वैकांतरूपत्वाद् घटवत् । सर्वथा जडश्च स्यात् आत्मा ज्ञानवानहमिति प्रत्येता च स्याद्विरोधाभावादिति मा निर्णैषीत्तस्य तथोत्पत्त्यसंभवात् । तथाहि—

ज्ञानं विशेषणं पूर्वं गृहीत्वात्मानमेव च ।
विशेष्यं जायते बुद्धिर्ज्ञानवानहमित्यसौ ॥ १९४ ॥
तद्गृहीतिः स्वतो नास्ति रहितस्य स्वसंविदा ।
परतश्चानवस्थानादिति तत्प्रत्ययः कुतः ॥ २०१ ॥[1]

येषां नागृहीतविशेषणा विशेष्ये बुद्धिरिति मतं श्वेताच्छ्वेते बुद्धिरिति वचनात्तेषां ज्ञानवानहमिति प्रत्ययो नागृहीते ज्ञानाख्ये विशेषणे विशेष्ये चात्मनि जातूत्पद्यते, स्वमतविरोधात् । गृहीते तस्मिन्नुत्पद्यते इति चेत्, कुतस्तद्गृहीतिः ? न तावत्स्वतः स्वसंवेदनानभ्युपगमात् । स्वसंविदिते ह्यात्मनि ज्ञाने च स्वतः सा प्रयुज्यते नान्यथा संतानांतरवत् । परतश्चेत्तदपि ज्ञानांतरं विशेष्यं नागृहीते ज्ञानत्वविशेषणे ग्रहीतुं शक्यमिति ज्ञानांतराच्चद्ग्रहणेन भाव्यमित्यनवस्थानात् कुतः प्रकृतप्रत्ययः ॥

नन्वहंप्रत्ययोत्पत्तिरात्मज्ञप्तिर्निगद्यते ।
ज्ञानमेतदिति ज्ञानोत्पत्तिस्तद्ज्ञप्तिरेव च ॥ २०२ ॥
ज्ञानवानहमित्येष प्रत्ययस्तावतोदिता ।
तद्ज्ञानावेदनेप्येवं नानवस्थेति केचन ॥ २०३ ॥

ज्ञानात्मविशेषणविशेष्यज्ञानाहितसंस्कारसामर्थ्यादेव ज्ञानवानहमिति प्रत्ययोत्पत्तेर्नानवस्थेति केचिन्मन्यंते—

तेपि नूनमनात्मज्ञा ज्ञाप्यज्ञापकताविदः ।
सर्वं हि ज्ञापकं ज्ञातं स्वयमन्यस्य वेदकम् ॥ २०४ ॥

विशेषणविशेष्ययोर्ज्ञानं हि तयोर्ज्ञापकं तत्कथमज्ञातं तौ ज्ञापयेत् । कारकत्वे तदयुक्तमेव । तदिमे

---

१ यत्पुस्तकमाश्रित्य मुद्रणाय प्रतिपुस्तकं कृतं तत्र चतुर्दशपृष्ठस्यैकविंशतितमपंक्त्याः प्रारम्भे "यदासत्तदधिकरणस्य" इत्यस्य स्थाने अधोलिखितस्यास्य पाठस्यानुपलब्धत्वात् किंचित्कालानन्तरं तु पुस्तकान्तरेऽस्योपलब्धत्वेनेहोद्धृतिः कृता । अत एव चेह वार्तिकसंख्यापि वृद्धिं नीता । तत एव चैनं पाठं तत्स्थानीयं समुपगम्याध्ययनं विधास्यन्ति मयि क्षमापरायणाः सुधिय इत्याशासे ।

यदा च क्वचिदेकत्र तदेतन्नास्तितामतिः । नैवान्यत्र तदा सास्ति क्वैवं सर्वत्र नास्तिता ॥ २४ ॥
प्रमाणांतरतोप्येषां न सर्वपुरुषग्रहः । तल्लिंगादेरसिद्धत्वात् सहोदीरितदूषणात् ॥ २५ ॥
तज्ज्ञापकोपलंभोपि सिद्धः पूर्वत्र जातुचित् । यस्य स्मृतौ प्रजायेत नास्तिताज्ञानमंजसा ॥ २६ ॥

तदेवं सदुपलंभकप्रमाणपंचकवदभावप्रमाणमपि न सर्वज्ञज्ञापकोपलंभस्य सर्वप्रमातृसंबंधिनो संभवसाधनं तत्र तस्योत्थानसामर्थ्याभावात् । ननु च विवादापन्नेष्वशेषप्रमातृषु तदुपगमादेव सिद्ध. सर्वज्ञज्ञापकोपलंभो नास्तीति साध्यते ततो नाभावप्रमाणस्य तत्रोत्थानसामर्थ्यभाव इत्यारेकायां परोपगमस्य प्रमाणत्वाप्रमाणत्वयोर्दूषणमाह;—

परोपगमतः सिद्धस्स चेन्नास्तीति गम्यते । व्याघातस्तत्प्रमाणत्वेऽन्योन्यं सिद्धो न सोऽन्यथा ॥२७॥

न हि प्रमाणात्सिद्धे सर्वज्ञज्ञापकोपलंभे परोपगमोसिद्धो नाम यतस्तन्नास्तितासाधनेऽन्योन्यं व्याघातो न स्यात् । प्रमाणमंतरेण तु स न सिध्यत्येवेति तत्सामर्थ्यभाव एव ॥

न चैवं सर्वथैकांतः परोपगमतः कथम् । सिद्धो निषिध्यते जैनैरिति चोद्यं न धीमताम् ॥ २८ ॥

न हि सोपगमतः स्याद्वादिनां सर्वथैकांतः सिद्धोस्तीति निषेध्यो न स्यात् सर्वज्ञज्ञापकोपलंभवत्, तदेतदचोद्यम् ।

प्रतीतेनंतधर्मात्मन्यर्थे स्वयमबाधिते । को दोषः सुनयैस्तत्रैकांतोपप्लवबाधने ॥ २९ ॥

सुनिश्चितासंभवद्बाधकप्रमाणेपि स्वनेकांतात्मनि वस्तुनि दृष्टिमोहोदयात्सर्वथैकांताभिप्रायः कस्यचिदुपजायते । स चोपप्लवः सम्यग्नयैर्बाध्यते इति न कश्चिद्दोषः । प्रतिषेध्याधिकरणं प्रतिपत्तिलक्षणः प्रतिषेध्यासिद्धिलक्षणो वा मिथ्यादृशस्तद—

तयोर्ज्ञानमज्ञातमेव ज्ञापकं ब्रुवाणा न ज्ञाप्यज्ञापकभावविद इति सत्यमनात्मज्ञाः । स्यान्मतं । विशेषणस्य ज्ञानं न ज्ञापकं नापि कारकं लिंगवच्चक्षुरादिवच्च । किं तर्हि ? ज्ञप्तिरूपं फलं । तच्च प्रमाणाज्ज्ञातं चेत्ताव-तैवाकांक्षाया निवृत्तिः फलपर्यंतत्वात्तस्या विशेष्यज्ञानस्य ज्ञापकं तदित्यपि वार्तं तस्य तत्कारकत्वात् । प्रमाणत्वात्तस्य ज्ञापकं तदित्यप्यसारं साधकतमस्य कारकविशेषस्य प्रमाणत्ववचनात् । न हि विशेषण-ज्ञानं प्रमाणं विशेष्यज्ञानं तत्फलमित्यभिदधानस्तत्तस्य ज्ञापकमिति मन्यते । किं तर्हि ? विशेष्यज्ञानोत्पत्ति-सामग्रीत्वेन विशेषणज्ञानं प्रमाणमिति । तथा मन्यमानस्य च कानवस्था नामेति । तदेतदपि नाति विचार-सहं । एकात्मसमवेतानंतरज्ञानग्राह्यमर्थज्ञानमिति सिद्धांतविरोधात् । यथैव हि विशेषणार्थज्ञानं पूर्वं प्रमाणफलं प्रतिपत्तुराकांक्षानिवृत्तिहेतुत्वान्न ज्ञानांतरमपेक्षते तथा विशेषार्थज्ञानमपि विशेषणज्ञानफल-त्वात्तस्य यदि पुनर्विशेषणविशेष्यार्थज्ञानस्य स्वरूपापरिच्छेदकत्वात्स्वात्मनि क्रियाविरोधादपरज्ञानेन वेद्यमानतेष्टा तदा तदपि तद्वेदकं ज्ञानमपरेण ज्ञानेन वेद्यमिष्यतामित्यनवस्था दुःपरिहरा । नन्वर्थज्ञानपरि-च्छेदे तदनंतरज्ञानेन व्यवहर्तुराकांक्षाक्षयादर्थज्ञानपरिच्छित्तये न ज्ञानांतरापेक्षास्ति, तदाकांक्षया वा तदिष्यत एव यस्य यत्राकांक्षाक्षयस्तत्र तस्य ज्ञानांतरापेक्षानिवृत्तेस्तथा व्यवहारदर्शनात्ततो नानवस्थेति चेत्, तर्ह्यर्थज्ञानेनार्थस्य परिच्छित्तौ कस्यचिदाकांक्षाक्षयात्तद्ज्ञानापेक्षापि माभूत् । तथेष्यत एवेति चेत्, परोक्षज्ञानवादी कथं भवता अतिशय्यते ? ज्ञानस्य कस्यचित् प्रत्यक्षत्वोपगमादितिचेत्, यस्याप्रत्यक्षतोपग-मस्तेन परिच्छिन्नोर्थः कथं प्रत्यक्षः ? संतानांतरज्ञानपरिच्छिन्नार्थवत् प्रत्यक्षतया प्रतीतेरिति चेत्, तर्ह्य-प्रत्यक्षज्ञानवादिनोपि तत एवार्थः प्रत्यक्षोस्तु । तथा चानर्थिका सर्वज्ञज्ञानस्य ज्ञानांतरप्रत्यक्षत्वकल्पना । यत्र यथा प्रतीतिस्तत्र तथेष्टिर्न पुनरप्रतीतिकं किंचित्कल्प्यत इति चेत्, स्वार्थसंवेदकताप्रतीतितो ज्ञानस्य तथेष्टिरस्तु । ज्ञाने स्वसंवेदकताप्रतीतेः । स्वात्मनि क्रियाविरोधेन बाधितत्वान्न तथेष्टिरिति चेत् । का पुनः स्वात्मनि क्रिया विरुद्धा परिस्पंदरूपा धात्वर्थरूपा वा ? प्रथमपक्षे असिज्ञाने तदभावात् । धात्वर्थरूपा तु न विरुद्धैव भवति तिष्ठतीत्यादिक्रियायाः स्वात्मनि प्रतीतेः । कथमन्यथा भवत्याकाशं तिष्ठति मेरुरित्यादि व्यवहारः सिध्येत् ? सकर्मिका धात्वर्थरूपापि विरुद्धा स्वात्मनीति चेत्, तर्हि ज्ञानं प्रकाशते चकास्तीति क्रिया न स्वात्मनि विरुद्धा ? ज्ञानमात्मानं जानातीति सक-र्मिका तत्र विरुद्धेति चेन्न, आत्मानं हंतीत्यादेरपि विरोधानुषंगात् । कर्तृस्वरूपस्य कर्मत्वेनो-पचारान्नात्र पारमार्थिकं कर्मेति चेत्, समानमन्यत्र । ज्ञाने कर्तरि स्वरूपस्यैव ज्ञानक्रियायाः कर्म-तयोपचारात् । तात्त्विकमेव ज्ञाने कर्मत्वं प्रमेयत्वात्तस्येति चेत्, तद्यदि सर्वथा कर्तुरभिन्नं तदा विरोधः, सर्वथा भिन्नं चेत्कथं तत्र ज्ञानस्य जानातीति क्रिया स्वात्मनि स्यायेन विरुध्येत् । कथमन्यथा कटं करोतीति क्रियापि कटकारस्य स्वात्मनि न स्याद्यतो न विरुध्यते । कर्तुः कर्मत्वं कथंचिद्भिन्नमित्ये-तस्मिंस्तु दर्शने ज्ञानस्यात्मनो वा स्वात्मनि क्रिया दूरोत्सारितैवेति न विरुद्धतामधिवसति । ततो ज्ञानस्य स्वसंवेदकताप्रतीतेः स्वात्मनि क्रियाविरोधो बाधकः प्रत्यस्तमितबाधकप्रतीत्यास्पदं चार्थसंवेदकत्ववत्स्व-संवेदकत्वं ज्ञानस्य परीक्षकैरेष्टव्यमेव । प्रतीत्यननुसरणेनवस्थानस्य स्वमतविरोधस्य वा परिहर्तुमशक्तेः । ततो न जडात्मवादिनां ज्ञानवानहमिति प्रत्ययः ज्ञाताहमिति प्रत्ययवत् पुरुषस्य ज्ञानविशिष्टस्य ग्राहकः ॥

**किं चाहंप्रत्ययस्यास्य पुरुषो गोचरो यदि ।**
**तदा कर्ता स एव स्यात् कथं नान्यस्य संभवः ॥ २०९ ॥**

कश्चास्याहंप्रत्ययस्य विषय इति विचार्यते । पुरुषश्चेत् प्रमेयः प्रमाता न स्यात् । न हि स एव प्रमेयः स एव प्रमाता, सकृदेकस्यैकज्ञानापेक्षया कर्मत्वकर्तृतयोर्विरोधात् । ततोऽन्यः कर्तेति चेन्न,

एकत्र शरीरे अनेकात्मानभ्युपगमात् । तस्माच्चाहंप्रत्ययविषयत्वेऽपरकर्तृपरिकल्पनानुषंगादनवस्थानादेकात्मज्ञानापेक्षायामात्मनः प्रमातृत्वानुपपत्तेश्च नान्यः कर्ता संभवति यतो न विरोधः ॥

स्वस्मिन्नेव प्रमोत्पत्तिः स्वप्रमातृत्वमात्मनः ।
प्रमेयत्वमपि स्वस्य प्रमितिश्चेयमागता ॥ २०६ ॥

यथा घटादौ प्रमितेरुत्पत्तिस्तत्प्रमातृत्वं पुरुषस्य तथा स्वस्मिन्नेव तदुत्पत्तिः स्वप्रमातृत्वं, यथा च घटादेः प्रमितौ प्रमेयत्वं तस्यैव तथात्मनः परिच्छित्तौ स्वस्यैव प्रमेयत्वं, यथा घटादेः परिच्छित्तिस्तस्यैव प्रमितिस्तथात्मनः परिच्छित्तिः स्वप्रमितिः प्रतीतिबलादागता परिहर्तुमशक्या ॥

तथाचैकस्य नानात्वं विरुद्धमपि सिद्ध्यति ।
न चतस्रो विधास्तेषां प्रमात्रादिप्ररूपणात् ॥ २०७ ॥

प्रमात्रादिप्रकाराश्चत्वारोप्यात्मनो भिन्नास्ततो नैकस्यानेकात्मकत्वं विरुद्धमपि सिद्ध्यतीति चेत् न, तस्य प्रकारांतरत्वप्रसंगात् । कर्तृत्वादात्मनः प्रमातृत्वेन व्यवस्थानात् न प्रकारांतरत्वमिति चेत् । केयं कर्तृता नामात्मनः ? ॥

प्रमितेः समवायित्वमात्मनः कर्तृता यदि ।
तदा नास्य प्रमेयत्वं तन्निमित्तत्वहानितः ॥ २०८ ॥
प्रमाणसहकारी हि प्रमेयोर्थः प्रमां प्रति ।
निमित्तकारणं प्रोक्तो नात्मैवं स्वप्रमां प्रति ॥ २०९ ॥

प्रमीयमाणो ह्यर्थः प्रमेयः प्रमाणसहकारी प्रमित्युत्पत्तिं प्रति निमित्तकारणत्वादिति ब्रुवाणः कथमात्मनः स्वप्रमितिं प्रति समवायिनः प्रमातृतामात्मसात् कुर्वतः प्रमेयत्वमाचक्षीत विरोधात् । न चात्मा स्वप्रमां प्रति निमित्तकारणं समवायिकारणत्वोपगमात् । यदि पुनरात्मनः स्वप्रमितिं प्रति समवायित्वं निमित्तकारणत्वं चेष्यतेर्थप्रमितिं प्रति समवायिकारणत्वमेव तदा साधकतमत्वमप्यस्तु । तथा च स एव प्रमाता स एव प्रमेयः स एव च प्रमाणमिति कुतः प्रमातृप्रमेयप्रमाणानां प्रकारांतरता नावतिष्ठेत् । कर्तृकारकात् करणस्य भेदान्नात्मनः प्रमाणत्वमिति चेत्, कर्मकारकं कर्तुः किमभिन्नं यतस्तस्य प्रमेयत्वमिति नात्मा स्वयं प्रमेयः ॥

नरांतरप्रमेयत्वमनेनास्य निवारितम् ।
कस्यापि स्वप्रमेयत्वेन्यप्रमातृत्वकल्पनात् ॥ २१० ॥
बाध्या केनानवस्था स्यात्स्वप्रमातृत्वकल्पने ।
यथोक्ताशेषदोषानुषंगः केन निवार्यते ॥ २११ ॥

विवक्षितात्मा आत्मांतरस्य यदि प्रमेयस्तदास्य स्वात्मा किमप्रमेयः प्रमेयो वा ? अप्रमेयश्चेत् तद्वात्मांतरस्य प्रमेय इति पर्यनुयोगस्यापरिनिष्ठानादनवस्था केन बाध्यते । प्रमेयश्चेत् स एव प्रमाता स एव प्रमेय इत्यायातमेकस्य नैकत्वं विरुद्धमपि परमतसाधनं तद्वत् स एव प्रमाणं स्यात् साधकतमत्वोपपत्तेरिति पूर्वोक्तमखिलं दूषणमशक्यनिवारणम् ॥

स्वसंवेद्ये नरे नायं दोषोऽनेकांतवादिनाम् ।
नानाशक्त्यात्मनस्तस्य कर्तृत्वाद्यविरोधतः ॥ २१२ ॥
परिच्छेदकशक्त्या हि प्रमातात्मा प्रतीयते ।
प्रमेयश्च परिच्छेद्यशक्त्याकांक्षाश्रयात्स्थितिः ॥ २१३ ॥

ननु स्वसंवेद्येप्यात्मनि प्रमातृत्वशक्तिः प्रमेयत्वशक्तिश्च स्वयं परिच्छेदकशक्त्यान्यया परिच्छेद्या, सापि तत्परिच्छेदकत्वपरिच्छेद्यत्वशक्तिपरया परिच्छेदकशक्त्या परिच्छेद्येत्यनवस्थानमन्यथाद्यशक्तिभेदोपि प्रमातृत्वप्रमेयत्वहेतुर्मा भूत् इति न स्याद्वादिनां चोद्यं । प्रतिपत्तुराकांक्षाक्षयादेव क्वचिदवस्थानसिद्धेः । न हि परिच्छेदकत्वादिशक्तिर्यावत्स्वयं न ज्ञाता तावदात्मनः स्वप्रमातृत्वादिसंवेदनं न भवति येनानवस्था स्यात् । प्रमातृत्वादिस्वसंवेदनादेव तच्छक्तेरनुमानान्निराकांक्षस्य तत्राप्यनुपयोगादिति युक्तमुपयोगात्मकत्वसाधनमात्मनः ॥

**कर्तृरूपतया वित्तेरपरोक्षः स्वयं पुमान् ।**
**अप्रत्यक्षश्च कर्मत्वेनाप्रतीतेरितीतरे ॥ २१४ ॥**

सत्यमात्मा संवेदनात्मकः स तु न प्रत्यक्षः कर्मत्वेनाप्रतीयमानत्वात् । न हि यथा नीलमहं जानामीत्यत्र नीलं कर्मतया चकास्ति तथात्मा कर्मत्वेन । अप्रतिभासमानस्य च न प्रत्यक्षत्वं, तस्य तेन व्याप्तत्वात् । आत्मानमहं जानामीत्यत्र कर्मतयात्मा भात्येवेति चायुक्तमुपचरितत्वात्तस्य तथा प्रतीतेः । जानातेरन्यत्र सकर्मकस्य दर्शनादात्मनि सकर्मकत्वोपचारसिद्धेः । परमार्थतस्तु पुंसः कर्मत्वे कर्ता स एव वा स्यादन्यो वा? न तावत्स एव विरोधात् । कथमन्यथैकरूपतात्मनः सिद्ध्येत् । नानारूपत्वादात्मनो न दोष इति चेत् न, अनवस्थानुषंगात् । केनचिद्रूपेण कर्मत्वं केनचित्कर्तृत्वमित्यनेकरूपत्वे ह्यात्मनस्तदनेकं रूपं प्रत्यक्षमप्रत्यक्षं वा? प्रत्यक्षं चेत्कर्मत्वेन भाव्यमन्येन तत्कर्तृत्वेन, तत्कर्मत्वकर्तृत्वयोरपि प्रत्यक्षत्वे परेण कर्मत्वेन कर्तृत्वेन चावश्यं भवितव्यमित्यनवस्था । तदनेकं रूपमप्रत्यक्षं चेत्, कथमात्मा प्रत्यक्षो नाम? पुमान् प्रत्यक्षस्तत्स्वरूपं न प्रत्यक्षमिति कः श्रद्दधीत । यदि पुनरन्यः कर्ता स्यात्तदा स प्रत्यक्षोऽप्रत्यक्षो वा? प्रत्यक्षश्चेत् कर्मत्वेन प्रतीयमानोसाविति न कर्ता स्याद्विरोधात् । कथमन्यथैकरूपतात्मनः सिद्ध्येत् । नानारूपत्वादात्मनो न दोष इति चेन्न, अनवस्थानुषंगात्, इत्यादि पुनरावर्तत, इति महच्चक्रकम् । तस्याप्रत्यक्षत्वे स एवास्माकमात्मेति सिद्धोऽप्रत्यक्षः पुरुषः । परोक्षोस्तु पुमानिति चेत् न, तस्य कर्तृरूपतया स्वयं संवेद्यमानत्वात् । सर्वथा साक्षादप्रतिभासमानो हि परोक्षः परलोकादिवन्न पुनः केनचिद्रूपेण साक्षात्प्रतिभासमान, इत्यपरोक्ष एवात्मा व्यवस्थितिमनुभवति । इति केचित् ॥

**तेषामप्यात्मकर्तृत्वपरिच्छेद्यत्वसंभवे ।**
**कथं तदात्मकस्यास्य परिच्छेद्यत्वनिन्हवः ॥ २१५ ॥**

कर्तृत्वेनात्मनः संवेदने तत्कर्तृत्वं तावत्परिच्छेद्यमिष्टमन्यथा तद्विशिष्टतयास्य संवेदनविरोधात् तत्संभवे कथं तदात्मकस्यात्मनः प्रत्यक्षत्वनिन्हवो युक्तः ॥

**ततो भेदे नरस्यास्य नापरोक्षत्वनिर्णयः ।**
**न हि विंध्यपरिच्छेद्ये हिमाद्रेरपरोक्षता ॥ २१६ ॥**

कर्तृत्वाद्भेदे पुंसः कर्तृत्वस्य परिच्छेदो न स्यात् विंध्यपरिच्छेदे हिमाद्रेरिवेति सर्वथात्मनः साक्षात्परिच्छेदाभावात्परोक्षतापत्तेः कथमपरोक्षत्वनिर्णयः । ततो नैकांतेनात्मनः कर्तृत्वादभेदो वाभ्युपगंतव्यः ॥

**भेदाभेदात्मकत्वे तु कर्तृत्वस्य नरात्कथम् ।**
**न स्यात्तस्य परिच्छेद्ये नुः परिच्छेद्यता सतः ॥ २१७ ॥**

कथंचिद्भेदः कथंचिदभेदः कर्तृत्वस्य नरादिति चायुक्तमंशतो नरस्य प्रत्यक्षत्वप्रसंगात् । न हि प्रत्यक्षात्कर्तृत्वाद्येनांशेन नरस्याभेदस्तेन प्रत्यक्षत्वं शक्यं निषेद्धुं प्रत्यक्षादभिन्नस्याप्रत्यक्षत्वविरोधात् ॥

**प्रत्यक्षत्वं ततोंशेन सिद्धं निह्नुतये कथम् ।**
**श्रोत्रियैः सर्वथा चात्मपरोक्षत्वोक्तदूषणम् ॥ २१८ ॥**

ननु चात्मनः कर्तृरूपता कथंचिदभिन्ना परिच्छिद्यते न तु प्रत्यक्षा कर्तृरूपता, कर्मतया प्रतीयमानत्वाभावात्तन्नात्मनोंशेनापि प्रत्यक्षत्वं सिद्ध्यति; यस्य निह्नवे प्रतीतिविरोध इति चेत् । कथमिदानीं कर्तृता परिच्छिद्यते । तस्य कर्तृतयैवेति चेत्, तर्हि कर्तृता कर्ता न पुनरात्मा, तस्यास्ततो भेदात् । न ह्यन्यस्यां कर्तृतायां परिच्छिन्नायामन्यः कर्ता व्यवतिष्ठतेतिप्रसंगात् । नन्वात्मा धर्मी कर्ता कर्तृतास्य धर्मः कथंचित्तदात्मा, तत्रात्मा कर्ता प्रतीयत इति स एवार्थः सिद्धो धर्मिधर्माभिधायिनोः शब्दयोरेव भेदात्ततः कर्तृता स्वरूपेण प्रतिभाति न पुनरन्यया कर्तृतया, यतः सा कर्त्री स्यात् । कर्ता चात्मा स्वरूपेण चकास्ति नापरास्य कर्तृता यस्याः प्रत्यक्षत्वे पुंसोपि प्रत्यक्षत्वप्रसंग इति चेत् । तर्ह्यात्मा तद्धर्मो वा प्रत्यक्षः । स्वरूपेण साक्षात्प्रतिभासमानत्वान्नीलादिवत् । नीलादिर्वा न प्रत्यक्षस्तत एवात्मवत् । नीलादिः प्रत्यक्षः साक्षात् क्रियमाणत्वादिति चेत् । तत एवात्मा प्रत्यक्षोस्तु । कर्मत्वेनाप्रतीयमानत्वान्न प्रत्यक्ष इति चेत् । व्याहतमेतत् । साक्षात्प्रतीयमानत्वं हि विषयीक्रियमाणत्वं, विषयत्वमेव च कर्मत्वं, तच्चात्मन्यस्ति । कथमन्यथा प्रतीयमानतास्य स्यात् । नात्मा प्रतीयते स्वयं किंतु प्रत्येति सर्वदा न ततो प्रतीयमानत्वात्तस्य कर्मत्वसिद्धिरसिद्धता साधनस्येति चेत् । सर्वथा प्रतीयमानत्वमसिद्धं कथंचिद्वा ? न तावत्सर्वथा, परेणापि प्रतीयमानत्वाभावप्रसंगात् । कथंचित्पक्षे तु नासिद्धं साधनं, तथैवोपन्यासात् । स्वतः प्रतीयमानत्वमसिद्धमिति चेत् । परतः कथं तत्सिद्धं ? विरोधाभावादिति चेत् । स्वतस्तत्सिद्धौ को विरोधः ? कर्तृत्वकर्मत्वयोः सहानवस्थानमिति चेत्, परतस्तत्सिद्धौ समानं । यदैव स्वयमर्थं प्रत्येति तदैव परेणानुमानादिनात्मा प्रतीयत इति प्रतीतिसिद्धत्वान्न सहानवस्थानविरोधः । स्वयं कर्तृत्वस्य परकर्मत्वेनेति चेत् तर्हि स्वयं कर्तृत्वकर्मत्वयोरप्यात्मानमहं जानामीत्यत्र सहप्रतीतिसिद्धत्वाद्विरोधो माभूत् । न चात्मनि कर्मप्रतीतिरुपचरिता, कर्तृत्वप्रतीतेरप्युपचरितत्वप्रसंगात् । शक्यं हि वक्तुं दहत्यग्निरिंधनमित्यत्र क्रियायाः कर्तृसमवायदर्शनात्, जानात्यात्मार्थमित्यत्रापि जानातीति क्रियायाः कर्तृसमवायोपचारः । परमार्थतस्तु तस्य कर्तृत्वे कर्म स एव वा स्यादन्यो वार्थः स्यात् ? स एव चेद्विरोधः । कथमन्यथैकरूपतात्मनः । नानारूपत्वात्तस्यादोष इति चेन्न, अनवस्थानात् । यदि पुनरन्योर्थः कर्म स्यात्तदा प्रतिभासमानोऽप्रतिभासमानो वा ? प्रतिभासमानश्चेत् कर्ता स्यात्ततोन्यत्कर्म वाच्यं, तस्यापि प्रतिभासमानत्वे कर्तृत्वादन्यत्कर्मेत्यनवस्थानान्न क्वचित्कर्मत्वव्यवस्था । यदि पुनरप्रतिभासमानोर्थः कर्मोच्यते तदा खरशृंगादेरपि कर्मत्वापत्तिरिति न किंचित्कर्म स्यादात्मवदर्थस्यापि प्रतिभासमानस्य कर्तृत्वसिद्धेः । यदि पुनरर्थः प्रतिभासजनकत्वादुपचारेण प्रतिभासत इति न वस्तुतः कर्ता तदात्मापि स्वप्रतिभासजनकत्वादुपचारेण कर्तास्तु विशेषाभावात् । स्वप्रतिभासं जनयन्नात्मा कथमकर्तेति चेदर्थः कथं ? जडत्वादिति चेत्तत एव स्वप्रतिभासं माजीजनत् । कारणांतराज्जाते प्रतिभासेर्थः प्रतिभासते न तु स्वयं प्रतिभासं जनयतीति चेत्, समानमात्मनि । सोपि हि स्वावरणविच्छेदाज्जाते प्रतिभासे विभासते न तन्निरपेक्षः स्वप्रतिभासं जनयतीति । तदेवमात्मनः कर्तृत्वकर्मत्वापलापवादिनौ नान्योन्यमतिशय्येते । ये तु प्रतीत्यनुसरणेनात्मनः स्वसंविदितात्मत्वमाहुस्ते करणज्ञानात्फलज्ञानाच्च भिन्नस्याभिन्नस्य वा भिन्नाभिन्नस्य वा ?

**भिन्नस्य करणज्ञानात्फलज्ञानाच्च देहिनः ।**
**स्वयं संविदितात्मत्वं कथं वा प्रतिपेदिरे ॥ २१९ ॥**

यद्धि सर्वथा सर्वस्माद्वेदनाद्भिन्नं तन्न स्वसंविदितं यथा व्योम तथात्मतत्त्वं श्रोत्रियाणामिति कथं तत्तस्येति संप्रतिपन्नाः ॥

**यदि हेतुफलज्ञानादभेदस्तस्य कीर्त्यते ।**
**परोक्षेतररूपत्वं तदा केन निषिध्यते ॥ २२० ॥**
**परोक्षात् करणज्ञानादभिन्नस्य परोक्षता ।**
**प्रत्यक्षाच्च फलज्ञानात्प्रत्यक्षत्वं हि युज्यते ॥ २२१ ॥**

परोक्षात् करणज्ञानात् फलज्ञानाच्च प्रत्यक्षादभिन्नस्यात्मनो न परोक्षता अहमिति कर्तृतया संवेदनान्नापि प्रत्यक्षता कर्मतया प्रतिभासाभावादिति न मंतव्यं, दत्तोत्तरत्वात् ॥

**तथैवोभयरूपत्वे तस्यैतद्दोषदुष्टता ।**
**स्याद्वादाश्रयणं चास्तु कथंचिदविरोधतः ॥ २२२ ॥**

सर्वथा भिन्नाभिन्नात्मकत्वे करणफलज्ञानादात्मनस्तदुभयपक्षोक्तदोषदुष्टता । कथंचिद्भिन्नात्मकत्वे स्याद्वादाश्रयणमेवास्तु विरोधाभावात् । स्वावरणक्षयोपशमलक्षणायाः शक्तेः करणज्ञानरूपायाः द्रव्यार्थाश्रयणादभिन्नस्यात्मनः परोक्षत्वं, स्वार्थव्यवसायात्मकाच्च फलज्ञानादभिन्नस्य प्रत्यक्षत्वमिति स्याद्वादाश्रयणे न किंचिद्विरोधमुत्पश्यामः । सर्वथैकांताश्रयणे विरोधात् । तस्मादात्मा स्यात्परोक्षः स्यात्प्रत्यक्षः । प्रभाकरस्याप्येवमविरोधः किं न स्यादिति चेत् न, करणफलज्ञानयोः परोक्षप्रत्यक्षयोरव्यवस्थानात् । तथाहि—

**प्रत्यक्षेऽर्थपरिच्छेदे स्वार्थाकारावभासिनि ।**
**किमन्यत्करणज्ञानं निष्फलं कल्प्यतेऽमुना ॥ २२३ ॥**

अर्थपरिच्छेदे पुंसि प्रत्यक्षे स्वार्थाकारव्यवसायिनि सति निष्फलं करणज्ञानमन्यच्च फलज्ञानं, तत्कृत्यस्यात्मनैव कृतत्वादिति तदकल्पनीयमेव । स्वार्थव्यवसायित्वमात्मनोसिद्धं व्यवसायात्मकत्वात्तस्येति चेत् न । स्वव्यवसायिन एवार्थव्यवसायित्वघटनात् । तथा ह्यात्मार्थव्यवसायसमर्थः सोर्थव्यवसाय्येवेत्यनेनापास्तं । स्वव्यवसायित्वमंतरेणार्थव्यवसितेरनुपपत्तेः कलशादिवत् । सत्यपि स्वार्थव्यवसायिन्यात्मनि प्रमातरि प्रमाणेन साधकतमेन ज्ञानेन भाव्यं । करणाभावे क्रियानुपपत्तेरिति चेत् न । इंद्रियमनसोरेव करणत्वात् । तयोरचेतनत्वादुपकरणमात्रत्वात् प्रधाने चेतनं करणमिति चेत् न । भावेंद्रियमनसोः परेषां चेतनतयावस्थितत्वात् । तदेव करणज्ञानमस्माकमिति चेत्, तत्परोक्षमिति सिद्धं साध्यते । लब्ध्युपयोगात्मकस्य भावकरणस्य छद्मस्थाप्रत्यक्षत्वात् । तज्जनितं तु ज्ञानं प्रमाणभूतं नाप्रत्यक्षं स्वार्थव्यवसायात्मकत्वात्, तच्च नात्मनोर्थांतरमेवेति स एव स्वार्थव्यवसायी यदीष्टस्तदा व्यर्थं ततोपरं करणज्ञानं । फलज्ञानं च व्यर्थमनेनोक्तं तस्यापि ततोऽन्यस्यैवासंभवात् । अथवा प्रत्यक्षेर्थपरिच्छेदे फलज्ञाने स्वार्थाकारावभासिनि सति किमतोन्यत्करणं ज्ञानं पोष्यते निष्फलत्वात्तस्य । तदेव तस्य फलमिति चेत्, प्रमाणादभिन्नं भिन्नं वा ? यद्यभिन्नं प्रमाणमेव तदिति कथं फलज्ञाने प्रत्यक्षे करणज्ञानमप्रत्यक्षं ? भिन्नं चेन्न करणज्ञानं प्रमाणं स्वार्थव्यवसायादर्थांतरत्वाद् घटादिवत् । कथंचिदभिन्नमिति चेन्न सर्वथा करणज्ञानस्याप्रत्यक्षत्वं विरोधात् । प्रत्यक्षात्फलज्ञानात् कथंचिदभिन्नत्वात् । कर्मत्वेनाप्रतिभासमानत्वात्करणज्ञानमप्रत्यक्षमिति चेन्न, करणत्वेन प्रतिभासमानस्य प्रत्यक्षत्वोपपत्तेः । कथंचित्प्रतिभासते च कर्म च न भवतीति व्याघातस्य प्रतिपादितत्वात् । कथं चायं फलज्ञानं कर्मत्वेनापि प्रतिभासमानमपि प्रत्यक्ष-

नुपयन् करणज्ञानं तथा नोपैति न चेद्व्याकुलांतःकरणः । फलज्ञानं कर्मत्वेन प्रतिभासत एवेति चेत् न, फलत्वेन प्रतिभासनविरोधात् । ननु च प्रमाणस्य परिच्छित्तिः फलं सा चार्थस्य परिच्छिद्यमानता, तत्प्रतीतिः कर्मत्वप्रतीतिरेवेति चेत् । किं पुनरियं परिच्छित्तिरर्थधर्मः ? तथोपगमे प्रमाणफलत्वविरोधोऽर्थवत् । प्रमातृधर्मः सेति चेत्, कथं कर्मकर्तृत्वेन प्रतीतेः न कर्मकारकं नापि कर्तृकारकं परिच्छित्तिः । क्रियात्वात् क्रियायाः कारकत्वायोगात् क्रियाविशिष्टस्य द्रव्यस्यैव कारकत्वोपपत्तेरिति चेत् । तर्हि फलज्ञानस्य कर्मत्वेन प्रतीतिर्युक्ता क्रियात्वेनैव फलात्मना प्रतीतिरिति न प्रत्यक्षत्वसंभवः करणज्ञानवदात्मवद्वा ॥

तस्यापि च परोक्षत्वे प्रत्यक्षोऽर्थो न सिद्ध्यति ।
ततो ज्ञानावसायः स्यात् कुतोऽस्यासिद्धवेदनात् ॥ २२४ ॥

फलज्ञानमात्मा चापरोक्षोस्तु करणज्ञानवदित्ययुक्तमर्थस्य प्रत्यक्षतानुपपत्तेः । प्रत्यक्षां स्वपरिच्छित्तिमधितिष्ठन्नेव ह्यर्थः प्रत्यक्षो युक्तो नान्यथा, सर्वस्य सर्वदा सर्वथार्थस्य प्रत्यक्षत्वप्रसंगात् । तथात्मनः परोक्षत्वे संतानांतरस्येवार्थः प्रत्यक्षो न स्यादन्यथा सर्वात्मांतरप्रत्यक्षः सर्वस्यात्मनः प्रत्यक्षोसौ किं न भवेत्, सर्वथा विशेषाभावात् । ततश्चाप्रत्यक्षादर्थात् न कुतश्चित्परोक्षज्ञाननिश्चयोस्य वादिनः स्यात् येनेदं शोभेत ।–ज्ञाते त्वनुमानादवगच्छतीति । नाप्यसिद्धसंवेदनात्पुरुषात्तन्निश्चयो यतोनवस्था न भवेत् । तल्लिंगज्ञानस्यापि परोक्षत्वे अपरानुमानान्निर्णयात्तल्लिंगस्याप्यपरानुमानादिति । स्वसंवेद्यत्वादात्मनो नानवस्थेति चेत् न, तस्य ज्ञानासंवेदकत्वात् । तत्संवेदकत्वे वार्थसंवेदकत्वं तस्य किं न स्यात् ? स्वतोर्थांतरं कथंचिद् ज्ञानमात्मा संवेदयते न पुनरर्थमिति किंकृतोयं नियमः ? संवेदयमानोपि ज्ञानमात्मा ज्ञानांतरेण संवेदयते स्वतो वा ? ज्ञानांतरेण चेत्, प्रत्यक्षेणेतरेण वा ? न तावत्प्रत्यक्षेण सर्वस्य सर्वज्ञानस्य परोक्षत्वोपगमात् । नापीतरेण ज्ञानेन संतानांतरज्ञानेनेव तेन ज्ञातुमशक्तेः । स्वयं ज्ञातेन चेत् ? ज्ञानांतरेण स्वतो वा ? ज्ञानांतरेण चेत्, प्रत्यक्षेणेतरेण वेत्यादि पुनरावर्तत इति चक्रकमेतत् । स्वतो ज्ञानमात्मा संवेदयते स्वरूपवदिति चेत्, तथैव ज्ञानमर्थं स्वं च स्वतः किं न वेदयते ? यतः परोक्षज्ञानवादो महामोहविजृंभित एव न स्यात् ॥

कथं चात्मा स्वसंवेद्यः संवित्तिर्नोपगम्यते ।
येनोपयोगरूपोयं सर्वेषां नाविगानतः ॥ २२५ ॥

कुतः पुनरुपयोगात्मा नरः सिद्ध इति चेत्—

कथंचिदुपयोगात्मा पुमानध्यक्ष एव नः ।
प्रतिक्षणविवर्तादिरूपेणास्य परोक्षता ॥ २२६ ॥

स्वार्थाकारव्यवसायरूपेणार्थालोचनमात्ररूपेण च ज्ञानदर्शनोपयोगात्मकः पुमान् प्रत्यक्ष एव तथा स्वसंविदितत्वात् । प्रतिक्षणपरिणामेन स्वावरणक्षयोपशमविशिष्टत्वेनासंख्यातप्रदेशत्वादिना चानुमेयः प्रवचनसमधिगम्यश्चात्यंतपरोक्षरूपेणेति निर्णेतव्यं बाधकाभावात् ॥

स्वरूपं चेतना पुंसः सदौदासीन्यवर्तिनः ।
प्रधानस्यैव विज्ञानं विवर्त इति चापरे ॥ २२७ ॥
तेषामध्यक्षतो बाधा ज्ञानस्यात्मनि वेदनात् ।
भ्रांतिश्चेदात्मनस्तेन शून्यस्यानवधारणात् ॥ २२८ ॥

यथात्मनि चेतनस्य संवेदनं मयि चैतन्यं चेतनोहमिति वा तथा ज्ञानस्यापि मयि ज्ञानं ज्ञाताहमिति वा प्रत्यक्षतः सिद्धेर्यथोदासीनस्य पुंसश्चैतन्यं स्वरूपं तथा ज्ञानमपि, तत्प्रधानस्यैव विवर्तं ब्रुवाणस्य प्रत्यक्षबाधा। ज्ञानस्यात्मनि संवेदनं भ्रांतिरिति चेत् न। स्यात्तदैवं यदि ज्ञानशून्यस्यात्मनः कदाचित्संविदाभ्रांता स्यात्। सर्वदा ज्ञानसंसर्गादात्मनो ज्ञानित्वसंवित्तिरिति चेत्—

**औदासीन्यादयो धर्माः पुंसः संसर्गजा इति।**
**युक्तं सांख्यपशोर्वक्तुं ध्यादिसंसर्गवादिनः॥ २२९॥**

ज्ञानसंसर्गतो ज्ञानी सुखसंसर्गतः सुखी पुमान्न तु स्वयमिति वदतः सांख्यस्य पशोरिवात्मानमप्यजानतो युक्तं वक्तुमौदासीन्यस्य संसर्गादुदासीनः पुरुषः चैतन्यसंसर्गाच्चेतनो भोक्तृत्वसंसर्गाद्भोक्ता शुद्धिसंसर्गाच्च शुद्ध इति, स्वयं तु ततो विपरीत इति विशेषाभावात्। न हि तस्यानवबोधस्वभावतादौ प्रमाणमस्ति॥

**सदात्मानवबोधादिस्वभावश्चेतनत्वतः।**
**सुषुप्तावस्थवन्नायं हेतुर्व्याप्यात्मवादिनः॥ २३०॥**

स्वरूपासिद्धो हि हेतुरयं व्यापिनमात्मानं वदतः कुतः—

**जीवो ह्यचेतनः काये जीवत्वाद्बाह्यदेशवत्।**
**वक्तुमेवं समर्थोन्यः किं न स्याज्जडजीववाक्॥ २३१॥**

कायाद्बहिरचेतनत्वेन व्याप्तस्य जीवत्वस्य सिद्धेः कायेप्यचेतनत्वसिद्धिरिति नानवबोधादिस्वभावत्वे साध्ये चेतनत्वं साधनमसिद्धस्यासाधनत्वात्॥

**शरीराद्बहिरप्येष चेतनात्मा नरत्वतः।**
**कायदेशवदित्येतत्प्रतीत्या विनिवार्यते॥ २३२॥**

काये चेतनत्वेन प्राप्तस्य नरत्वस्य दर्शनात्ततो बहिरप्यात्मनश्चेतनत्वसिद्धेर्नासिद्धसाधनमिति न मंतव्यं प्रतीतिबाधनात्॥

**तथाहि बाह्यदेशेपि पुंसः संवेदनं न किम्।**
**कायदेशवदेव स्याद्विशेषस्याप्यसंभवात्॥ २३३॥**

यस्य हि निरतिशयः पुरुषस्तस्य कायेन्यत्र च न तस्य विशेषोस्ति यतः काये संवेदनं न ततो बहिरिति युज्यते॥

**कायाद्बहिरभिव्यक्तेरभावात्तदवेदने।**
**पुंसो व्यक्तेतराकारभेदाद्भेदः कथं न ते॥ २३४॥**

कायेभिव्यक्तत्वात् पुंसः संवेदनं न ततो बहिरनभिव्यक्तत्वादिति ब्रुवाणः कथं तस्यैकस्वभावतां साधयेत्, व्यक्तेतराकारभेदाद्भेदस्य सिद्धेः। यत्र व्यक्तसंसर्गस्तत्रात्मा संवेद्यते नान्यत्रेत्यप्यनेनापास्तं। निरंशस्य क्वचिदेव व्यक्तसंसर्गस्येतरस्य वा सकृदयोगात्। सकृदेकस्य परमाणोः परमाण्वंतरेण संसर्गं क्वचिदन्यत्र वासंसर्गं प्रतिपद्यत इति चेत् न, तस्यापि क्वचिद्देशे सतो देशांतरे च तदसिद्धेः। गगनवत्स्यादिति चेत् न, तस्यानंतप्रदेशतया प्रसिद्धस्य तदुपपत्तेरन्यथात्मवदघटनात्। नन्वेकं द्रव्यमनंतपर्यायान् सकृदपि यथा व्याप्नोति तथात्मा व्यक्तविवर्तशरीरेण संसर्गं क्वचिदन्यत्र वाऽसंसर्गं प्रतिपद्यत इति चेन्न, वस्तुनो द्रव्यपर्यायात्मकस्य जात्यंतरत्वात्, व्याप्यव्यापकभावस्य नयवशात्तत्र निरूपणात्। नैवं नानैकस्वभावः पुरुषो जात्यंतरतयोपेयते निरतिशयात्मवादविरोधादिति। कायेभिव्यक्तौ ततो बहिर-

भिन्नक्रियासक्तेः सर्वत्र संवेदनमसंवेदनं नोचेत् नानात्वापत्तिर्दुःशक्या परिहर्तुं । ततो नैतौ सर्वग-तात्मवादिनौ चेतनत्वमचेतनत्वं वा साधयितुमात्मनः समर्थौ यतोसिद्धं साधनं न स्यात् । स्याद्वादिनः सांख्यस्य च प्रसिद्धमेव चेतनत्वं साधनमिति चेन्नानवबोधाद्यात्मकत्वेन प्रतिवादिनश्चेतनत्वस्येष्टेस्तस्य हेतुत्वे विरुद्धसिद्धेर्विरुद्धो हेतुः स्यात् । साध्यसाधनविकलश्च दृष्टांतः सुषुप्तावस्थस्याप्यात्मनश्चेतनत्व-मात्रेणानवबोधादिस्वभावत्वेन चाप्रसिद्धेः ॥ कथम्—

**सुषुप्तस्यापि विज्ञानस्वभावत्वं विभाव्यते ।**
**प्रबुद्धस्य सुखप्राप्तिस्मृत्यादेः स्वप्नदर्शिवत् ॥ २३५ ॥**

स्वप्नदर्शिनो हि यथा सुप्तप्रबुद्धस्य सुखानुभवनादिस्मरणाद्विज्ञानस्वभावत्वं विभावयंति तथा सुषुप्त-स्यापि सुखमतिसुषुप्तोहमिति प्रत्ययात् । कथमन्यथा सुषुप्तौ पुंसश्चेतनत्वमपि सिध्येत् । प्राणादिदर्शना-दिति चेत—

**यथा चैतन्यसंसिद्धिः सुषुप्तावपि देहिनः ।**
**प्राणादिदर्शनात्तद्वद्बोधादिः किं न सिध्यति ॥ २३६ ॥**
**जाग्रतः सति चैतन्ये यथा प्राणादिवृत्तयः ।**
**तथैव सति विज्ञाने दृष्टास्ता बाधवर्जिताः ॥ २३७ ॥**

वीरणादौ चैतन्याभावे प्राणादिवृत्तीनामभावनिश्चयान्निश्चितव्यतिरेकाभ्यस्ताभ्यः सुषुप्तौ चैतन्य-सिद्धिरिति चेत् ॥

**प्राणादयो निवर्तंते यथा चैतन्यवर्जिते ।**
**वीरणादौ तथा ज्ञानशून्येपीति विनिश्चयः ॥ २३८ ॥**

न हि चेतनत्वे साध्ये निश्चितव्यतिरेकाः प्राणादिवृत्तयो न पुनर्ज्ञानात्मकतायामिति शक्यं वक्तुं, तदभावेपि तासां वीरणादावभावनिर्णयात् । चैतन्याभावादेव तत्र ता न भवंति न तु विज्ञानाभावादिति कोशपानं विधेयं । सत्यं । विज्ञानाभावे ता न भवंति, सत्यपि चैतन्ये मुक्तस्य तदभावादित्यपरे । तेषां सुषुप्तौ विज्ञानाभावसाधनमयुक्तं, प्राणादिवृत्तीनां सद्भावात् । तथा च न सोदाहरणमिति कुतः साध्यसिद्धिः । सुखबुद्ध्यादयो नात्मस्वभावाः स्वयमचेतनत्वाद्रूपादिवदित्यनुमानादिति चेत्, कुतस्तेषामचे-तनत्वसिद्धिः ?

**सुखबुद्ध्यादयो धर्माश्चेतनारहिता इमे ।**
**भंगुरत्वादितो विद्युत्प्रदीपादिवदित्यसत् ॥ २३९ ॥**
**हेतोरात्मोपभोगेनानेकांतात्परमार्थतः ।**
**सोप्यनित्यो यतः सिद्धः कादाचित्कत्वयोगतः ॥ २४० ॥**

पुरुषानुभवो हि नश्वरः कादाचित्कत्वाद्दीपादिवदिति परमार्थतस्तेन भंगुरत्वमनैकांतिकमचेतनत्वे-साध्ये । कादाचित्कः कुतः सिद्धः पुरुषोपभोगः स्वसद्भावादिति चेत् ।

**कादाचित्कः परापेक्ष्यसद्भावाद्विभ्रमादिवत् ।**
**बुद्ध्यध्यवसितार्थस्य शब्दादेरुपलंभतः ॥ २४१ ॥**
**परापेक्ष्यः प्रसिद्धोयमात्मनोनुभवोंजसा ।**
**परानपेक्षितायां तु पुंदृष्टेः सर्वदर्शिता ॥ २४२ ॥**

परापेक्षितया कादाचित्कत्वं व्याप्तं, तेन चानित्यत्वमिति तत्सिद्धौ तत्सिद्धिः। परापेक्षिता पुरुषानुभवस्य नासिद्धा, परस्य बुद्ध्यध्यवसायस्यापेक्षणीयत्वात्। बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयत इति वचनात्। परानपेक्षितायां तु पुरुषदर्शनस्य सर्वदर्शितापत्तिः, सकलार्थबुद्ध्यध्यवसायापायेपि सकलार्थदर्शनस्योपपत्तेरिति योगिन इवायोगिनोऽमुक्तस्य च सार्वज्ञमनिष्टमायातम्॥

**सर्वस्य सर्वदा पुंसः सिद्ध्युपायस्तथा वृथा।**
**ततो दृग्बोधयोरात्मस्वभावत्वं प्रसिद्ध्यतु॥ २४३॥**
**कथंचिन्नश्वरत्वस्याविरोधान्नर्यपीक्षणात्।**
**तथैवार्थक्रियासिद्धेरन्यथा वस्तुताक्षतेः॥ २४४॥**

सर्वस्य सर्वज्ञत्वे च वृथा सिद्ध्युपायः, साध्याभावात्। सिद्धिर्हि सर्वज्ञता मुक्तिर्वा कुतश्चिदनुष्ठानात्साध्यते? तत्र न तावत्सर्वज्ञता तस्याः स्वतः सिद्धत्वात्। नापि मुक्तिः सर्वज्ञतापाये तदुपगमात्तस्य चासंभवात्। परानपेक्षितायाः सर्वदर्शितायाः परानिवृत्तावपि प्रसक्तेः। स्यान्मत। न बुद्ध्यध्यवसितार्थालोचनं पुंसो दर्शनं तस्यात्मस्वभावत्वेन व्यवस्थितत्वादिति। तदपि नावधानीयं, बोधस्याप्यात्मस्वभावत्वोपपत्तेः। न ह्यहंकाराभिमतार्थाध्यवसायो बुद्धिस्तस्याः पुंस्वभावत्वेन प्रतीतेर्बाधकाभावात्। इति दर्शनज्ञानयोरात्मस्वभावत्वमेव प्रसिद्ध्यतु विशेषाभावात्। ननु च नश्वरज्ञानस्वभावत्वे पुंसो नश्वरत्वप्रसंगो बाधक इति चेत् न, नश्वरत्वस्य नरेपि कथंचिद्विरोधाभावात्, पर्यायार्थतः परपरिणामाक्रांततावलोकनात्, अपरिणामिनः क्रमाक्रमाभ्यामर्थक्रियानुपपत्तेर्वस्तुत्वहानिप्रसंगान्नित्यानित्यात्मकत्वेनैव कथंचिदर्थक्रियासिद्धिरित्यलं प्रपंचेन, आत्मनो ज्ञानदर्शनोपयोगात्मकस्य प्रसिद्धेः॥

**संसारव्याधिविध्वंसः क्वचिज्जीवे भविष्यति।**
**तन्निदानपरिध्वंससिद्धेर्ज्वरविनाशवत्॥ २४५॥**
**तत्परिध्वंसनेनातः श्रेयसा योक्ष्यमाणता।**
**पुंसः स्याद्वादिनां सिद्धा नैकांते तद्विरोधतः॥ २४६॥**

सत्यप्यात्मोपयोगात्मा न श्रेयसा योक्ष्यमाणः कश्चित् सर्वदा रागादिसमाक्रांतमानसत्वादिति केचित्संप्रतिपन्नाः। तान् प्रति तत्साधनमुच्यते। श्रेयसा योक्ष्यमाणः कश्चित् ससारव्याधिविध्वंसित्वान्यथानुपपत्तेः। श्रेयोत्र सकलदुःखनिवृत्तिः। सकलदुःखस्य च कारण संसारव्याधिः। तद्विध्वंसे कस्यचित्सिद्धं श्रेयसा योक्ष्यमाणत्वं, तल्लक्षणकारणानुपलब्धेः। न च संसारव्याधेः सकलदुःखकारणत्वमसिद्धं जीवस्य पारतंत्र्यनिमित्तत्वात्। पारतंत्र्यं हि दुःखमिति। एतेन सांसारिकसुखस्य दुःखत्वमुक्तं, स्वातंत्र्यस्यैव सुखत्वात्। शक्रादीनां स्वातंत्र्यं सुखमस्त्येवेति चेन्न, तेषामपि कर्मपरतंत्रत्वात्। निराकांक्षतात्मकसंतोषरूपं तु सुखं न सांसारिकं, तस्य देशमुक्तिसुखत्वात्। देशतो मोहक्षयोपशमे हि देहिनो निराकांक्षता विषयरतौ नान्यथातिप्रसंगात्। तदेतेन यतिजनस्य प्रशमसुखमसांसारिकं व्याख्यातं। क्षीणमोहानां तु कार्त्स्न्यतः प्रशमसुखं मोहपरतंत्रत्वनिवृत्तेः। यदपि संसारिणामनुकूलवेदनीयप्रातीतिकं सुखमिति मतं, तदप्यभिमानमात्रं। पारतंत्र्याख्येन दुःखेनानुषक्तत्वात्तस्य तत्कारणत्वात् कार्यत्वाच्चेति न संसारव्याधिर्जातुचित्सुखकारणं येनास्य दुःखकारणत्वं न सिद्ध्येत्। तद्विध्वंसः कथमिति चेत्, क्वचिन्निदानपरिध्वंससिद्धेः। यत्र यस्य निदानपरिध्वंसस्तत्र तस्य परिध्वंसो दृष्टो यथा क्वचिज्ज्वरस्य। निदानपरिध्वंसश्च संसारव्याधेः शुद्धात्मनीति कारणानुपलब्धिः। संसारव्याधेर्निदानं मिथ्यादर्शनादि, तस्य विध्वंसः सम्यग्दर्शनादिभावनाबलात् क्वचिदिति समर्थयिष्यमाणत्वान्न हेतोरसिद्धता शंकनीया। सरसि शंखकादि-

नानैकांतिकोयं हेतुः, स्वनिदानस्य जलस्य परिध्वंसेपि तस्यापरिध्वंसादिति चेन्न। तस्य जलनिदानत्वासिद्धेः। स्वारंभकपुद्गलपरिणामनिदानत्वात् शंखकादेस्तत्सहकारिमात्रत्वाज्जलादीनां। न हि कारणमात्रं केनचित्कस्यचिन्निदानमिष्टं नियतस्यैव कारणस्य निदानत्वात्। न च तन्नाशे कस्यचिन्निदानिनो न नाश इत्यव्यभिचार्येव हेतुः कथंचन संसारव्याधिविध्वंसनं साधयेद्यतस्तत्परिध्वंसनेन श्रेयसा योक्ष्यमाणः कश्चिदुपयोगात्मकात्मा न स्यात्। निरन्वयविनश्वरं चित्तं श्रेयसा योक्ष्यमाणमिति न मंतव्यं, तस्य क्षणिकत्वविरोधात्। संसारनिदानरहिताच्चित्ताच्चित्तांतरस्य श्रेयःस्वभावस्योत्पद्यमानतैव श्रेयसा योक्ष्यमाणता, सा न क्षणिकत्वविरुद्धेति चेन्न, क्षणिकैकांते कुतश्चित्कस्यचिदुत्पत्त्ययोगात्। संतानः श्रेयसा योक्ष्यमाण इत्यप्यनेन प्रतिक्षिप्तं, संतानिव्यतिरेकेण संतानस्यानिष्टेः। पूर्वोत्तरक्षण एव ह्यपरामृष्टभेदाः(?) संतानस्स चावस्तुभूतः कथं श्रेयसा योक्ष्यते? प्रधानं श्रेयसा योक्ष्यमाणमित्यप्यसंभाव्यं, पुरुषपरिकल्पनविरोधात्। तदेव हि संसरति तदेव च विमुच्यत इति किमन्यत्पुरुषसाध्यमस्ति? प्रधानकृतस्यानुभवनं पुंसः प्रयोजनमिति चेत्, प्रधानस्यैव तदस्तु। कर्तृत्वात्तस्य तन्नेति चेत्। स्यादेवं यदि कर्तानुभविता न स्यात्। द्रष्टुः कर्तृत्वे मुक्तस्यापि कर्तृत्वप्रसक्तिरिति चेत्, मुक्तः किमकर्तेष्टः? विषयसुखादेरकर्तैवेति चेत्, कुतः स तथा? तत्कारणकर्मकर्तृत्वाभावादिति चेत्, तर्हि संसारी विषयसुखादिकारणकर्मविशेषस्य कर्तृत्वाद्विषयसुखादेः कर्ता स एव चानुभविता किं न भवेत्? संसार्यवस्थायामात्मा विषयसुखादितत्कारणकर्मणां न कर्ता चेतनत्वान्मुक्तावस्थावदित्येतदपि न सुंदरं, स्वेष्टविघातकारित्वात्। कथं। संसार्यवस्थायामात्मा न सुखादेर्भोक्ता चेतनत्वान्मुक्तावस्थावदिति स्वेष्टस्यात्मनो भोक्तृत्वस्य विघातात्। प्रतीतिविरुद्धमिष्टविघातसाधनमिति चेत्, कर्तृत्वाभावसाधनमपि, पुंसः श्रोता घ्राताहमिति स्वकर्तृत्वप्रतीतेः। श्रोताहमित्यादिप्रतीतेरहंकारास्पदत्वादहंकारस्य च प्रधानविवर्तत्वात्प्रधानमेव कर्तृतया प्रतीयत इति चेत्, तत एवानुभवितृ प्रधानमस्तु। न हि तस्याहंकारास्पदत्वं न प्रतिभाति शब्दादेरनुभविताहमिति प्रतीतेः सकलजनसाक्षिकत्वात्। भ्रांतमनुभवितुरहंकारास्पदत्वमिति चेत्, कर्तुः कथमभ्रांतं? तस्याहंकारास्पदत्वादिति चेत्, तत एवानुभवितुस्तदभ्रांतमस्तु। तस्यौपाधिकत्वादहंकारास्पदत्वं भ्रांतमेवेति चेत्, कुतस्तदौपाधिकत्वसिद्धिः? पुरुषस्वभावत्वाभावादहंकारस्य तदास्पदत्वं पुरुषस्वभावस्यानुभवितृत्वस्यौपाधिकमिति चेत्, स्यादेवं यदि पुरुषस्वभावोहंकारो न स्यात्। मुक्तस्याहंकाराभावादपुरुषस्वभाव एवाहंकारः; स्वभावो हि न जातुचित्तद्वंतं त्यजति, तस्य निःस्वभावत्वप्रसंगादिति चेन्न। स्वभावस्य द्विविधत्वात्, सामान्यविशेषपर्यायभेदात्। तत्र सामान्यपर्यायः शाश्वतिकः स्वभावः, कादाचित्को विशेषपर्याय, इति न कादाचित्कत्वात्पुंस्यहंकारादेरतत्स्वभावता। ततो न तदास्पदत्वमनुभवितृत्वस्यौपाधिकं, येनाभ्रांतं न भवेत् कर्तृत्ववत्। न चाभ्रांताहंकारास्पदत्वाविशेषेपि कर्तृत्वानुभवितृत्वयोः प्रधानात्मकत्वमयुक्तं, यतः पुरुषकल्पनमफलं न भवेत्, पुरुषात्मकत्वे वा तयोः प्रधानपरिकल्पनं। तथाविधस्य चासतः प्रधानस्य गगनकुसुमस्येव न श्रेयसा योक्ष्यमाणता। पुरुषस्य सास्तु इति चेन्न, तस्यापि निरतिशयस्य मुक्तावपि तत्प्रसंगात्। तथा च सर्वदा श्रेयसा योक्ष्यमाण एव स्यात्पुरुषो न चायुज्यमानः। पूर्वं योक्ष्यमाणः पश्चात्तेनायुज्यमान इति चायुक्तं, निरतिशयैकांतत्वविरोधात्। स्वतो भिन्नैरतिशयैः सातिशयस्य पुंसः श्रेयसा योक्ष्यमाणता भवत्विति चेन्न, अनवस्थानुषंगात्। पुरुषो हि स्वातिशयैः संबध्यमानो यदि नानास्वभावैः संबध्यते, तदा तैरपि संबध्यमानः परैर्नानास्वभावैरित्यनवस्था। स तैरेकेन स्वभावेन संबध्यते इति चेत् न, अतिशयानामेकत्वप्रसंगात्। कथमन्यथैकस्वभावेन क्रियमाणानां नानाकार्याणामेकत्वापत्तेः पुरुषस्य नानाकार्यकारिणो नानातिशयकल्पना युक्तिमधितिष्ठेत्। स्वातिशयैरात्मा न

संबन्धस्य एवेति चासंबंधे तैस्तस्य व्यपदेशाभावानुषंगात् । स्वातिशयैः कथंचित्तादात्म्योपगमे तु स्याद्वाद-सिद्धिः । इत्यनेकांतात्मकस्यैवात्मनः श्रेयोयोक्ष्यमाणत्वं न पुनरेकांतात्मनः, सर्वथा विरोधात् ॥

**कालादिलब्ध्युपेतस्य तस्य श्रेयःपथे बृहत्- ।**
**पापापायाच्च जिज्ञासा संप्रवर्तेत रोगिवत् ॥ २४७ ॥**

श्रेयोमार्गजिज्ञासोपयोगस्वभावस्यात्मनः श्रेयसा योक्ष्यमाणस्य कस्यचित्कालादिलब्धौ सत्यां बृहत्पापापायात् संप्रवर्तते श्रेयोमार्गजिज्ञासात्वात् रोगिणो रोगविनिवृत्तिजश्रेयोमार्गजिज्ञासावत् । न तावदिह साध्यविकलमुदाहरणं रोगिणः स्वयमुपयोगस्वभावस्य रोगविनिवृत्तिजश्रेयसायोक्ष्यमाणस्य कालादिलब्धौ सत्यां बृहत्पापापायात् संप्रवर्तमानायाः श्रेयोजिज्ञासायाः सुप्रसिद्धत्वात् । तत एव न साधनविकलं श्रेयोमार्गजिज्ञासात्वस्य तत्र भावात् । निरन्वयक्षणिकचित्तस्य संतानस्य प्रधानस्य वाऽनात्मनः श्रेयोमार्गजिज्ञासेति न मंतव्यमात्मन इति वचनात्तस्य च साधितत्वात् । जडस्य चैतन्यमात्रस्वरूपस्य चात्मनः सेत्यपि न शंकनीयमुपयोगस्वभावस्येति प्रतिपादनात् । तथास्य समर्थनात् । निःश्रेयसेनासंपित्स्यमानस्य तस्य सेति च न चिंतनीयं, श्रेयसा योक्ष्यमाणस्येति निगदितत्वात् । तस्य तथा व्यवस्थापितत्वात् । कालदेशादिनियममंतरेणैव सेत्यपि च न मनसि निधेयं, कालादिलब्धौ सत्यामित्यभिधानात्तथा प्रतीतेश्च । बृहत्पापापायमंतरेणैव सा संप्रवर्तेत इत्यपि माभिमंस्त, बृहत्पापापायात्तत्संप्रवर्तनस्य प्रमाणसिद्धत्वात् । न हि क्वचित्संशयमात्रात् क्वचिज्जिज्ञासा, तत्प्रतिबंधकपापाक्रांतमनसः संशयमात्रेणावस्थानात् । सति प्रयोजने जिज्ञासा तत्रेत्यपि न सम्यक्, प्रयोजनानंतरमेव कस्यचिद्व्यासंगतस्तदनुपपत्तेः । 'दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ' इति केचित् । तेपि न न्यायवादिनः । सर्वसंसारिणां तत्प्रसंगात्, दुःखत्रयाभिघातस्य भावात् । आम्नायादेव श्रेयोमार्गजिज्ञासेत्यन्ये । तेषामथातो धर्मजिज्ञासेति सूत्रेथशब्दस्यानंतर्यार्थे वृत्तेरथेदमधीत्याम्नायादित्याम्नायादधीतवेदस्य वेदवाक्यार्थेषु जिज्ञासाविधिरवगम्यत इति व्याख्यानं । तदयुक्तं । सत्यप्याम्नायश्रवणे तदर्थावधारणेऽभ्यासे च कस्यचिद्धर्मजिज्ञासानुपपत्तेः । कालांतरापेक्षायां तदुत्पत्तौ सिद्धं कालादिलब्धौ तत्प्रतिबंधकपापापायाच्च श्रेयःपथे जिज्ञासायाः प्रवर्तनं । संशयप्रयोजनदुःखत्रयाभिघाताम्नायश्रवणेषु सत्स्वपि कस्याचित्तदभावादसत्स्वपि भावात् । कदाचित्संशयादिभ्यस्तदुत्पत्तिदर्शनात्तेषां तत्कारणत्वे लोभाभिमानादिभ्योपि तत्प्रादुर्भावावलोकनात्तेषामपि तत्कारणत्वमस्तु । नियतकारणत्वं तु तज्जनने बृहत्पापापायस्यैवांतरंगस्य, कारणत्वं बहिरंगस्य तु कालादेरिति युक्तं, तदभावे तज्जननानीक्षणात् । कालादि न नियतं कारणं बहिरंगत्वात् संशयलोभादिवदिति चेन्न, तस्यावश्यमपेक्षणीयत्वात् । कार्यांतरसाधारणत्वात्तु बहिरंगं तदिष्यते, ततो न हेतोः साध्याभावेपि सद्भावः संदिग्धो निश्चितो वा, यतः संदिग्धव्यतिरेकता निश्चितव्यभिचारिता वा भवेत् । ननु च स्वप्रतिबंधकाधर्मप्रक्षयात्कालादिसहायादस्तु श्रेयःपथे जिज्ञासा, तद्वानेव तु प्रतिपाद्यते इत्यसिद्धं । संशयप्रयोजनजिज्ञासाशक्यप्राप्तिसंशयव्युदासतद्वचनवतः प्रतिपाद्यत्वात् । तत्र संशयितः प्रतिपाद्यस्तत्त्वपर्यवसायिना प्रश्नविशेषेणाचार्यं प्रत्युपसर्पकत्वात्, नाव्युत्पन्नो विपर्यस्तो वा तद्विपरीतत्वाद्बालकवद्दस्युवद्वा । तथा संशयवचनवान् प्रतिपाद्यः स्वसंशयं वचनेनाप्रकाशयतः संशयितस्यापि ज्ञातुमशक्तेः । परिज्ञातसंशयोपि वचनात् प्रयोजनवान् प्रतिपाद्यो न स्वसंशयप्रकाशनमात्रेण विनिवृत्ताकांक्षः । प्रयोजनवचनवांश्च प्रतिपाद्यः, स्वप्रयोजनं वचनेनाप्रकाशयतः प्रयोजनवतोपि निश्चेतुमशक्यत्वात् । तथा जिज्ञासावान् प्रतिपाद्यः प्रयोजनवतो निश्चितस्यापि ज्ञातुमनिच्छतः प्रतिपादयितुमशक्यत्वात् । तद्वानपि तद्वचनवान् प्रतिपाद्यते, स्वां जिज्ञासां वचनेनानिवेदयतस्तद्वत्तया निर्णेतुमशक्तेः । तथा जिज्ञासुर्निश्चितोपि शक्यप्राप्तिमानेव प्रतिपाद्यनाशक्यस्तत्त्वमुपदिष्टं प्राप्तुमशक्नुवतः

प्रतिपादने वैयर्थ्यात् । स्वां शक्यप्राप्तिं वचनेनाकथयतस्तद्वृत्तेन प्रत्येतुमशक्तेः शक्यप्राप्तिवचनवानेव प्रतिपाद्यः । तथा संशयव्युदासवान् प्रतिपाद्यः सकृत्संशयितोभयपक्षस्य प्रतिपादयितुमशक्तेः । संशयव्युदासवानपि तद्वचनवान् प्रतिपाद्यते, किमयमनित्यः शब्दः किं वा नित्य इत्युभयोः पक्षयोरन्यत्र संशयव्युदासस्यानित्यः शब्दस्ताबत्प्रतिपाद्यतामिति वचनमंतरेणावबोद्धुमशक्यत्वादिति केचित् । तान् प्रतीदमभिधीयते ।

**तद्वानेव यथोक्तात्मा प्रतिपाद्यो महात्मनाम् ।**
**इति युक्तं मुनींद्राणामादिसूत्रप्रवर्तनम् ॥ २४८ ॥**

यः परतः प्रतिपद्यमानश्रेयोमार्गः स श्रेयोमार्गप्रतिपित्सावानेव, यथातुरः सद्वैद्यादिभ्यः प्रतिपद्यमानव्याधिविनिवृत्तिजश्रेयोमार्गः । परतः प्रतिपद्यमानश्रेयोमार्गश्च विवादापन्नः कश्चिदुपयोगात्मकात्मा भव्य इति । अत्र न धर्मिण्यसिद्धसत्ताको हेतुरात्मनः श्रेयसा योक्ष्यमाणस्योपयोगस्वभावस्य च विशिष्टस्य प्रमाणसिद्धस्य धर्मित्वात्तत्र हेतोः सद्भावात् । तद्विपरीते त्वात्मनि धर्मिणि तस्य प्रमाणबाधितत्वादसिद्धिरेव । न हि निरन्वयक्षणिकचित्तसंतानः, प्रधानम्, अचेतनात्मा, चैतन्यमात्रात्मा वा परतः प्रतिपद्यमानश्रेयोमार्गः सिध्यति; तस्य सर्वथार्थक्रियारहितत्वेनावस्तुत्वसाधनात् । नापि श्रेयसा शश्वदयोक्ष्यमाणस्तस्य गुरुतरमोहाक्रांतस्यानुपपत्तेः । स्वतः प्रतिपद्यमानश्रेयोमार्गेण योगिना व्यभिचारी हेतुरिति चेत् न, परतो ग्रहणात् । परतः प्रतिपद्यमानप्रत्यवायमार्गेणानैकांतिक इति चायुक्तं, तत्र हेतुधर्मस्याभावात् । तत एव न विरुद्धो हेतुः श्रेयोमार्गप्रतिपित्सावत्तमंतरेण क्वचिदप्यसंभवात् । इति प्रमाणसिद्धमेतत्तद्वानेव यथोक्तात्मा प्रतिपाद्यो महात्मनां, नातद्वान्नायथोक्तात्मा वा तत्प्रतिपादने सतामप्रेक्षावत्त्वप्रसंगात् । परमकरुणया कांश्चन श्रेयोमार्गं प्रतिपादयतां तत्प्रतिपित्सारहितानामपि नाप्रेक्षावत्त्वमिति चेन्न, तेषां प्रतिपादयितुमशक्यानां प्रतिपादने प्रयासस्य विफलत्वात् । तत्प्रतिपित्सामुत्पाद्य तेषां तैः प्रतिपादनात् सफलस्तत्प्रयास इति चेत्, तर्हि तत्प्रतिपित्सावानेव तेषामपि प्रतिपाद्यः सिद्धः । तद्वचनवानेवेति तु न नियमः, सकलविदां प्रत्यक्षत एवैतत्प्रतिपित्सायाः प्रत्येतुं शक्यत्वात् । परैरनुमानाद्वास्य विकारादिलिंगजादाप्तोपदेशाद्वा तथा प्रतीतेः । संशयतद्वचनवांस्तु साक्षान्न प्रतिपाद्यस्तत्त्वप्रतिपित्सारहितस्य तस्याचार्यं प्रत्युपसर्पणाभावात् । परंपरया तु विपर्ययतद्वचनवानव्युत्पत्तितद्वचनवान् वा प्रतिपाद्योऽस्तु विशेषाभावात् । यथैव हि संशयतद्वचनानंतरं स्वप्रतिबंधकाभावात्तत्त्वजिज्ञासायां कस्यचित्प्रतिपाद्यता तथा विपर्ययाव्युत्पत्तितद्वचनानंतरमपि । विपर्यस्ताव्युत्पन्नमनसां कुतश्चिददृष्टविशेषात्संशये जाते तत्त्वजिज्ञासा भवतीति चायुक्तं, नियमाभावात् । न हि तेषामदृष्टविशेषात्संशयो भवति न पुनस्तत्त्वजिज्ञासेति नियामकमस्ति । तत्त्वप्रतिपत्तेः संशयव्यवच्छेदरूपत्वात् संशयितः प्रतिपाद्यत इति चेत्, तर्ह्यव्युत्पन्नो विपर्यस्तो वा प्रतिपाद्यः संशयितवत् । तत्त्वप्रतिपत्तेरव्युत्पत्तिविपर्यासव्यवच्छेदरूपत्वस्य सिद्धेः संशयव्यवच्छेदरूपत्ववत् । संशयविपर्ययाव्युत्पत्तीनामन्यतमाव्यवच्छेदे तत्त्वप्रतिपत्तेर्यथार्थतानुपपत्तेः । यथा वाऽविद्यमानसंशयस्य प्रतिपाद्यस्य संशयव्यवच्छेदार्थं तत्त्वप्रतिपादनमफलं, तथैवाविद्यमानाव्युत्पत्तिविपर्ययस्य तद्व्यवच्छेदार्थमपि । यथा भविष्यत्संशयव्यवच्छेदार्थं तथा भविष्यदव्युत्पत्तिविपर्ययव्यवच्छेदार्थमपि । इति तत्त्वप्रतिपित्सायां सत्यां त्रिविधः प्रतिपाद्यः, संशयितो विपर्यस्तबुद्धिरव्युत्पन्नश्च । प्रयोजनशक्यप्राप्तिसंशयव्युदासतद्वचनवान् प्रतिपाद्य इत्यप्यनेनापास्तं । तत्प्रतिपित्साविरहे तस्य प्रतिपाद्यत्वनिरोधात् । सत्यां तु प्रतिपित्सायां प्रयोजनाद्यभावोऽपि यथायोग्यं प्रतिपाद्यत्वप्रसिद्धेस्तद्वानेव

प्रतिपाद्यते । इति युक्तं परापरगुरूणामर्थतो ग्रंथतो वा शास्त्रे प्रथमसूत्रप्रवर्तनं, तद्विषयस्य श्रेयोमार्गस्य परापरप्रतिपाद्यैः प्रतिपित्सितत्वात् ॥

**ननु निर्वाणजिज्ञासा युक्ता पूर्वं तदर्थिनः ।**
**परिज्ञातेभ्युपेयेर्थे तन्मार्गो ज्ञातुमिष्यते ॥ २४९ ॥**

यो येनार्थी स तत्प्रतिपित्सावान् दृष्टो लोके, मोक्षार्थी च कश्चिद्भव्यस्तस्मान्मोक्षप्रतिपित्सावानेव युक्तो न पुनर्मोक्षमार्गप्रतिपित्सावान्, अप्रतिज्ञाते मोक्षे तन्मार्गस्य प्रतिपित्सायोग्यतोपपत्तेरिति मोक्षसूत्रप्रवर्तनं युक्तं तद्विषयस्य बुभुत्सितत्वान्न पुनरादावेव तन्मार्गसूत्रप्रवर्तनमित्ययं मन्यते ॥

**तत्र प्रायः परिक्षीणकल्मषस्यास्य धीमतः ।**
**स्वात्मोपलब्धिरूपेस्मिन् मोक्षे संप्रतिपत्तितः ॥ २५० ॥**

न हि यत्र यस्य संप्रतिपत्तिस्तत्र तस्य प्रतिपित्सानवस्थानुषंगात् । संप्रतिपत्तिश्च मोक्षे स्वात्मोपलब्धिरूपे प्रकृतस्य प्रतिपाद्यस्य प्रायशः परिक्षीणकल्मषत्वात्, सातिशयप्रज्ञत्वाच्च । ततो न तदर्थिनोपि तत्र प्रतिपित्सा तदर्थित्वमात्रस्य तत्प्रतिपित्सया व्याप्त्यसिद्धेः । सति विवादेर्थित्वस्य प्रतिपित्साया व्यापकत्वमिति चेन्न, तस्यासिद्धत्वात् । नहि मोक्षेधिकृतस्य प्रतिपत्तुर्विवादोस्ति । नानाप्रतिवादिकल्पनाभेदादस्त्येवेति चेत्—

**प्रवादिकल्पनाभेदाद्विवादो योपि संभवी ।**
**स पुंरूपे तदाधारपदार्थे वा न निर्वृतौ ॥ २५१ ॥**

स्वरूपोपलब्धिर्निर्वृतिरिति सामान्यतो निर्वृतौ सर्वप्रवादिनां विवादोऽसिद्ध एव । यस्य तु स्वरूपस्योपलब्धिस्तत्र विशेषतो विवादस्तदावरणे वा कर्मणि कल्पनाभेदात् । तथाहि । प्रभास्वरमिदं प्रकृत्या चित्तं निरन्वयक्षणिकं, अविद्यातृष्णे तत्प्रतिबंधके, तदभावान्निरास्रवचित्तोत्पत्तिर्मुक्तिरिति केषांचित्कल्पना । सर्वथा निःस्वभावमेवेदं चित्तं, तस्य धर्मिधर्मपरिकल्पना प्रतिबंधिका, तदपक्षयात्सकलनैरात्म्यं प्रदीपनिर्वाणवत्स्वांतनिर्वाणमित्यन्येषां । सकलागमरहितं परमात्मनो रूपमद्वयं, तत्प्रतिबंधिकानाद्यविद्या, तद्विलयात्प्रतिभासमात्रस्थितिर्मुक्तिरिति परेषां । चैतन्यं पुरुषस्य स्वं रूपं, तत्प्रतिपक्षः प्रकृतिसंसर्गस्तदपायात् स्वरूपेवस्थानं निःश्रेयसमित्यपरेषां । सर्वविशेषगुणरहितमचेतनमात्मनः स्वरूपं, तद्विपरीतो बुद्ध्यादिविशेषगुणसंबंधस्तत्प्रतिबंधकस्तत्प्रक्षयादाकाशवदचेतनावस्थितिः परा मुक्तिरितीतरेषां । परमानंदात्मकमात्मनो रूपं, बुद्ध्यादिसंबंधस्तत्प्रतिघाती, तदभावादानंदात्मकतया स्थितिः परा निर्वृतिरिति च मीमांसकानां । नैवं निर्वृतिसामान्ये कल्पनाभेदो यतस्तत्र विवादः स्यात् । मोक्षमार्गसामान्येपि न प्रवादिनां विवादः, कल्पनाभेदाभावात् । सम्यग्ज्ञानमात्रात्मकत्वादावेव तद्विशेषे विप्रतिपत्तेः । ततो मोक्षमार्गेऽस्य सामान्ये प्रतिपित्सा विनेयविशेषस्य मा भूत् इति चेत् । सत्यमेतत् । निर्वाणमार्गविशेषे प्रतिपित्सोत्पत्तेः । कथमन्यथा तद्विशेषप्रतिपादनं सूत्रकारस्य प्रयुक्तं स्यात् । मोक्षमार्गसामान्ये हि विप्रतिपन्नस्य तन्मात्रप्रतिपित्सायाम'स्ति मोक्षमार्ग' इति वक्तुं युज्येत, विनेयप्रतिपित्सानुरूपत्वात् सूत्रकारप्रतिवचनस्य । तर्हि मोक्षविशेषे विप्रतिपत्तेस्तमेव कस्मान्नाप्राक्षीत् इति चेत् । किमेवं प्रतिपित्सेत विनेयः सर्वत्रेदृक्कार्यस्य संभवात् । तथापि हि शक्येत चोदयितुं किमर्थं मोक्षविशेषमप्राक्षीन्न पुनस्तन्मार्गविशेषं, विप्रतिपत्तेरविशेषादिति । ततः कस्यचित्कचित् प्रतिपित्सामिच्छता मोक्षमार्गविशेषप्रतिपित्सा न प्रतिक्षेप्तव्या । ननु च सति धर्मिणि धर्मचिंता प्रवर्तते नासति । न च मोक्षः सर्वथास्ति येन तस्य विशिष्टत्वकारणं जिज्ञास्यत, इति न चोदनीयः । यस्मात्—

**येपि सर्वात्मना मुक्तेरपह्नवकृतो जनाः ।**
**तेषां नात्राधिकारोस्ति श्रेयोमार्गावबोधने ॥ २५२ ॥**

को हि सर्वात्मना मुक्तेरपह्नवकारिणो जनान्मुक्तिमार्गं प्रतिपादयेत्तेषां तत्रानधिकारात् । को वा प्रमाणसिद्धं निःश्रेयसमपह्नुवीत, अन्यत्र प्रलापमात्राभिधायिनो नास्तिकात् । कुतस्तर्हि प्रमाणात्तन्निश्चीयत इति चेत्—

**परोक्षमपि निर्वाणमागमात्संप्रतीयते ।**
**निर्बाधाद्भाविसूर्यादिग्रहणाकारभेदवत् ॥ २५३ ॥**

परोक्षोपि हि मोक्षोऽस्मादृशामागमात्तज्ज्ञैः संप्रतीयते । यथा सांवत्सरैः सूर्यादिग्रहणाकारविशेषस्तस्य निर्बाधत्वात् । न हि देशकालनरांतरापेक्षयापि बाधातो निर्गतोयमागमो न भवति, प्रत्यक्षादेर्बाधकस्य विचार्यमाणस्यासंभवात् । नापि निर्बाधस्याप्रमाणत्वमास्थातुं युक्तं, प्रत्यक्षादेरप्यप्रमाणत्वानुषक्तेः । सूर्यादिग्रहणस्यानुमानात्प्रतीयमानत्वाद्विषमोयमुपन्यास इति चेत् न । तदाकारविशेषलिंगाभावादनुमानानवतारात् । न हि प्रतिनियतदिग्वेलाप्रमाणफलतया सूर्याचंद्रमसोर्ग्रहणेन व्याप्तं किंचिदवगंतुं शक्यं । विशिष्टांकमाला लिंगमिति चेत् । सा न तावत्तत्स्वभावस्तद्वदप्रत्यक्षत्वप्रसंगात् । नापि तत्कार्यं ततः प्राक् पश्चाच्च भावात् । सूर्यादिग्रहणाकारभेदो भाविकारणं विशिष्टांकमालाया इति चेन्न । भाविनः कारणत्वायोगात् । भावितमवत् कार्यकाले सर्वथाप्यसत्त्वादतीतमवत् तदन्वयव्यतिरेकानुविधानात्तस्यास्तत्कारणत्वमिति चेन्न । तस्यासिद्धेः । न हि सूर्यादिग्रहणाकारभेदे भाविनि विशिष्टांकमालोत्पद्यते न पुनरभाविनीति नियमोस्ति, तत्काले ततः पश्चाच्च तदुत्पत्तिप्रतीतेः । कस्याश्चिदंकमालायाः स भाविकारणं कस्याश्चिदतीतकारणमपरस्याः स्वसमानकालवर्तिन्याः कारणकार्यमेकसामग्र्यधीनत्वादिति चेत्, किमिंद्रजालमभ्यस्तमनेन सूर्यादिग्रहणाकारभेदेन यतोऽयमतीतानागतवर्तमानाखिलांकमालाः स्वयं निर्वर्तयेत् । कथं वा क्रमाक्रमभाव्यनंतकार्याणि नित्यैकस्वभावो भावः स्वयं न कुर्यात्, ततो विशेषाभावात् । भवन् वा स तस्याः कारणं, उपादानं सहकारि वा ? न तावदुपादानं खटिकादिकृतायास्तदुपादानत्वात् । नापि सहकारिकारणमुपादानसमकालत्वाभावात् । यथोपादानभिन्नदेशं सहकारिकारणं तथोपादानभिन्नकालमपि दृष्टत्वादिति चेत् । किमेवं कस्य सहकारि न स्यात् । पितामहादेरपि हि जनकत्वमनिवार्यं विरोधाभावात् । ततो नांकमाला सूर्यादिग्रहणाकारभेदे साध्ये लिंगं स्वभावकार्यत्वाभावात् । तदस्वभावकार्यत्वेपि तदविनाभावात्स तत्र लिंगमित्यपरे । तेषामपि कुतो व्याप्तेर्ग्रहः ? न तावत्प्रत्यक्षतो, भाविनोतीतस्य वा सूर्यादिग्रहणाकारभेदस्यास्मदाद्यप्रत्यक्षत्वात् । नाप्यनुमानादनवस्थानुषंगात् । यदि पुनरागमात्तद्व्याप्तिग्रहस्तदा युक्त्यनुगृहीतात्तदननुगृहीताद्वा ? न तावदाद्यः पक्षस्तत्र युक्तेरप्रवृत्तेस्तदसंभवात् । द्वितीयपक्षे स्वतः सिद्धप्रामाण्यात् परतो वा ? न तावत्स्वतः स्वयमनभ्यस्तविषयेऽत्यंतपरोक्षे स्वतः प्रामाण्यासिद्धेरन्यथा तदप्रामाण्यस्यापि स्वतः सिद्धिप्रसंगात् । परतः सिद्धप्रामाण्यादागमात्तद्व्याप्तिग्रह इति चेत् । किं तत्परं प्रवृत्तिसामर्थ्यं बाधकाभावो वा ? प्रवृत्तिसामर्थ्यं चेत्, फलेनाभिसंबंधः सजातीयज्ञानोत्पादो वा ? प्रथमकल्पनायां किं तद्व्याप्तिफलं ? सूर्यादिग्रहणानुमानमिति चेत्, सोऽयमन्योन्यसंश्रयः । प्रसिद्धे हि आगमस्य प्रामाण्ये ततो व्याप्तिग्रहादनुमाने प्रवृत्तिस्तत्सिद्धौ चानुमानफलेनाभिसंबंधादागमस्य प्रामाण्यमिति । सजातीयज्ञानोत्पादः प्रवृत्तिसामर्थ्यमिति चेत्, तत्सजातीयज्ञानं न तावत्प्रत्यक्षतोनुमानतो वा, अनवस्थानुषंगात्, तदनुमानस्यापि व्याप्तिग्रहणपूर्वकत्वात् । तद्व्याप्तेरपि तदागमादेव ग्रहणसंभवात्तदागमस्यापि सजातीयज्ञानोत्पादादेव प्रमाणत्वांगीकरणात् ।

बाधकाभावः पर इति चेत्, तर्हि स्वतोभ्याससामर्थ्यसिद्धाद्बाधकाभावात्प्रसिद्धप्रामाण्यादागमादंकमालायाः सूर्यादिग्रहणाकारभेदेन व्याप्तिः परिगृह्यते न पुनः सूर्यादिग्रहणाकारभेद एव, इति मुग्धभाषितम्। ततो न विषमोऽयमुपन्यासो दृष्टांतदार्ष्टांतिकयोरागमात्संप्रत्ययप्रसिद्धेः। सामान्यतोदृष्टानुमानाच्च निर्वाणं प्रतीयते। तथाहि—

**शारीरमानसासातप्रवृत्तिर्विनिवर्तते।**
**क्वचित्तत्कारणाभावात् घटीयंत्रप्रवृत्तिवत्॥ २५४॥**

यथा घटीयंत्रस्य प्रवृत्तिर्भ्रमणलक्षणा स्वकारणस्यारगर्तभ्रमणस्य विनिवृत्तेर्निवर्तते तथा क्वचिज्जीवे शारीरमानसासातप्रवृत्तिरपि चतुर्गत्यरगर्तभ्रमणस्य। तत्तत्कारणं कुत इति चेत्, तद्भाव एव भावाच्छारीरमानसासातभ्रमणस्य। न हि तच्चतुर्गत्यरगर्तभ्रमणाभावे संभवति। मनुष्यस्य मनुष्यगतिबाल्यादिविवर्तपरावर्तने सत्येव तस्योपलंभात्। तद्वत्तिर्यक्सुरनारकाणामपि। यथा स्वतिर्यग्गत्यादिषु नानापरिणामप्रवर्तने सति तत्तत्संवेदनं इति न तस्य तदकारणत्वं। तन्निवृत्तिः कुत इति चेत्, स्वकारणस्य कर्मोदयभ्रमणस्य निवृत्तेः। बलीवर्दभ्रमणस्य निवृत्तौ तत्कार्यारगर्तभ्रमणनिवृत्तिवत्। न च चतुर्गत्यरगर्तभ्रमणं कर्मोदयभ्रमणनिमित्तमित्यसिद्धं दृष्टकारणव्यभिचारे सति तस्य कदाचिद्भावात्। तस्य कारणत्वे दृष्टकारणत्वे वा तदयोगात्। तन्निवृत्तिः पुनस्तत्कारणमिथ्यादर्शनादीनां सम्यग्दर्शनादिप्रतिपक्षभावनासात्मीभावात् कस्यचिदुत्पद्यत इति समर्थयिष्यमाणत्वात् तत्सिद्धिः। प्रकृतहेतोः कुंभकारचक्रादिभ्रांत्यानैकांतः, स्वकारणस्य कुंभकारस्य व्यापारस्य निवृत्तावपि तदनिवृत्तिदर्शनात्। इति चेत्—

**न कुंभकारचक्रादिभ्रांत्यानैकांतसंभवः।**
**तत्कारणस्य वेगस्य भावे तस्याः समुद्भवात्॥ २५५॥**

न हि सर्वा चक्रादिभ्रांतिः कुंभकारकरव्यापारकारणिका, प्रथमाया एव तस्यास्तथाभावात्, उत्तरोत्तरभ्रांतेः पूर्वपूर्वभ्रांत्याहितवेगकृतत्वावलोकनात्। न चोत्तरा तद्भ्रांतिः स्वकारणस्य वेगस्य भावे समुद्भवति, तद्भाव एव तस्याः समुद्भवदर्शनात्। ततो न तया हेतोर्व्यभिचारः। पावकापायेपि धूमेन गोपालघटिकादिषूपलभ्यमानेनानैकांत इत्यप्यनेनापास्तं। शारीरमानसासातप्रवृत्तेः परापरोत्पत्तेरुपायप्रतिषेध्यत्वात्, संचितायास्तु फलोपभोगतः प्रक्षयात्। न चापूर्वधूमादिप्रवृत्तिः स्वकारणपावकादेरभावेपि न निवर्तते यतो व्यभिचारः स्यात्॥

**अतोनुमानतोप्यस्ति मोक्षसामान्यसाधनम्।**
**सार्वज्ञादिविशेषस्तु तत्र पूर्वं प्रसाधितः॥ २५६॥**

न हि निरवद्यादनुमानात् साध्यसिद्धौ संदेहः संभवति। निरवद्यं च मोक्षसामान्येऽनुमानं निरवद्यहेतुसमुत्थत्वादित्यतोनुमानात्तस्य सिद्धिरस्त्येव न केवलमागमात्। सर्वज्ञत्वादिमोक्षविशेषसाधनं तु प्रागेवोक्तमिति नेहोच्यते।

तत्सिद्धेः प्रकृतोपयोगित्वमुपदर्शयति;—

**एवं साधीयसी साधोः प्रागेवासन्ननिर्वृतेः।**
**निर्वाणोपायजिज्ञासा तत्सूत्रस्य प्रवर्तिका॥ २५७॥**

सर्वस्याद्वादिनामेव प्रमाणतो मोक्षस्य सिद्धौ तत्राधिकृतस्य साधोरुपयोगस्वभावस्यासन्ननिर्वाणस्य प्रज्ञातिशयवतो हितमुपलिप्सोः श्रेयसा योक्ष्यमाणस्य साक्षादसाक्षाद्वा प्रबुद्धाशेषतत्त्वार्थप्रक्षीणकल्मष-

परापरगुरुप्रवाहसमागमविलिङ्गतो निर्वाणे विप्रतिपत्त्यभावात्सन्मार्गे विवादात् तत्प्रतिपित्साप्रतिबंधकविध्वंसात्साधीयसी प्रतिपित्सा । सा च निर्वाणमार्गोपदेशस्य प्रवर्तिका । सत्यामेव तस्यां प्रतिपाद्यस्य तत्प्रतिपादकस्य यथोक्तस्यादिसूत्रप्रवर्तकत्वोपपत्तेरन्यथा तदप्रवर्तनादिति प्रतिपत्तव्यं प्रमाणबलायत्तत्वात् ।

## सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥

तत्र सम्यग्दर्शनस्य कारणभेदलक्षणानां वक्ष्यमाणत्वादिहोद्देशमात्रमाह;—

**प्रणिधानविशेषोत्थद्वैविध्यं रूपमात्मनः । यथास्थितार्थश्रद्धानं सम्यग्दर्शनमुद्दिशेत् ॥ १ ॥**

प्रणिधानं विशुद्धमध्यवसानं, तस्य विशेषः परोपदेशानपेक्षत्वं तदपेक्षत्वं च, तस्मादुत्थं यस्य तत्प्रणिधानविशेषोत्थं । द्वे विधे प्रकारौ निसर्गाधिगमजविकल्पावस्य तद्द्विविधं, तस्य भावो द्वैविध्यं; प्रणिधानविशेषोत्थं द्वैविध्यमस्येति प्रणिधानविशेषोत्थद्वैविध्यं, तच्चात्मनो रूपं । यथास्थितार्थास्तत्त्वार्थास्तेषां श्रद्धानं सम्यग्दर्शनमिहोद्देष्टव्यं तथैव निर्देशवक्ष्यमाणत्वात् ॥

सम्यग्ज्ञानलक्षणमिह निरुक्तिलभ्यं व्याचष्टे;—

**स्वार्थाकारपरिच्छेदो निश्चितो बाधवर्जितः । सदा सर्वत्र सर्वस्य सम्यग्ज्ञानमनेकधा ॥ २ ॥**

परिच्छेदः सम्यग्ज्ञानं न पुनः फलमेव ततोनुमीयमानं परोक्षं सम्यग्ज्ञानमिति तस्य निराकरणात् । स चाकारस्य भेदस्य न पुनरनाकारस्य किंचिदिति प्रतिभासमानस्य परिच्छेदः तस्य दर्शनत्वेन वक्ष्यमाणत्वात् । स्वाकारस्यैव परिच्छेदः सोर्थाकारस्यैव वेति च नावधारणीयं तस्य तत्त्वप्रतिक्षेपात् । संशयितोऽकिंचित्करो वा स्वार्थाकारपरिच्छेदस्तदिति च न प्रसज्यते, निश्चित इति विशेषणात् । विपर्ययात्मा स तथा स्यादिति चेन्न, बाधवर्जित इति वचनात् । बाधकोत्पत्तेः पूर्वं स एव तथा प्रसक्त इति चेन्न, सदेति विशेषणात् । क्वचिद्विपरीतस्वार्थाकारपरिच्छेदो निश्चितो देशांतरगतस्य सर्वदा तद्देशमवाप्नुवतः सदा बाधकवर्जितः सम्यग्ज्ञानं भवेदिति च न शंकनीयं, सर्वत्रेति वचनात् । कस्यचिदतिमूढमनसः सदा सर्वत्र बाधकरहितोपि सोस्तीति तदवस्थोतिप्रसंग इति चेन्न, सर्वस्येति वचनात् । तदेकमेव सम्यग्ज्ञानमिति च प्रक्षिप्तमनेकधेति वचनात् । तत्र निश्चितत्वादिविशेषणत्वं सम्यग्ग्रहणाल्लब्धं । स्वार्थाकारपरिच्छेदस्तु ज्ञानग्रहणात्, तद्विपरीतस्य ज्ञानत्वायोगात् ।

सम्यक् चारित्रं निरुक्तिगम्यलक्षणमाह;—

**भवहेतुप्रहाणाय बहिरभ्यन्तरक्रिया-। विनिवृत्तिः परं सम्यक्चारित्रं ज्ञानिनो मतम् ॥ ३ ॥**

विनिवृत्तिः सम्यक्चारित्रमित्युच्यमाने शीर्षापहारादिषु स्वशीर्षादिद्रव्यनिवृत्तिः सम्यक्त्वादिस्वगुणनिवृत्तिश्च तन्माभूदिति क्रियाग्रहणं । बहिःक्रियायाः कायवाग्योगरूपाया एवाभ्यंतरक्रियाया एव च मनोयोगरूपाया विनिवृत्तिः सम्यक्चारित्रं माभूदिति क्रियाया बहिरभ्यंतरविशेषणं । लाभाद्यर्थं तादृशक्रियानिवृत्तिरपि न सम्यक्चारित्रं भवहेतुप्रहाणायेति वचनात् । नापि मिथ्यादृशः सा तद्भवति ज्ञानिन इति वचनात् । प्रशस्तज्ञानस्य सातिशयज्ञानस्य वा संसारकारणविनिवृत्तिं प्रत्यागूर्णस्य ज्ञानवतो बाह्याभ्यंतरक्रियाविशेषोपरमस्यैव सम्यक्चारित्रत्वप्रकाशनात्, अन्यथा तदाभासत्वसिद्धेः । सम्यग्विशेषणादिह ज्ञानाश्रयता भवहेतुप्रहाणता च लभ्यते । चारित्रशब्दाद्बहिरभ्यंतरक्रियाविनिवृत्तिता सम्यक्चारित्रस्य सिद्धा तदभावे तद्भावानुपपत्तेः ।

संप्रति मोक्षस्वरूपं व्याचष्टे;—

**निःशेषकर्मनिर्मोक्षः स्वात्मलाभोऽभिधीयते । मोक्षो जीवस्य नाभावो न गुणाभावमात्रकम् ॥ ४ ॥**

न कतिपयकर्मनिर्मोक्षोऽनुपचरितो मोक्षः प्रतीयते स निःशेषकर्मनिर्मोक्ष इति वचनात् । नाप्य-स्वात्मलाभः स स्वात्मलाभः इति श्रुतेः । प्रदीपनिर्वाणवत्सर्वथाप्यभावश्चित्तसंतानस्य मोक्षो न पुनः स्वरूपलाभ इत्येतन्न हि युक्तिमत्, तत्साधनस्यागमकत्वात् । नापि बुद्ध्यादिविशेषगुणाभावमात्रमात्मनः सत्त्वादिगुणाभावमात्रं वा मोक्षः, स्वरूपलाभस्य मोक्षतोपपत्तेः । स्वरूपस्य चानंतज्ञानादिकदंबकस्यात्मनि व्यवस्थितत्वात् । नास्ति मोक्षोऽनुपलब्धेः खरविषाणवदिति चेत् न, सर्वप्रमाणनिवृत्तेरनुपलब्धेरसिद्धत्वा-दागमानुमानोपलब्धेः साधितत्वात्, प्रत्यक्षनिवृत्तेरनुपलब्धेरनैकांतिकत्वात्, सकलशिष्टानामप्रत्यक्षेष्वर्थेषु सद्भावोपगमात् । तदनुपगमे स्वसमयविरोधात् । न हि सांख्यादिसमयेसदाद्यप्रत्यक्षः कश्चिदर्थो न विद्यते । चार्वाकस्य न विद्यत इति चेत्, किं पुनस्तस्य स्वगुरुप्रभृतिः प्रत्यक्षः । कस्यचित्प्रत्यक्ष इति चेत्, भवतः कस्यचित्प्रत्यक्षता प्रत्यक्षा न वा ? न तावत्प्रत्यक्षा, अतींद्रियत्वात् । सा न प्रत्यक्षा चेत् यद्यस्ति तदा तयैवानुपलब्धिरनैकांतिकी । नास्ति चेत् तर्हि गुर्वादयः कस्यचिदप्रत्यक्षाः संतीत्यायातं । कथं च तैरनैकांतानुपलब्धिर्मोक्षाभावं साधयेद्यतो मोक्षोऽप्रसिद्धत्वाद्यथोक्तलक्षणेन लक्ष्यो न भवेत् ॥

कः पुनस्तस्य मार्ग इत्याह;—

**स्वाभिप्रेतप्रदेशाप्तेरुपायो निरुपद्रवः । सद्भिः प्रशस्यते मार्गः कुमार्गोन्योवगम्यते ॥ ५ ॥**

न हि स्वयमनभिप्रेतप्रदेशाप्तेरुपायोऽभिप्रेतप्रदेशाप्तेरुपायो वा मार्गो नाम सर्वस्य सर्वमार्गत्वप्रसंगात् । नापि तदुपाय एव सोपद्रवः सद्भिः प्रशस्यते तस्य कुमार्गत्वात् । तथा च मार्गेरन्वेषणक्रियस्य करण-साधनेप्यंति ? सति मार्ग्यतेऽनेनान्विष्यतेऽभिप्रेतः प्रदेश इति मार्गः, शुद्धिकर्मणो वा मृजेर्मृष्टः शुद्धो-साविति मार्गः प्रसिद्धो भवति । न चेवार्थाभ्यंतरीकरणात्सम्यग्दर्शनादीनि मोक्षमार्ग इति युक्तं, तस्य स्वयं मार्गलक्षणयुक्तत्वात्, पाटलिपुत्रादिमार्गस्यैव तदुपमेयत्वोपपत्तेर्मार्गलक्षणस्य निरुपद्रवस्य कार्त्स्न्यतोऽ-संभवात् । तदेकदेशदर्शनात्तत्र तदुपमानप्रवृत्तेः । प्रसिद्धत्वादुपमानं पाटलिपुत्रादिमार्गोऽप्रसिद्धत्वान्मोक्ष-मार्गस्तूपमेय इति चेन्न, मोक्षमार्गस्य प्रमाणतः प्रसिद्धत्वात् । समुद्रादेरसिद्धस्याप्युपमानत्वदर्शनात् तडागमादेः प्रसिद्धस्योपमेयत्वप्रतीतेः । न हि सर्वस्य तडागमादिवत्समुद्रादयः प्रत्यक्षतः प्रसिद्धाः । समुद्रादेरप्रत्यक्षस्यापि महत्त्वादुपमानत्वं तडागमादेः प्रत्यक्षस्याप्युपमेयत्वमिति चेत्, तर्हि मोक्षमार्गस्य महत्त्वादुपमानत्वं युक्तमितरमार्गस्योपमेयत्वमिति न मार्ग इव मार्गोयं स्वयं प्रधानमार्गत्वात् ॥

**तत्र भेदविवक्षायां स्वविवर्तविवर्तिनोः । दर्शनं ज्ञानमित्येषः शब्दः करणसाधनः ॥ ६ ॥**
**पुंसो विवर्तमानस्य श्रद्धानज्ञानकर्मणा । स्वयं तच्छक्तिभेदस्य साविध्येन[1] प्रवर्तनात् ॥ ७ ॥**
**करणत्वं न बाध्येत वन्हेर्दहनकर्मणा । स्वयं विवर्तमानस्य दाहशक्तिविशेषवत् ॥ ८ ॥**

यथा वन्हेर्दहनक्रियया परिणमतः स्वयं दहनशक्तिविशेषस्य तत्साविध्येन वर्तमानस्य साधकतमत्वात् करणत्वं न बाध्यते, तथात्मनः श्रद्धानज्ञानक्रियया स्वयं परिणमतः साविध्येन वर्तमानस्य श्रद्धानज्ञान-शक्तिविशेषस्यापि साधकतमत्वाविशेषात् । ततो दर्शनादिपदेषु व्याख्यातार्थेषु दर्शनं ज्ञानमित्येष-तावच्छब्दः करणसाधनोवगम्यते; दर्शनशुद्धिशक्तिविशेषसन्निधाने तत्त्वार्थान्पश्यति श्रद्धत्तेऽनेनात्मेति दर्शनं, ज्ञानशुद्धिशक्तिविशेषसन्निधाने जानात्यनेनेति ज्ञानमिति । नन्वेवं स एव कर्ता स एव

१ सहकारित्वेन ।

करणमित्यायातं तच्च विरुद्धमेवेति चेत् न, स्वपरिणामपरिणामिनोर्भेदविवक्षायां तथाभिधानात् । दर्शनज्ञानपरिणामो हि करणमात्मनः कर्तुः कथंचिद्भिन्नं वन्हेर्दहनपरिणामवत् । कथमन्यथाऽग्निर्दहतीन्धनं दाहपरिणामेनेत्यविभक्तकर्तृकं करणमुपपद्यते । स्यान्मतं । विवादापन्नं करणं कर्तुः सर्वथा भिन्नं करणत्वाद्विभक्तकरणवदिति । तदयुक्तं । हेतोरतीतकालत्वात् । प्रत्यक्षतो ज्ञानादिकरणस्यात्मादेः कर्तुः कथंचिदभिन्नस्य प्रतीतेः । समवायात्तथा प्रतीतिरिति चेन्न, कथंचित्तादात्म्यादन्यस्य समवायस्य निराकरणात् । पक्षस्यानुमानबाधितत्वाच्च नायं हेतुः । तथाहि । करणशक्तिः शक्तिमतः कथंचिदभिन्ना तच्छक्तित्वात्, या तु न तथा सा न तच्छक्तिर्यथा व्यक्तिरन्या, तच्छक्तिश्चात्मादेः करणशक्तिस्तस्माच्छक्तिमतः कथंचिदभिन्ना ॥

**नन्वेवमात्मनो ज्ञानशक्तौ ज्ञानध्वनिर्यदि । तदार्थग्रहणं नैव करणत्वं प्रपद्यते ॥ ९ ॥**

न ह्यर्थग्रहणशक्तिर्ज्ञानमन्यत्रोपचारात्, परमार्थतोर्थग्रहणस्य ज्ञानत्वव्यवस्थितेः, तदुक्तमर्थग्रहणं बुद्धिरिति, ततो न ज्ञानशक्तौ ज्ञानशब्दः प्रवर्तते येन तस्य करणसाधनता स्याद्वादिनां सिद्ध्येत् । पुरुषाद्भिन्नस्य तु ज्ञानस्य गुणस्यार्थप्रमितौ साधकतमत्वात् करणत्वं युक्तं, तथा प्रतीतेर्बाधकाभावात् । भवतु ज्ञानशक्तिः करणं तथापि न सा कर्तुः कथंचिदभिन्ना युज्यते ॥

**शक्तिः कार्ये हि भावानां सान्निध्यं सहकारिणः । सा भिन्ना तद्वतोत्यंतं कार्यवच्चेति कश्चन॥१०**

ज्ञानादिकरणस्यात्मादेः सहकारिणः सांनिध्यं हि शक्तिः स्वकार्योत्पत्तौ न पुनस्तद्वत् स्वभावभूता शक्तिमतः कार्याच्चात्यंतं भिन्नत्वात्तस्या इति कश्चित् ॥

**तस्यार्थग्रहणे शक्तिरात्मनः कथ्यते कथम् । भेदादर्थांतरस्येव संबंधात् सोपि कस्तयोः ॥११॥**

न ह्यात्मनोत्यंतं भिन्नाऽर्थग्रहणशक्तिस्तस्येति व्यपदेष्टुं शक्या । संबंधतः शक्येति चेत्, कस्तस्यास्तेन संबंधः ?

**संयोगो द्रव्यरूपायाः शक्तेरात्मनि मन्यते । गुणकर्मस्वभावायाः समवायश्च यद्यसौ ॥ १२ ॥**

चक्षुरादिद्रव्यरूपायाः शक्तेरात्मद्रव्ये संयोगः संबंधोऽन्तःकरणसंयोगादिगुणरूपायाः समवायश्च शब्दाद्विषयीक्रियमाणरूपायाः संयुक्तसमवायः सामान्यादेश्च विषयीक्रियमाणस्य संयुक्तसमवेतसमवायादिर्यदि मतः ॥

**तदाप्यर्थांतरत्वेस्य संबंधस्य कथं निजात् । संबंधिनोवधार्येत तत्संबंधस्वभावता ॥ १३ ॥**
**संबंधांतरतः सा चेदनवस्था महीयसी । गत्वा सुदूरमप्यैक्यं वाच्यं संबंधतद्वतोः ॥ १४ ॥**
**तथा सति न सा शक्तिस्तद्वतोत्यंतभेदिनी । संबंधाभिन्नसंबंधिरूपत्वात्तत्स्वरूपवत् ॥ १५ ॥**

ननु गत्वा सुदूरमपि संबंधतद्वतोर्नैक्यमुच्यते येनात्मनो द्रव्यादिरूपा शक्तिस्तत्संबंधाभिन्नसम्बन्धिस्वभावत्वादभिन्ना साध्यते, परापरसंबंधादेव संबंधस्य संबंधिताव्यपदेशोपगमात् । न चैवमनवस्था, प्रतिपत्तुराकांक्षानिवृत्तेः कचित्कदाचिदवस्थानसिद्धेः, प्रतीतिनिबंधनत्वात्तत्त्वव्यवस्थाया इति परे । तैषां संयोगसमवायव्यवस्थैव तावन्न घटते, प्रतीत्यनुसरणे यथोपगमप्रतीत्यभावात् । तथाहि;—

**संयोगो युतसिद्धानां पदार्थानां यदीष्यते । समवायस्तदा प्राप्तः संयोगस्तावके मते ॥ १६ ॥**

कस्मात् समवायोपि संयोगः प्रसज्यते मामके मते ?

**युतसिद्धिर्हि भावानां विभिन्नाश्रयवृत्तिता । दधिकुंडादिवत्सा च समाना समवायिषु ॥१७॥**

नन्वयुतसिद्धानां समवायित्वात् समवायिनां युतसिद्धिरसिद्धेति चेत् ॥

**तद्वद्वृत्तिर्गुणादीनां स्वाश्रयेषु च तद्वताम् । युतसिद्धिर्यदा न स्यात्तदान्यत्रापि सा कथम् ॥१८॥**

गुण्यादिषु गुणादीनां वृत्तिर्गुण्यादीनां तु स्वाश्रये वृत्तिरिति कथं न गुणगुण्यादीनां समवायिनां युतसिद्धिः ? पृथगाश्रयाश्रयित्वं युतसिद्धिरिति वचनात् । तथापि तेषां युतसिद्धेरभावे दधिकुंडादीनामपि सा न स्याद्विशेषलक्षणाभावात् ॥

**लौकिको देशभेदश्चेद्युतसिद्धिः परस्परम् । प्राप्ता रूपरसादीनामेकत्रायुतसिद्धता ॥ १९ ॥**

**विभूनां च समस्तानां समवायस्तथा न किम् । कथंचिदर्थतादात्म्यादविष्वग्भवनं परम् ॥ २० ॥**

लौकिको देशभेदो युतसिद्धिर्न शास्त्रीयो यतः समवायिनां युतसिद्धिः स्यादित्येतस्मिन्नपि पक्षे रूपादीनामेकत्र द्रव्ये विभूनां च समस्तानां लौकिकदेशभेदाभावाद्युतसिद्धेरभावप्रसंगात् समवायप्रसक्तिः । अविष्वग्भवनमेवायुतसिद्धिर्विष्वग्भवनं युतसिद्धिरिति चेत्, तत्समवायिनां कथंचित्तादात्म्यमेव सिद्धं ततः परस्याविष्वग्भवनस्याप्रतीतेः ॥

**तदेवाबाधितज्ञानमारूढं शक्तितद्वतोः । सर्वथा भेदमाहंति प्रतिद्रव्यमनेकधा ॥ २१ ॥**

कथंचित्तादात्म्यमेव समवायिनामेकममूर्तं सर्वगतमिहेदमिति प्रत्ययनिमित्तं समवायोऽर्थभेदाभावादिति मामंस्त, तस्य प्रतिद्रव्यमनेकप्रकारत्वात्, तथैवाबाधितज्ञानारूढत्वात् । मूर्तिमद्द्रव्यपर्यायतादात्म्यं हि मूर्तिमज्जायते नामूर्तं, अमूर्तद्रव्यपर्यायतादात्म्यं पुनरमूर्तमेव, तथा सर्वगतद्रव्यपर्यायतादात्म्यं सर्वगतं, असर्वगतद्रव्यपर्यायतादात्म्यं पुनरसर्वगतमेव, तथा चेतनेतरद्रव्यपर्यायतादात्म्यं चेतनेतररूपमित्यनेकधा तत्सिद्धं शक्तितद्वतोः सर्वथा भेदमाहंत्येव ॥

**ततोर्थग्रहणाकारा शक्तिर्ज्ञानमिहात्मनः । करणत्वेन निर्दिष्टा न विरुद्धा कथंचन ॥ २२ ॥**

न ह्यंतरंगबहिरंगार्थग्रहणरूपात्मनो ज्ञानशक्तिः करणत्वेन कथंचिन्निर्दिश्यमाना विरुध्यते, सर्वथा शक्तितद्वतोर्भेदस्य प्रतिहननात् । ननु च ज्ञानशक्तिर्यदि प्रत्यक्षा तदा सकलपदार्थशक्तेः प्रत्यक्षत्वप्रसंगादनुमेयत्वविरोधः । प्रमाणबाधितं च शक्तेः प्रत्यक्षत्वं । तथाहि—ज्ञानशक्तिर्न प्रत्यक्षास्मदादेः शक्तित्वात् पावकादेर्दहनादिशक्तिवत् । न साध्यविकलमुदाहरणं पावकादिदहनादिशक्तेः प्रत्यक्षत्वे कस्यचित्तत्र संशयानुपपत्तेः । यदि पुनरप्रत्यक्षा ज्ञानशक्तिस्तदा तस्याः करणज्ञानत्वे प्राभाकरमतसिद्धिः, तत्र करणज्ञानस्य परोक्षत्वव्यवस्थितेः फलज्ञानस्य प्रत्यक्षत्वोपगमात् । ततः प्रत्यक्षं करणज्ञानमिच्छतां न तच्छक्तिरूपमेषितव्यं स्याद्वादिभिरिति चेत् । तदनुपपन्नं । एकांततोस्मदादिप्रत्यक्षत्वस्य करणज्ञानेन्यत्र वा वस्तुनि प्रतीतिविरुद्धत्वेनानभ्युपगमात् । द्रव्यार्थतो हि ज्ञानमस्मदादेः प्रत्यक्षं, प्रतिक्षणपरिणामशक्त्यादिपर्यायार्थतस्तु न प्रत्यक्षं । तत्र स्वार्थव्यवसायात्मकं ज्ञानं स्वसंविदितं फलं प्रमाणाभिन्नं वदतां करणज्ञानं प्रमाणं कथमप्रत्यक्षं नाम । न च येनैव रूपेण तत्प्रमाणं तेनैव फलं, येन विरोधः । किं तर्हि ? साधकतमत्वेन प्रमाणं साध्यत्वेन फलं । साधकतमत्वं तु परिच्छेदनशक्तिरिति प्रत्यक्षफलज्ञानात्मकत्वात् प्रत्यक्षं शक्तिरूपेण परोक्षं । ततः स्यात् प्रत्यक्षं स्यादप्रत्यक्षमित्यनेकांतसिद्धिः । यदा तु प्रमाणाद्भिन्नं फलं हानोपादानोपेक्षाज्ञानलक्षणं तदा स्वार्थव्यवसायात्मकं करणसाधनं ज्ञानं प्रत्यक्षं सिद्धमेवेति न परमतप्रवेशस्तच्छक्तेरपि सूक्ष्मायाः परोक्षत्वात् । तदेतेन सर्वं कर्त्रादिकारकत्वेन परिणतं वस्तु कस्यचित् प्रत्यक्षं परोक्षं च कर्त्रादिशक्तिरूपतयोक्तं प्रत्येयं । ततो ज्ञानशक्तिरपि च करणत्वेन निर्दिष्टा न स्वागमेन युक्त्या च विरुद्धेति सूक्तं ॥

आत्मा चार्थग्रहाकारपरिणामः स्वयं प्रभुः। ज्ञानमित्यभिसंधानकर्तृसाधनता मता ॥ २३ ॥
तस्योदासीनरूपस्याविवक्षायां निरुच्यते। भावसाधनता ज्ञानशब्दादीनामबाधिता ॥ २४ ॥

ननु च जानातीति ज्ञानमात्मेति विवक्षायां करणमन्यद्वाच्यं, निःकरणस्य कर्तृत्वायोगादिति चेन्न। अविभक्तकर्तृकस्य स्वशक्तिरूपस्य करणस्याभिधानात्। भावसाधनतायां ज्ञानस्य फलत्वव्यवस्थितेः प्रमाणत्वाभाव इति चेन्न, तच्छक्तेरेव प्रमाणत्वोपपत्तेः ॥

तथा चारित्रशब्दोपि ज्ञेयः कर्मानुसाधनः। कारकाणां विवक्षातः प्रवृत्तेरेकवस्तुनि ॥ २५ ॥

चारित्रमोहस्योपशमे क्षये क्षयोपशमे वात्मना चर्यते तदिति चारित्रं, चर्यतेनेन चरणमात्रं वा चरतीति वा चारित्रमिति कर्मादिसाधनश्चारित्रशब्दः प्रत्येयः। ननु च "भूवादिगृग्भ्यो णित्र" इत्यधिकृत्य "चरेर्वृत्ते" इति कर्मणि णित्रस्य विधानात्, कर्त्रादिसाधनत्वे लक्षणाभाव इति चेत् न, बहुलापेक्षया तद्भावात्। एतेन दर्शनज्ञानशब्दयोः कर्तृसाधनत्वे लक्षणाभावो व्युदस्तः। "युड्वा बहुलम्" इति वचनात्, तथा दर्शनाच्च। दृश्यते हि करणाधिकरणभावेभ्योन्यत्रापि प्रयोगो यथा निरदंति तदिति निरदनं, स्यंदतेस्मादिति स्यंदनमिति। कथमेकज्ञानादि वस्तु कर्त्राद्यनेककारकात्मकं विरोधात् इति चेन्न, विवक्षातः कारकाणां प्रवृत्तेरेकत्राप्यविरोधात्। कुतः पुनः कस्येति कारकभावसति विवक्षा कस्यचिदविवक्षेति चेत्;—

विवक्षा च प्रधानत्वाद्वस्तुरूपस्य कस्यचित्। तदा तदन्यरूपस्याविवक्षा गुणभावतः ॥ २६ ॥

नन्वसदेव रूपमनाद्यविद्यावासनोपकल्पितं विवक्षेतरयोर्विषयो न तु वास्तवं रूपं यतः परमार्थसती षट्कारकी स्यादिति चेत् ॥

भावस्य वासतो नास्ति विवक्षा चेतरापि वा। प्रधानेतरतापायाद्गगनांभोरुहादिवत् ॥ २७ ॥

प्रधानेतरताभ्यां विवक्षेतरयोर्व्याप्तत्वात् पररूपादिभिरिव स्वरूपादिभिरप्यसतस्तदभावात्तदभावसिद्धिः ॥

सर्वथैव सतोनेन तदभावो निवेदितः। एकरूपस्य भावस्य रूपद्वयविरोधतः ॥ २८ ॥

न हि सदेकांते प्रधानेतररूपे स्तः। कल्पिते स्त एवेति चेन्न, कल्पितेतररूपद्वयस्य सदाद्वैतविरोधिनः प्रसंगात्। कल्पितस्य रूपस्यासत्त्वादकल्पितस्यैव सत्त्वान्न रूपद्वयमिति चेत्तर्ह्यसतां प्रधानेतररूपे विवक्षेतरयोर्विषयतामास्कंदत इत्यायातं। तच्च प्रतिक्षिप्तं। स्याद्वादिनां तु नायं दोषः। चित्रैकरूपे वस्तुनि प्रधानेतररूपद्वयस्य स्वरूपेण सतः पररूपेणासतो विवक्षेतरयोर्विषयत्वाविरोधात् ॥

विवक्षा चाविवक्षा च विशेष्येनंतधर्मिणि। सतो विशेषणस्यात्र नासतः सर्वथोदिता ॥ २९ ॥

न सर्वथापि सतो धर्मस्य नाप्यसतोऽनंतधर्मिणि वस्तुनि विवक्षा चाविवक्षा च भगवद्भिः समंतभद्रस्वामिभिरभिहितास्मिन् विचारे। किं तर्हि? कथंचित्सदसदात्मन एव प्रधानताया गुणतायाश्च सद्भावात्। कुतः कस्यचिद्रूपस्य प्रधानेतरता च स्याद्येनासौ वास्तवीति चेत्;—

स्वाभिप्रेतार्थसंप्राप्तिहेतोरत्र प्रधानता। भावस्य विपरीतस्य निश्चीयेताप्रधानता ॥ ३० ॥
नैवातः कल्पनामात्रवशतोसौ प्रवर्तिता। वस्तुसामर्थ्यसंभूततनुत्वादर्थदृष्टिवत् ॥ ३१ ॥

कर्तृपरिणामो हि पुंसो यदा स्वाभिप्रेतार्थसंप्राप्तेर्हेतुस्तदा प्रधानमन्यदा त्वप्रधानं स्यात्, तथा करणादिपरिणामोपि। ततो न प्रधानेतरता कल्पनामात्रात्प्रवर्तितास्या वस्तुसामर्थ्यायत्तत्वादर्थदर्शनवत्।

नन्वभिप्रेतोर्थो न परमार्थः सन्मनोराज्यादिवत्तत्स्वसंप्राप्त्यप्राप्ती न वस्तुरूपे यतस्तद्धेतुकयोः प्रधानेतरभावयोर्वस्तुसामर्थ्यसंभूततनुत्वं सिध्यत् तयोर्वास्तवतां साधयेत् इति चेत् । स्यादेवं, यदि सर्वोभिप्रेतोर्थोऽपरमार्थः सन् सिध्येत् । कस्यचिन्मनोराज्यादेरपरमार्थत्वसत्त्वप्रतिपत्तेरबाधिताभिप्रायविषयीकृतस्याप्यपरमार्थसत्त्वसाधने चंद्रद्वयदर्शनविषयस्यावस्तुत्वसंप्रत्ययादबाधिताखिलदर्शनविषयस्यावस्तुत्वं साध्यतामभिप्रेतत्वदृष्टत्वहेतोरविशेषात् । स्वसंवेदनविषयस्य च स्वरूपस्य कुतः परमार्थसत्त्वसिद्धिर्यतः संवेदनाद्वैतं चित्राद्वैतं वा स्वरूपस्य स्वतो गतिं साधयेत् । यदि पुनः स्वरूपस्य स्वतोपि गतिं नेच्छेत्तदा न स्वतः संवेद्यते नापि परतोस्ति च तदिति किमघशीलवचनं । न स्वतः संवेद्यते संवेदनं नापि परतः किं तु संवेद्यत एवेति तस्य सत्त्ववचने, न क्रमान्नित्योर्थः कार्याणि करोति नाप्यक्रमात्; किं तर्हि? करोत्येवेति ब्रुवाणः कथं प्रतिक्षिप्यते? नैकदेशेन स्वावयवेष्ववयवी वर्तते नापि सर्वात्मना किं तु वर्तते एवेति च । नैकदेशेन परमाणुः परमाण्वंतरैः संयुज्यते नापि सर्वात्मना किं तु संयुज्यत एवेत्यपि ब्रुवन् प्रतिक्षेपार्होनेनापादितः । यदि पुनः क्रमाक्रमव्यतिरिक्तप्रकारासंभवात्ततः कार्यकरणादेरयोगादेवं ब्रुवाणस्य प्रतिक्षेपः क्रियते तदा स्वपरव्यतिरिक्तप्रकाराभावान्न ततः संवेदनं संवेद्यत एवेत्यप्रतिक्षेपार्हः सिध्येत् । संवेदनस्य प्रतिक्षेपे सकलशून्यता सर्वस्यानिष्टा स्यादिति चेत्, समानमन्यत्रापि । ततः स्वयं संवेद्यस्य दृश्यस्य वा रूपादेः परमार्थसत्त्वमुपयताभिप्रेतस्याप्यव्यभिचारिणस्तन्न प्रतिक्षेप्तव्यं सर्वथा विशेषाभावात् । परमार्थसत्त्वे च स्वाभिप्रेतार्थस्य सुनयविषयस्य तत्संप्राप्त्यसंप्राप्ती वस्तुरूपे सिद्धे तद्धेतुकयोश्च प्रधानेतरभावयोर्वस्तुसामर्थ्यसंभूततनुत्वं नासिद्धं यतस्तयोर्वास्तवत्वं न साधयेदिति । तत्र विवक्षा चाविवक्षा च न निर्विषया येन तद्वशादेकत्र वस्तुन्यनेककारकात्मकत्वं न व्यवतिष्ठेत ॥

**निरंशस्य च तत्त्वस्य सर्वथानुपपत्तितः । नैकस्य बाध्यतेऽनेककारकत्वं कथंचन ॥ ३२ ॥**

नात्मादितत्त्वे नानाकारकात्मता वास्तवी तस्य निरंशत्वात्, कल्पनामात्रादेव तदुपपत्तेरिति न शंकनीयं । बहिरंतर्वा निरंशस्य सर्वथार्थक्रियाकारित्वायोगात् । परमाणुः कथमर्थक्रियाकारीति चेन्न, तस्यापि सांशत्वात् । न हि परमाणोरंश एव नास्ति द्वितीयाद्यंशाभावान्निरवयवत्ववचनात् । न च यथा परमाणुरेकप्रदेशमात्रस्तथात्मादिरपि शक्यो वक्तुं सकृन्नानादेशव्यापित्वविरोधात् । तस्य विभुत्वान्न तद्विरोध इति चेत् । व्याहतमेतत् । विभुश्चैकप्रदेशमात्रश्चेति न किंचित्सकलेभ्योंशेभ्यो निर्गतं तत्त्वं नाम सर्वप्रमाणागोचरत्वात् खरशृंगवत् । यदा त्वंशा धर्मास्तदा तेभ्यो निर्गतं तत्त्वं न किंचित्प्रतीतिगोचरतामंचतीति सांशमेव सर्वं तत्त्वमन्यथार्थक्रियाविरोधात् । तत्र चानेककारकत्वमबाधितमवबुध्यामहे भेदनयाश्रयणात् । तथा च दर्शनादिशब्दानां सूक्तं कर्त्रादिसाधनत्वं ॥

**पूर्वं दर्शनशब्दस्य प्रयोगोऽभ्यर्हितत्वतः । अल्पाक्षरादपि ज्ञानशब्दाद्द्वंद्वोत्र संमतः ॥ ३३ ॥**

दर्शनं च ज्ञानं च चारित्रं च दर्शनज्ञानचारित्राणीति इतरेतरयोगे द्वंद्वे सति ज्ञानशब्दस्य पूर्वनिपातप्रसक्तिरल्पाक्षरत्वादिति न चोद्यं, दर्शनस्याभ्यर्हितत्वेन ज्ञानात्पूर्वप्रयोगस्य संमतत्वात् । कुतोभ्यर्हो दर्शनस्य न पुनर्ज्ञानस्य सर्वपुरुषार्थसिद्धिनिबंधनस्येति चेत्;—

**ज्ञानसम्यक्त्वहेतुत्वादभ्यर्हो दर्शनस्य हि । तदभावे तदुद्भूतेरभावाद्दूरभव्यवत् ॥ ३४ ॥**

इदमिह संप्रधार्यं ज्ञानमात्रनिबंधना सर्वपुरुषार्थसिद्धिः सम्यग्ज्ञाननिबंधना वा ? न तावदाद्यः पक्षः संशयादिज्ञाननिबंधनत्वानुषंगात् । सम्यग्ज्ञाननिबंधनाचेत्, तर्हि ज्ञानसम्यक्त्वस्य दर्शनहेतुकत्वात् तत्पूर्वकत्वमेवाभ्यर्हितं । तदभावे ज्ञानसम्यक्त्वस्यानुद्भूतेर्दूरभव्यस्येव । न चेदमुदाहरणं साध्यसाधन-

विकल्पयुग्मयोः संप्रतिपत्तेः । नन्विदमयुक्तं तत्त्वार्थश्रद्धानस्य ज्ञानसम्यक्त्वहेतुत्वं दर्शनसम्यग्ज्ञानयोः सहचरत्वात् सव्येतरगोविषाणवद्धेतुहेतुमद्भावाघटनात् । तत्त्वार्थश्रद्धानस्याविर्भावकाले सम्यग्ज्ञानस्याविर्भावात्तद्धेतुरिति चासंगतं, सम्यग्ज्ञानस्य तत्त्वार्थश्रद्धानहेतुत्वप्रसंगात् । मत्यादिसम्यग्ज्ञानस्याविर्भावकाल एव तत्त्वार्थश्रद्धानस्याविर्भावात् । ततो न दर्शनस्य ज्ञानादभ्यर्हितत्वं ज्ञानसम्यक्त्वहेतुत्वाव्यवस्थितेरिति कश्चित् । तदसत् । अभिहितानवबोधात् । न हि सम्यग्ज्ञानोत्पत्तिहेतुत्वाद्दर्शनस्याभ्यर्होऽभिधीयते । किं तर्हि? ज्ञानसम्यग्व्यपदेशहेतुत्वात् । पूर्वं हि दर्शनोत्पत्तेः साकारग्रहणस्य मिथ्याज्ञानव्यपदेशो मिथ्यात्वसहचरितत्वेन यथा, तथा दर्शनमोहोपशमादेर्दर्शनोत्पत्तौ सम्यग्ज्ञानव्यपदेश इति । नन्वेवं सम्यग्ज्ञानस्य दर्शनसम्यक्त्वहेतुत्वादभ्यर्होऽस्तु मिथ्याज्ञानसहचरितस्यार्थश्रद्धानस्य मिथ्यादर्शनव्यपदेशात् । मत्यादिज्ञानावरणक्षयोपशमान्मत्यादिज्ञानोत्पत्तौ तस्य सम्यग्दर्शनव्यपदेशात् । न हि दर्शनं ज्ञानस्य सम्यग्व्यपदेशनिमित्तं न पुनर्ज्ञानं दर्शनस्य सहचारित्वाविशेषादिति चेत् न । ज्ञानविशेषापेक्षया दर्शनस्य ज्ञानसम्यक्त्वव्यपदेशहेतुत्वसिद्धेः । सकलश्रुतज्ञानं हि केवलमनःपर्ययज्ञानवत् प्रागुद्भूतसम्यग्दर्शनस्यैवाविर्भवति न मत्यादिज्ञानसामान्यवद्दर्शनसहचारीति सिद्धं ज्ञानसम्यक्त्वहेतुत्वं दर्शनस्य ज्ञानादभ्यर्हसाधनं । ततो दर्शनस्य पूर्वं प्रयोगः । कश्चिदाह—। ज्ञानमभ्यर्हितं तस्य प्रकर्षपर्यंतप्राप्तौ भवांतराभावात्, न तु दर्शनं तस्य क्षायिकस्यापि नियमेन भवांतराभावहेतुत्वाभावादिति । सोपि चारित्रस्याभ्यर्हितत्वं ब्रवीतु तत्प्रकर्षपर्यंतप्राप्तौ भवांतराभावसिद्धेः । केवलज्ञानस्यानंतत्वाच्चारित्रादभ्यर्हो न तु चारित्रस्य मुक्तौ तथा व्यपदिश्यमानस्याभावादिति चेत् । तत एव क्षायिकदर्शनस्याभ्यर्होऽस्तु मुक्तावपि सद्भावात् अनंतत्वसिद्धेः । साक्षाद्भवांतराभावहेतुत्वाभावाद्दर्शनस्य केवलज्ञानादनभ्यर्हे केवलस्याप्यभ्यर्हो माभूत् तत एव । न हि तत्कालादिविशेषनिरपेक्षं भवांतराभावकारणमयोगिकेवलचरमसमयप्राप्तस्य दर्शनादित्रयस्य साक्षान्मोक्षकारणत्वेन वक्ष्यमाणत्वात् । ततः साक्षात्परंपरया वा मोक्षकारणत्वापेक्षया दर्शनादित्रयस्याभ्यर्हितत्वं समानमिति न तथा कस्यचिदेवाभ्यर्हव्यवस्था येन ज्ञानमेवाभ्यर्हितं स्यात् दर्शनात् । नन्वेवं विशिष्टसम्यग्ज्ञानहेतुत्वेनापि दर्शनस्य ज्ञानादभ्यर्हे सम्यग्दर्शनहेतुत्वेन ज्ञानस्य दर्शनादभ्यर्होऽस्तु श्रुतज्ञानपूर्वकत्वादधिगमजसद्दर्शनस्य, मत्यवधिज्ञानपूर्वकत्वान्निसर्गजस्येति चेन्न । दर्शनोत्पत्तेः पूर्वं श्रुतज्ञानस्य मत्यवधिज्ञानयोर्वा अनाविर्भावात् । मत्यज्ञानश्रुताज्ञानविभंगाज्ञानपूर्वकत्वात् प्रथमसम्यग्दर्शनस्य । न च तथा तस्य मिथ्यात्वप्रसंगः सम्यग्ज्ञानस्यापि मिथ्याज्ञानपूर्वकस्य मिथ्यात्वप्रसक्तेः । सत्यज्ञानजननसमर्थान्मिथ्याज्ञानात्सत्यज्ञानत्वेनोपचर्यमाणादुत्पन्नं सत्यज्ञानं न मिथ्यात्वं प्रतिपद्यते मिथ्यात्वकारणादुष्टाभावादिति चेत्, सम्यग्दर्शनमपि तादृशान्मिथ्याज्ञानादुपजातं कथं मिथ्या प्रसज्यते तत्कारणस्य दर्शनमोहोदयस्याभावात् । सत्यज्ञानं मिथ्याज्ञानानंतरं न भवति तस्य धर्मविशेषानंतरभावित्वादिति चेत्, सम्यग्दर्शनमपि न मिथ्याज्ञानानंतरभावि तस्याधर्मविशेषाभावानंतरभावित्वोपगमात् । मिथ्याज्ञानानंतरभावित्वाभावे च सत्यज्ञानस्य सत्यज्ञानानंतरभावित्वं सत्यासत्यज्ञानपूर्वकत्वं वा स्यात्? प्रथमकल्पनायां सत्यज्ञानस्यानादित्वप्रसंगो मिथ्याज्ञानसंतानस्य चानंतत्वप्रसक्तिरिति प्रतीतिविरुद्धं सत्येतरज्ञानपौर्वापर्यदर्शननिराकरणमायातं । द्वितीयकल्पनायां तु सत्यज्ञानोत्पत्तेः पूर्वं सकलज्ञानशून्यस्यात्मनोऽनात्मत्वानुषंगो दुर्निवारस्तस्योपयोगलक्षणत्वेन साधनात् । स चानुपपन्न एवात्मनः प्रसिद्धेरिति मिथ्याज्ञानपूर्वकमपि सत्यज्ञानं किंचिदभ्युपेयं । तद्वत्सम्यग्दर्शनमपि इत्यनुपालंभः । क्षायोपशमिकस्य क्षायिकस्य च दर्शनस्य सत्यज्ञानपूर्वकत्वात्सत्यज्ञानं दर्शनादभ्यर्हितमिति च न चोद्यं, प्रथमसम्यग्दर्शनस्यौपशमिकस्य सत्यज्ञानाभावेपि भावात् । नैवं किंचित्सम्यग्वेदनं सम्यग्दर्शनाभावे भवति । प्रथमं भवत्येवेति चेत्

न, तस्यापि सम्यग्दर्शनसहचारित्वात् । तर्हि प्रथममपि सम्यग्दर्शनं न सम्यग्ज्ञानाभावेस्ति तस्य सत्यज्ञानसहचारित्वादिति न सत्यज्ञानपूर्वकत्वमव्यापि दर्शनस्य, सत्यज्ञानस्य दर्शनपूर्वकत्ववत्, ततः प्रकृतं चोद्यमेवेति चेन्न । प्रकृष्टदर्शनज्ञानापेक्षया दर्शनस्याभ्यर्हितत्ववचनादुक्तोत्तरत्वात् । न हि क्षायिकं दर्शनं केवलज्ञानपूर्वकं येन तत्कृताभ्यर्हितं स्यात् । अनंतभवप्रहाणहेतुत्वाद्वा सद्दर्शनस्याभ्यर्हः ॥

**विशिष्टज्ञानतः पूर्वभावाद्वास्यास्तु पूर्ववाक् । तथैव ज्ञानशब्दस्य चारित्रात् प्राक् प्रवर्तनम् ॥३५॥**

यद्यत्कालतया व्यवस्थितं तत्तथैव प्रयोक्तव्यमार्षान्न्यायादिति क्षायिकज्ञानात्पूर्वकालतयावस्थितं दर्शनं पूर्वमुच्यते, चारित्राच्च समुच्छिन्नक्रियानिवर्तिध्यानलक्षणात् सकलकर्मक्षयनिबंधनात्ससामग्रीकात् प्राक्कालतयोद्भवात् सम्यग्ज्ञानं ततः पूर्वमिति निरवद्यो दर्शनादिप्रयोगक्रमः ॥

**प्रत्येकं सम्यगित्येतत्पदं परिसमाप्यते । दर्शनादिषु निःशेषविपर्यासनिवृत्तये ॥ ३६ ॥**

सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमिति प्रत्येकपरिसमाप्त्या सम्यगिति पदं संबध्यते प्रत्येकं दर्शनादिषु निःशेषविपर्यासनिवृत्त्यर्थत्वात्तस्य । तत्र दर्शने विपर्यासमौढ्यादयो मिथ्यात्वभेदाः शंकादयश्चातीचारा वक्ष्यमाणाः, संज्ञाने संशयादयः, सच्चारित्रे मायादयः, प्रतिचारित्रविशेषमतीचाराश्च यथासंभविनः प्रत्येयाः । तेषु सत्सु दर्शनादीनां सम्यक्त्वानुपपत्तेः । तदेवं सकलसूत्रावयवव्याख्याने तत्समुदायव्याख्यानात्सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गो वेदितव्य इति व्यवतिष्ठते । तत्र किमयं सामान्यतो मोक्षस्य मार्गस्त्रयात्मकः सूत्रकारमतमारूढः किं वा विशेषत ? इति शंकायामिदमाह;—

**तत्सम्यग्दर्शनादीनि मोक्षमार्गो विशेषतः । सूत्रकारमतारूढो न तु सामान्यतः स्थितः ॥ ३७ ॥**
**कालादेरपि तद्धेतुसामान्यस्याविरोधतः । सर्वकार्यजनौ तस्य व्यापारादन्यथास्थितेः ॥ ३८ ॥**

साधारणकारणापेक्षया हि सम्यग्दर्शनादित्रयात्मकं मोक्षमार्गमाचक्षाणो न सकलमोक्षकारणसंग्रहपरः स्यात् कालादीनामवचनात् । न च कालादयो मोक्षस्योत्पत्तौ न व्याप्रियंते सर्वकार्यजनने तेषां व्यापारात्, तत्र व्यापारे विरोधाभावात् । यदि पुनः सम्यग्दर्शनादीन्येवेत्यवधारणाभावान्न कालादीनामसंग्रहस्तदा सम्यग्दर्शनं मोक्षमार्ग इति वक्तव्यं, सम्यग्दर्शनमेवेत्यवधारणाभावादेव ज्ञानादीनां कालादीनामिव संग्रहसिद्धेस्तद्वचनाद्विशेषकारणापेक्षयायं त्रयात्मको मोक्षमार्गः सूत्रित इति बुध्यामहे ।

**पूर्वावधारणं तेन कार्यं नान्यावधारणम् । यथैव तानि मोक्षस्य मार्गस्तद्वद्धि संवदः ॥ ३९ ॥**

सम्यग्दर्शनज्ञानचारित्राण्येव मोक्षमार्ग इत्यवधारणं हि कार्यमसाधारणकारणनिर्देशादेवान्यथा तदघटनात् । तानि मोक्षमार्ग एवेति तु नावधारणं कर्तव्यं तेषां स्वर्गाद्यभ्युदयमार्गत्वविरोधात् । न च तान्यभ्युदयमार्गो नेति शक्यं वक्तुं सद्दर्शनादेः स्वर्गादिप्राप्तिश्रवणात् । प्रकर्षपर्यंतमाप्तानि तानि नाभ्युदयमार्ग इति चेत्, सिद्धं तदपकृष्टानां तेषामभ्युदयमार्गत्वम्, इति नोत्तरावधारणं न्याय्यं व्यवहारात् । निश्चयनयात् तूभयावधारणमपीष्टमेव, अनंतरसमयनिर्वाणजननसमर्थानामेव सद्दर्शनादीनां मोक्षमार्गत्वोपपत्तेः परेषामनुकूलमार्गताव्यवस्थानात् । एतेन मोक्षस्यैव मार्गो मोक्षस्य मार्ग एवेत्युभयावधारणमिष्टं प्रत्यायनीयम् ॥

**पूर्वावधारणेप्यत्र तपो मोक्षस्य कारणम् । न स्यादिति न मंतव्यं तस्य चर्यात्मकत्वतः ॥४०॥**

न ह्यसाधारणकारणाभिधित्सायामपि व्यवहारनयात्सम्यग्दर्शनादीन्येव मोक्षमार्ग इत्यवधारणं श्रेयस्तपसो मोक्षमार्गत्वाभावप्रसंगात् । न च तपो मोक्षस्यासाधारणकारणं न भवति तस्यैवोत्कृष्टस्याभ्यंतरसमुच्छिन्नक्रियाप्रतिपातिध्यानलक्षणस्य कृत्स्नकर्मविप्रमोक्षकारणत्वव्यवस्थितेः । सम्यग्दर्शनज्ञानचारित्र-

तपांसि मोक्षमार्ग इति सूत्रे क्रियमाणे तु युज्येत पूर्वावधारणं । अनुत्पन्नतादृक्तपोविशेषस्य च सयोग-केवलिनः समुत्पन्नरत्नत्रयस्यापि धर्मदेशना न विरुध्यतेऽवस्थानस्य सिद्धेः । ततः सकलचोद्यावतारण-निवृत्तये चतुष्टयं मोक्षमार्गो वक्तव्यः । तदुक्तं । दर्शनज्ञानचारित्रतपसामाराधना भणितेति केचित् । तदप्यचोद्यं; तपसश्चारित्रात्मकत्वेन व्यवस्थानात् सद्दर्शनादित्रयस्यैव मोक्षकारणत्वसिद्धेः ॥

नतु रत्नत्रयस्यैव मोक्षहेतुत्वसूचने । किं नार्हतः क्षणादूर्ध्वं मुक्तिं संपादयेन्न तत् ॥ ४१ ॥

प्रागेवेदं चोदितं परिहृतं च न पुनः शंकनीयमिति चेत् न, परिहारांतरोपदर्शनार्थत्वात् पुनश्चोद्य-करणस्य । तथाहि—

सहकारिविशेषस्यापेक्षणीयस्य भाविनः । तदैवासत्त्वतो नेति स्फुटं केचित्प्रचक्षते ॥ ४२ ॥

कः पुनरसौ सहकारी संपूर्णेनापि रत्नत्रयेणापेक्ष्यते ? यदभावात्तन्मुक्तिमर्हतो न संपादयेत् ; इति चेत् ;—

स तु शक्तिविशेषः स्याज्जीवस्याघातिकर्मणाम् । नामादीनां त्रयाणां हि निर्जराकृद्धि निश्चितः ॥४३॥

दंडकपाटप्रतरलोकपूरणक्रियानुमेयोऽपकर्षणपरप्रकृतिसंक्रमणहेतुर्वा भगवतः स्वपरिणामविशेषः शक्ति-विशेषः सोंतरंगः सहकारी निश्रेयसोत्पत्तौ रत्नत्रयस्य, तदभावे नामाद्यघातिकर्मत्रयस्य निर्जरानुपपत्ते-र्निःश्रेयसानुत्पत्तेः । आयुषस्तु यथाकालमनुभवादेव निर्जरा न पुनरुपक्रमात्तस्यानपवर्त्यत्वात् । तदपेक्षं क्षायिकरत्नत्रयं सयोगकेवलिनः प्रथमसमये मुक्तिं न संपादयत्येव तदा तत्सहकारिणोऽसत्त्वात् ॥

क्षायिकत्वान्न सापेक्षमर्हद्रत्नत्रयं यदि । किन्न क्षीणकषायस्य दृक्चारित्रे तथा मते ॥ ४४ ॥

केवलापेक्षिणी ते हि यथा तद्वच्च तत्त्रयम् । सहकारिव्यपेक्षं स्यान्न क्षायिकत्वेनपेक्षिता ॥४५॥

न क्षायिकत्वेपि रत्नत्रयस्य सहकारिविशेषापेक्षणं 'क्षायिकभावानां न हानिर्नापि वृद्धिरिति प्रवचनेन बाध्यते, क्षायिकत्वे निरपेक्षत्ववचनात् । क्षायिको हि भावः सकलस्वप्रतिबंधक्षयादाविर्भूतो नात्मलाभे किंचिदपेक्षते' येन तदभावे तस्य हानिस्तत्प्रकर्षे च वृद्धिरिति । तत्प्रतिषेधपरं प्रवचनं कृत्स्नकर्मक्षयकरणे सहकारिविशेषापेक्षणं कथं बाधते ? न च क्षायिकत्वं तत्र तदनपेक्षत्वेन व्याप्तं, क्षीणकषायदर्शनचारित्रयोः क्षायिकत्वेपि मुक्त्युत्पादने केवलापेक्षित्वस्य सुप्रसिद्धत्वात् । ताभ्यां तद्बाधकहेतोर्व्यभिचारात् । ततोस्ति सहकारी तद्रत्नत्रयस्यापेक्षणीयो युक्त्यागमाविरुद्धत्वात् ॥

न च तेन विरुध्येत त्रैविध्यं मोक्षवर्त्मनः । विशिष्टकालयुक्तस्य तत्त्रयस्यैव शक्तितः ॥ ४६ ॥

क्षायिकरत्नत्रयपरिणामतो ह्यात्मैव क्षायिकरत्नत्रयं तस्य विशिष्टकालापेक्षः शक्तिविशेषः ततो-नार्थांतरं येन तत्सहितस्य दर्शनादित्रयस्य मोक्षवर्त्मनस्त्रैविध्यं विरुध्यते ॥

तेनायोगिजिनस्यांत्यक्षणवर्ति प्रकीर्तितम् । रत्नत्रयमशेषाघविघातकरणं ध्रुवम् ॥ ४७ ॥

ततो नान्योस्ति मोक्षस्य साक्षान्मार्गो विशेषतः । पूर्वावधारणं येन न व्यवस्थामियर्ति नः ॥४८॥

नन्वेवमप्यवधारणे तदेकांतानुषंग इति चेत्, नायमनेकांतवादिनामुपालंभो नयार्पणादेकांतस्येष्टत्वात्, प्रमाणार्पणादेवानेकांतस्य व्यवस्थितेः ॥

ज्ञानादेवाशरीरत्वसिद्धिरित्यवधारणम् । सहकारिविशेषस्यापेक्षयास्त्विति केचन ॥ ४९ ॥

तत्त्वज्ञानमेव निःश्रेयसहेतुरित्यवधारणमस्तु सहकारिविशेषापेक्षस्य तस्यैव निःश्रेयससंपादनसमर्थ-त्वात् । तथा सति समुत्पन्नतत्त्वज्ञानस्य योगिनः सहकारिविशेषसंनिधानात्पूर्वं स्थित्युपपत्तेरुपदेश-प्रवृत्तेरविरोधात्, तदर्थं रत्नत्रयस्य मुक्तिहेतुत्वकल्पनानर्थक्यात्, तत्कल्पनेपि सहकार्यपेक्षणस्यावश्यं भावित्वात्, तत्त्रयमेव मुक्तिहेतुरित्यवधारणं माभूदिति केचित् ॥

**तेषां फलोपभोगेन प्रक्षयः कर्मणां मतः । सहकारिविशेषोस्य नासौ चारित्रतः पृथक् ॥ ५० ॥**

तत्त्वज्ञानान्मिथ्याज्ञानस्य सहजस्याहार्यस्य चानेकप्रकारस्य प्रतिप्रमेयं देशादिभेदादुद्भवतः प्रक्षयात्तद्धे-तुकदोषनिवृत्तेः प्रवृत्त्यभावादनागतस्य जन्मनो निरोधादुपात्तजन्मनश्च प्राक्तनधर्माधर्मयोः फलभोगेन प्रक्षपणात् सकलदुःखनिवृत्तिरात्यंतिकी मुक्तिः, दुःखजन्मनां प्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतराभावान्निःश्रेयसमिति कैश्चिद्वचनात्, साक्षात्कार्यकारणभावोपलब्धेस्तत्त्वज्ञानान्निःश्रेयसमित्यपरैः प्रतिपादनात्, ज्ञानेन चापवर्ग इत्यन्यैरभिधानात्, विद्यात एवाविद्यासंस्कारादिक्षयान्निर्वाणमितीतरै-रभ्युपगमात्, फलोपभोगेन संचितकर्मणां प्रक्षयः सम्यग्ज्ञानस्य मुक्त्युत्पत्तौ सहकारी ज्ञानमात्रात्मकमोक्ष-कारणवादिनामिष्टो न पुनरन्योऽसाधारणः कश्चित् । स च फलोपभोगो यथाकालमुपक्रमविशेषाद्वा कर्मणां स्यात्? न तावदाद्यः पक्ष इत्याह;—

**भोक्तुः फलोपभोगो हि यथाकालं यदीष्यते । तदा कर्मक्षयः क्वातः कल्पकोटिशतैरपि ॥ ५१ ॥**

न हि तज्जन्मन्युपात्तयोर्धर्माधर्मयोः जन्मांतरफलदानसमर्थयोर्यथाकालं फलोपभोगेन जन्मांतरादृते कल्पकोटिशतैरप्यात्यंतिकः क्षयः कर्तुं शक्यो विरोधात् । जन्मांतरे शक्य इति चेन्न, साक्षादुत्पन्न-सकलतत्त्वज्ञानस्य जन्मांतरासंभवात् । न च तस्य तज्जन्मफलदानसमर्थत्वे च धर्माधर्मौ प्रादुर्भवत इति शक्यं वक्तुं प्रमाणाभावात् । तज्जन्मनि मोक्षार्हस्य कुतश्चिदनुष्ठानाद्धर्माधर्मौ तज्जन्मफलदानसमर्थौ प्रादुर्भवतः तज्जन्ममोक्षार्हधर्माधर्मत्वादित्यप्ययुक्त हेतोरन्यथानुपपत्त्यभावात् । यौ जन्मांतरफलदान-समर्थौ तौ न तज्जन्ममोक्षार्हधर्माधर्मौ यथास्मदादिधर्माधर्मौ इत्यस्त्येव साध्याभावे साधनस्यानुपपत्तिरिति चेत्, स्यादेवं, यदि तज्जन्ममोक्षार्हधर्माधर्मत्वं जन्मांतरफलदानसमर्थत्वेन विरुध्येत, नान्यथा । तस्य तेनाविरोधे तज्जन्मनि मोक्षार्हस्यापि मोक्षाभावप्रसंगाद्विरुध्यत एवेति चेत् न, तस्य जन्मांतरेषु फलदान-समर्थयोरपि धर्माधर्मयोरुपक्रमविशेषात् फलोपभोगेन प्रक्षये मोक्षोपपत्तेः । यदि पुनर्न यथाकालं तज्जन्ममोक्षार्हस्य धर्माधर्मौ तज्जन्मनि फलदानसमर्थौ साध्येते, किं तर्ह्युपक्रमविशेषादेव संचितकर्मणा फलोपभोगेन प्रक्षय? इति पक्षांतरमायातम् ॥

**विशिष्टोपक्रमादेव मतश्चेत्सोपि तत्त्वतः । समाधिरेव संभाव्यश्चारित्रात्मेति नो मतम् ॥५२॥**

यस्मादुपक्रमविशेषात् कर्मणां फलोपभोगो योगिनोऽभिमतः स समाधिरेव तत्त्वतः संभाव्यते, समाधा-वुत्थापितधर्मजनितायामृद्धौ नानाशरीरादिनिर्माणद्वारेण सचितकर्मफलानुभवस्येष्टत्वात् । समाधिश्चारित्रात्मक एवेति चारित्रान्मुक्तिसिद्धेः सिद्धं स्याद्वादिनां मतं सम्यक्त्वज्ञानानंतरीयकत्वाच्चारित्रस्य ॥

**सम्यग्ज्ञानं विशिष्टं चेत्समाधिः सा विशिष्टता । तस्य कर्मफलध्वंसशक्तिर्नामांतरं ननु ॥५३॥**
**मिथ्याभिमाननिर्मुक्तिर्ज्ञानस्येष्टं हि दर्शनम् । ज्ञानत्वं चार्थविज्ञप्तिश्चर्यात्वं कर्महंतृता ॥ ५४ ॥**
**शक्तित्रयात्मकादेव सम्यग्ज्ञानाददेहता । सिद्धा रत्नत्रयादेव तेषां नामांतरोदितात् ॥ ५५ ॥**

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः, सम्यग्ज्ञानं मिथ्याभिनिवेशमिथ्याचरणाभावविशिष्टमिति वा न कश्चिदर्थभेदः, प्रक्रियामात्रस्य भेदान्नामांतरकरणात् ॥

**एतेन ज्ञानवैराग्यान्मुक्तिप्राप्त्यवधारणम् । न स्याद्वादविघातायेत्युक्तं बोद्धव्यमंजसा ॥ ५६ ॥**

तत्त्वज्ञानं मिथ्याभिनिवेशरहितं सद्दर्शनमन्वाकर्षति, वैराग्यं तु चारित्रमेवेति रत्नत्रयादेव मुक्तिरित्य-वधारणं व्यवस्थितं । "दुःखे विपर्यासमतिस्तृष्णा वा बंधकारणं । जन्मिनो यस्य ते न स्तो न स जन्माधिगच्छति" इत्यप्यर्हन्मतसमाश्रयणमेवानेन निगदित; दर्शनज्ञानयोः कथंचिद्भेदान्मतांतरासिद्धेः ॥

**न चात्र सर्वथैकत्वं ज्ञानदर्शनयोस्तथा । कथंचिद्भेदसंसिद्धिर्लक्षणादिविशेषतः ॥ ५७ ॥**

न हि भिन्नलक्षणत्वं भिन्नसंज्ञासंख्याप्रतिभासत्वं वा कथंचिद्भेदं व्यभिचरति; तेजोमसोर्भिन्नलक्षणयोरेकपुद्गलद्रव्यात्मकत्वेपि पर्यायार्थतो भेदप्रतीतेः; शक्रपुरंदरादिसंज्ञाभेदिनो देवराजार्थस्यैकत्वेपि शकनपूर्दारणादिपर्यायतो भेदनिश्चयात्; जलमाप इति भिन्नसंख्यस्य तोयद्रव्यस्यैकत्वेपि शक्त्यैकत्वनानात्वपर्यायतो भेदस्याप्रतिहतत्वात्, स्पष्टास्पष्टप्रतिभासविषयस्य पादपस्यैकत्वेपि तथाग्राह्यत्वपर्यायार्थादेशान्नानात्वव्यवस्थितेः । अन्यथा स्वेष्टतत्त्वभेदासिद्धेः सर्वमेकमासज्येत । इति क्वचित्कस्यचित्कुतश्चिद्भेदं साधयता लक्षणादिभेदाद्दर्शनज्ञानयोरपि भेदोभ्युपगंतव्यः ॥

**तत एव न चारित्रं ज्ञानं तादात्म्यमृच्छति । पर्यायार्थप्रधानत्वविवक्षातो मुनेरिह ॥ ५८ ॥**

न ज्ञानं चारित्रात्मकमेव ततो भिन्नलक्षणत्वाद्दर्शनवदित्यत्र न स्वसिद्धांतविरोधः पर्यायार्थप्रधानत्वस्येह सूत्रे सूत्रकारेण विवक्षितत्वात् ॥

**द्रव्यार्थस्य प्रधानत्वविवक्षायां तु तत्त्वतः । भवेदात्मैव संसारो मोक्षस्तद्धेतुरेव च ॥ ५९ ॥**

**तथा च सूत्रकारस्य क्व तद्भेदोपदेशना । द्रव्यार्थस्याप्यशुद्धस्यावांतराभेदसंश्रयात् ॥ ६० ॥**

यथा समस्तैक्यसंग्रहो द्रव्यार्थिकः शुद्धस्तथावांतरैक्यग्रहोप्यशुद्ध इति तद्विवक्षायां संसारमोक्षतदुपायानां भेदाप्रसिद्धेरात्मद्रव्यस्यैवैकस्य व्यवस्थानात्तद्भेददेशना क्व व्यवतिष्ठेत ? ततः सैव सूत्रकारस्य पर्यायार्थप्रधानत्वविवक्षां गमयति, तामंतरेण भेददेशनानुपपत्तेः । ये तु दर्शनज्ञानयोर्ज्ञानचारित्रयोर्वा सर्वथैकत्वं प्रतिपद्यंते ते कालाभेदाद्देशाभेदात्सामानाधिकरण्याद्वा ? गत्यंतराभावात् । न चैते सद्धेतवोऽनैकांतिकत्वाद्विरुद्धत्वाच्चेति निवेदयति;—

**कालाभेदादभिन्नत्वं तयोरेकांततो यदि । तदेकक्षणवृत्तीनामर्थानां भिन्नता कुतः ॥ ६१ ॥**

**देशाभेदादभेदश्चेत्कालाकाशादिभिन्नता । सामानाधिकरण्याच्चेत्तत एवास्तु भिन्नता ॥ ६२ ॥**

**सामानाधिकरण्यस्य कथंचिद्भिदया विना । नीलतोत्पलतादीनां जातु क्वचिददर्शनात् ॥ ६३ ॥**

न हि नीलतोत्पलत्वादीनामेकद्रव्यवृत्तितया सामानाधिकरण्यं कथंचिद्भेदमंतरेणोपपद्यते, येनैकजीवद्रव्यवृत्तित्वेन दर्शनादीनां सामानाधिकरण्यं तथाभेदसाधनाद्विरुद्धं न स्यात् ॥

**मिथ्याश्रद्धानविज्ञानचर्याविच्छित्तिलक्षणम् । कार्यं भिन्नं दृगादीनां नैकांताभिदि संभवि ॥ ६४ ॥**

सद्दर्शनस्य हि कार्यं मिथ्याश्रद्धानविच्छित्तिः, संज्ञानस्य मिथ्याज्ञानविच्छित्तिः, सच्चारित्रस्य मिथ्याचरणविच्छित्तिरिति च भिन्नानि दर्शनादीनि भिन्नकार्यत्वात्सुखदुःखादिवत् । पावकादिनानैकांत इति चेन्न, तस्यापि स्वभावभेदमंतरेण दाहपाकाद्यनेककार्यकारित्वायोगात् ।

**दृङ्मोहविगमज्ञानावरणध्वंसवृत्तमुट्– । संक्षयात्मकहेतोश्च भेदस्तद्भिदि सिद्ध्यति ॥ ६५ ॥**

दर्शनमोहविगमज्ञानावरणध्वंसवृत्तमोहसंक्षयात्मका हेतवो दर्शनादीनां भेदमंतरेण न हि परस्परं भिन्ना घटंते येन तद्भेदात्तेषां कथंचिद्भेदो न सिद्ध्येत् । चक्षुराद्यनेककारणेनैकेन रूपज्ञानेन व्यभिचारी कारणभेदो भिदि साध्यायामिति चेन्न, तस्यानेकस्वरूपत्वसिद्धेः । कथमन्यथा भिन्नयवादिबीजकारणा यवांकुरादयः सिद्ध्येयुः परस्परभिन्नाः । न चैककारणनिष्पाद्ये कार्यैकस्वरूपे कारणांतरं प्रवर्तमानं सफलं । सहकारित्वात्सफलमिति चेत्, किं पुनरिदं सहकारिकारणमनुपकारकमपेक्षणीयं ? तदुपादानस्यो-

१ कुतः स्यादिति शेषः ।

पकारकं तदिति चेन्न, तत्कारणत्वानुषंगात् । साक्षात्कार्ये व्याप्रियमाणमुपादानेन सह तत्करणशीलं हि सहकारि, न पुनः कारणमुपकुर्वाणं । तस्य कारणकारणत्वेनानुकूलकारणत्वादिति चेत्, तर्हि सहकारिसाध्यरूपतोपादानसाध्यरूपतायाः परा प्रसिद्धा कार्यस्येति न किंचिदनेककारणमेकस्वभावं, येन हेतोर्व्यभिचारित्वाद्दर्शनादीनां स्वभावभेदो न सिध्येत् ॥

तेषां पूर्वस्य लाभेपि भाज्यत्वादुत्तरस्य च । नैकांतेनैकता युक्ता हर्षामर्षादिभेदवत् ॥ ६६ ॥

न चेदमसिद्धं साधनम्;—

तत्त्वश्रद्धानलाभे हि विशिष्टं श्रुतमाप्यते । नावश्यं नापि तल्लाभे यथाख्यातममोहकम् ॥ ६७ ॥

न चैवं विरुद्धधर्माध्यासेपि दर्शनादीनां सर्वथैकत्वं युक्तमतिप्रसंगात् । न च स्याद्वादिनः किंचिद्विरुद्धधर्माधिकरणं सर्वथैकमस्ति तस्य कथंचिद्भिन्नरूपत्वव्यवस्थितेः । न च सत्त्वादयो धर्मा निर्बाधबोधोपदर्शिताः क्वचिदेकत्रापि विरुद्धा येन विरुद्धधर्माधिकरणमेकं वस्तु परमार्थतः न सिध्येत् । अनुपलंभसाधनत्वात् सर्वत्र विरोधस्यान्यथा स्वभावेनापि स्वभाववतो विरोधानुषंगात् । ततो न विरुद्धधर्माध्यासो व्यभिचारी ॥

नन्वेवमुत्तरस्यापि लाभे पूर्वस्य भाज्यता । प्राप्ता ततो न तेषां स्यात्सह निर्वाणहेतुता ॥ ६८ ॥

न हि पूर्वस्य लाभे भजनीयमुत्तरमुत्तरस्य तु लाभे नियतः पूर्वलाभ इति युक्तं, तद्विरुद्धधर्माध्यासस्याविशेषात्, उत्तरस्यापि लाभे पूर्वस्य भाज्यताप्राप्तेरित्यस्याभिमननम् ॥

तत्रोपादेयसंभूतेरुपादानास्तिता गतेः । कटादिकार्यसंभूतेस्तदुपादानसत्त्ववत् ॥ ६९ ॥

उपादेयं हि चारित्रं पूर्वज्ञानस्य वीक्षते । तद्भावभावितादृष्टेस्तद्वज्ज्ञानदृशो मतम् ॥ ७० ॥

न हि तद्भावभावितायां दृष्टायामपि कस्यचित्तदुपादेयता नास्तीति युक्तं, कटादिवत् सर्वस्यापि वीरणाद्युपादेयत्वाभावानुषक्तेः । न चोपादेयसंभूतिरुपादानास्तितां न गमयति कटादिसंभूतेर्वीरणाद्यस्तित्वस्यागतिप्रसंगात्, येनोत्तरस्योपादेयस्य लाभे पूर्वलाभो नियतो न भवेत् । तत एवोपादानस्य लाभे नोत्तरस्य नियतो लाभः कारणानामवश्यं कार्यवत्त्वाभावात् । समर्थस्य कारणस्य कार्यवत्त्वमेवेति चेन्न, तस्येहाविवक्षितत्वात् । तद्विवक्षायां तु पूर्वस्य लाभे नोत्तरं भजनीयमुच्यते स्वयमविरोधात् । इति दर्शनादीनां विरुद्धधर्माध्यासाविशेषेप्युपादानोपादेयभावादुत्तरं पूर्वास्तितानियतं न तु पूर्वमुत्तरास्तित्वगमकम् ॥

नन्पादेयसंभूतिरुपादानोपमर्दनात् । दृष्टेति नोत्तरोद्भूतौ पूर्वस्यास्तित्वसंगतिः ॥ ७१ ॥

सत्यप्युपादानोपादेयभावे दर्शनादीनां नोपादेयस्य संभवः पूर्वस्यास्तितां स्वकाले गमयति तदुपमर्देनेन तदुद्भूतेः । अन्यथोत्तरप्रदीपज्वालादेरस्तित्वप्रसक्तिः । तथा च कुतस्तत्कार्यकारणभावः समानकालत्वात् सव्येतरगोविषाणवदित्यस्याकूतम् ॥

सत्यं कथंचिदिष्टत्वात्प्राङ्नाशस्योत्तरोद्भवे । सर्वथा तु न तन्नाशः कार्योत्पत्तिविरोधतः ॥ ७२ ॥

ज्ञानोत्पत्तौ हि सद्दृष्टिस्तद्विशिष्टोपजायते । पूर्वाविशिष्टरूपेण नश्यतीति सुनिश्चितम् ॥ ७३ ॥

चारित्रोत्पत्तिकाले च पूर्वदृग्ज्ञानयोश्च्युतिः । चर्याविशिष्टयोर्भूतिस्तत्सकृत्त्रयसंभवः ॥ ७४ ॥

दर्शनपरिणामपरिणतो ह्यात्मा दर्शनं, तदुपादानं विशिष्टज्ञानपरिणामस्य निष्पत्तेः पर्यायमात्रस्य निरन्वयस्य जीवादिद्रव्यमात्रस्य च सर्वथोपादानत्वायोगात् कूर्मरोमादिवत् । तत्र नश्यत्येव दर्शनपरिणामे विशिष्टज्ञानात्मतयात्मा परिणमते, विशिष्टज्ञानासहचारितेन रूपेण दर्शनस्य विनाशात्तत्सहचरितेन

रूपेणोत्पादात् । अन्यथा विशिष्टज्ञानसहचरितरूपतयोत्पत्तिविरोधात् पूर्ववत् । तथा दर्शनज्ञानपरिणतो जीवो दर्शनज्ञाने, ते चारित्रस्योपादानं, पर्यायविशेषात्मकस्य द्रव्यस्योपादानत्वप्रतीतेर्घटपरिणमनसमर्थपर्यायात्मकमृद्द्रव्यस्य घटोपादानवत्त्ववत् । तत्र नश्यतोरेव दर्शनज्ञानपरिणामयोरात्मा चारित्रपरिणाममियर्ति चारित्रासहचरितेन रूपेण तयोर्विनाशाच्चारित्रसहचरितेनोत्पादात् । अन्यथा पूर्ववच्चारित्रासहचरितरूपत्वप्रसंगात् । इति कथंचित्पूर्वरूपविनाशस्योत्तरपरिणामोत्पत्त्यविशिष्टत्वात् सत्यमुपादानोपमर्दनेनोपादेयस्य भवनं । न चैवं सकृद्दर्शनादित्रयस्य संभवो विरुध्यते चारित्रकाले दर्शनज्ञानयोः सर्वथा विनाशाभावात् । एतेन सकृद्दर्शनज्ञानद्वयसंभवोपि क्वचिन्न विरुध्यते इत्युक्तं वेदितव्यं, विशिष्टज्ञानकार्यस्य दर्शनस्य सर्वथा विनाशानुपपत्तेः, कार्यकालमप्राप्नुवतः कारणत्वविरोधात् प्रलीनतमवत्, ततः कार्योत्पत्तेरयोगाद्गत्यंतरासंभवात् ॥

**नन्वत्र क्षायिकी दृष्टिर्ज्ञानोत्पत्तौ न नश्यति । तदपर्यंतताहानेरित्यसिद्धांतविद्वचः ॥ ७५ ॥**

क्षायिकदर्शनं ज्ञानोत्पत्तौ न नश्यत्येवानंतत्वात् क्षायिकज्ञानवत्, अन्यथा तदपर्यन्तत्वस्यागमोक्तस्य हानिप्रसंगात् । ततो न दर्शनज्ञानयोर्ज्ञानचारित्रयोर्वा कथंचिदुपादानोपादेयता युक्ता । इति ब्रुवाणो न सिद्धान्तवेदी ॥

**सिद्धान्ते क्षायिकत्वेन तदपर्यन्ततोक्तितः । सर्वथा तदविध्वंसे कौटस्थ्यस्य प्रसक्तितः ॥७६॥**
**तथोत्पादव्ययध्रौव्ययुक्तं सदिति हीयते । प्रतिक्षणमतो भावः क्षायिकोपि त्रिलक्षणः ॥७७॥**

ननु च पूर्वसमयोपाधितया क्षायिकस्य भावस्य विनाशादुत्तरसमयोपाधितयोत्पादात्स्वस्वभावेन सदा स्थानात्त्रिलक्षणत्वोपपत्तेः, न सिद्धान्तमनवबुध्य क्षायिकदर्शनस्य ज्ञानकाले स्थितिं ब्रूते येन तथा वचोऽसिद्धान्तवेदिनः स्यादिति चेत्;—

**पूर्वोत्तरक्षणोपाधिस्वभावक्षयजन्मनोः । क्षायिकत्वेनावस्थाने स यथैव त्रिलक्षणः ॥ ७८ ॥**
**तथा हेत्वन्तरोन्मुक्तयुक्तरूपेण विच्युतौ । जातौ च क्षायिकत्वेन स्थितौ किमु न तादृशः ॥७९॥**

क्षायिकदर्शनं तावन्मुक्तेर्हेतुस्ततो हेत्वन्तरं विशिष्टं ज्ञानं चारित्रं च, तदुन्मुक्तरूपेण तस्य नाशे तद्युक्तरूपेण जन्मनि क्षायिकत्वेन स्थाने त्रिलक्षणत्वं भवत्येव; तथा क्षायिकदर्शनज्ञानद्वयस्य मुक्तिहेतोर्दर्शनज्ञानचारित्रत्रयस्य वा हेत्वंतरं चारित्रमघातित्रयनिर्जराकारी क्रियाविशेषः कालादिविशेषश्च, तेनोन्मुक्तया प्राक्तन्या युक्तरूपया चोत्तरया नाशे जन्मनि च क्षायिकत्वेन स्थाने वा तस्य त्रिलक्षणत्वमनेन व्याख्यातमिति क्षायिको भावस्त्रिलक्षणः सिद्धः । ननु तस्य हेत्वंतरेणोन्मुक्तता हेत्वंतरस्य प्रागभाव एव, तेन युक्तता तदुत्पाद एव, नचान्यस्याभावोत्पादौ क्षायिकस्य युक्तौ, येनैवं त्रिलक्षणता स्यात् । इति चेत्; तर्हि पूर्वोत्तरसमययोस्तदुपाधिभूतयोर्नाशोत्पादौ कथं तस्य स्यातां यतोऽसौ स्वयं स्थितोपि सर्वतदपेक्षया त्रिलक्षणः स्यादिति कौटस्थ्यमायातम् । तथा च सिद्धान्तविरोधः परमतप्रवेशात् । यदि पुनस्तस्य पूर्वसमयेन विशिष्टतोत्तरसमयेन च तत्स्वभावभूतता ततस्तद्विनाशोत्पादौ तस्येति मतं, तदा हेत्वंतरेणोन्मुक्तता युक्तता च तद्भावेन तद्भावेन च विशिष्टता तस्य स्वभावभूतैवेति तन्नाशोत्पादौ कथं न तस्य स्यातां यतो नैवं त्रिलक्षणोसौ भवेत् । ततो युक्तं क्षायिकानामपि कथंचिदुपादानोपादेयत्वम् ।

**कारणं यदि सद्दृष्टिः सद्बोधस्य तदा न किम् । तदनन्तरमुत्पादः केवलस्येति केचन ॥८०॥**
**तदसत्प्रतिबंधिकर्माभावे तथेष्टितः । कारणं हि स्वकार्यस्याप्रतिबंधिप्रभावकम् ॥ ८१ ॥**

न हि क्षायिकदर्शनं केवलज्ञानावरणादिभिः सहितं केवलज्ञानस्य प्रभवं प्रयोजयति, तैस्तत्प्रभावत्वा-भ्युपगमस्य प्रतिबंधात् येन तदनंतरं तस्योत्पादः स्यात् । तैर्विमुक्तं तु दर्शनं केवलस्य प्रभावकमेव तथेष्टत्वात्, कारणस्याप्रतिबंधस्य स्वकार्यजनकत्वप्रतीतेः ।

**सद्बोधपूर्वकत्वेपि चारित्रस्य समुद्भवः । प्रागेव केवलाच्च स्यादित्येतच्च न युक्तिमत् ॥ ८२ ॥**
**समुच्छिन्नक्रियस्यातो ध्यानस्याविनिवर्तिनः । साक्षात्संसारविच्छेदसमर्थस्य प्रसूतितः ॥८३॥**
**यथैवापूर्णचारित्रमपूर्णज्ञानहेतुकम् । तथा तत्किन्न संपूर्णं पूर्णज्ञाननिबंधनम् ॥ ८४ ॥**

तन्न ज्ञानपूर्वकतां चारित्रं व्यभिचरति ।

**प्रागेव क्षायिकं पूर्णं क्षायिकत्वेन केवलात् । नत्वघातिप्रतिध्वंसिकरणोपेतरूपतः ॥ ८५ ॥**

केवलात्प्रागेव क्षायिकं यथाख्यातचारित्रं सम्पूर्णं ज्ञानकारणकमिति न शंकनीयं, तस्य मुक्त्युत्पादने सहकारिविशेषापेक्षितया पूर्णत्वानुपपत्तेः । विवक्षितस्वकार्यकरणेंत्यक्षणप्राप्तत्वं हि संपूर्णं, तच्च न केवलात्प्रागस्ति चारित्रस्य, ततोऽप्यूर्ध्वमघातिप्रतिध्वंसिकरणोपेतरूपतया संपूर्णस्य तस्योदयात् । न च 'यथाख्यातं पूर्णं चारित्रमिति प्रवचनस्यैवं बाधास्ति' तस्य क्षायिकत्वेन तत्र पूर्णत्वाभिधानात् । नहि सकलमोहक्षयादुद्भवच्चारित्रमंशतोपि मलवदिति शश्वदमलवदात्यंतिकं तदभिधूयते । कथं पुनस्तदसंपूर्णादेव ज्ञानात्क्षायोपशमिकादुत्पद्यमानं तथापि संपूर्णमिति चेत् न, सकलश्रुताशेषतत्त्वार्थपरिच्छेदिनस्तस्योत्पत्तेः । पूर्णं तत एव तदस्त्विति चेन्न, विशिष्टस्य रूपस्य तदनंतरमभावात् । किं तद्विशिष्टं रूपं चारित्रस्येति चेत्, नामाद्यघातिकर्मत्रयनिर्जरणसमर्थं समुच्छिन्नक्रियाप्रतिपातिध्यानमित्युक्तप्राय ।

**तद्रूपावरणं कर्म नवमं न प्रसज्यते । चारित्रमोहनीयस्य क्षयादेव तदुद्भवात् ॥ ८६ ॥**

यद्यदात्मकं तत्तदावरककर्मणः क्षयादुद्भवति, यथा केवलज्ञानस्वरूपं तदावरणकर्मणः क्षयात् । चारित्रात्मकं च प्रकृतमात्मनो रूपमिति चारित्रमोहनीयकर्मण एव क्षयादुद्भवति । न पुनस्तदावरणं कर्म नवमं प्रसज्यतेऽन्यथातिप्रसङ्गात् ।

**क्षीणमोहस्य किं न स्यादेवं तदिति चेन्न वै । तदा कालविशेषस्य तादृशोऽसम्भवित्वतः ॥८७॥**
**तथा केवलबोधस्य सहायस्याप्यसंभवात् । स्वसामग्र्या विना कार्यं नहि जातुचिदीक्ष्यते ॥ ८८ ॥**

कालादिसामग्रीको हि मोहक्षयस्तद्रूपाविर्भावहेतुर्न केवलस्तथाप्रतीतेः ।

**क्षीणेपि मोहनीयाख्ये कर्मणि प्रथमक्षणे । यथा क्षीणकषायस्य शक्तिरन्त्यक्षणे मता ॥ ८९ ॥**
**ज्ञानावृत्यादिकर्माणि हंतुं तद्वदयोगिनः । पर्यंतक्षण एव स्याच्छेषकर्मक्षयेऽप्यसौ ॥ ९० ॥**

कर्मनिर्जरणशक्तिर्जीवस्य सम्यग्दर्शने सम्यग्ज्ञाने सम्यक्चारित्रे चान्तर्भवेत्ततोन्या वा स्यात् । तत्र न तावत् सम्यग्दर्शने ज्ञानावरणादिकर्मप्रकृतिचतुर्दशकनिर्जरणशक्तिरन्तर्भवत्यसंयतसम्यग्दृष्ट्याद्यप्रमत्तपर्यंतगुणस्थानेष्वन्यतमगुणस्थाने दर्शनमोहक्षयात्तदाविर्भावप्रसक्तेः । ज्ञाने सान्तर्भवतीति चायुक्तं, क्षायिकेनैतदन्तर्भावे सयोगिकेवलिनः केवलेन सहाविर्भावापत्तेः । क्षायोपशमिके तदन्तर्भावे तेन सहोत्पादप्रसक्तेः । क्षायोपशमिके चारित्रे तदन्तर्भावे तेनैव सह प्रादुर्भावानुषंगात् । क्षायिके तदन्तर्भावे क्षीणकषायस्य प्रथमे क्षणे तदुद्भूतेर्निद्राप्रचलयोर्ज्ञानावरणादिप्रकृतिचतुर्दशकस्य च निर्जरणप्रसक्तेर्नोपांत्यसमये अन्त्यक्षणे च तन्निर्जरा स्यात् । दर्शनादिषु तदनन्तर्भावे तदावारकं कर्मान्तरं प्रसज्येत, दर्शनमोहज्ञानावरणचारित्रमोहानां तदावारकत्वानुपपत्तेः । वीर्यान्तरायस्तदावारक इति चेन्न, तत्क्षयानन्तरं तदुद्भवप्रसंगात् । तथाचान्योन्याश्रयणं—सति वीर्यान्तरायक्षये तन्निर्जरणशक्त्याविर्भावस्तस्मिंश्च सति वीर्यान्तरायक्षय

इति । एतेनः ज्ञानावरणप्रकृतिपंचकदर्शनावरणप्रकृतिचतुष्टयान्तरायप्रकृतिपंचकानां तन्निर्जरणशक्तेरावारकत्वेऽन्योन्याश्रयणं व्याख्यातम् । नामादिचतुष्टयं तु न तस्याः प्रतिबंधकम् तस्यात्मस्वरूपाघातित्वेन कथनात् । न च सर्वथानावृत्तिरेव सा सर्वदा तत्क्षयणीयकर्मप्रकृत्यभावानुषंगात् । स्यान्मतं, चारित्रमोहक्षये तदाविर्भावाच्चारित्र एवान्तर्भावो विभाव्यते । न च क्षीणकषायस्य प्रथमसमये तदाविर्भावप्रसंगः कालविशेषापेक्षत्वात्तदाविर्भावस्य । प्रधानं हि कारणं मोहक्षयस्तदाविर्भावे सहकारिकारणमंत्यसमयमन्तरेण न तत्र समर्थं, तद्भाव एव तदाविर्भावादिति । तर्हि नामाद्यघातिकर्मनिर्जरणशक्तिरपि चारित्रेन्तर्भाव्यते । तत्रापि क्षायिके न क्षायोपशमिके दर्शने नापि ज्ञाने क्षायोपशमिके क्षायिके वा तेनैव सह तदाविर्भावप्रसंगात् । न चानावरणा सा सर्वदाविर्भावप्रसंगात् संसारानुपपत्तेः । न ज्ञानदर्शनावरणान्तरायैः प्रतिबद्धा तेषां ज्ञानादिप्रतिबंधकत्वेन तदप्रतिबंधकत्वात् । नापि नामाद्यघातिकर्मभिस्तत्क्षयानंतरं तदुत्पादप्रसक्तेः । तथा चान्योन्याश्रयणात् सिद्धे नामाद्यघातिक्षये तन्निर्जरणशक्त्याविर्भावात्तत्सिद्धौ नामाद्यघातिक्षयात् । इति चारित्रमोहस्तस्याः प्रतिबंधकः सिद्धः । क्षीणकषायप्रथमसमये तदाविर्भावप्रसक्तिरपि न वाच्या, कालविशेषस्य सहकारिणोपेक्षणीयस्य तदा विरहात् । प्रधानं हि कारणं मोहक्षयो नामादिनिर्जरणशक्तेर्नायोगकेवलिगुणस्थानोपान्त्यान्त्यसमयं सहकारिणमन्तरेण तामुपजनयितुमलं सत्यपि केवले ततः प्राक्तदनुत्पत्तेरिति । न सा मोहक्षयनिमित्तापि क्षीणकषायप्रथमक्षणे प्रादुर्भवति, नापि तदावरणं कर्म नवमं प्रसज्यते इति स्थितं कालादिसहकारिविशेषापेक्षक्षायिकं चारित्रं क्षायिकत्वेन संपूर्णमपि मुक्त्युत्पादने साक्षादसमर्थम् केवलात्प्राक्कालभावि तदकारकम् केवलोत्तरकालाभावि तु साक्षान्मोक्षकारणं संपूर्णं केवलकारणकमन्यथा तदघटनात् ।

**कालापेक्षितया वृत्तमसमर्थं यदीष्यते । द्व्यादिसिद्धक्षणोत्पादे तदन्त्यं तादृगित्यसत् ॥ ९१ ॥**
**प्राच्यसिद्धक्षणोत्पादापेक्षया मोक्षवर्त्मनि । विचारप्रस्तुतेरेवं कार्यकारणतास्थितेः ॥ ९२ ॥**

नहि द्व्यादिसिद्धक्षणैः सहायोगिकेवलिचरमसमयवर्तिनो रत्नत्रयस्य कार्यकारणभावो विचारयितुमुपक्रांतो येन तत्र तस्यासामर्थ्यं प्रसज्यते । किं तर्हि ? प्रथमसिद्धक्षणेन सह; तत्र च तत्समर्थमेवेत्यसच्चोद्यमेतत् । कथमन्यथाग्निः प्रथमधूमक्षणमुपजनयन्नपि तत्र समर्थः स्यात् ? धूमक्षणजनितद्वितीयादिधूमक्षणोत्पादे तस्यासमर्थत्वेन प्रथमधूमक्षणोत्पादनेप्यसामर्थ्यप्रसक्तेः । तथा च न किंचित्कस्यचित्समर्थं कारणं, न चासमर्थात्कारणादुत्पत्तिरिति केयं वराकी तिष्ठेत्कार्यकारणता? कालान्तरस्थायिनोऽग्नेः स्वकारणादुत्पन्नो धूमः कालान्तरस्थायी स्कन्ध एक एवेति स तस्य कारणं प्रतीयते तथा व्यवहारादन्यथा तदभावादिति चेत्, तर्हि सयोगिकेवलिरत्नत्रयमयोगिकेवलिचरमसमयपर्यंतमेकमेव तदनन्तर्भाविनः सिद्धत्वपर्यायस्यानंतस्यैकस्य कारणमित्यायातम्, तच्च नानिष्टम्, व्यवहारनयानुरोधतस्तथेष्टत्वात् । निश्चयनयाश्रयणे तु यदनन्तरं मोक्षोत्पादस्तदेव मुख्यं मोक्षस्य कारणमयोगिकेवलिचरमसमयवर्ति रत्नत्रयमिति निरवद्यमेतत्तत्त्वविदामाभासते ।

**ततो मोहक्षयोपेतः पुमानुद्भूतकेवलः । विशिष्टकारणं साक्षादशरीरत्वहेतुना ॥ ९३ ॥**
**रत्नत्रितयरूपेणायोगकेवलिनोंतिमे । क्षणे विवर्तते ह्येतदबाध्यं निश्चितान्नयात् ॥ ९४ ॥**
**व्यवहारनयाश्रित्या त्वेतत्प्रागेव कारणम् । मोक्षस्येति विवादेन पर्याप्तं तत्त्ववेदिनाम् ॥९५॥**
**संसारकारणत्रित्वासिद्धेर्निर्वाणकारणे । त्रित्वं नैवोपपद्येतेत्यचोद्यं न्यायदर्शिनः ॥ ९६ ॥**
**आद्यसूत्रस्य सामर्थ्याद्भवहेतोस्त्रयात्मनः । सूचितस्य प्रमाणेन बाधनानवतारतः ॥ ९७ ॥**

'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इत्याद्यसूत्रसामर्थ्यात् मिथ्यादर्शनज्ञानचारित्राणि संसारमार्ग इति सिद्धेः सिद्धमेव संसारकारणत्रित्वं बाधकप्रमाणाभावात्ततो न संसारकारणत्रित्वासिद्धेर्निर्वाणकारणत्रित्वानुपपत्तिचोदना कस्यचिन्न्यायदर्शितामावेदयति । विपर्ययमात्रमेव विपर्ययावैराग्यमात्रमेव वा संसारकारणमिति व्यवस्थापयितुमशक्तेर्न संसारकारणत्रित्वस्य बाधास्ति । तथाहि ।

**मौलो हेतुर्भवस्येष्टो येषां तावद्विपर्ययः । तेषामुद्भूतबोधस्य घटते न भवस्थितिः ॥ ९८ ॥**

अतस्मिंस्तद्ग्रहो विपर्ययः, स दोषस्य रागादेर्हेतुः, तद्भावे भावात्तदभावेऽभावात् । सोप्यदृष्टस्याशुद्धकर्मसंज्ञितस्य, तदपि जन्मनस्तद्दुःखस्यानेकविधस्येति मौलो भवस्य हेतुर्विपर्यय एव एषामभिमतस्तेषां तावदुद्भूततत्त्वज्ञानस्य योगिनः कथमिह भवे स्थितिर्घटते कारणाभावे कार्योत्पत्तिविरोधात् ।

**संसारे तिष्ठतस्तस्य यदि कश्चिद्विपर्ययः । संभाव्यते तदा किन्न दोषादिस्तन्निबंधनः ॥ ९९ ॥**

समुत्पन्नतत्त्वज्ञानस्याप्यशेषतोऽनागतविपर्ययस्यानुत्पत्तिर्न पुनः पूर्वभवोपात्तस्य पूर्वाधर्मनिबंधनस्य, ततोऽस्य भवस्थितिर्घटत एवेति सम्भावनायां, तद्विपर्ययनिबंधनो दोषस्तद्दोषनिबंधनं चादृष्टं तददृष्टनिमित्तं च जन्म तज्जन्मनिमित्तं च दुःखमनेकप्रकारं किन्न संभाव्यते? नहि पूर्वोपात्तो विपर्यासस्तिष्ठति न पुनस्तन्निबंधनः पूर्वोपात्त एव दोषादिरिति प्रमाणमस्ति तत्स्थितेरेव प्रमाणतः सिद्धेः ।

**तथा सति कुतो ज्ञानी वीतदोषः पुमान्परः । तत्त्वोपदेशसंतानहेतुः स्याद्भवदादिषु ॥ १००॥**

पूर्वोपात्तदोषादिस्थितौ च तत्त्वोपदेशसंप्रदायाविच्छेदहेतोर्भवदादिषु विनेयेषु सर्वज्ञस्यापि परमपुरुषस्य कुतो वीतदोषत्वं येनाज्ञोपदेशविप्रलंभनशंकिभिस्तदुक्तप्रतिपत्तये प्रेक्षावद्भिर्भवद्भिः स एव मृग्यते । यदि पुनर्न योगिनः पूर्वोपात्तो विपर्ययोस्ति नापि दोषस्तस्य क्षणिकत्वेन स्वकार्यमदृष्टं निर्वर्त्य निवृत्तेः, किं तर्ह्यदृष्टमेव तत्कृतमास्ते तस्याक्षणिकत्वादत्यैनैव कार्येण विरोधित्वात्तत्कार्यस्य च जन्मफलानुभवनस्योपभोगेनैव निवृत्तेस्ततः पूर्वं तस्यावस्थितिरिति मतं; तदा तत्त्वज्ञानोत्पत्तेः प्राक्तस्मिन्नेव जन्मनि विपर्ययो न स्यात्पूर्वजन्मन्येव तस्य निवृत्तत्वात्, तद्वद्दोषोपीत्यापतितं, तत्कृतादृष्टस्यैव स्थितेः । न चैतद्युक्तं, प्रतीतिविरोधात् । यदि पुनः पूर्वजन्मविपर्ययाद्दोषस्ततोप्यधर्मस्तस्मादिह जन्मनि मिथ्याज्ञानं ततोऽपरो दोषस्ततोप्यधर्मस्तस्मादपरं मिथ्याज्ञानमिति तावदस्य संतानेन प्रवृत्तिर्यावत्तत्त्वज्ञानं साक्षादुत्पद्यते इति मतं; तदा तत्त्वज्ञानकालेऽपि तत्पूर्वानंतरविपर्यासाद्दोषोत्पत्तिस्ततोप्यधर्मस्ततोऽन्यो विपर्यय इति कुतस्तत्त्वज्ञानादनागतविपर्ययादिनिवृत्तिः?

**वितथाग्रहरागादिप्रादुर्भावनशक्तिभृत् । मौलो विपर्ययो नान्य इति केचित्प्रपेदिरे ॥ १०१ ॥**

मौल एव विपर्ययो वितथाग्रहरागादिप्रादुर्भावनशक्तिं बिभ्राणो मिथ्याभिनिवेशात्मकं दोषं जनयति, स चाधर्ममधर्मश्च जन्म तच्च दुःखात्मकं संसारं; न पुनरन्यः क्रमादपकृष्यमाणतज्जननशक्तिकविपर्ययादुत्पन्नस्तज्जननशक्तिरहितोपि, यतस्तत्त्वज्ञानकाले मिथ्याभिनिवेशात्मकदोषोत्पत्तिस्ततोप्यधर्मादिरुत्पद्येतेति केचित्संप्रतिपन्नाः ।

**तेषां प्रसिद्ध एवायं भवहेतुस्त्रयात्मकः । शक्तित्रयात्मतापाये भवहेतुत्वहानितः ॥ १०२ ॥**

य एव विपर्ययो मिथ्याभिनिवेशरागाद्युत्पादनशक्तिः स एव भवहेतुर्नान्य इति वदतां प्रसिद्धो मिथ्यादर्शनज्ञानचारित्रात्मको भवहेतुर्मिथ्याभिनिवेशशक्तेरेव मिथ्यादर्शनत्वान्मिथ्यार्थग्रहणस्य स्वयं विपर्ययस्य मिथ्याज्ञानत्वाद्रागादिप्रादुर्भवनसामर्थ्यस्य मिथ्याचारित्रत्वात् ॥

**ततो मिथ्याग्रहाद्व्यशक्तियुक्तो विपर्ययः । मिथ्यार्थग्रहणाकारो मिथ्यात्वादिभिदोदितः ॥१०३॥**

न हि नाममात्रे विवादः स्याद्वादिनोस्ति क्वचिदेकत्रार्थे नानानामकरणस्याविरोधात् । तदर्थे तु न विवादोस्ति मिथ्यात्वादिभेदेन विपर्ययस्य शक्तित्रयात्मकस्येरणात् ॥

**तथा विपर्ययज्ञानासंयमात्मा विबुध्यताम् । भवहेतुरतत्त्वार्थश्रद्धाशक्तित्रयात्मकः ॥ १०४ ॥**

यावेव विपर्ययासंयमौ वितथार्थश्रद्धानशक्तियुतौ मौलौ तावेव भवसंतानप्रादुर्भावनसमर्थौ नांत्यौ प्रक्षीणशक्तिकाविति ब्रुवाणानामपि भवहेतुः त्रयात्मकस्तथैव प्रत्येतव्यो विशेषाभावात् । इत्यविवादेन संसारकारणत्रित्वसिद्धेर्न संसारकारणत्रित्वानुपपत्तिः ॥

युक्तितश्च भवहेतोस्त्रयात्मकत्वं साधयन्नाह;—

**मिथ्यादृगादिहेतुः स्यात्संसारस्तदपक्षये । क्षीयमाणत्वतो वातविकारादिजरोगवत् ॥ १०५ ॥**

यो यदपक्षये क्षीयमाणः स तद्धेतुर्यथा वातविकाराद्यपक्षीयमाणो वातविकारादिजो रोगः । मिथ्यादर्शनज्ञानचारित्रापक्षये क्षीयमाणश्च संसार इति । अत्र न तावदयं बाधसिद्धो हेतुः मिथ्यादर्शनस्यापक्षयेऽसंयतसम्यग्दृष्टेरनंतसंसारस्य क्षीयमाणत्वसिद्धेः; संख्यातभवमात्रतया तस्य संसारस्थितेः । तत एव मिथ्याज्ञानस्यापक्षये सम्यग्ज्ञानिनः संसारस्य क्षीयमाणत्वं सिद्धं । सम्यक्चारित्रवतस्तु मिथ्याचारित्रस्यापक्षये तद्भवमात्रसंसारसिद्धेर्मोक्षसंप्राप्तेः सिद्धमेव संसारस्य क्षीयमाणत्वं । न चैतदागममात्रगम्यमेव यतोऽयं हेतुरागमाश्रयः स्यात्, तद्ग्राहकानुमानसद्भावात् । तथाहि । मिथ्यादर्शनाद्यपक्षये क्षीयमाणः संसारः साक्षात्परंपरया वा दुःखफलत्वाद्विषमविषभक्षणातिभोजनादिवत् । यथैव हि साक्षाद्दुःखफलं विषमविषभक्षणं, परंपरयातिभोजनादि, तन्मिथ्याभिनिवेशाद्यपक्षये तत्त्वज्ञानवतः क्षीयते ततो निवृत्तेः, तथा संसारोपि; हीनस्थानपरिग्रहस्य दुःखफलस्य संसारत्वव्यवस्थापनत्वात् । न च किंचित्साक्षात्परंपरया वा दुःखफलं मिथ्यात्वाद्यपक्षयेप्यक्षीयमाणं दृष्टं येन हेतोर्व्यभिचारः स्यात् । गंडपाटनादिकं दृष्टमिति चेत् न, तस्य बुद्धिपूर्वं चिकित्सेत्यनुमन्यमानस्य सुखफलत्वेनाभिमतत्वात् दुःखफलत्वासिद्धेः; शिशुप्रभृतीनामबुद्धिपूर्वकस्य दुःखफलस्यापि पूर्वोपात्तमिथ्यादर्शनादिकृतकर्मफलत्वेन तस्य मिथ्यादर्शनाद्यनपक्षयेऽक्षीयमाणत्वसिद्धेः । कायक्लेशादिरूपेण तपसा व्यभिचार इत्यपि न मंतव्यं, तपसः प्रशमसुखफलत्वेन दुःखफलत्वासिद्धेः । तदा संवेद्यमानदुःखस्य पूर्वोपार्जितकर्मफलत्वात् तपःफलत्वासिद्धेः । 'साक्षात्परंपरया वा दुःखफलत्वं स्यात्, संसारो मिथ्यादर्शनाद्यपक्षये क्षीयमाणश्च न स्यात्' इति संदिग्धविपक्षव्यावृत्तिकत्वमपि न साधनस्य शंकनीयं; सम्यग्दर्शनोत्पत्तावसंयतसम्यग्दृष्टेर्मिथ्यादर्शनस्यापक्षये मिथ्याज्ञानानुत्पत्तेस्तत्पूर्वकमिथ्याचारित्राभावात्तन्निबंधनसंसारस्यापक्षयप्रसिद्धेः । अन्यथा मिथ्यादर्शनादित्रयापक्षयेपि तदपक्षयाघटनात् । न च सम्यग्दृष्टेर्मिथ्याचारित्राभावात्संयतत्वमेव स्यान्न पुनः कदाचिदसंयतत्वमित्यरेका युक्ता, चारित्रमोहोदये सति सम्यक्चारित्रस्यानुपपत्तेरसंयतत्वोपपत्तेः । कार्त्स्न्यतो देशतो वा न संयमो नापि मिथ्यासंयम इति व्याहतमपि न भवति, मिथ्यागमपूर्वकस्य संयमस्य पंचाग्निसाधनादेर्मिथ्यासंयमत्वात् सम्यगागमपूर्वकस्य सम्यक्संयमत्वात् । ततोन्यस्य मिथ्यात्वोदयासत्त्वेपि प्रवर्तमानस्य हिंसादेरसंयमत्वात् । न चासंयमाद्भेदेन मिथ्यासंयमस्योपदेशाभावादभेद एवेति युक्तं, तस्य बालतपःशब्देनोपदिष्टत्वात् ततः कथंचिद्भेदसिद्धेः । न हि चारित्रमोहोदयमात्राद्भवच्चारित्रं दर्शनचारित्रमोहोदयजनितादचारित्रादभिन्नमेवेति साधयितुं शक्यं, सर्वत्र कारणभेदस्य फलाभेदकत्वप्रसक्तेः । मिथ्यादृगसंयमस्य नियमेन मिथ्याज्ञानपूर्वकत्वप्रसिद्धेः, सम्यग्दृष्टेरसंयमस्य मिथ्यादर्शनज्ञानपूर्वकत्वविरोधात्, विरुद्धकारणपूर्वकत्वाभि

भेदाभावे सिद्धांतविरोधात् । कथमेवं मिथ्यात्वादित्रयं संसारकारणं साधयतः सिद्धांतविरोधो न भवेदिति चेत्, चारित्रमोहोदयेंतरंगहेतौ सत्युत्पद्यमानयोरसंयममिथ्यासंयमयोरेकत्वेन विवक्षितत्वाच्चतुष्टयकारणत्वासिद्धेः संसरणस्य । तत एवाविरतिशब्देनासंयमसामान्यवाचिना बंधहेतोरसंयमस्योपदेशघटनात् । सम्यग्दृष्टेरपि कस्यचिद्विषभक्षणादिजनितदुःखफलस्य हीनस्थानपरिग्रहस्य संसारस्य दर्शनान्मिथ्यादर्शनज्ञानयोरपक्षये क्षीयमाणत्वाभावान्न कथंचिद्दुःखफलत्वं मिथ्यादर्शनज्ञानापक्षये क्षीयमाणत्वेन व्याप्तमिति चेन्न, तस्याप्यनागतानंतानंतसंसारस्य प्रक्षयसिद्धेः साध्यांतःपातित्वेन व्यभिचारस्य तेनासंभवात् । निदर्शनं परप्रसिद्ध्या विषमविषभक्षणातिभोजनादिकमुक्तं, तत्र परस्य साध्यव्याप्तसाधने विवादाभावात् । न हि विषमविषभक्षणेऽतिभोजनादौ वा दुःखफलत्वमसिद्धं, नापि नाचरणीयमेतत्सुखार्थिनेति सत्यज्ञानोत्पत्तौ तत्संसर्गलक्षणसंसारस्यापक्षयोपि सिद्धस्तावता च तस्य दृष्टांतताप्रसिद्धेरविवाद एव । तदेवमनुमितानुमानान्मिथ्यादर्शनादिनिमित्तत्वं भवस्य सिध्यतीति न विपर्ययमात्रहेतुको विपर्ययावैराग्यहेतुको वा भवो विभाव्यते ॥

**तद्विपक्षस्य निर्वाणकारणस्य त्रयात्मता । प्रसिद्धैवमतो युक्ता सूत्रकारोपदेशना ॥ १०६ ॥**

मिथ्यादर्शनादीनां भवहेतूनां त्रयाणां प्रमाणतः स्थितानां निवृत्तिः प्रतिपक्षभूतानि सम्यग्दर्शनादीनि त्रीण्यपेक्षते अन्यतमापाये तदनुपपत्तेः; शक्तित्रयात्मकस्य वा भवहेतोरेकस्य विनिवर्तनं प्रतिपक्षभूतशक्तित्रयात्मकमेकमंतरेण नोपपद्यत इति युक्ता सूत्रकारस्य त्रयात्मकमोक्षमार्गोपदेशना । तत्र यदा संसारनिवृत्तिरेव मोक्षस्तदा कारणविरुद्धोपलब्धिरियं, नास्ति क्वचिज्जीवे संसारः परमसम्यग्दर्शनज्ञानचारित्रसद्भावादिति; यदा तु संसारनिवृत्तिकार्यं मोक्षस्तदा कारणविरुद्धोपलब्धिः, कस्यचिदात्मनो नास्ति दुःखमशेषं मुख्यसम्यग्दर्शनादिसद्भावादिति निश्चीयते, सकलदुःखाभावस्यात्यंतिकसुखस्वभावत्वात्तस्य च संसारनिवृत्तिफलत्वात् । यदा मोक्षः क्वचिद्विधीयते तदा कारणोपलब्धिरियं, क्वचिन्मोक्षोऽवश्यंभावी सम्यग्दर्शनादियोगात् । इति न कथमपि सूत्रमिदमयुक्त्यात्मकं, आगमात्मकत्वं तु निरूपितमेवं सत्यलं प्रपंचेन ॥

**बंधप्रत्ययपांचध्यसूत्रं न च विरुध्यते । प्रमादादित्रयस्यांतर्भावात्सामान्यतोऽयमे ॥ १०७ ॥**

त्रयात्मकमोक्षकारणसूत्रसामर्थ्यात्त्रयात्मकसंसारकारणसिद्धौ युक्त्यनुग्रहाभिधाने बंधप्रत्ययपंचविधत्वं 'मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतव' इति सूत्रनिर्दिष्टं न विरुध्यत एव प्रमादादित्रयस्य सामान्यतोऽचारित्रेऽन्तर्भावात् । विशेषतश्च त्रयस्याचारित्रेऽन्तर्भावने को दोष? इति चेत्;—

**विशेषतः पुनस्तस्याचारित्रांतःप्रवेशने । प्रमत्तसंयतादीनामष्टानां स्यादसंयमः ॥ १०८ ॥**
**तथा च सति सिद्धांतव्याघातः संयतत्वतः । मोहद्वादशकध्वंसात्तेषामयमहानितः ॥ १०९ ॥**

नन्वेवं सामान्यतोप्यचारित्रे प्रमादादित्रयस्यांतर्भावात्कथं सिद्धांतव्याघातो न स्यात्? प्रमत्तसंयतात्पूर्वेषामेव सामान्यतो विशेषतो वा तत्रांतर्भाववचनात्, प्रमत्तसंयतादीनां तु सयोगकेवल्यंतानामष्टानामपि मोहद्वादशकस्य क्षयोपशमादुपशमाद्वा सकलमोहस्य क्षयाद्वा संयतत्वप्रसिद्धेः, अन्यथा संयतासंयतत्वप्रसंगात्, सामान्यतोऽसंयमस्यापि तेषु भावादिति केचित् । तेप्येवं पर्यनुयोज्याः । कथं भवतां चतुःप्रत्ययो बंधः सिद्धांतविरुद्धो न भवेद्यत्र तस्य सूत्रितत्वादिति । प्रमादानां कषायेष्वंतर्भावादिति चेत्, सामान्यतो विशेषतो वा तत्र तेषामंतर्भावः स्यात्? न तावदुत्तरः पक्षो निद्रायाः प्रमादविशेषलक्षणायाः कषायेष्वंतर्भावयितुमशक्यत्वात् तस्या दर्शनावरणविशेषत्वात् । प्रमादसामान्यस्य

कषायेष्वंतर्भाव इति चेत् न, अप्रमत्तादीनां सूक्ष्मसांपरायिकांतानां प्रमत्तत्वप्रसंगात् । प्रमादैकदेशस्यैव कषायस्य निद्रायाश्च तत्र सद्भावात् सर्वप्रमादानामभावान्न प्रमत्तत्वप्रसक्तिरिति चेत्, तर्हि प्रमादादित्रयस्याचारित्रेंतर्भावेपि प्रमत्तसंयतादीनामष्टानामसंयतत्वं मा प्रापत् । तथाहि । पंचदशसु प्रमादव्यक्तिषु वर्तमानस्य प्रमादसामान्यस्य कषायेष्वंतर्भावेपि न सर्वा व्यक्तयस्तत्रांतर्भवंति विकथेंद्रियाणामप्रमत्तादिष्वभावात्, कषायप्रणयनिद्राणामेव संभवात्, इति न तेषां प्रमत्तत्वं । तथा मोहद्वादशकोदयकालभाविषु तत्क्षयोपशमकालभाविषु च प्रमादकषाययोगविशेषेषु वर्तमानस्य प्रमादकषाययोगसामान्यस्याचारित्रेऽतर्भावेपि न प्रमत्तादीनामसंयतत्वं । स्यान्मतं । प्रमादादिसामान्यस्यासंयतेषु संयतेषु च सद्भावादसंयमे संयमे चांतर्भावो युक्तो न पुनरसंयम एव, अन्यथा वृक्षत्वस्य न्यग्रोधेऽन्तर्व्यापिनोपि न्यग्रोधेष्वेवांतर्भावप्रसक्तेरिति । तदसत्, विवक्षितापरिज्ञानात् । प्रमादादित्रयमसंयमे च यस्यांतर्भावीति तस्य तन्नियतत्वात्तत्रांतर्भावो विवक्षितः, प्रमादानामप्रमत्तादिष्वभावात् कषायाणामकषायेष्वसंभवात् योगानामयोगेऽनवस्थानादिति तेषां संयमे नांतर्भावो विवक्षितः । प्रतिनियतविशेषापेक्षया तु तेषामसंयमेऽनंतर्भावात् पंचविध एव बंधहेतुः मोहद्वादशकक्षयोपशमसहभाविनां प्रमादकषाययोगानां विशिष्टानामसंयतेष्वभावात्कषायोपशमक्षयभाविनां च प्रमत्तकषायसंयतेष्वप्यभावात् सर्वेषां स्वानुरूपबंधहेतुत्वाप्रतीघातात् ॥

**नन्वेवं पंचधा बंधहेतौ सति विशेषतः । प्राप्तो निर्वाणमार्गोपि तावद्धा तन्निवर्तकः ॥११०॥**

यथा त्रिविधे बंधहेतौ त्रिविधो मार्गस्तथा पंचविधे बंधकारणे पंचविधो मोक्षहेतुर्वक्तव्यः, त्रिभिर्मोक्षकारणैः पंचविधबंधकारणस्य निवर्तयितुमशक्तेः । अन्यथा त्रयाणां पंचानां वा बंधहेतूनामेकेनैव मोक्षहेतुना निवर्तनसिद्धेर्मोक्षकारणत्रैविध्यवचनमप्ययुक्तिकमनुषज्येतेति कश्चित् ॥

**तदेतदनुकूलं नः सामर्थ्यात् समुपागतम् । बंधप्रत्ययसत्रस्य पांचध्यं मोक्षवर्त्मनः ॥ १११ ॥**

सम्यग्दर्शनविरत्यप्रमादाकषायायोगा मोक्षहेतवः इति पंचविधबंधहेतूपदेशसामर्थ्याल्लभ्यत एव मोक्षहेतोः पंचविधत्वं, ततो न तदापादनं प्रतिकूलमस्माकं । सम्यग्ज्ञानमोक्षहेतोरसंग्रहः स्यादेवमिति चेन्न, तस्य सद्दर्शनेंतर्भावात् मिथ्याज्ञानस्य मिथ्यादर्शनेन्तर्भाववत् । तस्य तत्रानंतर्भावे वा षोढा मोक्षकारणं बंधकारणं चाभिमतमेव विरोधाभावादित्युच्यते;—

**सम्यग्बोधस्य सद्दृष्टावंतर्भावात्स्वदर्शने । मिथ्याज्ञानवदेवास्य भेदे षोढोभयं मतम् ॥११२॥**

तत्र कुतो भवन् भवेत्यंतं बंधः केन निवर्त्यते, येन पंचविधो मोक्षमार्गः स्यादित्यधीयते;—

**तत्र मिथ्यादृशो बंधः सम्यग्दृष्ट्या निवर्त्यते । कुचारित्राद्विरत्यैव प्रमादादप्रमादतः ॥ ११३ ॥**
**कषायादकषायेण योगाच्चायोगतः क्रमात् । तेनायोगगुणानुमुक्तेः पूर्वं सिद्धा जिनस्थितिः ॥११४**

मिथ्यादर्शनाद्भवन् बंधः दर्शनेन निवर्त्यते तस्य तन्निदानविरोधित्वात् । मिथ्याज्ञानाद्भवन् बंधः सत्यज्ञानेन निवर्त्यत इत्यप्यनेनोक्तं । मिथ्याचारित्राद्भवन्सच्चारित्रेण, प्रमादाद्भवन्नप्रमादेन, कषायाद्भवन्नकषायेण, योगाद्भवन्नयोगेन स निवर्त्यत इत्ययोगगुणानंतरं मोक्षस्याविर्भावात्सयोगायोगगुणस्थानयोर्भगवदर्हतः स्थितिरपि प्रसिद्धा भवति ॥

**सामग्री यावती यस्य जनिका संप्रतीयते । तावती नातिवर्त्यैव मोक्षस्यापीति केचन ॥११५॥**

यस्य यावती सामग्री जनिका दृष्टा तस्य तावत्येव प्रत्येया, यथा यवबीजादिसामग्री यवांकुरस्य । तथा सम्यग्ज्ञानादिसामग्री मोक्षस्य जनिका संप्रतीयते ततो नैव सातिवर्तनीया, मिथ्याज्ञानादिसामग्री

च बंधस्य चानेकेति मोक्षबंधकारणसंख्यानियमः, विपर्ययादेव बंधो ज्ञानादेव मोक्ष इति नेष्यत एव, प्रसस्यापि संचितकर्मफलोपभोगादेरभीष्टत्वादिति केचित् ॥

**एतेषामप्यनेकांताश्रयणे श्रेयसी मतिः । नान्यथा सर्वथैकांते बंधहेत्वाद्ययोगतः ॥ ११६ ॥**
**नित्यत्वैकांतपक्षे हि परिणामनिवृत्तितः । नात्मा बंधादिहेतुः स्यात् क्षणप्रक्षयिचित्तवत् ११७**

परिणामस्याभावे नात्मनि क्रमयौगपद्ये तयोस्तेन व्याप्तत्वात् । पूर्वापरस्वभावत्यागोपादानस्थितिलक्षणो हि परिणामो न पूर्वोत्तरक्षणविनाशोत्पादमात्रं स्थितिमात्रं वा प्रतीत्यभावात् । स च क्रमयौगपद्ययोर्व्यापकतया संप्रतीयते । बहिरंतश्च बाधकाभावान्नापारमार्थिको यतः स्वयं निवर्तमानः क्रमयौगपद्ये न निवर्तयेत् । ते च निवर्तमाने अर्थक्रियासामान्यं निवर्तयतस्ताभ्यां तस्य व्याप्तत्वात् । अर्थक्रियासामान्यं तु यत्र निरतिशयात्मनि न संभवति तत्र बंधमोक्षाद्यर्थक्रियाविशेषः कथं संभाव्यते, येनायं तदुपादानहेतुः स्यात्, निरन्वयक्षणिकचित्तस्यापि तदुपादानत्वप्रसंगात् ॥

**न चात्मनो गुणो भिन्नस्तदसंबंधतः सदा । तत्संबंधे कदाचित्तु तस्य नैकांतनित्यता ॥११८॥**
**गुणासंबंधरूपेण नाशाद्गुणयुतात्मना । प्रादुर्भावाच्चिदादित्वस्थानाञ्च्यात्मत्वसिद्धितः ॥११९॥**

नापरिणाम्यात्मा तस्येच्छाद्वेषादिपरिणामेनात्यंतभिन्नेन परिणामित्वात्, धर्माधर्मोत्पत्त्याख्या बंधसमवायिकारणत्वोपपत्तेरिति न मंतव्यं, स्वतोऽत्यंतभिन्नेन परिणामेन कस्यचित्परिणामित्वासंभवात्, अन्यथा रूपादिपरिणामेनात्माकाशादेः परिणामित्वप्रसंगात् । ततोऽपरिणाम्येवात्मेति न बंधादेः समवायिकारणं, नाप्यात्मांतःकरणसंयोगोऽसमवायिकारणं, प्रागदृष्टं वा तद्गुणो निमित्तकारणं, तस्य ततो भिन्नस्य सर्वदा तेनासंबंधात् । कदाचित्तत्संबंधे वा नित्यैकांतहानिप्रसंगात्, स्वगुणासंबंधरूपेण नाशाद्गुणसंबंधरूपेणोत्पादाच्चेतनत्वादिना स्थितेस्तत्त्रयात्मकत्वसिद्धेः । एतेनात्मनो भिन्नो गुणः सत्त्वरजस्तमोरूपो बंधादिहेतुरित्येतत्प्रतिव्यूढं, तेन तस्य शश्वदसंबंधेन तद्धेतुत्वानुपपत्तेः, कदाचित्संबंधे त्र्यात्मकत्वसिद्धेरविशेषात् ॥

**यद्विनश्यति तद्रूपं प्रादुर्भवति तत्र यत् । तदेवानित्यमात्मा तु तद्भिन्नो नित्य इत्यपि ॥ १२० ॥**
**न युक्तं नश्वरोत्पित्सुरूपाधिकरणात्मना । कादाचित्कत्वतस्तस्य नित्यत्वैकांतहानितः ॥ १२१ ॥**

कदाचिन्नश्वरस्वभावाधिकरणं कदाचिदुत्पित्सुधर्माधिकरणमात्मा नित्यैकांतरूप इति ब्रुवन्न स्वस्थः, कादाचित्कानेकधर्माश्रयत्वस्यानित्यत्वात् ॥

**नानाधर्माश्रयत्वस्य गौणत्वादात्मनः सदा । स्थास्नुतेति न साधीयः सत्यासत्यात्मतामिदः १२२**

सत्यासत्यस्वभावत्वाभ्यामात्मनो भेदः संभवतीत्ययुक्तं, विरुद्धधर्माध्यासलक्षणत्वाद्भेदस्यान्यथात्मानात्मनोरपि भेदाभावप्रसंगात् ॥

**असत्यात्मकतासत्त्वे सत्त्वे सत्यात्मतात्मनः । सिद्धं सदसदात्मत्वमन्यथा वस्तुताक्षतिः ॥१२३॥**

नानाधर्माश्रयत्वं गौणमसदेव मुख्यं स्थायि तु सदिति तत्त्वतो जीवस्यैकरूपत्वमयुक्तं सदसत्स्वभावत्वाभ्यामनेकरूपत्वसिद्धेः । यदि पुनरात्मनो मुख्यस्वभावेनेवोपचरितस्वभावेनापि सत्त्वमुररीक्रियते तदा तस्याशेषपररूपेण सत्त्वप्रसक्तेरात्मत्वेनैव व्यवस्थानुपपत्तिः सत्तामात्रवत्सकलार्थस्वभावत्वात् । तस्योपचरितस्वभावेनेव मुख्यस्वभावेनाप्यसत्त्वे कथमवस्तुत्वं न स्यात् सकलस्वभावशून्यत्वात् खरशृंगवत् । ये त्वाहुः उपचरिता एवात्मनः स्वभावभेदा न पुनर्वास्तवास्तेषां ततो भेदे तत्स्वभावत्वानुपपत्तेः । अर्थांतरस्वभावत्वेन संबंधात्तत्स्वभावत्वेप्येकेन स्वभावेन तेन तस्य तैः संबंधे सर्वेषामेकरूपतापत्तिः, नाना-

स्वभावैः संबंधेऽनवस्थानं तेषामप्यन्यैः स्वभावैः संबंधात् । मुख्यस्वभावानामुपचरितैः स्वभावैस्तावदिष्टा- त्मनोऽसंबंधे नानाकार्यकारणं नानाप्रतिभासविषयत्वं चात्मनः किमुपचरितैरेव नानास्वभावैर्न स्यात्, येन मुख्यस्वभावकल्पनं सफलमनुमन्येमहि । नानास्वभावानामात्मनोनर्थांतरत्वे तु स्वभावा एव नात्मा कश्चि- देको भिन्नेभ्योनर्थांतरस्यैकत्वायोगात्, आत्मैव वा न केचित्स्वभावाः स्युः, यतो नोपचरितस्वभावव्यवस्था- त्मनो न भवेत् । कथंचिद्भेदाभेदपक्षेपि स्वभावानामात्मनोनवस्थानं तस्य निवारयितुमशक्तेः । परमार्थतः कस्यचिदेकस्य नानास्वभावस्य मेचकज्ञानस्य ग्राह्याकारवेदनस्य वा सामान्यविशेषादेर्वा प्रमाणबलाद- व्यवस्थानात्तेन व्यभिचारासंभवादिति तेप्यनेनैव प्रतिक्षिप्ताः, स्वयमिष्टानिष्टस्वभावाभ्यां सदसत्त्वस्वभाव- सिद्धेरप्रतिबंधात् । न च कस्यचिदुपचरिते सदसत्त्वे तत्त्वतोनुभयत्वस्य प्रसक्तेः, तच्चायुक्तं, सर्वथा व्याघातात् । कथंचिदनुभयत्वं तु वस्तुनो नोभयस्वभावतां विरुणद्धि; कथं वानुभयरूपतया तत्त्वं तदन्य- रूपतया चातत्त्वमिति ब्रुवाणः कस्यचिदुभयरूपतां प्रतिक्षिपेत् । न सन्नाप्यसन्नोभयं नानुभयमन्यद्वा वस्तु; किं तर्हि? वस्त्वेव सकलोपाधिरहितत्वात्तथा वक्तुमशक्तेरवाच्यमेवेति चेत्, कथं वस्त्वित्युच्यते? सकलोपाधिरहितमवाच्यं वा? वस्त्वादिशब्दानामपि तत्राप्रवृत्तेः । सत्यामपि वचनागोचरतायामात्मादित- त्वस्योपलभ्यताभ्युपेया; सा च स्वस्वरूपेणास्ति न पररूपेणेति सदसदात्मकत्वमायातं तस्य तथोपलभ्य- त्वात् । न च सदसत्त्वादिधर्मैरप्यनुपलभ्यं वस्त्विति शक्यं प्रत्येतुं खरशृंगादेरपि वस्तुत्वप्रसंगात् । धर्म- धर्मिरूपतयानुपलभ्यं स्वरूपेणोपलभ्यं वस्त्विति चेत्, यथोपलभ्यं तथा सत् यथा चानुपलभ्यं तथा तदसदिति । तदेवं सदसदात्मकत्वं सुदूरमप्यनुसृत्य तस्य प्रतिक्षेप्तुमशक्तेः । ततः सदसत्स्वभावौ पार- मार्थिकौ क्वचिदिच्छताऽनंतस्वभावाः प्रतीयमानास्तथात्मनोभ्युपगंतव्याः । तेषां च क्रमतो विनाशोत्पादौ तस्यैवेति सिद्धं त्र्यात्मकत्वमात्मनो गुणासंबंधेतररूपाभ्यां नाशोत्पादव्यवस्थानादात्मत्वेन ध्रौव्यस्वसिद्धेः । ततोपि बिभ्यता नात्मनो भिन्नेन गुणेन संबंधोभिमंतव्यो न वासंबद्धस्तस्यैव गुणो व्यवस्थापयितुं शक्यो यतः संबंधादिति हेतुः स्यादिति सूक्तं नित्यैकांते नात्मा हि बंधमोक्षादिकार्यस्य कारणमित्यनवस्थानात् ॥

**क्षणक्षयेपि नैवास्ति कार्यकारणतांजसा । कस्यचित्कचिदत्यंताव्यापारादचलात्मवत् ॥ १२४ ॥**

क्षणिकाः सर्वे संस्काराः स्थिराणां कुतः क्रियेति निर्व्यापारतायां क्षणक्षयैकांते भूतिरेव क्रिया- कारकव्यवहारभागिति ब्रुवाणः कथमचलात्मनि निर्व्यापारेपि सर्वथा भूतिरेव क्रियाकारकव्यवहार- मनुसरतीति प्रतिक्षिपेत् ॥

**अन्वयव्यतिरेकाद्यो यस्य दृष्टोनुवर्तकः । स तद्धेतुरिति न्यायस्तदेकांते न संभवी ॥ १२५ ॥**

नित्यैकांते नास्ति कार्यकारणभावोऽन्वयव्यतिरेकाभावात् । न हि कस्यचिन्नित्यस्य सद्भावोऽन्वयः सर्वनित्यान्वयप्रसंगात्, प्रकृतनित्यसद्भाव इव तदन्यनित्यसद्भावेपि भावात्, सर्वथाविशेषाभावात् । नापि व्यतिरेकः शाश्वतस्य तदसंभवात् । देशव्यतिरेकः संभवतीति चेत् न, तस्य व्यतिरेकत्वेन नियमयितु- मशक्तेः, प्रकृतदेशे विवक्षितासर्वगतनित्यव्यतिरेकवदविवक्षितसर्वगतनित्यव्यतिरेकस्यापि सिद्धेः । तथापि कस्यचिदन्वयव्यतिरेकसिद्धौ सर्वनित्यान्वयव्यतिरेकसिद्धिप्रसंगात् किं कस्य कार्यं स्यात्? ततो- ऽचलात्मनोन्वयव्यतिरेकौ निवर्तमानौ स्वव्याप्यां कार्यकारणतां निवर्तयतः । तदुक्तं—"अन्वयव्यति- रेकाद्यो यस्य दृष्टोनुवर्तकः । स भावस्तस्य तद्धेतुरतो भिन्ना न संभवा ॥" इति । न चायं न्यायस्तत्र संभवतीति नित्ये यदि कार्यकारणताप्रतिक्षेपस्तदा क्षणिकेपि तदसंभवस्याविशेषात् ॥

**तत्र हेतावसत्येव कार्योत्पादेन्वयः कुतः । व्यतिरेकश्च संवृत्या तौ चेत् किं पारमार्थिकम्॥१२६॥**

न हि क्षणक्षयैकांते सत्येव कारणे कार्यस्योत्पादः संभवति कार्यकारणयोरेककालानुषंगात्, कारणस्यैकस्मिन् क्षणे जातस्य कार्यकालेपि सत्त्वे क्षणभंगभंगप्रसंगाच्च । सर्वथा तु विनष्टे कारणे कार्यस्योत्पादे कथमन्वयो नाम चिरतरविनष्टान्वयवत् । तत एव व्यतिरेकाभावः कारणाभावे कार्यस्याभावाभावात् । स्यान्मतं । स्वकाले सति कारणे कार्यस्य स्वसमये प्रादुर्भावोऽन्वयो असति वाऽभवनं व्यतिरेको न पुनः कारणकाले तस्य भवनमन्वयोऽन्यदात्वभवनं व्यतिरेकः । सर्वथाप्यभिन्नदेशयोः कार्यकारणभावोपगमे कुतोग्निधूमादीनां कार्यकारणभावो भिन्नदेशतयोपलंभात् । भिन्नदेशयोस्तु कार्यकारणभावे भिन्नकालयोः स कथं प्रतिक्षिप्यते येनान्वयव्यतिरेकौ तादृशौ न स्यातां । कारणत्वेनाभिमतेप्यर्थे स्वकाले सति कस्यचित्स्वकाले भवनमसति वाऽभवनमन्वयो व्यतिरेकश्च स्यादित्यपि न मंतव्यमन्यत्र समानत्वात् । कारणत्वेनानभिमतेर्थे स्वदेशे सति सर्वस्य स्वदेशे भवनमन्वयो असति वाऽभवनं व्यतिरेक इत्यपि वक्तुं शक्यत्वात् । स्वयोग्यताविशेषात्कयोश्चिदेवार्थयोर्भिन्नदेशयोरन्वयव्यतिरेकनियमात्कार्यकारणनियमपरिकल्पनायां भिन्नकालयोरपि स किं न भवेत्तत एव सर्वथा विशेषाभावात् । तदेतदप्यविचारितरम्यं । तन्मते योग्यताप्रतिनियमस्य विचार्यमाणस्यायोगात् । योग्यता हि कारणस्य कार्योत्पादनशक्तिः, कार्यस्य च कारणजन्यत्वशक्तिस्तस्याः प्रतिनियमः, शालिबीजांकुरयोश्च भिन्नकालत्वाविशेषेपि शालिबीजस्यैव शाल्यंकुरजनने शक्तिर्न यवबीजस्य, तस्य यवांकुरजनने न शालिबीजस्येति कथ्यते । तत्र कुतस्तच्छक्तेस्तादृशः प्रतिनियमः? स्वभावत इति चेत् न, अप्रत्यक्षत्वात् । परोक्षस्य शक्तिप्रतिनियमस्य पर्यनुयुज्यमानतायां स्वभावैरुत्तरस्यासंभवात्, अन्यथा सर्वस्य विजयित्वप्रसंगात् । प्रत्यक्षप्रतीत एव चार्थे पर्यनुयोगे स्वभावैरुत्तरस्य स्वयमभिधानात् । कथमन्यथेदं शोभेत,—"यत्किंचिदात्माभिमतं विधाय निरुत्तरस्तत्र कृतः परेण । वस्तुस्वभावैरिति वाच्यमित्थं तदुत्तरं स्याद्विजयी समस्तः । १ । प्रत्यक्षेण प्रतीतेर्थे यदि पर्यनुयुज्यते । स्वभावैरुत्तरं वाच्यं दृष्टे कानुपपन्नता । २ ।" इति । शालिबीजादेः शाल्यंकुरादिकार्यस्य दर्शनात्तज्जननशक्तिरनुमीयत इति चेत्, तस्य तत्कार्यत्वे प्रसिद्धेऽप्रसिद्धेपि वा? प्रथमपक्षेपि(?) कुतः शाल्यंकुरादेः शालिबीजादिकार्यत्वं सिद्धं? न तावदध्यक्षात्तत्र तस्याप्रतिभासनात्, अन्यथा सर्वस्य तथा निश्चयप्रसंगात् । तद्भावभावार्लिगात्तत्सिद्धिरिति चेन्न, साध्यसमत्वात् । को हि साध्यमेव साधनत्वेनाभिदधातीत्यन्यत्रास्वस्थात् । तद्भावभाव एव हि तत्कार्यत्वं न ततोन्यत् । शालिबीजादिकारणकत्वाच्छाल्यंकुरादेस्तत्कार्यत्वं सिद्धमित्यपि तादृगेव । परस्पराश्रितं चैतत्, सिद्धे शालिबीजादिकारणकत्वे शाल्यंकुरादेस्तत्कार्यत्वसिद्धिस्तत्सिद्धौ च शालिबीजादिकारणत्वसिद्धिरिति । तदनुमानात् प्रत्यक्षप्रतीते तस्य तत्कार्यत्वे समारोपः कस्यचिद्व्यवच्छिद्यत इत्यप्यनेनापास्तं, स्वयमसिद्धात्साधनात् तद्व्यवच्छेदासंभवात् । तदनंतरं तस्योपलंभात्तत्कार्यत्वसिद्धिरित्यपि फल्गुप्रायं, शाल्यंकुरादेः पूर्वाखिलार्थकार्यत्वप्रसंगात् । शालिबीजाभावे तदनंतरमनुपलंभान्न तत्कार्यत्वमिति चेत्, सार्द्रेंधनाभावेंगाराद्यवस्थाग्नेरनंतरं धूमस्यानुपलब्धेरग्निकार्यत्वं माभूत् । सामग्रीकार्यत्वाद्धूमस्य नाग्निमात्रकार्यत्वमिति चेत्, तर्हि सकलार्थसहितशालिबीजादिसामग्रीकार्यत्वं शाल्यंकुरादेरस्तु विशेषाभावात् । तथा च न किंचित्कस्यचिदकारणमकार्यं वेति सर्वं सर्वस्मादनुमीयेतेति वा कुतश्चित् किंचिदिति नानुमानात्कस्यचिच्छक्तिप्रतिनियमसिद्धिर्यतोन्वयव्यतिरेकप्रतिनियमकार्यकारणभावे प्रतिनियमनिबंधनः सिध्येत् । तत एव संवृत्यान्वयव्यतिरेकौ यथादर्शनं कारणस्य कार्येणानुविधीयते न तु यथातत्त्वमिति-

चेत्, कथमेवं कार्यकारणभावः पारमार्थिकः? सोपि संवृत्येति चेत्, कुतोर्थक्रियाकारित्वं वास्तवं? तदपि सांवृतमेवेति चेत्, कथं तल्लक्षणवस्तुतत्त्वमिति न किंचित्क्षणक्षयैकांतवादिनः शाश्वतैकांतवादिन इव पारमार्थिकं सिध्येत् ॥

तथा सति न बंधादिहेतुसिद्धिः कथंचन । सत्यानेकांतवादेन विना क्वचिदिति स्थितम् ॥१२७॥

न सत्योऽनेकांतवादः प्रतीतिसद्भावेपि तस्य विरोधवैयधिकरण्यादिदोषोपद्रुतत्वादिति नानुमंतव्यं, सर्वथैकांत एव विरोधादिदोषावतारात्, सत्येनानेकांतवादेन विना बंधादिहेतूनां क्वचिदसिद्धेः ॥

सत्यमद्वयमेवेदं स्वसंवेदनमित्यसत् । तद्व्यवस्थापकाभावात्पुरुषाद्वैततत्त्ववत् ॥ १२८ ॥

न हि कुतश्चित्प्रमाणादद्वैतं संवेदनं व्यवतिष्ठते ब्रह्माद्वैतवत् प्रमाणप्रमेययोर्द्वैतप्रसंगात् । प्रत्यक्षतस्तद्व्यवस्थापने नाद्वैतविरोध इति चेन्न, अन्यतः प्रत्यक्षस्य भेदप्रसिद्धेः । अनेनानुमानादुपनिषद्वाक्याद्वा तद्व्यवस्थापने द्वैतप्रसंगः कथितः ॥

न च स्वतः स्थितिस्तस्य ग्राह्यग्राहकतेक्षणात् । सर्वदा नापि तद्भ्रांतिः सत्यसंवित्त्यसंभवात् १२९

न संवेदनाद्वैतं प्रत्यक्षांतरादनुमानाद्वा स्थाप्यते स्वतस्तस्य स्थितेरिति न साधीयः, सर्वदा ग्राह्यग्राहकाकाराक्रांतस्य संवेदनस्यानुभवनात्, स्वरूपस्य स्वतो गतेरिति वक्तुमशक्तेः । संविदि ग्राह्यग्राहकाकारस्यानुभवनं भ्रांतमिति न वाच्यं, तद्रहितस्य सत्यस्य संवित्त्यभावात् । सर्वदावभासमानस्य सर्वत्र सर्वेषां भ्रांतत्वायोगात् ॥

यथैवारामविभ्रांतौ पुरुषाद्वैतसत्यता । तत्सत्यत्वे च तद्भ्रांतिरित्यन्योन्यसमाश्रयः ॥ १३० ॥
तथा वेद्यादिविभ्रांतौ वेदकाद्वैतसत्यता । तत्सत्यत्वे च तद्भ्रांतिरित्यन्योन्यसमाश्रयः ॥ १३१ ॥

कथमयं पुरुषाद्वैतं निरस्य ज्ञानाद्वैतं व्यवस्थापयेत् । स्यान्मतं । न वेद्याद्याकारस्य भ्रांतता संविन्मात्रस्य सत्यत्वात्साध्यते किं त्वनुमानात्ततो नेतरेतराश्रयः इति । तदयुक्तं, लिंगाभावात् ।

विवादगोचरो वेद्याद्याकारो भ्रांतभासजः । अथ स्वप्नादिपर्यायाकारवद्यदि वृत्तयः ॥ १३२ ॥
विभ्रांत्या भेदमापन्नो विच्छेदो विभ्रमात्मकः । विच्छेदत्वाद्यथा स्वप्नविच्छेद इति सिध्यतु ॥१३३

न हि स्वप्नादिदशायां ग्राह्याकारत्वं भ्रांतत्वेन व्याप्तं दृष्टं न पुनर्विच्छेदत्वमिति शक्यं वक्तुं प्रतीतिविरोधात् । तदुभयस्य भ्रांतत्वसिद्धौ किमनिष्टमिति चेत्?

नित्यं सर्वगतं ब्रह्म निराकारमनंशकम् । कालदेशादिविच्छेदभ्रांतत्वेऽकलयद्द्वयम् ॥ १३४ ॥

कालविच्छेदस्य भ्रांतत्वे नित्यं देशविच्छेदस्य सर्वगतमाकारस्य निराकारमंशविच्छेदस्य निरंशं ब्रह्म सिद्धं क्षणिकाद्वैतं प्रतिक्षिपतीति कथमनिष्टं सौगतस्य न स्यात् ॥

नित्यादिरूपसंवित्तेरभावाच्चदसंभवे । परमार्थात्मतावित्तेरभावादेतदप्यसत् ॥ १३५ ॥

न हि नित्यत्वादिस्वभावे परमार्थात्मादिस्वभावे वा संवित्त्यभावं प्रति विशेषोस्ति यतो ब्रह्मणो सत्यत्वे क्षणिकत्वे संवेदनाद्वैतस्यासत्यत्वं न सिध्येत् ॥

न नित्यं नाप्यनित्यत्वं सर्वगत्वमसर्वगम् । नैकं नानेकमथवा स्वसंवेदनमेव तद् ॥ १३६ ॥
समस्तं तद्वचोन्यस्य तत्राद्वैतं कथंचन । स्वेष्टेतरव्यवस्थानप्रतिक्षेपाप्रसिद्धितः ॥ १३७ ॥

स्वेष्टस्य संवेदनाद्वयस्य व्यवस्थापनमनिष्टस्य भेदस्य पुरुषाद्वैतादेर्वा प्रतिक्षेपो यतोस्य न कथंचनापि प्रसिध्यति, ततो नाद्वैतं तत्त्वं बंधहेत्वादिशून्यमात्माद्युक्तमनिष्टतत्त्ववत् ॥

मन्यमानादिरविचेयं स्वेष्टेतरविभागकृत् । सत्येतरेव दुःपारा तामाश्रित्य परीक्षणा ॥ १३८ ॥
सर्वस्य तत्त्वनिर्णीतेः पूर्वं किं वान्यथा स्थितिः । एष प्रलाप एवास्य शून्योपप्लववादिवत् ॥१३९॥
किंचिन्निर्णीतमाश्रित्य विचारोन्यत्र वर्तते । सर्वविप्रतिपत्तौ हि क्वचिन्नास्ति विचारणा ॥१४०॥

न हि सर्वं सर्वस्यानिर्णीतमेव विचारात्पूर्वमिति स्वयं निश्चिन्वन् किंचिन्निर्णीतमिष्टं प्रतिक्षेप्तुमर्हति विरोधात् ॥

तत्रेष्टं यस्य निर्णीतं प्रमाणं तस्य वस्तुतः । तदंतरेण निर्णीतेस्तत्रायोगादनिष्टवत् ॥ १४१ ॥

यथानिष्टे प्रमाणं वास्तवमंतरेण निर्णीतिर्नोपपद्यते तथा स्वयमिष्टेपीति । तत्र निर्णीतिमनुमन्यमानेन तदनुमंतव्यमेव ॥

तत्स्वसंवेदनं वावश्यमुपेयेत केनचित् । संवादकत्वतस्तद्वदक्षलिंगादिवेदनम् ॥ १४२ ॥
प्रमाणान्निश्चितादेव सर्वत्रास्तु परीक्षणम् । स्वेष्टेतरविभागाय विद्या विद्योपगामिनाम् ॥ १४३ ॥

स्वसंवेदनमपि न स्वेष्टं निर्णीतं येन तस्य संवादकत्वात्तत्त्वतः प्रमाणत्वे तद्वदक्षलिंगादिजनितवेदनस्य प्रमाणत्वसिद्धेर्निश्चितादेव प्रमाणात् सर्वत्र परीक्षणं स्वेष्टेतरविभागाय विद्या प्रवर्तेत तत्त्वोपप्लववादिनः, परपर्यनुयोगमात्रपरत्वादिति कश्चित् । सोपि यत्किंचनभाषी, परपर्यनुयोगमात्रस्याप्ययोगात् । तथाहि—

यस्यापीष्टं न निर्णीतं क्वापि तस्य न संशयः । तदभावे न युज्यंते परपर्यनुयुक्तयः ॥ १४४ ॥

कथमव्यभिचारित्वं वेदनस्य निश्चीयते? किमदुष्टकारकसंदोहोत्पाद्यत्वेन बाधारहितत्वेन प्रवृत्तिसामर्थ्येनान्यथा वेति प्रमाणतत्त्वे पर्यनुयोगाः संशयपूर्वकास्तदभावे तदसंभवात्, किमयं स्थाणुः किं वा पुरुष इत्यादेः पर्यनुयोगवत् । संशयश्च तत्र कदाचित्कचिन्निर्णयपूर्वकः स्थाण्वादिसंशयवत् । तत्र यस्य क्वचित्कदाचिददुष्टकारकसंदोहोत्पाद्यत्वादिना प्रमाणत्वनिर्णयो नास्त्येव तस्य कथं तत्पूर्वकः संशयः, तदभावे कुतः पर्यनुयोगाः प्रवर्तेरन्निति न परपर्यनुयोगपराणि बृहस्पतेः सूत्राणि स्युः ॥

ओमिति ब्रुवतः सिद्धं सर्वं सर्वस्य वांछितम् । क्वचित्पर्यनुयोगस्यासंभवात्तन्निराकुलम् ॥ १४५ ॥

ततो न शून्यवादवत् तत्त्वोपप्लववादो वादांतरव्युदासेन सिद्ध्येत् तथानेकांततत्त्वस्यैव सिद्धेः ॥

शून्योपप्लववादेपि नानेकांताद्विना स्थितिः । स्वयं क्वचिदशून्यस्य स्वीकृतेरनुपप्लुते ॥ १४६ ॥
शून्यतायां हि शून्यत्वं जातुचिन्नोपगम्यते । तथोपप्लवनं तत्त्वोपप्लवेपीतरत्र तत् ॥ १४७ ॥

शून्यमपि हि स्वस्वभावेन यदि शून्यं तदा कथमशून्यवादो न भवेत् । न तस्याशून्यत्वेऽनेकांतादेव शून्यवादप्रवृत्तिः, शून्यस्य निःस्वभावत्वात् । न स्वभावेनाशून्यता नापि परस्वभावेन शून्यता, खरविषाणादेरिव तस्य सर्वथा निर्णेतुमशक्तेः कुतोनेकांतसिद्धिरिति चेत्, तर्हि तत्त्वोपप्लवमात्रमेतदायातं शून्यतत्त्वस्याप्यप्रतिष्ठानात् । न तदपि सिद्ध्यत्यनेकांतमंतरेण तत्त्वोपप्लवमात्रेनुपप्लवसिद्धेः । तत्राप्युपप्लवे कथमखिलं तत्त्वमनुपप्लुतं न भवेत्? ननूपप्लवमात्रेऽनुपप्लव इत्ययुक्तं, व्याघातादभावे भाववत् । तथोपप्लवो न तत्र साधीयांस्तत एवाभावेऽभाववत् । ततो यथा न सन्नाप्यसन्नभावः सर्वथा व्यवस्थापयितुमशक्तेः किं तर्ह्यभाव एव, तथा तत्त्वोपप्लवोपि विचारात् कुतश्चिद्यदि सिद्धस्तदा न तत्र केनचिद्रूपेणोपप्लवो नाप्यनुपप्लवो व्याघातात्, किं तर्ह्युपप्लव एवेति नानेकांतावतार इति चेत्, तर्हि प्रमाणतत्त्वं नादुष्टकारकसंदोहोत्पाद्यत्वेन नापि बाधारहितत्वादिभिः स्वभावैर्व्यवस्थाप्यते व्याघातात्, किं तु प्रमाणं प्रमाणमेव प्रमाणत्वेनैव तस्य व्यवस्थानात् । न हि पृथिवी किमग्नित्वेन व्यवस्थाप्यते जलत्वेन वायुत्वेन वेति पर्यनुयोगो युक्तः, पृथिवीत्वेनैव तस्याः प्रसिद्धत्वात् । प्रमाणस्वभावा एवादुष्टकारकसंदोहोत्पाद्यत्वादय-

**बाध्यबाधकभावस्याप्यभावेनिष्टसाधनं । स्वाभ्युपगमतः सिद्धमित्यसावपि तात्त्विकम् ॥ ८ ॥**

न हि बाध्यबाधकभावादेरनिष्टस्याबाधनं स्वतः सर्वेषां प्रतिभासते, विप्रतिपत्त्यभावप्रसंगात् । संविन्मात्रप्रतिभासनमेव तत्प्रतिभासनमिति चेत् न, तस्यासिद्धत्वात् । परतो बाधकादनिष्टस्य बाधनमिति चेत् सिद्धस्तर्हि बाध्यबाधकभावः इति तन्निराकरणप्रकरणसंबंधं प्रलापमात्रं । संवृत्त्या अनिष्टस्य बाधनाद-दोष इति चेत् तर्हि तत्त्वतो न वा बाध्यबाधकभावस्य बाधनमिति दोष एव । पराभ्युपगमात् तद्बाधन-मिति चेत् तस्य सांवृतत्वे दोषस्य तदवस्थत्वात् । पारमार्थिकत्वेपि तदनतिक्रम एवेति सर्वथा बाध्य-बाधकभावाभावे तत्त्वतो नानिष्टबाधनमनुपपन्नम् ॥

**कार्यकारणभावस्याभावे संविदकारणा । सती नित्यान्यथा व्योमारविंदादिवदप्रमा ॥ ९ ॥**
**सर्वथैवाफलत्वाच्च तस्याः सिध्येन्न वस्तुता । सफलत्वे पुनः सिद्धा कार्यकारणतांजसा ॥१०॥**

न संविदकारणा नापि सकारणा नाफला नापि सफला यतोऽयं दोषः । किं तर्हि ? संवित्संविदेवेति चेत्, नैवं परमब्रह्मसिद्धेः संविन्मात्रस्य सर्वथाप्यसिद्धेः समर्थनात् ॥

**वाच्यवाचकताप्येवमिष्टानिष्टात्मनोः स्वयम् । साधनादूषणाच्चापि वाग्भिः सिद्धान्यथा न तत् ११**

स्वयमिष्टानिष्टयोः साधनदूषणे परं प्रति वाग्भिः प्रकाशयित्वातीत्य वाचकभावं निराकरोति कथं स्वस्थः । नो चेत् कथमिष्टानिष्टयोः साधनदूषणमिति चिंत्यं । संवृत्त्या चेत् न तया तस्योक्तस्याप्य-नुक्तसमत्वात् । स्वप्नादिवत्संवृत्तेर्मृषारूपत्वात् । तदमृषारूपत्वे परमार्थस्य संवृतिरिति नामकरणमात्रं स्यात्ततो न ग्राह्यग्राहकभावादिशून्यं संवित्तिमात्रमपि शून्यसाधनाभावात् सर्वशून्यतावत् ॥

**तत्सत्प्ररूपणं युक्तमादावेव विपश्चिताम् । कान्यथा परधर्माणां निरूपणमनाकुलम् ॥ १२ ॥**

सत्प्ररूपणाभावेऽर्थाना धर्मिणामसत्त्वात् क्व संख्यादिधर्माणां प्ररूपणं सुनिश्चितं प्रवर्तेत शशविषाणा-दिवत् । कल्पनारोपितार्थेषु तत्प्ररूपणमिति चेत् न तेष्वपि कल्पनारोपितेन रूपेणासत्सु न तन्निरूपणं युक्तमतिप्रसंगात् । सत्सु तन्निरूपणे सत्प्ररूपणमेवादौ प्रेक्षावतां युक्तमिति निराकुलम् ॥

**निर्देशवचनादेतद्भिन्नं द्रव्यादिगोचरात् । सन्मात्रविषयीकुर्वदर्थानस्तित्वसाधनम् ॥ १३ ॥**

निर्देशवचनात्सत्त्वसिद्धेः सद्वचनं पुनरुक्तमित्यसारं, निर्देशवचनस्य द्रव्यादिविषयत्वात् सद्वचनस्य सन्मात्रविषयत्वात् भिन्नविषयत्वेन ततस्तस्य पुनरुक्तत्वासिद्धेः । न हि यथा जीवादयोऽसाधारणधर्माधाराः प्रतिपक्षव्यवच्छेदेन निर्देशवचनस्य विषयास्तथा सद्वचनस्य तेन सर्वद्रव्यपर्यायसाधनेन सत्त्वस्याभि-धानात् । तस्यापि स्वप्रतिपक्षासत्त्वव्यवच्छेदेन प्रवृत्तेरसाधारणविषयत्वमेवेति चेन्न, असत्त्वस्य सदंतर-रूपत्वेन सद्वचनादव्यवच्छेदात् भवदपि सामर्थ्यान्नास्तित्वसाधनं सद्वचनं सप्रतिपक्षव्यवच्छेदेन सन्मात्र-गोचरं निर्देशवचनाद्भिन्नविषयमेव ततो महाविषयत्वात् । निर्दिश्यमानवस्तुविषयं हि निर्देशवचनं न स्वामित्वादिविषयं, सद्वचनं पुनः सर्वविषयमिति महाविषयत्वं । सत्त्वमपि निर्दिश्यमानं निर्देशवचनेन विषयीक्रियमाणं न तस्याविषय इति चेन्न, स्वामित्वादिवचनविषयसत्त्वस्य तदविषयत्वात् । किं सदिति हि प्रश्ने स्वयमुत्पादव्ययध्रौव्ययुक्तं सदिति निर्देशवचनं, न पुनः कस्य सत् केन कस्मिन् किय-च्चिरं किं विधानमिति प्रश्नेऽवतरति तत्र स्वामित्वादिवचनानामेवावतारात् । नैवं, सद्वचनं किमित्यनु-योग एव प्रवर्तते सर्वथा सर्वानुयोगेषु तस्य प्रवृत्तेः । संख्यादिवचनविषये सद्वचनस्याप्रवृत्तेर्न सर्वविषय-त्वमिति चेन्न, तस्यासत्त्वप्रसंगात् । न ह्यसंत एव संख्यादयः संख्यादिवचनैर्विषयीक्रियंते तेषामसत्त्व-

प्रसंगात् । सत्ता न तेषां निर्विषयीकरणे सिद्धं । सद्वचनेनापि विषयीकरणमिति तदेव सर्वविषयत्वेन महाविषयं ततो न पुनरुक्तम् ॥

**गत्यादिमार्गणास्थानैः प्रपंचेन निरूपणम् । मिथ्यादृष्ट्यादिविख्यातगुणस्थानात्मकात्मनः १४**

कृतमन्यत्र प्रतिपत्तव्यमिति वाक्यशेषः । सोपस्कारत्वात् वार्तिकस्य सूत्रवत् ।

**संख्या संख्यावतो भिन्ना न काचिदिति केचन । संख्यासंप्रत्ययस्तेषां निरालंबः प्रसज्यते१५**

नैव संख्यासंप्रत्ययोत्तींद्रियजः तत्रैकस्मिन् स्वलक्षणप्रतिभासमाने स्पष्टमेकत्वसंख्यायाः प्रतिभासनाभावात् । न हीदं स्वलक्षणमियमेकत्वसंख्येति प्रतिभासद्वयमनुभवामः । नापि लिंगजोऽयं संख्यासंप्रत्ययः संख्याप्रतिबद्धलिंगस्य प्रत्यक्षसिद्धस्याभावात् । तत एव न शाब्दोऽयं प्रत्यक्षानुमानमूलः । योगिप्रत्यक्षमूलोऽयमिति चेन्न, तस्य तथावगंतुमशक्यत्वात् । ततोऽयं मिथ्याप्रत्ययो निरालंबन एवेति केचित्, तेषां तस्य दिशाविनियमो न स्यात् कारणरहितत्वादन्यानपेक्षणात् सर्वदा सत्त्वमसत्त्वं वा प्रसज्येत । अनिरालंबनोपि समनंतरप्रत्ययनियमात् प्रतिनियतोयमिति चेन्न बहिः संख्यायाः प्रतिनियतताया प्रतीयते॥

**वासनामात्रहेतुश्चेत्सा मिथ्याकल्पनात्मिका । वस्तु सापेक्षिकत्वेन स्थविष्ठत्वादिधर्मवत् ॥१६॥**

नीरूपेषु शशश्वाविषाणेष्वपि किं न सा तत्कल्पना सुसत्या सुस्वरूपेण तु सांजसा बहिर्वस्तुषु संख्याध्यवसीयमाना वासनामात्रहेतुका मिथ्याकल्पनात्मिकैवापेक्षिकत्वादिधर्मवदिति चेन्न, नीरूपेषु शशादिविषाणेष्वपि तत्प्रसंगात् । तत्कल्पनास्वस्त्येवेति चेत् तर्हि ताः कल्पनाः स्वरूपेण सत्याः किं वा न सत्याः ? न तावदुत्तरः पक्षः स्वमतविरोधात् । कथमिदानीं स्वरूपेण सत्यासु कल्पनासु संख्या परमार्थतो न स्यात्, तास्वपि कल्पनांतरारोपितापेक्षिकत्वाविशेषात् । बहिर्वस्तुष्वेवेति चेत्, स्यादेवं यदि विकल्पनारोपितत्वेनापेक्षिकं व्याप्तं सिद्ध्येत् ॥

**न चापेक्षिकता व्याप्ता नीरूपत्वेन गम्यते । वस्तु सत्स्वपि नीलादिरूपेष्वस्याः प्रसिद्धितः१७**

नीलनीलांतरयोर्हि रूपो यथा नीलापेक्षं नीलांतररूपं तथा नीलांतरापेक्षं नीलमिति नीलादिरूपेषु वस्तु सत्स्वपि भावादपेक्षिकताया न कल्पनारोपितत्वेन व्याप्तिरवगम्यते यतः संख्यांतरया बहिरंतर्नीरूपत्वं । यदि पुनरस्पष्टावभासित्वे सत्यापेक्षिकत्वादिति हेतुस्तदा साधनविकलो दृष्टांतः, स्थविष्ठत्वादिधर्माणां स्पष्टावभासित्वात् । तत्र भ्रांतमिति चेन्न, बाधकाभावात् । स्थविष्ठत्वादिधर्मप्रतिभासो न स्पष्टो विकल्पत्वादनुमानादिविकल्पवदित्यनुमानं तद्बाधकमिति चेन्न, पुरोवर्तिनि वस्तुनींद्रियजविकल्पेन स्पष्टेन व्यभिचारात् । तस्यापि पक्षीकरणादव्यभिचार इति चेत्तर्हि संभाव्यव्यभिचारो हेतुः स्पष्टत्वेन विकल्पत्वस्य विरोधासिद्धेः क्वचिद्विकल्पत्वस्यास्पष्टत्वेन दर्शनात् । स्पष्टत्वेन विरोधे चंद्रद्वयप्रतिभासत्वस्य सत्यत्वेनादर्शनात् स्वसंवित्प्रतिभासत्वस्यापि सत्यत्वं मा भूत् तथा तद्विरोधसिद्धेरविशेषात् । अथ प्रतिभासित्वाविशेषेपि स्वसंवित्प्रतिभासः सत्यः शशिद्वयप्रतिभासश्चासत्यः संवादादसंवादाच्चोच्यते तर्हि विकल्पत्वाविशेषेपींद्रियजविकल्पः स्पष्टः साक्षादर्थग्राहकत्वात् नानुमानादिविकल्पोऽसाक्षादर्थग्राहकत्वादित्यनुमन्यतां । तथा चेंद्रियजविकल्पे व्यभिचार एव निर्विकल्पत्वादिंद्रियजस्य ज्ञानस्यानिंद्रियजो विकल्पोस्तीतिचेन्न, तस्याग्रे व्यवस्थापयिष्यमाणत्वात् ततो नावस्पष्टावभासित्वं दृष्टांतेस्तीति । साधनवैकल्यमेव सर्वत्र संख्यायां च तन्नास्तीति पक्षाव्यापको हेतुर्वनस्पतिचैतन्ये स्वापवत् । न हि स्पष्टावभासिष्वर्थेष्वस्पष्टावभासित्वं संख्यायाः प्रसिद्धं । न च तत्र स्पष्टसंख्यानुभवाभावे तदनुसारी विकल्पः प्राप्तात्यो युक्तः, पीतानुभवाभावे पीतविकल्पवत् तदभिलापविकल्पे वासना । तस्मायुक्त एवेति चेत्

तर्हि पीतादिविकल्पोपि तत एवेति न पीताद्याकारो वास्तवोऽर्थेषु संख्यावदिति नीरूपत्वं । सत्येंद्रियज्ञाने-ऽवभासनात् पीताद्याकारो वास्तव एवेति चेत् तत एव संख्या वास्तवी किं न स्यात् । न हि सा तत्र नावभासते तदवभासाभावात् कस्यचित्तदक्षव्यापारांतरांतरं तदनिश्चयात् तदविज्ञाने तस्याः प्रतिभासन-मिति चेत्, तत एव पीताद्याकारः स्यात्तत्र तन्मा भूत् । यदि पुनरभ्यासादिसाकल्ये सर्वस्याक्षव्यापारांतरं पीताद्याकारेषु निश्चयोत्पत्तेस्तद्वेदने तत्प्रतिभासनमिति मतं तदा संख्याप्रतिभासनमपि तत एवानुमन्यतां । न हि तदभ्यासादिप्रत्ययसाकल्ये सर्वस्याक्षव्यापारान्निश्चयः संख्यायामसिद्ध इति कश्चित् पीताद्याकारा-द्विशेषः संख्यावत्पीताद्याकाराणामपि वस्तुन्यभाव एवेति वायुक्तं, सकलाकाररहितस्य वस्तुनोऽप्रतिभास-नात् पुरुषाद्वैतवत् । विधूतसकलकल्पनाकलापं स्वसंवेदनमेव स्वतः प्रतिभासमानं सकलाकाररहितं वस्तु मतमिति चेत् तदेव ब्रह्मतत्त्वमस्तु न च तत्प्रतिभासते कस्यचिज्ज्ञानैकात्मन एव सर्वदा प्रतीतेः । सर्वस्य प्रतीत्यनुसारेण तत्त्वव्यवस्थायां बहिरंतश्च वस्तुभेदस्य सिद्धेः । कथं पीताद्याकारवत् संख्यायाः प्रतिक्षेपः प्रतीत्यतिक्रमे कुतः स्वेष्टसिद्धिरित्युक्तप्रायं । ततः—

**सा चैकत्वादिसंख्येयं सर्वेष्वर्थेषु वास्तवी । विद्यमानापि निर्णीतिं कुर्याद्धेतोः कुतश्चन ॥ १८ ॥**
**प्रतिक्षणविनाशादि बहिरंतर्यथास्थितेः । स्वावृत्त्यपायवैचित्र्याद्बोधवैचित्र्यनिष्ठितेः ॥ १९ ॥**

न हि प्रमेयस्य सत्तैव प्रमातुर्निश्चये हेतुः सर्वस्य सर्वदा सर्वनिश्चयप्रसंगात् । नापींद्रियादिसामग्री-मात्रं व्यभिचारात् । स्वावरणविगमाभावे तत्सद्भावेपि प्रतिक्षणविनाशादिषु बहिरंतश्च निश्चयानुत्पत्तेः, स्वावरणविगमविशेषवैचित्र्यादेव निश्चयवैचित्र्यसिद्धेरन्यथानुपपत्तेः । तथा सति नियतमेकत्वाद्यशेषं संख्या सर्वेष्वर्थेषु विद्यमानापि निश्चयकारणस्य क्षयोपशमलक्षणस्याभावे निश्चयं जनयति तद्भाव एव कस्यचित्तदनिश्चयात् ॥

**यत्रैकत्वं कथं तत्र द्वित्वादेरपि संभवः । परस्परविरोधाच्चेत्तयोर्नैवं प्रतीतितः ॥ २० ॥**

प्रतीते हि वस्तुन्येकत्वसंख्या द्वितीयाद्यपेक्षायां द्वित्वादिसंख्या वा नैकस्थत्वात्तस्यास्ततो न विरोधः ॥

**वस्तुन्येकत्र दृष्टस्य परस्परविरोधिनः । वृत्तिधर्मकलापस्य नोपालंभाय कल्पते ॥ २१ ॥**
**स्याद्वादविद्विषामेव विरोधप्रतिपादनात् । यथैकत्वं पदार्थस्य तथा द्वित्वादि वांछताम् ॥२२॥**

ये खलु पदार्थस्य येन रूपेणैकत्वं तेनैव द्वित्वादि वांछंति तेषामेव स्याद्वादविद्विषां विरोधस्य प्रति-पादनात् । "विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां" इति वचनात् न स्याद्वादिनामेकत्वादिधर्म-कलापस्य परस्परं प्रतिपक्षभूतस्य वृत्तिरेकत्रैकदा विरुध्यते तथा दृष्टत्वात् । ततो नोपालंभः प्रकल्पनीयः ॥

स्याद्वादिनां कथं न विरुद्धता उभयैकात्म्याविशेषादिति चेत्;—

**येनैकत्वं स्वरूपेण तेन द्वित्वादि कथ्यते । नैवानंतात्मनोऽर्थस्येत्यस्तु केयं विरुद्धता ॥ २३ ॥**

द्वितीयाद्यनपेक्षेण हि रूपेणार्थस्यैकत्वं तदपेक्षेण द्वित्वादिकमिति दूरोत्सारितैव विरुद्धताऽनयोः स्वरूपभेदः पुनरनंतात्मकत्वात्तस्य तत्त्वतो व्यवतिष्ठते कल्पनारोपितस्य तस्य निराकरणात् भवंश्चैकत्वा-दीनामेकत्र सर्वथाप्यसतां विरोधः स्यात्सतां वा । किं चातः ॥

**सर्वथैवासतां नास्ति विरोधः कूर्मरोमवत् । सतामपि यथा दृष्टस्वेष्टतत्त्वविशेषवत् ॥ २४ ॥**

न सर्वथाप्यसतां विरोधो नापि यथा दृष्टसतां । किं तर्हि, सहैकत्राहष्टानामिति चेत् कथमिदानीमे-कत्वादीनामेकत्र सकृदुपलभ्यमानानां विरोधः सिध्येत्? मूर्तत्वादीनामेव तत्त्वतो भेदनयात्तत्सिद्धेः । ननु च यथैकस्यार्थस्य सर्वसंख्यात्मकत्वं तथा सर्वार्थात्मकत्वमस्तु तत्कारणत्वादन्यथा तद्योगात् ॥

सर्वं सर्वात्मकं सिद्धेदेवमित्यतिसाकुलम् । सर्वकार्योद्भवे सत्त्वसामर्थ्यस्येष्टसंकितः ॥ २५ ॥

सत्त्वादपि हि सर्वं सर्वकार्योद्भवे शक्तं सर्वकार्योद्भावनशक्त्यात्मकं सिद्ध्येद्यथा सर्वसंख्याप्रत्ययविषय-भूतं सर्वसंख्यात्मकमिति शक्त्यात्मना सर्वं सर्वात्मकत्वमिष्टमेव ॥

व्यक्त्यात्मनानुभावस्य सर्वात्मत्वं न युज्यते । सांकर्यप्रत्ययापत्तेरव्यवस्थानुषंगतः ॥ २६ ॥

न हि सर्वथा शक्तिव्यक्त्योरभेदो येन व्यक्त्यात्मनापि सर्वस्य सर्वात्मकत्वे सांकर्येण प्रत्ययस्यापत्ते-र्भावस्याव्यवस्थानुषज्यते कथंचिद्भेदात् । पर्यायार्थतो हि शक्तेर्व्यक्तिभिन्ना तदप्रत्यक्षत्वेपि प्रत्यक्षाद-भेदेन तदघटनात् । ननु च यथा प्रत्ययनियमाद्व्यक्तयः परस्परं न संकीर्यंते तथा शक्तयोपि तत एवेति कथं शक्त्यात्मकं सर्वं स्यात् । न हि दहनस्य दहनयुक्तावनुमानप्रत्ययः स एवोद्यानशक्तौ यत्सूत्रप्रत्यय-प्रतिनियमो न भवेदिति कश्चित्, सोप्युक्तानभिज्ञ एव । न हि वयं शक्तीनां संकरं ब्रूमो व्यक्तीनामिव तासां कथंचित्परस्परमसांकर्यात् । किं तर्हि, भावस्यैकस्य यावंति कार्याणि कालत्रयेपि साक्षात्पारपर्येण वा तावंत्यः शक्तयः संभाव्यंत इत्यभिदध्महे प्रत्येकं सर्वभावानां कथंचिदनुकार्यस्य कस्यचिदभावात् । सर्वं कृतकमेकांततस्तथा स्यादितिचेन्न, सर्वथा सर्वेण सर्वस्योपकार्यत्वासिद्धेः । द्रव्यार्थतः कस्यचित्केन-चिदनुपकरणात् । न चोपकार्यत्वानुपकार्यत्वयोरेकत्र विरोधः, संविदि वेद्यवेदकाकारवत् प्रत्यक्षेतरस्व-संविद्वेद्याकारविवेकवद्वा निर्बाधनात्प्रत्ययात्तथा सिद्धेः । अन्यथा कस्यचित्तत्त्वनिष्ठानासंभवात् । नन्वेवं सर्वत्र सर्वसंख्यया संप्रत्ययासत्त्वात् कथमेकत्वादिसंख्या सर्वा सर्वत्र व्यवतिष्ठते अतिप्रसक्तेरिति चेन्न, एकत्रैकप्रत्ययवद्द्वितीयाद्यपेक्षया द्वित्वादिप्रत्ययानामनुभवात् । सकृत्सर्वसंख्याया प्रत्ययो नानुभूयते एवेति चेत् । सत्यं । क्रमादभिव्यक्तिः कचिद्द्वित्वसंख्या हि द्वितीयाभिव्यक्ता द्वित्वप्रत्ययविज्ञेया, तृतीयाद्यपेक्षया तु त्रित्वादिसंख्याभिव्यक्ता त्रित्वादिप्रत्ययवेद्या । तथानभिव्यक्तायास्तस्याः तत्प्रत्ययाविषय-त्वादसकृत्सर्वसंख्यासंप्रत्ययः । ननु संख्याभिव्यक्तः प्राक्कुतस्तनी कुतः सिद्धा ? तदा तत्प्रत्ययस्यासंभवात् । तत्संभवे वा कथं नाभिव्यक्ता ? यदि पुनरसती तदा कुतोऽभिव्यक्तिस्तस्याः मंडूकशिखावदित्येकांतवादि-नामुपालंभः न स्याद्वादिनां सदसदेकांतानभ्युपगमात् । सा हि शक्तिरूपतया प्राक्कुतस्तनी परापेक्षातः पश्चादभिव्यक्तत्वान्यथानुपपत्त्या सिद्धा व्यक्तिरूपतया त्वसती साक्षात्स्वप्रत्ययाविषयत्वादिति द्रव्यार्थ-प्राधान्यादुपेयते । पर्यायार्थप्राधान्यात्तु सापेक्षा कार्या तद्भावभावात् । न ह्यसत्यामपेक्षाया द्वित्वादि-संख्योत्पद्यत इति न भावस्य व्यक्तसंख्यापेक्षया सर्वसंख्यात्मकत्वं यतस्तद्वत् सर्वं सर्वात्मकत्वं यतस्त-द्वत्प्रसज्यते । तत्प्रसंग एव च सर्वत्र सर्वसंख्याप्रत्ययस्य यथासंभवमनुभूयमानस्य बाधकः स्यात् तद-बाधिताच्च संख्याप्रत्ययात् सिद्धा वास्तवी संख्या ॥

ततो निर्बाधनादेव प्रत्ययात्तत्त्वनिष्ठितौ । संख्यासंप्रत्ययात्सत्या तात्त्विकीति व्यवस्थितम् २७

यत्र निर्बाधः प्रत्ययस्तत्तात्त्विकं यथोभयप्रसिद्धं वस्तुरूपं, निर्बाधप्रत्ययश्च संख्यायामिति सा तात्त्विकी सिद्धा ॥

सा नैव तत्त्वतो येषां तेषां द्रव्यमसंख्यकम् । संख्यातोत्यन्तभिन्नत्वाद्गुणकर्मादिवच्च किम् २८

समवायवशादेवं व्यपदेशो न युज्यते । तस्यैकरूपतामीष्टे नियमाकारणत्वतः ॥ २९ ॥

संख्या तद्वतो भिन्नैव भिन्नप्रतिभासत्वात् सह्यविंध्यवदित्येके, तेषां द्रव्यमसंख्यं स्यात् संख्यातोत्यं-तभिन्नत्वाद्गुणादिवत् । तत्र संख्यासमवायात्ससंख्यमेव तदिति चेत् न, तद्वशादेवं व्यपदेशस्यायोगात् । न समवायः संख्यावद्द्रव्यमिति व्यपदेशनिमित्तं नियमाकारणत्वात् । प्रतिनियमाकारणं समवायः सर्व-

समवायिसामर्थ्यैकरूपत्वात् सामान्यादिमत्तु द्रव्यमिति प्रतिनियतव्यपदेशनिमित्तं समवाय इत्यप्यनेनापास्तं । केनचिदंशेन क्वचिन्नियमहेतुः समवाय इति चेन्न, तस्य सावयवत्वप्रसक्तेः स्वसिद्धांतविरोधात् । निरंश एव समवायस्तथा शक्तिविशेषान्नियमहेतुरित्ययुक्तं, अनुमानविरोधात् ॥

**समवायो न संख्यादि तद्वतां घटने प्रभुः । निरंशत्वाद्यथैवैकः परमाणुः सकृत्तथा ॥ ३० ॥**

न हि निरंशः सकृदेकः परमाणुः संख्यादि भवतां परस्परविशिष्टव्यपदेशघटने समर्थः सिद्धः तद्वत्समवायोपि विशेषाभावात् । शक्तिविशेषयोगात् समवायस्तत्र परिवृढ इति चेत्, परमाणुरप्यस्तु । सर्वगतत्वात्स तत्र समर्थ इति चेन्न, निरंशस्य तदयोगात् परमाणुवत् । ननु निरंशोपि समवायो यदा यत्र ययोः समवायिनोर्विशेषणं तदा तत्र तयोः प्रतिनियतव्यपदेशहेतुर्विशेषणविशेष्यभावात् प्रतिनियामकात् स्वयं तस्य प्रतिनियतत्वादिति चेन्न, असिद्धत्वात् ॥

**युगपन्न विशेष्यंते तेनैव समवायिनः । भिन्नदेशादवृत्तित्वादन्यथातिप्रसंगतः ॥ ३१ ॥**
**न खादिभिरनेकांतस्तेषां सांशत्वनिश्चयात् । निरंशत्वे प्रमाभावाद्व्यापित्वस्य विरोधतः ॥३२॥**
**विशेषणविशेष्यत्वं संबंधः समवायिभिः । समवायस्य सिद्धेव द्वौ यः प्रतिनियामकः ॥३३॥**

न हि भेदैकांते समवायसमवायिनां विशेषणविशेष्यभावः प्रतिनियतः संभवति यतः समवायस्य कचिन्नियमहेतुत्वे प्रतिनियामकः स्यात् ॥

**सम्भाव्यं ततस्तावन्नाभिन्नः स्वमतक्षतेः । भिन्नश्चेत्स स्वसंबंधिसंबंधोन्योन्यस्य कल्पनात् ॥ ३४ ॥**
**सोपि तद्भिन्नरूपश्चेदनवस्थोपवर्णिता । तादात्म्यपरिणामस्य समवायस्य तु स्थितिः ॥ ३५ ॥**

सुदूरमपि गत्वा विशेषणविशेष्यभावस्य स्वसंबंधिभ्यां कथंचिदनन्यत्वोपगमे समवायस्य स्वसमवायिभ्यामनन्यत्वसिद्धेः सिद्धः कथंचित्तादात्म्यपरिणामः समवाय इति संख्या तद्वतः कथंचिदन्या ॥

**गणनामात्ररूपेयं संख्योक्तातः कथंचन । भिन्ना विधानतो भेदगणनालक्षणादिह ॥ ३६ ॥**

निर्देशादिसूत्रे विधानस्य वचनादिह संख्योपदेशो न युक्तः पुनरुक्तत्वाद्विधानस्य संख्यारूपत्वादिति न चोद्यं, तस्य ततः कथंचिद्भेदप्रसिद्धेः । संख्या हि गणनामात्ररूपा व्यापिनी, विधानं तु प्रकारगणनारूपं ततः प्रतिविशिष्टमेवेति युक्तः संख्योपदेशस्तत्त्वार्थाधिगमे हेतुः ॥

**निवासलक्षणं क्षेत्रं पदार्थानां न वास्तवम् । स्वस्वभावव्यवस्थानादित्येके तदपेशलम् ॥ ३७ ॥**
**राज्ञः सति कुरुक्षेत्रे तन्निवासस्य दर्शनात् । तस्मिन्नसति चादृष्टे वास्तवस्याप्रबाधनात् ॥ ३८ ॥**

नन्वेवं राज्ञः कुरुक्षेत्रं कारणमेव तत्र निवसनस्वभावस्य तस्य तेन जन्यमानत्वादिति चेत् किमनिष्टं, कारणविशेषस्य क्षेत्रत्वोपगमात् कारणमात्रस्य क्षेत्रत्वेतिप्रसंगः ॥

**प्रमाणगोचरत्वास्य नावस्तुत्वं खपुष्पवत् । नानुमानोपकारत्वादि वस्तुत्वं न प्रमाणितम् ॥ ३९ ॥**

न वास्तवं क्षेत्रमापेक्षिकत्वात् स्थौल्यादिवदित्ययुक्तं, तस्य प्रमाणगोचरत्वात् स्वतत्त्ववत् । न ह्यापेक्षिकमप्रमाणगोचरः सुखनीलादेः प्रमाणविषयत्वसिद्धेः । संविन्मात्रवादिनस्तस्यापि तदविषयत्वमिति चेन्न तस्य निरस्तत्वात् । ननु न क्षेत्रत्वं कस्य प्रमाणस्य विषयः स्यात्? न तावत्प्रत्यक्षस्य तत्र तस्यानवभासनात् । न हि प्रत्यक्षभूभागमात्रप्रतिभासमाने कारणविशेषरूपे क्षेत्रत्वमवभासते कार्यदर्शनात्त्वनुमीयमानं कथं वास्तवमनुमानस्यावस्तुविषयत्वादिति कश्चित्, सोप्ययुक्तवादी । वस्तुविषयत्वादनुमितेरन्यथा प्रमाणत्वानुपपत्तेरिति वक्ष्यमाणत्वात् ॥

ननु निर्देशादिसूत्रेऽधिकरणवचनादिह क्षेत्रस्य वचनं पुनरुक्तं तयोरेकत्वादिति शंकामपनुदन्नाह;—

**सामीप्यादिपरित्यागाद्व्यापकस्य परिग्रहात् । शरीरे जीव इत्यधिकरणं क्षेत्रमन्यथा ॥ ४० ॥**

शरीरे जीव इत्यधिकरणं व्यापकाधाररूपमुक्तं, सामीप्याद्यात्मकाधाररूपं तु क्षेत्रमिहोच्यते ततोन्यथैवेति न पुनरुक्तता क्षेत्रानुयोगस्य ॥

**त्रिकालविषयार्थोपश्लेषणं स्पर्शनं मतम् । क्षेत्रादन्यत्वभाग्वर्तमानार्थश्लेषलक्षणात् ॥ ४१ ॥**

त्रिकालविषयोपश्लेषणं स्पर्शनं, वर्तमानार्थोपश्लेषणात् क्षेत्रादन्यदेव कथंचिदवसेयं । सर्वस्यार्थस्य वर्तमानरूपत्वात्स्पर्शनमसदेवेति चेन्न, तस्य द्रव्यतोऽनादिपर्यंतरूपत्वेन त्रिकालविषयोपपत्तेः । नन्विदमयुक्तं वर्तते वस्तु त्रिकालविषयरूपमनाद्यनंतं चेति । तद्धि यद्यतीतरूपं कथमनंतं? विरोधात् । तथा यद्यनागतं कथमनादि? ततो न त्रिकालवर्तीति ॥

**द्रव्यतोऽनादिपर्यंते सिद्धे वस्तुन्यबाधिते । स्पर्शनस्य प्रतिक्षेपस्त्रिकालस्य न युज्यते ॥ ४२ ॥**

न हि येनात्मनातीतमनागतं वा तेनानंतमनादि वा वस्तु ब्रूमहे, यतो विरोधः स्यात् । नापि स तदात्मा वस्तुनो भिन्न एव, येन तस्यातीतत्वेऽनागतत्वे च वस्तुनोऽनंतत्वमनादित्वं च कथंचिन्न सिध्येत् । ततोऽनाद्यनंतवस्तुनः कथंचित्त्रिकालविषयत्व न प्रतिक्षेपार्हमविरुद्धत्वादिति श्लेषाशस्तल्लक्षणः स्पर्शनोपदेशः ॥

**स्थितिमत्सु पदार्थेषु योवधिं दर्शयत्यसौ । कालः प्रचक्ष्यते मुख्यस्तदन्यः स्वस्थितेः परः ॥४३॥**

न हि स्थितिरेव प्रचक्ष्यमाणः कालः स्थितिमत्सु पदार्थेष्ववधिदर्शनहेतुः कालत्वात् स्थानक्रियैव व्यवहारकालो नातोऽन्यो मुख्य इति चेन्न, तदभावे तदनुपपत्तेः ॥ तथाहि;—

**न क्रियामात्रकं कालो व्यवहारप्रयोजनः । मुख्यकालादृते सिद्ध्येद्वर्तनालक्षणात्कचित् ॥४४॥**

न हि व्यावहारिकोपि कालः क्रियामात्रं समकालस्थितिरिति कालविशेषणायाः स्थितेरभावप्रसंगात् । परमः सूक्ष्मः कालो हि समयः सकलतादृशक्रियाविशेषणतामात्मसात् कुर्वंस्ततोऽन्य एव व्यवहारकालस्यावलिकादेर्मूलमुन्नीयते । स च मुख्यकालं वर्तनालक्षणमाक्षिपति तस्मादृते क्वचित्तदघटनात् । न हि किंचिद्गौणं मुख्यादृते दृष्टं येनातस्तस्यासाधनं ॥

**परत्वमपरत्वं च समदिग्गतयोः सतोः । समानगुणयोः सिद्धं तादृक्कालनिबंधनं ॥ ४५ ॥**
**परापरादिकालस्य तत्त्वहेत्वंतराश्च हि । यतोऽनवस्थितिस्तत्राप्यन्यहेतुप्रकल्पनात् ॥ ४६ ॥**
**स्वतस्तस्य तथात्वे च सर्वार्थानां न तद्भवेत् । व्याप्यसिद्धेर्मनीषादिरमूर्तत्वादिधर्मवत् ॥ ४७ ॥**
**यथाप्रतीतिभावानां स्वभावस्य व्यवस्थितौ । काले परापरादित्वं स्वतोऽस्त्वन्यत्र तत्कृतम् ४८**
**कान्यथा व्यवतिष्ठंते धर्माधर्मनभांस्यपि । गत्यादिहेतुतापत्तेर्जीवपुद्गलयोः स्वतः ॥ ४९ ॥**
**शरीरवाङ्मनःप्राणापानादीनपि पुद्गलाः । प्राणिनामुपकुर्युर्न स्वतस्तेषां हि देहिनः ॥ ५० ॥**
**जीवा वा चेतना न स्युः कायाः संतु स्वकास्तथा । निंबादिर्मधुरस्तिक्तो गुडादिः कालविद्विषाम् ५१**
**एकत्रार्हे हि दृष्टस्य स्वभावस्य कुतश्चन । कल्पना तद्विजातीये स्वेष्टतत्त्वविघातिनी ॥ ५२ ॥**
**तस्माज्जीवादिभावानां स्वतो वृत्तिमतां सदा । कालः साधारणो हेतुर्वर्तनालक्षणः स्वतः ॥५३**

न हि जीवादीनां वृत्तिरसाधारणादेव कारणादिति युक्तं, साधारणकारणाद्विना कस्यचित्कार्यस्यासंभवात् करणज्ञानवत् । तत्र हि मनःप्रभृति साधारणं कारणं चक्षुराद्यसाधारणमन्यतरापाये तदनुपपत्तेः । तद्वत्सकलवृत्तिमतां वृत्तौ कालः साधारणं निमित्तमुपादानमसाधारणमिति युक्तं पश्यामः ।

स्यादि तन्निमित्तं साधारणमितिचेन्न, तस्यान्यनिमित्तत्वेन प्रसिद्धेः । केनचिदात्मना तन्निमित्तत्वमपीति-चेत् स एवात्मा काल इति न तद्भावः । तथा सति कालो द्रव्यं न स्यादिति चेन्न, तस्य द्रव्यत्वेन वक्ष्यमाणत्वात् ॥

**स्वहेतोर्जायमानस्य कुतश्चिद्विनिवर्तते । पुनः प्रसूतितः पूर्वं विरहोंतरमिष्यते ॥ ५४ ॥**
**काल एव स चेदिष्टं विशिष्टत्वान्न भेदतः । वचनं तस्य सूत्रेस्मिन् कथंचिन्न विरुध्यते ॥५५॥**

ननु न केवलं विरहकालोंतरं । किं तर्हि छिद्रं मध्यं वा अंतरशब्दस्यानेकार्थवृत्तेश्छिद्रमध्यविरहेष्व-न्यतमग्रहणमिति वचनात् । न चेदं वचनमयुक्तं कालव्यवधानवत्क्षेत्रस्य व्यवधायकस्य भागस्य च पदार्थेषु भावादिति कश्चित् । सोपि यदि मुख्यमंतरं छिद्रं मध्यं वा ब्रूयात् तदानुपहतवीर्यस्य न्यग्भावे पुनरुद्भूतिदर्शनात्तद्वचनमिति विरुध्यते । विरहकालाख्यस्यांतरस्यानेन समर्थनात् । अथाप्रधानं तदिष्ट-मेव । सांतरं काष्ठं सच्छिद्रमिति प्रतीतेर्मुख्यं छिद्रमिति चेन्न, तत्रापि विरहस्य तथाभिधानात् । द्रव्य-विरहः छिद्रं न कालविरह इति चेन्न, द्रव्यविरहस्य पदार्थप्ररूपणानंगत्वात् । क्षेत्रं व्यवधायकं छिद्र-मिति चायुक्तं तस्य मध्यव्यपदेशप्रसंगात् । भागो व्यवधायको मध्यमिति वायुक्तिकं हिमवत्सागरांतर-मित्यादिषु मध्यस्यांतरस्य व्यवधायकभागस्याप्रतीतेः । पूर्वापरादिभागविरहोंतरालभागो मध्यमितिचेत् तर्हि सर्व एव क्व क्षेत्रविरहोंतरालरूपः छिद्रं इति विरह एवांतरं न्याय्यं तत्र छिद्रमध्ययोः कथंचिद्विर-हकालादनन्यत्वेपि जीवतत्त्वाधिगमानंगत्वादिहानधिकाराद्वचनं । विरहकालस्य तु तदंगत्वादुपदेश इति युक्तं । पुद्गलतत्त्वनिरूपणायां तु छिद्रमध्ययोरपि वचनं वार्तिककारस्य सिद्धम् ॥

**अत्रौपशमिकादीनां भावानां प्रतिपत्तये । भावो नामादिसूत्रोक्तोप्युक्तस्तत्त्वानुयुक्तये ॥ ५६ ॥**

नामादिषु भावग्रहणात्पुनर्भावग्रहणमयुक्तमिति न चोद्यं, अत्रौपशमिकादिभावापेक्षत्वात्तद्ग्रहणस्य विने-याशयवशो वा तत्त्वाधिगमहेतुविकल्पः सर्वोऽयमित्यनुपालंभः ॥

**एतेल्पे बहवश्चैतेऽमीभ्योऽर्थातिविविक्तये । कथ्यतेल्पबहुत्वं तत्संख्यातो भिन्नसंख्यया ॥५७॥**
**प्रत्येकं संख्यया पूर्वं निश्चितार्थेपि पिंडतः । कथ्यतेल्पबहुत्वं यत्तत्ततः किं न भिद्यते ॥५८॥**

ननु यथा विशेषतोऽर्थानां गणना संख्या तथा पिंडतोपि ततो न संख्यातोल्पबहुत्वं भिन्नमितिचेन्न, कथंचिद्भेदस्य त्वयैवाभिधानात् । न हि सर्वथा ततस्तदभेदविशेषे संख्या पिंडं संख्येति वक्तुं शक्यम् ॥

**इति प्रपंचतः सर्वभावाधिगतिहेतवः । सदादयोनुयोगाः स्युस्ते स्याद्वादनयात्मकाः ॥ ५९ ॥**

सकलं हि वस्तुसत्त्वादयोऽनुयुंजानाः स्याद्वादात्मका एव विकल्पयंतु नयात्मका एवेति न प्रमाणन-येभ्यो भिद्यंते । तत्प्रभेदास्तु प्रपंचतः सर्वे तत्त्वार्थाधिगमहेतवोऽनुवेदितव्याः ॥

**सत्त्वेन निश्चिता भावा गम्यंते संख्यया बुधैः । संख्यातः क्षेत्रतो ज्ञेयाः स्पर्शनेन च कालतः ६०**
**तथांतराच्च भावेभ्यो ज्ञेयं तेल्पबहुत्वतः । क्रमादिति तथैतेषां निर्देशो व्यवतिष्ठते ॥ ६१ ॥**
**प्रश्नक्रमवशाद्वापि विनेयानामसंशयम् । नोपालंभमवाप्नोति प्रत्युत्तरवचःक्रमः ॥ ६२ ॥**

ततो युक्त एव सूत्रे सदादिपाठक्रमः शब्दार्थन्यायाविरोधात् ।

**सामान्येनाधिगम्यंते विशेषेण च ते यथा । जीवादयस्तथा ज्ञेया व्यासेनान्यत्र कीर्तिताः ६३**

जीवस्तत्र संसारी मुक्तश्च, संसारी स्थावरश्च त्रसश्च, स्थावरः पृथिवीकायिकादिरेकेंद्रियः सूक्ष्मो बादरश्च, सूक्ष्मः पर्याप्तकोपर्याप्तकश्च, तथा बादरोपि, त्रसः पुनर्द्वीन्द्रियादिः पर्याप्तकोऽपर्याप्तकश्चेति

सामान्येन विशेषेण च यथा सत्त्वेनाधिगम्यंते संख्यादिभिश्च तथा संक्षेपेणाजीवादयोपीहैव । व्यासेन तु गत्यादिमार्गणासु सामान्यतो विशेषतश्च जीववदजीवादयोऽन्यत्र कीर्तिता विज्ञातव्याः ॥

इत्युद्दिष्टौ त्र्यात्मके मुक्तिमार्गे सम्यग्दृष्टेर्लक्षणोत्पत्तिहेतून् ।
तत्त्वन्यासौ गोचरस्याधिगंतुं हेतुर्नानानीतिकथानुयोगः ॥ १ ॥

इति तत्त्वार्थश्लोकवार्तिकालंकारे प्रथमस्याध्यायस्य द्वितीयमाह्निकम् ।

## मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम् ॥ ९ ॥

किमर्थमिदं सूत्रमाहेत्युच्यते;—

अथ स्वभेदनिष्ठस्य ज्ञानस्येह प्रसिद्धये । प्राह प्रवादिमिथ्याभिनिवेशविनिवृत्तये ॥ १ ॥

न हि ज्ञानमन्वयमेवेति मिथ्याभिनिवेशः कस्यचिन्निवर्तयितुं शक्यो विना मत्यादिभेदनिष्ठसम्यग्ज्ञाननिर्णयात् तदन्यमिथ्याभिनिवेशवत् । न चैतस्मात्सूत्रादृते तन्निर्णय इति सूक्तमिदं संपश्यामः ॥

किं पुनरिह लक्षणीयमित्युच्यते;—

ज्ञानं संलक्षितं तावदादिसूत्रे निरुक्तितः । मत्यादीन्यत्र तद्भेदाल्लक्षणीयानि तत्त्वतः ॥ २ ॥

न हि सम्यग्ज्ञानमत्र लक्षणीयं तस्यादिसूत्रे ज्ञानशब्दनिरुक्त्यैवाव्यभिचारिण्या लक्षितत्वात् तद्भेदमात्रस्य मत्यादीनि तु लक्ष्यंते तन्निरुक्तिसामर्थ्यादिति बुध्यामहे । कथं ?

मत्यावरणविच्छेदविशेषान्मन्यते यया । मननं मन्यते यावत्स्वार्थे मतिरसौ मता ॥ ३ ॥
श्रुतावरणविश्लेषविशेषाच्छ्रवणं श्रुतम् । शृणोति स्वार्थमिति वा श्रूयतेस्मेति वागमः ॥ ४ ॥
अवध्यावृतिविध्वंसविशेषादवधीयते । येन स्वार्थोवधानं वा सोवधिर्नियतः स्थितिः ॥ ५ ॥
यन्मनःपर्ययावारपरिक्षयविशेषतः । ………………(?)मनः पर्येति योपि वा ॥ ६ ॥
स मनःपर्ययो ज्ञेयो मनोअर्था मनोगताः । परेषां स्वमनो वापि तदालंबनमात्रकम् ॥ ७ ॥
क्षायोपशमिकज्ञानासहायं केवलं मतम् । यदर्थमर्थिनो मार्गं केवंते वा तदिष्यते ॥ ८ ॥
मत्यादीनां निरुक्त्यैव लक्षणं सूचितं पृथक् । तत्प्रकाशकसूत्राणामभावादुत्तरत्र हि ॥ ९ ॥
यथादिसूत्रे ज्ञानस्य चारित्रस्य च लक्षणम् । निरुक्तेर्व्यभिचारे हि लक्षणांतरसूचनम् ॥ १० ॥

न मत्यादीनां निरुक्तिस्तल्लक्षणं व्यभिचरति ज्ञानादिवत् न च तदव्यभिचारेपि तल्लक्षणप्रणयनं युक्तमतिप्रसंगात् सूत्रातिविस्तरप्रसक्तिरिति संक्षेपतः सकललक्षणप्रकाशनावहितमनाः सूत्रकारो न निरुक्तिलभ्ये लक्षणे यत्नांतरमकरोत् ॥

स्वतत्त्वाल्पाक्षरत्वाभ्यां विषयाल्पत्वतोपि च । मतेरादौ वचो युक्तं श्रुतात्तस्य तदुत्तरम् ॥ ११ ॥
मतिसंपूर्वतः साहचर्यात् मत्या कथंचन । प्रत्यक्षत्रितयस्यादाववधिः प्रतिपाद्यते ॥ १२ ॥
सर्वस्तोकविशुद्धित्वात्तुच्छत्वाच्चावधिध्वनेः । ततः परं पुनर्वाच्यं मनःपर्ययवेदनम् ॥ १३ ॥
विशुद्धतरतायोगात्तस्य सर्वावधेरपि । अंते केवलमाख्यातं प्रकर्षातिशयस्थितेः ॥ १४ ॥
तस्य निर्वृत्त्यवस्थायामपि सद्भावनिश्चयात् ।

न हि सूत्रेस्मिन्मत्यादिशब्दानां पाठक्रमे यथोक्तहेतुभ्यः शब्दार्थन्यायाश्रयेभ्योऽन्येपि हेतवः किं नोक्ता इति पर्यनुयोगः श्रेयांस्तदुक्तावप्यन्ये किन्नोक्ता इति पर्यनुयोगस्यानिवृत्तेः कुतश्चित्कस्यचित्कचित्संप्रतिपत्तौ तदर्थहेत्वंतरावचनमिति समाधानमपि समानमन्यत्र ॥

**ज्ञानशब्दस्य संबंधः प्रत्येकं भुजिवन्मतः । समूहो ज्ञानमित्यस्यानिष्टार्थस्य निवृत्तये ॥ १५ ॥**

मत्यादीनि ज्ञानमित्यनिष्टार्थो न शंकनीयः प्रत्येकं ज्ञानशब्दस्याभिसंबंधाद्भुजिवत् । न चायमयुक्तिकः, सामान्यस्य स्वविशेषव्यापित्वात् सुवर्णत्वादिवत् । यथैव सुवर्णविशेषेषु कटकादिषु सुवर्णसामान्यं प्रत्येकमभिसंबध्यते कटकं सुवर्णं कुंडलं सुवर्णमिति । तथा मतिर्ज्ञानं श्रुतं ज्ञानं अवधिर्ज्ञानं मनःपर्ययो ज्ञानं केवलं ज्ञानमित्यपि विशेषाभावात् सामान्यबहुत्वमेवं स्यादिति चेत्, कथंचिदिष्टमिदं सर्वथा सामान्यैकत्वे-ऽनेकत्वस्याश्रये सकृद्वृत्तिविरोधादेकपरमाणुवत् । क्रमशस्तत्र तद्वृत्तौ सामान्याभावप्रसंगात् सकृदनेकाश्रयवर्तिनः सामान्यस्योपगमात् । न चैकस्य सामान्यस्य कथंचिद्बहुत्वमुपपत्तिविरुद्धं बहुव्यक्तितादात्म्यात् । यमात्मानं पुरोधाय तस्य व्यक्तितादात्म्यं यं च तादात्म्यं तौ चेद्भिन्नौ भेद एव, नो चेदभेद एवेत्यपि ब्रुवाणो अनभिज्ञ एव । यमात्मानमास्तृत्य भेदः संव्यवह्रियते स एव हि भेदो नान्यः, यं चात्मानमवलंब्याभेदव्यवहारः स एवाभेद इति तत्प्रतिपत्तौ कथंचिद्भेदाभेदौ प्रतिपन्नावेव तदप्रतिपत्तौ किमाश्रयोऽयमुपालंभः स्यात् प्रतिपत्तिविषयः । पराभ्युपगमाश्रय इति चेत् स यदि तवाप्रसिद्धः कथमाश्रयितव्यः । अथ सिद्धः कथमुपालंभो विवादाभावात् । अथ परस्य वचनादभ्युपगमः सिद्धः स तु सम्यग्मिथ्या चेति विवादसद्भावादुपालंभः श्रेयान् दोषदर्शनात् । गुणदर्शनात् क्वचित्समाधानवदिति चेत्, कस्य पुनर्दोषस्यात्र दर्शनं? अनवस्थानस्येति चेन्न, तस्य परिहृतत्वात् । विरोधस्येति चेन्न, प्रतीतौ सत्यां विरोधस्यानवतारात् । संशयस्येति चेन्न, चलनाभावात् । वैयधिकरण्यापि न दर्शनं सामान्यविशेषात्मनोनेकाधिकरणस्याध्यवसायात् । संकरव्यतिकरयोरपि न तत्र दर्शनं तद्व्यतिरेकेणैव प्रतीतेः । मिथ्याप्रतीतिरियमिति चेन्न, सकलबाधकाभावात् । विशेषमात्रस्य सामान्यमात्रस्य वा परिच्छेदकप्रत्ययः बाधकमिति चेन्न, तस्य जातुचित्तदपरिच्छेदित्वात् सर्वजात्यंतरस्य सामान्यविशेषात्मनो वस्तुनस्तत्र प्रतिभासनात् । प्रत्यक्षपृष्ठभाविनि विकल्पे तथा प्रतिभासनं न प्रत्यक्षे निर्विकल्पात्मनीति चेन्न, तस्यासिद्धत्वात् सर्वथा निर्विकल्पस्य निराकरिष्यमाणत्वात् । अनुमानं बाधकमिति चेन्न, तस्य निर्विशेषमात्रग्राहिणो भावात् सामान्यमात्रग्राहिवत् । सामान्यविशेषात्मन एव जात्यंतरस्यानुमानेन व्यवस्थितेः । यथा हि । सामान्यविशेषात्मकमखिलं वस्तु, वस्त्वन्यथानुपपत्तेः । वस्तुत्वं हि तावदर्थक्रियाव्याप्तं सा च क्रमयौगपद्याभ्यां, ते च स्थितिपूर्वापरभावत्यागोपादानाभ्यां, ते च सामान्यविशेषात्मकत्वेन सामान्यात्मनोपाये स्थित्यसंभवात् विशेषात्मनोसंभवे पूर्वापरस्वभावत्यागोपादानस्यानुपपत्तेः । तदभावे क्रमयौगपद्ययोगादनयोरर्थक्रियानवस्थितेः न कस्यचित्सामान्यैकांतस्य विशेषैकांतस्य वा वस्तुत्वं नाम खरविषाणवत् । न हि सामान्यं विशेषनिरपेक्षं कांचिदप्यर्थक्रियां संपादयति, नापि विशेषः सामान्यनिरपेक्षः, सुवर्णसामान्यस्य कटकादिविशेषाश्रयस्यैवार्थक्रियायामुपयुज्यमानत्वात् कटकादिविशेष्यं च सुवर्णसामान्यानुगतस्यैवेति सकलाविकलजनसाक्षिकमवसीयते । तद्वदिह ज्ञानसामान्यस्य मत्यादिविशेषाक्रांतस्य स्वार्थक्रियायामुपयोगो मत्यादिविशेषस्य च ज्ञानसामान्यान्वितस्यैवेति युक्ता ज्ञानस्य मत्यादिषु प्रत्येकं परिसमाप्तिः । ततश्च मत्यादिसमूहो ज्ञानमित्यनिष्टोर्थो निवर्तितः स्यात् । कुतोयमर्थोनिष्टः? केवलस्य मत्यादिक्षयोपशमिकज्ञानचतुष्टयासंपृक्तस्य ज्ञानत्वविरोधात् । मत्यादीनां चैकशः सोपयोगानामुपयोगांतरासंपृक्तानां ज्ञानत्वव्याघातात् तस्य प्रतीतिविरोधाच्चेति निश्चीयते । किं मतिश्रुतावधिमनःपर्ययकेवलान्येव ज्ञानमिति पूर्वावधारणं द्रष्टव्यं तानि ज्ञानमेवेति परावधारणं वा तदुभयमविरोधादित्याह;—

**मत्यादीन्येव संज्ञानमिति पूर्वावधारणात् । मत्यज्ञानादिषु ध्वस्तसम्यग्ज्ञानत्वमूह्यते ॥ १६ ॥**

**संज्ञानमेव तानीति परस्मादवधारणात् । तेषामज्ञानतापास्ता मिथ्यात्वोदयसंसृता ॥ १७ ॥**

न ह्यत्र पूर्वापरावधारणयोरन्योन्यं विरोधोस्त्येकतरव्यवच्छेद्यस्यान्यतरेणानपहरणात् । नापि तयोरन्यतरस्य वैयर्थ्यमेकतरसाध्यव्यवच्छेद्यस्यान्यतरेणासाध्यत्वादित्यविरोध एव ॥

किं पुनरत्र मतिग्रहणात् सूत्रकारेण कृतमित्याह;—

**मतिमात्रग्रहादत्र स्मृत्यादेर्ज्ञानता गतिः । तेनाक्षमतिरेवैका ज्ञानमित्यपसारितम् ॥ १८ ॥**

**सानुमा सोपमाना च सार्थापत्त्यादिकेत्यपि । संवादकत्वतस्तस्याः संज्ञानत्वाविरोधतः ॥१९॥**

अक्षमतिरेवैका सम्यग्ज्ञानमगौणत्वात् प्रमाणस्य नानुमानादि ततोर्थनिश्चयस्य दुर्लभत्वादिति केषांचिद्दर्शनं । सानुमानसहिता सम्यग्ज्ञानं स्वसामान्यलक्षणयोः प्रत्यक्षपरोक्षयोरर्थयोः प्रत्यक्षानुमानाभ्यामवगमात् ताभ्यां तत्परिच्छित्तौ प्रवृत्तौ प्राप्तौ च विसंवादाभावादित्यन्येषां । सैवानुमानोपमानसहिता सम्यग्ज्ञानं, उपमानाभावे तथा चात्र धूम इत्युपनयस्यानुपपत्तेरिति परेषां । सैवानुमानोपमानार्थापत्त्यभावसहितागमसहिता च सम्यग्ज्ञानं तदन्यतमापायेर्थापरिसमाप्तेरितीतरेषां । तन्मतिमात्रग्रहणादपसारितं । ततः स्मृत्यादीनां सम्यग्ज्ञानतावगमात् तथावधारणाविरोधात् । न च तासां प्रमाणत्वं विरुद्धं संवादकत्वाद् । इष्टप्रमाणाद्गृहीतग्रहणादप्रमाणत्वमितिचेन्न, इष्टप्रमाणस्याप्यप्रमाणत्वप्रसंगादिति चेतयिष्यमाणत्वात् ॥

श्रुता वाचात्र किं कृतमित्याह;—

**श्रुतस्याज्ञानतामिच्छंस्तद्वाचैव निराकृतः । स्वार्थेक्षमतिवत्तस्य संविदित्वेन निर्णयात् ॥ २० ॥**

न हि श्रुतज्ञानमप्रमाणं क्वचिद्विसंवादादिति ब्रुवाणः स्वस्थः प्रत्यक्षादेरप्यप्रमाणत्वापत्तेः । सवादकत्वात्तस्य प्रमाणत्वे तत एव श्रुतं प्रमाणमस्तु । न हि ततोर्थं परिच्छिद्य प्रवर्तमानोर्थक्रियाया विसंवाद्यते प्रत्यक्षानुमानत इव श्रुतस्याप्रमाणतामिच्छन्नेव श्रुतवचनेन निराकृतो द्रष्टव्यः ॥

अत्रावध्यादिवचनात् किं कृतमित्याह;—

**जिघ्रत्यतींद्रियज्ञानमवध्यादिवचोबलात् । प्रत्याख्यातसुनिर्णीतबाधकत्वेन तद्गतेः ॥ २१ ॥**

**सिद्धे हि केवलज्ञाने सर्वार्थेषु स्फुटात्मनि । कार्त्स्न्येन रूपिषु ज्ञानेष्ववधिः केन बाध्यते ॥२२**

**परिचित्तागतेष्वर्थेष्वेवं संभाव्यते न किम् । मनःपर्ययविज्ञानं कस्यचित्प्रस्फुटाकृतिः ॥ २३॥**

**स्वल्पज्ञानं समारभ्य प्रकृष्टज्ञानमंतिमम् । कृत्वा तन्मध्यतो ज्ञानतारतम्यं न हन्यते ॥ २४ ॥**

न ह्येवं संभाव्यमानमपि युक्त्यागमाभ्यामवध्यादिज्ञानत्रयमतींद्रियं प्रत्यक्षेण बाध्यते तस्य तदविषयत्वाच्च । नाप्यनुमाने, नार्थापत्त्यादिभिर्वा तत एवेत्यविरोधः सिद्धः ॥

कश्चिदाह, मतिश्रुतयोरेकत्वं साहचर्यादेकत्रावस्थानादविशेषाच्चेति तद्विरुद्धं साधनं तावदाह;—

**न मतिश्रुतयोरैक्यं साहचर्यात्सहस्थितेः । विशेषाभावतो नापि ततो नानात्वसिद्धितः ॥२५॥**

साहचर्यादिसाधनं कथंचिन्नानात्वेन व्याप्तं सर्वथैकत्वे तदनुपपत्तेरिति तदेव साधयेन्मतिश्रुतयोर्न पुनः सर्वथैकत्वं तयोः कथंचिदेकत्वस्य साध्यत्वे सिद्धसाध्यतानेनैवोक्ता ॥

**साहचर्यमसिद्धं च सर्वदा तत्सहस्थितिः । नैतयोरविशेषश्च पर्यायार्थनयार्पणात् ॥ २६ ॥**

सामान्यार्पणायां हि मतिश्रुतयोः साहचर्यादयो न विशेषार्पणायां पौर्वापर्यादिसिद्धेः । कार्यकारणभावादेकत्वमनयोरेवं स्यादितिचेत् न, ततोपि कथंचिद्भेदसिद्धेस्तदाह;—

**कार्यकारणभावात्स्यात्तयोरेकत्वमित्यपि । विरुद्धं साधनं तस्य कथंचिद्भेदसाधनात् ॥ २७ ॥**

न ह्युपादानोपादेयभावः कथंचिद्भेदमंतरेण मतिश्रुतपर्याययोर्घटते यतोस्य विरुद्धसाधनत्वं न भवेत् कथंचिदेकत्वस्य साधने तु न किंचिदनिष्टम् ॥

**गोचराभेदतश्चेन्न सर्वथा तदसिद्धितः । श्रुतस्यासर्वपर्यायद्रव्यग्राहित्ववाच्यपि ॥ २८ ॥**

**केवलज्ञानवत्सर्वतत्त्वार्थग्राहितास्थितेः । मतेस्तथात्वशून्यत्वादन्यथा स्वमतक्षतेः ॥ २९ ॥**

"मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेषु" इति वचनाद्गोचराभेदस्ततस्तयोरेकत्वमिति न प्रतिपत्तव्यं सर्वथा तदसिद्धेः । श्रुतस्यासर्वपर्यायद्रव्यग्राहित्ववचनेपि केवलज्ञानवत्सर्वतत्त्वार्थग्राहित्ववचनात् । "स्याद्वाद-केवलज्ञाने सर्वतत्त्वप्रकाशने" इति तद्व्याख्यानात् । न मतिस्तस्यार्थित्वात्मिकायाः स्वार्थानुमानात्मि-कायाश्च तथाभावरहितत्वात् । न हि यथा श्रुतमनंतव्यंजनपर्यायसमाक्रांतानि सर्वद्रव्याणि गृह्णाति तथाभावरहितत्वात् । स्वमतसिद्धांतेऽस्याः वर्णसंस्थानादिस्तोकपर्यायविशिष्टद्रव्यविषयतया प्रतीतेः । स्वमतविरोधोपि तस्यान्यथैवावतारात् तयोरसर्वपर्यायद्रव्यविषयत्वमात्रमेव हि स्वसिद्धांते प्रसिद्धं न पुनरनंतव्यंजनपर्यायाशेषद्रव्यविषयत्वमिति तद्व्याख्यानमप्यविरुद्धमेव बाधकाभावादिति न विषया-भेदस्तदेकत्वस्य साधकः ॥

**इंद्रियानिंद्रियायत्तवृत्तित्वमपि साधनम् । न साधीयोप्रसिद्धत्वाच्छ्रुतस्याक्षानपेक्षणात् ॥ ३० ॥**

मतिश्रुतयोरेकत्वमिंद्रियानिंद्रियायत्तवृत्तित्वादित्यपि न श्रेयः साधनमसिद्धत्वात् साक्षादक्षानपेक्ष-त्वाच्छ्रुतस्य, परंपरया तु तस्याक्षानपेक्षत्वं भेदभावनमेव साक्षादक्षापेक्षयोर्विरुद्धधर्माध्याससिद्धेः ॥

**नानिंद्रियनिमित्तत्वादीहनश्रुतयोरिह । तादात्म्यं बहुवेदित्वाच्छ्रुतस्येहाव्यपेक्षया ॥ ३१ ॥**

**अवग्रहग्रहीतस्य वस्तुनो भेदमीहते । व्यक्तमीहा श्रुतं त्वर्थान् परोक्षान् विविधानपि ॥ ३२ ॥**

न हि यादृशमनिंद्रियनिमित्तत्वमीहायास्तादृशं श्रुतस्यापि । तन्निमित्तत्वमात्रं तु न तयोस्तादात्म्यगम-कमविनाभावाभावात् सत्त्वादिवत् । केचिदाहुर्मतिश्रुतयोरेकत्वं श्रवणनिमित्तत्वादिति, तेपि न युक्ति-वादिनः । श्रुतस्य साक्षाच्छ्रवणनिमित्तत्वासिद्धेः तस्यानिंद्रियवत्त्वादृष्टार्थसजातीयविजातीयनानार्थपरा-मर्शनस्वभावतया प्रसिद्धत्वात् । श्रुतावधारणाद्ये तु श्रुतं व्याचक्षते न ते तस्य श्रोत्रमतेर्भेदं प्रख्यापयितु-मीशते । श्रुतावधारणाच्छ्रुतमित्याचक्षाणाः शब्दं श्रुत्वा तस्यैवावधारणं श्रुतं संप्रतिपन्नास्तदर्थस्यावधारणं तदिति प्रष्टव्याः । प्रथमकल्पनायां श्रुतस्य श्रवणमतेरभेदप्रसंगोऽशक्यप्रतिषेधः, द्वितीयकल्पनायां तु श्रोत्रमतिपूर्वमेव श्रुतं स्यान्नेंद्रियांतरमतिपूर्वं ॥ तथाहि—

**शब्दं श्रुत्वा तदर्थानामवधारणमिष्यते । यैः श्रुतं तैर्न लभ्येत नेत्रादिमतिजं श्रुतम् ॥ ३३ ॥**

यदि पुना रूपादीनुपलभ्य तदविनाभाविनामर्थानामवधारणं श्रुतमित्यपीष्यते श्रुत्वावधारणात् श्रुत-मित्यस्य दृष्ट्वावधारणात् श्रुतमित्याद्युपलक्षणत्वादिति मतं तदा न विरोधः प्रतिपत्तिगौरवं न स्यात् । न चैवमपि मतेः श्रुतस्याभेदः सिध्येत् तल्लक्षणभेदाच्चेत्युपसंहर्तव्यम् ॥

**तस्मान्मतिः श्रुताद्भिन्ना भिन्नलक्षणयोगतः । अवध्यादिवदर्थादिभेदाच्चेति सुनिश्चितम् ॥ ३४ ॥**

यथैव ह्यवधिमनःपर्ययकेवलानां परस्परं मतेः स्वलक्षणभेदोर्थभेदः कारणादिभेदश्च सिद्धस्तथा श्रुतस्या-पीति युक्तं तस्य मतेर्नानात्वमवध्यादिवत् । ततः सूक्तं मत्यादिज्ञानपंचकम् ॥

**सर्वज्ञानमनध्यक्षं प्रत्यक्षोर्थः परिस्फुटः । इति केचिदनात्मज्ञाः प्रमाणव्याहतं विदुः ॥ ३५ ॥**

परोक्षा नो बुद्धिः प्रत्यक्षोर्थः स हि बहिर्देशसंबंधः प्रत्यक्षमनुभूयत इति केचित् संप्रतिपन्नास्तेप्य-नात्मज्ञा प्रमाणव्याहताभिधायित्वात् ॥

प्रत्यक्षमात्मनि ज्ञानमपरत्रानुमानिकम् । प्रत्यात्मवेद्यमाहंति तत्परोक्षत्वकल्पनाम् ॥ ३६ ॥

साक्षात्प्रतिभासमानं हि प्रत्यक्षं स्वस्मिन् विज्ञानमनुमेयमपरत्र व्याहारादेरिति प्रत्यात्मवेद्यं सर्वज्ञ ज्ञानपरोक्षत्वकल्पनामाहंत्येव ॥ किंच—

विज्ञानस्य परोक्षत्वे प्रत्यक्षोर्थः स्वतः कथम् । सर्वदा सर्वथा सर्वः सर्वस्य न तथा भवेत् ३७

ग्राहकपरोक्षत्वेपि सर्वदा सर्वथा सर्वस्य पुंसः कस्यचिदेव स्वतः प्रत्यक्षोर्थ कश्चित्कदाचित्कथंचिदिति व्याहततरां ॥

ततः परं च विज्ञानं किमर्थमुपकल्प्यते । कादाचित्कत्वसिद्ध्यर्थमर्थज्ञप्तेर्न सा परा ॥ ३८ ॥
विज्ञानादित्यनध्यक्षात् कुतो विज्ञायते परैः । लिंगाच्चेत्तत्परिच्छित्तिरपि लिंगांतरादिति ॥३९
क्वावस्थानमनेनैव तत्रार्थापत्तिराहृता । अविज्ञातस्य सर्वस्य ज्ञापकत्वविरोधतः ॥ ४० ॥

स्वतः प्रत्यक्षादर्थात्परं विज्ञानं किमर्थं चोपकल्पित इति च वक्तव्यं परैः कादाचित्कत्वसिद्ध्यर्थमर्थज्ञप्तेरिति चेत्, उच्यते । न सा पूर्वा विज्ञानात् ततो नाध्यक्षा सती कुतो विज्ञातव्या? लिंगाच्चेत्तत्परिच्छित्तिरपि लिंगांतरादेव इत्येतदुपस्थापनविरोधाविशेषात् । अर्थापत्त्यंतरात्तस्य ज्ञानेनवस्थानात् । एतेनोपमानादेस्तद्विज्ञानेप्यनवस्थानमुक्तं सादृश्यादेरज्ञातस्योपमानाद्युपजनकत्वासंभवात् ज्ञानेप्युपमानांतरादिपरिकल्पनस्यावश्यं भावित्वात् । तदेवं प्रमाणविरुद्धं संविवंतोऽनात्मज्ञा एव ॥

ज्ञाताहं बहिरर्थस्य सुखादेश्चेति निर्णयात् । स्वसंवेद्यत्वतः पुंसो न दोष इति चेन्मतम् ॥४१॥
स्वसंवेद्यांतरादन्यद्विज्ञानं किं करिष्यते । करणेन विना कर्तुः कर्मणि व्यावृतिर्न चेत् ॥४२॥
स्वसंवित्तिक्रिया न स्यात् स्वतः पुंसोर्थवित्तिवत् । यदि स्वात्मा स्वसंवित्तावात्मनः करणं मतम् ४३
स्वार्थवित्तौ तदेवास्तु ततो ज्ञानं स एव नः ।

न सर्वथा प्रतिभासरहितत्वात् परोक्षं ज्ञानं करणत्वेन प्रतिभासनात् । केवलं कर्मत्वेनाप्रतिभासमानत्वात् परोक्षं तदुच्यत इति कश्चित् तं प्रत्युच्यते;—

कर्मत्वेनापरिच्छित्तिरप्रत्यक्षं यदीष्यते । ज्ञानं तदा परो न स्यादध्यक्षस्तत एव ते ॥ ४४ ॥

यदि पुनरात्मा कर्तृत्वेनेव कर्मत्वेनापि प्रतिभासतां विरोधाभावादेव । ततः प्रत्यक्षमस्तु अर्थो अनंशत्वान्न ज्ञानं करणं कर्म च विरोधादित्याकूतं, तत एवात्मा कर्ता कर्म च मा भूदित्यप्रत्यक्ष एव स्यात् ॥

तथास्त्विति मतं ध्वस्तप्रायं न पुनरस्य ते । स्वविज्ञानं ततोध्यक्षमात्मवदवतिष्ठते ॥ ४५ ॥

अप्रत्यक्षः पुरुष इति मतं प्रायेणोपयोगात्मकालप्रकरणे निरस्तमिति नेह पुनर्निरस्यते । ततः प्रत्यक्ष एव कथंचिदात्माभ्युपगंतव्यः । तद्विज्ञानं प्रत्यक्षमिति व्यवस्था श्रेयसी प्रतीत्यनतिक्रमात् ॥

प्रत्यक्षं स्वफलज्ञानं करणं ज्ञानमन्यथा । इति प्राभाकरी दृष्टिः स्वेष्टव्याघातकारिणी ॥ ४६॥
कर्मत्वेन परिच्छित्तेरभावो ह्यात्मनो यथा । फलज्ञानस्य तद्वच्चेत्कुतस्तस्य समक्षता ॥ ४७ ॥
तत्कर्मत्वपरिच्छित्तौ फलज्ञानांतरं भवेत् । तत्राप्येवमतो न स्यादवस्थानं क्वचित्सदा ॥ ४८ ॥
फलत्वेन फलज्ञाने प्रतीते चेत्समक्षता । करणत्वेन तद्ज्ञाने कर्तृत्वेनात्मनीष्यताम् ॥ ४९ ॥
यथा च न परोक्षत्वमात्मनो न परोक्षता । करणात्मनि विज्ञाने फलज्ञानत्ववेदिनः ॥ ५० ॥

साक्षात्करणज्ञानस्य करणत्वेनात्मनि स्वकर्तृत्वेन प्रतीतावपि न प्रत्यक्षता, फलज्ञानस्य फलत्वेन

प्रतीतौ प्रत्यक्षमिति मतं व्याहतं । ततः स्वरूपेण स्वप्रमितिसमानत्वात् करणज्ञानमात्मा वा प्रत्यक्षः स्याद्वादिनां सिद्धः फलज्ञानवत् ॥

ज्ञानं ज्ञानांतराद्वेद्यं स्वात्मज्ञप्तिविरोधतः । प्रमेयत्वाद्यथा कुंभ इत्यप्यश्लीलभाषितम् ॥ ५१ ॥
ज्ञानांतरं यदा ज्ञानादन्यस्यापेन विद्यते । तदानवस्थितिप्राप्तेरन्यथा ह्यविनिश्चयात् ॥ ५२ ॥
अर्थज्ञानस्य विज्ञानं नाज्ञातमवबोधकम् । ज्ञापकत्वाद्यथा लिंगं लिंगिनो नान्यथा स्थितिः ५३

न ह्यर्थज्ञानस्य विज्ञानं परिच्छेदकं कारकं येनाज्ञातमपि ज्ञानांतरेण तस्य ज्ञापकं स्यात् अनवस्था-परिहारादिति चिंतितप्रायम् ॥

प्रधानपरिणामत्वात् सर्वं ज्ञानमचेतनम् । सुखक्ष्मादिवदित्येकप्रतीतेरपलापिनः ॥ ५४ ॥
चेतनात्मतया वित्तेरात्मवत्सर्वदा धियः । प्रधानपरिणामत्वासिद्धेश्चेति निरूपणात् ॥ ५५ ॥
तत्त्वार्थव्यवसायात्मज्ञानं चेतनमंजसा । सम्यगित्यधिकाराच्च संमत्यादिकभेदभृत् ॥ ५६ ॥

## तत्प्रमाणे ॥ १० ॥

कुतः पुनरिदमभिधीयते;—

स्वरूपसंख्ययोः केचित्प्रमाणस्य विवादिनः । तत्प्रत्याह समासेन विदध्यद्विनिश्चयम् ॥ १ ॥
तदेव ज्ञानमाख्येयं प्रमाणं नेंद्रियादिकम् । प्रमाणे एव तद् ज्ञानं नैकत्र्यादिप्रमाणवित् ॥ २॥

प्रमाणं हि संख्यावन्निर्दिष्टमत्र तत्त्वसंख्यावद्द्विवचनान्न प्रयोगात् । तत्र तदेव मत्यादिपंचभेदं सम्यग्ज्ञानं प्रमाणमित्येकं वाक्यमिंद्रियाद्यचेतनव्यवच्छेदेन प्रमाणस्वरूपनिरूपणपरं । तन्मत्यादिज्ञानं पंचविधं प्रमाणे एवेति द्वितीयमेकत्र्यादिसंख्यांतरव्यवच्छेदेन संख्याविशेषव्यवस्थापनप्रधानमित्यतः सूत्रात्प्रमाणस्य स्वरूपसंख्याविवादनिराकरणपुरःसरनिश्चयविधानात् इदमभिधीयत एव ॥

ननु प्रमीयते येन प्रमाणं तदितीरणम् । प्रमाणलक्षणस्य स्यादिंद्रियादेः प्रमाणता ॥ ३ ॥
तत्साधकतमत्वस्याविशेषात्तावता स्थितिः । प्रामाण्यस्यान्यथा ज्ञानं प्रमाणं सकलं न किम् ४

इंद्रियादिप्रमाणमिति साधकतमत्वात्सुप्रतीतौ विशेषेण ज्ञानवत् यत्पुनरप्रमाणं तन्न साधकतमं यथा प्रमेयमचेतनं चेतनं वा शशधरद्वयविज्ञानमिति प्रमाणत्वेन साधकतमत्वं व्याप्तं न पुनर्ज्ञानत्वमज्ञानत्वं वा तयोः सद्भावेपि प्रमाणत्वानिश्चयादिति कश्चित् ॥

तत्रेदं चिंत्यते तावदिंद्रियं किमु भौतिकम् । चेतनं वा प्रमेयस्य परिच्छित्तौ प्रवर्तते ॥ ५ ॥
न तावद्भौतिकं तस्याचेतनत्वाद् घटादिवत् । मृतद्रव्येंद्रियस्यापि तत्र वृत्तिप्रसंगतः ॥ ६ ॥
प्रमात्राधिष्ठितं तच्चेत्तत्र वर्तेत नान्यथा । किं न स्वापाद्यवस्थायां तदधिष्ठानसिद्धितः ॥ ७ ॥
आत्मा प्रयत्नवांस्तस्याधिष्ठानात्प्रयत्नकः । स्वापादाविति चेत्कोयं प्रयत्नो नाम देहिनः ॥८॥
प्रमेये प्रमितावाभिमुख्यं चैतदचेतनम् । यद्यकिंचित्करं तत्र पटवत् किमपेक्ष्यते ॥ ९ ॥
चेतनं चैतदेवास्तु भावेंद्रियमबाधितम् । यत्साधकतमं वित्तौ प्रमाणं स्वार्थयोरिह ॥ १० ॥
एतेनैवोत्तरः पक्षः चिंतितः संप्रतीयते । ततो नाचेतनं किंचित्प्रमाणमिति संस्थितम् ॥११॥

प्रमीयतेऽनेनेति प्रमाणमिति करणसाधनत्वविवक्षायां साधकतमं प्रमाणमित्यभिमतमेव अन्यथा तस्य करणत्वायोगात् । केवलमर्थप्रमितौ साधकतमत्वमेवाचेतनस्य कस्यचिन्न संभावयाम इति भावेंद्रियं चेतनात्मकं साधकतमत्वात् प्रमाणमुपगच्छामः । न चैवमागमविरोधः प्रसज्यते, "लब्ध्युपयोगौ भावेंद्रियं" इति वचनात् उपयोगस्यार्थग्रहणस्य प्रमाणत्वोपपत्तेः ॥

अर्थग्रहणयोग्यत्वमात्मनश्चेतनात्मकम् । सन्निकर्षः प्रमाणं नः कथंचित्केन वार्यते ॥ १२ ॥
तथापरिणतो ह्यात्मा प्रमिणोति स्वयं स्वप्नुः । यदा तदापि युज्येत प्रमाणं कर्तृसाधनम् ॥१३

संनिकर्षः प्रमाणमित्येतदपि न स्याद्वादिना वार्यते कथंचित्तस्य प्रमाणत्वोपगमे विरोधाभावात् । पुंसोऽर्थग्रहणयोग्यत्वं सन्निकर्षो न पुनः संयोगादिरिष्टः । न ह्यर्थग्रहणयोग्यतापरिणतस्यात्मनः प्रमाणत्वे कश्चिद्विरोधः कर्तृसाधनस्य प्रमाणस्य तथैव च घटनात् । प्रमात्रात्मकं च स एव प्रमाणमिति चेत्, प्रमातृप्रमाणयोः कथंचित्तादात्म्यात् ॥

प्रमाता भिन्न एवात्मप्रमाणाद्यस्य दर्शने । तस्यान्यात्मा प्रमाता स्यात् किन्न भेदाविशेषतः॥१४॥
प्रमाणं यत्र संबद्धं स प्रमातेति चेन्न किम् । कायः संबद्धसद्भावात्तस्य तेन कथंचन ॥ १५॥
प्रमाणफलसंबंधो प्रमातैतेन दूषितः । संयुक्तसमवायस्य सिद्धेः प्रमितिकाययोः ॥ १६ ॥
ज्ञानात्मकप्रमाणेन प्रमित्या चात्मनः परः । समवायो न युज्येत तादात्म्यपरिणामतः॥१७॥
ततो नात्यंतिको भेदः प्रमातुः स्वप्रमाणतः । स्वासंनिर्णीतरूपायाः प्रमितेश्च फलात्मनः १८
तथा च युक्तिमत्प्रोक्तं प्रमाणं भावसाधनम् । सतोपि शक्तिभेदस्य पर्यायार्थादनाश्रयात्॥१९॥

सर्वथा प्रमातुः प्रमितिप्रमाणाभ्यामभेदादेवं तद्विभागः कल्पितः स्यान्न पुनर्वास्तव इति न मंतव्यं, कथंचिद्भेदोपगमात् । सर्वथा तस्य ताभ्यां भेदादुपचरितं प्रमातुः प्रमितिप्रमाणत्वं न तात्त्विकमित्यपि न मंतव्यं कथंचित्तदभेदस्यापीष्टेः । तथाहि;—

स्यात्प्रमाता प्रमाणं स्यात्प्रमितिः स्वप्रमेयवत् । एकांताभेदभेदौ तु प्रमात्रादिगतौ क नः २०
एकस्यानेकरूपत्वे विरोधोपि न युज्यते । मेचकज्ञानवत्प्रायश्चिंतितं चैतदंजसा ॥ २१ ॥

यथैव हि मेचकज्ञानस्यैकस्यानेकरूपमविरुद्धबाधितप्रतीत्या रूढत्वात् तथात्मनोपि तदविशेषात् । न ह्ययमात्मार्थग्रहणयोग्यतापरिणतः सन्निकर्षाख्यं प्रतिपद्यमानोऽप्रबाधप्रतीत्यारूढो न भवति येन कथंचित्प्रमाणं न स्यात् । नाप्ययमव्याप्टतावस्थोऽर्थग्रहणव्यापारांतरस्वार्थविदात्मको न प्रतिभाति येन कथंचित्प्रमितिर्न भवेत् । न चायं प्रमितिप्रमाणाभ्यां कथंचिदर्थांतरभूतः स्वतंत्रो न चकास्ति येन प्रमाता न स्यात् ॥

संयोगादि पुनर्येन सन्निकर्षोऽभिधीयते । तत्साधकतमत्वस्य भावात्तस्याप्रमाणता ॥ २२ ॥
सतींद्रियार्थयोस्तावत्संयोगेनोपजायते । स्वार्थप्रमितिरेकांतव्यभिचारस्य दर्शनात् ॥ २३ ॥
क्षितिद्रव्येण संयोगो नयनादेर्यथैव हि । तस्य व्योमादिनाप्यस्ति न च तज्ज्ञानकारणम् ॥२४
संयुक्तसमवायश्च शब्देन सह चक्षुषः । शब्दज्ञानमकुर्वाणो रूपचिच्चक्षुरेव किम् ॥ २५ ॥
संयुक्तसमवेतार्थसमवायोप्यभावयन् । शब्दत्वस्य न नेत्रेण बुद्धिं रूपत्ववित्करः ॥ २६ ॥
श्रोत्रस्याद्येन शब्देन समवायश्च तद्विदम् । अकुर्वन्न त्वशब्दस्य ज्ञानं कुर्यात्कथं तु वः ॥२७॥
तस्यैवादिमशब्देषु शब्दत्वेन समं भवेत् । समवेतसमवायं सद्विज्ञानमनादिवत् ॥ २८ ॥
अंत्यशब्देषु शब्दत्वे ज्ञानमेकांततः कथम् । विदधीत विशेषस्याभावे यौगस्य दर्शने ॥ २९॥
तथागतस्य संयुक्तविशेषणतया दृशा । ज्ञानेनाधीयमानेपि समवायादिवित्कुतः ॥ ३० ॥
योग्यतां कांचिदासाद्य संयोगादिरयं यदि । क्षित्यादिविषदेव स्यात्तदा नैवास्तु संमता ॥३१
स्वात्मा स्वावृतिविच्छेदविशेषसहितः क्वचित् । संविदं जनयन्निष्टः प्रमाणमविगानतः ॥३२॥
शक्तिरिंद्रियमित्येतदनेनैव निरूपितं । योग्यताव्यतिरेकेण सर्वथा तदसंभवात् ॥ ३३ ॥

सन्निकर्षस्य योग्यताख्यस्य प्रमितौ साधकतमस्य प्रमाणव्यपदेश्यं प्रतिपाद्यमानस्य स्वावरणक्षयोपशमविशिष्टात्मरूपतानिरूपणेनैव शक्तेः । इंद्रियत्वोपगतायास्सा निरूपिता बोद्धव्या तस्या योग्यतारूपत्वात् । ततो व्यतिरेकेण सर्वथाप्यसंभवात् सन्निकर्षवत् । न हि तद्व्यतिरेकः सन्निकर्षः संयोगादिः स्वार्थप्रमितौ साधकतमः संभवति व्यभिचारात् । तत्र करणत्वात्सन्निकर्षस्य साधकतमत्वं तद्वदिंद्रियशक्तिरपीतिचेत्, कुतस्तत्करणत्वं ? साधकतमत्वादिति चेत् परस्पराश्रयदोषः । तद्भावाभावयोस्तद्वत्तासिद्धः साधकतमत्वमित्यपि न साधीयोऽसिद्धत्वात् । स्वार्थप्रमितेः सन्निकर्षादिसद्भावेप्यभावात्, तदभावेपि च भावात् सर्वविदः कथं वा प्रमातुरेवं साधकतमत्वं न स्यात् । न हि तस्य भावाभावयोः प्रमितेर्भावाभाववत्त्वं नास्ति ? साधारणस्यात्मनो नास्त्येवेति चेत् संयोगादेरिंद्रियस्य च साधारणस्य सा किमस्ति ? तस्यासाधारणस्यास्त्येवेति चेत्, आत्मनोप्यसाधारणस्यास्तु । प्रमातुः किमसाधारणत्वमितिचेत्, सन्निकर्षादेः किम् ? विशिष्टप्रमितिहेतुत्वमेवेतिचेत्, प्रमातुरपि तदेव तस्य सततावस्थायित्वात् । सर्वप्रमितिसाधारणकारणत्वसिद्धेर्न संभवतीति चेत्, तर्हि कालांतरस्थायित्वात्संयोगादेरिंद्रियस्य च तत्साधारणकारणत्वं कथं न सिध्येत् ? तदसंभवनिमित्तं यदा प्रमित्युत्पत्तौ व्याप्रियते तदैव सन्निकर्षादि तत्कारणं नान्यदा इत्यसाधारणमिति चेत्, तर्हि यदात्मा तत्र व्याप्रियते तदैव तत्कारणं नान्यदा इत्यसाधारणो हेतुरस्तु । तथा सति तस्य नित्यत्वापत्तिरिति चेत् नो दोषोयं, कथंचित्तस्या नित्यत्वसिद्धेः सन्निकर्षादिवत् । सर्वथा कस्यचिन्नित्यत्वेऽर्थक्रियाविरोधादित्युक्तप्रायं ॥

**प्रमाणं येन सारूप्यं कथ्यतेऽधिगतिः फलम् । सन्निकर्षः कुतस्तस्य न प्रमाणत्वसंमतः ॥२४॥**

सारूप्यं प्रमाणमस्याधिगतिः फलं संवेदनस्यार्थरूपतामुक्त्वार्थेन घटयितुमशक्तेः । नीलस्येदं संवेदनमिति निराकारसंविदः केनचित्प्रत्यासत्तिविप्रकर्षे सिद्धे सर्वार्थेन घटनप्रसक्तेः सर्वैकवेदनापत्तेः । सर्वैकवेदनापत्तेः करणादेः सर्वार्थसाधारणत्वेन तत्प्रतिनियमनिमित्ततानुपपत्तेरित्यपि येनोच्यते तस्य सन्निकर्षः प्रमाणमधिगतिः फलं तस्मादंतरेणार्थघटनासंभवात् साकारस्य समानार्थसकलवेदनसाधारणत्वात् केनचित्प्रत्यासत्तिविप्रकर्षे सिद्धे सकलसमानार्थेन घटनप्रसक्तेः सर्वसमानार्थैकवेदनापत्तेः, तदुत्पत्तेरिंद्रियादिना व्यभिचारान्नियामकत्वायोगात् । तदध्यवसायस्य मिथ्यात्वसमनंतरप्रत्ययेन कुतश्चित् सिते शंखे पीताकारज्ञानजनितापरपीताकारज्ञानस्य तज्जन्मादिरूपसद्भावेपि तत्र प्रमाणत्वाभावादिति कुतो न संमतं । सत्यपि सन्निकर्षेर्थाधिगतेरभावान्न प्रमाणमिति चेत्;—

**सन्निकर्षे यथा सत्यप्यर्थाधिगतिशून्यता । सारूप्येपि तथा सेष्टा क्षणभंगादिषु स्वयम् ॥२५॥**

यथा चक्षुरादेराकाशादिभिः सत्यपि संयोगादौ सन्निकर्षे तदधिगतेरभावस्तथा क्षणक्षयस्वर्गप्रापणशक्त्यादिभिर्दानादिसंवेदनस्य सत्यपि सारूप्ये तदधिगतेः शून्यता स्वयमिष्टैव तदालंबनप्रत्ययत्वेपि तस्य तच्छून्यत्वतावत् । "यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता" इति वचनात् । ततो नायं सन्निकर्षवादिनमतिशेते ॥ किं च—

**स्वसंविदप्रमाणत्वं सारूप्येण विना यदि । किं नार्थवेदनस्येष्टं पारंपर्यस्य वर्जनात् ॥ २६ ॥**
**सारूप्यकल्पने तत्राप्यनवस्थोदिता न किम् । प्रमाणं ज्ञानमेवास्तु ततो नान्यदिति स्थितम् ॥२७**

स्वसंविदः स्वरूपे प्रमाणत्वं नास्त्येवान्यत्रोपचारादित्ययुक्तं सर्वथा मुख्यप्रमाणाभावप्रसंगात् स्वमतविरोधात् । प्रामाण्यं व्यवहारेण शास्त्रं मोहनिवर्तनमिति वचनात् मुख्यप्रमाणाभावे न स्वमतविरोधः सौगतस्येति चेत्, स्यादेवं । यदि मुख्यं प्रमाणमयं न वदेत् "अज्ञातार्थप्रकाशो वा स्वरूपाधिगतेः

परं" इति संवेदनाद्वैताश्रयणात् । तदपि न च । तदित्येवेति चेत् न तस्य निरस्तत्वात् । किं चेदं संवेदनं सत्यं प्रमाणमेव मृषासत्यमप्रमाणं । न हि न प्रमाणं नाप्यसत्यं । सर्वविकल्पातीतत्वात् संवेदनमेवेति चेत् सुव्यवस्थितं तत्त्वं । को हि सर्वथानवस्थितात्खरविषाणादस्य विशेषः । स्वयं प्रकाशमानत्वमितिचेत् तद्यदि परमार्थसत् प्रमाणत्वमन्वाकर्षति । ततो द्वयं संवेदनं यथास्वरूपे केनचितदतत्स्वरूपमपि प्रमाणं तथा हि बहिरर्थे किं न भवेत् तस्य तद्व्यभिचारिणो निराकर्तुमशक्तेः । पारंपर्यं च परिहृतमेव स्यात् संविदर्थयोरंतराले सारूपस्याप्रवेशात् । यदि पुनः संवेदनस्य स्वरूपसारूप्यं प्रमाणं सारूप्याधिगतिः फलमिति परिकल्प्यते तदानवस्थोदितैव । ततो ज्ञानादन्यदिंद्रियादिसारूप्य न प्रमाणमन्यत्रोपचारादिति स्थितं ज्ञानं प्रमाणमिति ॥

**मिथ्याज्ञानं प्रमाणं न सम्यगित्यधिकारतः । यथा यत्राविसंवादस्तथा तत्र प्रमाणता ॥३८॥**

यदि सम्यगेव ज्ञानं प्रमाणं तदा चंद्रद्वयादिवेदनं वावल्यादौ प्रमाणं कथमुक्तमिति न चोद्यं, तत्र तस्याविवादात् सम्यगेतदिति स्वयमिष्टेः । कथमियमिष्टिरविरुद्धेति चेत्, सिद्धांताविरोधात्तथा प्रतीतेश्च ॥

**स्वार्थे मतिश्रुतज्ञानं प्रमाणं देशतः स्थितं । अवध्यादि तु कार्त्स्न्येन केवलं सर्ववस्तुषु ॥३९॥**

स्वस्मिन्नर्थे च देशतो ग्रहणयोग्यतासद्भावात् मतिश्रुतयोर्न सर्वथा प्रामाण्य, नाप्यवधिमनःपर्यययोः सर्ववस्तुषु केवलस्यैव तत्र प्रामाण्यादिति सिद्धांताविरोध एव "यथा यत्राविसंवादस्तथा तत्र प्रमाणता" इति वचनस्य प्रत्येयः । प्रतीत्यविरोधस्तूच्यते;—

**अनुपप्लुतदृष्टीनां चंद्रादिपरिवेदनम् । तत्संख्यादिषु संवादि न प्रत्यासन्नतादिषु ॥ ४० ॥**

**तथा ग्रहोपरागादिमात्रे श्रुतमबाधितम् । नांगुलिद्वितयादौ तन्मानभेदेऽन्यथा स्थिते ॥ ४१॥**

एवं हि प्रतीतिः सकलजनसाक्षिका सर्वथा मतिश्रुतयोः स्वार्थे प्रमाणतां हंतीति तया तद्देतत्प्रमाणमबाधम् ॥

**ननूपप्लुतविज्ञानं प्रमाणं किं न देशतः । स्वप्नादाविति नानिष्टं तथैव प्रतिभासनात् ॥ ४२ ॥**

स्वप्नाद्युपप्लुतविज्ञानस्य क्वचिदविसंवादिनः प्रामाण्यस्येष्टौ तद्व्यवहारः स्यादितिचेत् ;—

**प्रमाणव्यवहारस्तु भूयः संवादमाश्रितः । गंधद्रव्यादिवद्भूयो विसंवादं तदन्यथा ॥ ४३ ॥**

सत्यज्ञानस्यैव प्रमाणत्वव्यवहारो युक्तिमान् भूयः संवादात् । वितथज्ञानस्यैव वाप्रमाणत्वव्यवहारो भूयो विसंवादात् तदाश्रितत्वात्तद्व्यवहारस्य । दृष्टो हि लोके भूयसि व्यपदेशो यथा गंधादिना गंधद्रव्यादेः सत्यपि स्पर्शवत्त्वादौ ।

**येषामेकांततो ज्ञानं प्रमाणमितरच्च न । तेषां विप्लुतविज्ञानप्रमाणेतरता कुतः ॥ ४४ ॥**

अथायमेकांतः सर्वथा वितथज्ञानमप्रमाणं सत्यं तु प्रमाणमिति चेत् तदा कुतो वितथवेदनस्य स्वरूपे प्रमाणता बहिरर्थे त्वप्रमाणतेति व्यवतिष्ठेत् ॥

**स्वरूपे सर्वविज्ञानप्रमाणत्वे मतक्षतिः । बहिर्विकल्पविज्ञानप्रमाणत्वे प्रमांतरम् ॥ ४५ ॥**

न हि सत्यज्ञानमेव स्वरूपे प्रमाणं न पुनर्मिथ्याज्ञानमिति युक्तं । नापि सर्वं तत्र प्रमाणमिति सर्वचित्तचैतानामात्मसंवेदनं प्रत्यक्षमिति स्वमतक्षतेः सर्वं मिथ्याज्ञानं विकल्पविज्ञानमेव बहिरर्थे प्रमाणं स्वरूपवदित्यप्ययुक्तं, प्रकृतप्रमाणात्प्रमाणांतरसिद्धिप्रसंगात् । तिमिराशुभ्रमणनौयानसंक्षोभाद्याहितविभ्र-

प्राप्यकारि चक्षुः करणत्वाद्दात्रादिवदित्यत्राप्यंशतः सर्वान् प्रत्युद्योतकरेणोक्तो हेतुरनैकांतिको मनसा मंत्रेण च सर्वाधाकृष्टिकारिणा प्रत्येयः पक्षश्च प्रमाणाबाधितः पूर्ववत् ॥

तदेवं चक्षुषः प्राप्यकारित्वे नास्ति साधनं । मनसश्च ततस्ताभ्यां व्यंजनावग्रहः कुतः ॥९०॥

यत्र करणत्वमपि चक्षुषि प्राप्यकारित्वसाधनाय नालं च तत्रान्यत्साधनं दूरोत्सारितमेवेति मनोवद-प्राप्यकारि चक्षुः सिद्धं । ततश्च न चक्षुर्मनोभ्यां व्यंजनस्यावग्रह इति व्यवतिष्ठते ॥

दूरे शब्दं शृणोमीति व्यवहारस्य दर्शनात् । श्रोत्रमप्राप्यकारीति केचिदाहुस्तदप्यसत् ॥९१॥
दूरे जिघ्राम्यहं गंधमिति व्यवहृतीक्षणात् । घ्राणस्याप्राप्यकारित्वप्रसक्तिरिष्टहानितः ॥९२॥
गंधाधिष्ठानभूतस्य द्रव्यप्राप्तस्य कस्यचित् । दूरत्वेन तथा वृत्तौ व्यवहारोत्र चेन्नृणाम् ॥९३॥
समं शब्दे समाधानमिति यत्किंचनेदृशं । चोद्यं मीमांसकादीनामप्रातीतिकवादिनाम् ॥९४॥
कुड्यादिव्यवधानेपि शब्दस्य श्रवणाद्यदि । श्रोत्रमप्राप्यकारीष्टं तथा घ्राणं तथेष्यतां ॥९५॥
द्रव्यांतरितगंधस्य घ्रातसूक्ष्मस्य तस्य चेत् । घ्राणप्राप्तस्य संवित्तिः श्रोत्रप्राप्तस्य नो ध्वनेः॥९६
यथा गंधाणवः केचिच्छक्ताः कुड्यादिभेदने । सूक्ष्मास्तथैव नः सिद्धाः प्रमाणध्वनिपुद्गलाः९७

पुद्गलपरिणामः शब्दो बाह्येंद्रियविषयत्वात् गंधादिवदित्यादि प्रमाणसिद्धाः शब्दपरिणतपुद्गलाः इत्यग्रे समर्थयिष्यामहे । ते च गंधपरिणतपुद्गलवत् कुड्यादिकं भित्वा स्वेंद्रियं प्राप्नुवंतः परिच्छेद्या इति न तेषामप्राप्तानामिंद्रियेण ग्रहणं । कथं मूर्ताः स्कंधाः श्रावणस्वभावाः कुड्यादिना मूर्तिमता न प्रतिहन्यंते इति चेत्, तवापि वायवीया ध्वनयः शब्दाभिव्यंजकाः कथं ते न प्रतिहन्यंते इति समानं चोद्यं । तत्प्रतिघाते तत्र शब्दस्याभिव्यक्तेरयोगादनभिव्यक्तस्य च श्रवणासंभवादप्रतिघातः तस्य कुड्यादिना सिद्धस्तदंतरितस्य श्रवणान्यथानुपपत्तिरिति चेत्, तत एव शब्दात्मनां पुद्गलानामप्रतिघातोस्तु दृढपरि-हारात् । दृष्टो हि गंधात्मपुद्गलानामप्रतिघातस्तद्वच्छब्दानां न विरुध्यते । यदि पुनरमूर्तस्य सर्वगतस्य च शब्दस्य परिकल्पनात्तद्व्यंजकानामेवाप्रतिघाताच्छ्रवणमित्यभिनिवेशः तथा गंधस्यामूर्तस्य कस्तूरिकादि-द्रव्यविशेषसंयोगजनितावयवा व्यंजकामूर्तद्रव्यांतरेणाप्रतिहतास्तथा घ्राणहेतवः इति कल्पनानुषज्यमाना कथं निवारणीया ? गंधस्यैवं पृथिवीगुणत्वविरोध इति चेत् शब्दस्यापि पुद्गलत्वविरोधस्तथा परैः शब्दस्य द्रव्यांतरत्वेनाभ्युपगमाददोष इति चेत्तथा गंधोपि द्रव्यांतरमभ्युपगम्यतां प्रमाणबलायातस्य परिहर्तुम-शक्तेः । स्पर्शादीनामप्येवं द्रव्यांतरत्वप्रसंग इति चेत्, तान्यपि द्रव्यांतराणि संतु । निर्गुणत्वात्तेषाम-द्रव्यत्वमिति चेत्, तत एव गंधस्पर्शादीनां द्रव्यत्वमस्तु । तेषूपचरितमहत्त्वादय इति चेत् शब्देप्युप-चरिताः संतु । कुतः शब्देन तदुपचार इतिचेत् गंधादिषु कुतः ? स्वाश्रयमहत्त्वादिति चेत् तत एव शब्देपि मुख्यमहत्त्वादेरसंभवः । शब्दे किमवगतः ? त्वयापि गंधादौ स किमु निश्चितः । गंधादयो न मुख्यमहत्त्वाद्युपेताः शश्वदस्वतंत्रत्वादभाववदित्यतोनुमानात्तदसंभवो निश्चित इति चेत्, तत एव शब्देपि स निश्चीयतां । शब्दे तदसिद्धेर्न तन्निश्चयः सर्वदा तस्यास्वतंत्रस्योपलब्धेरिति चेत् गंधादावपि तत एव तदसिद्धेः । कुतस्तु तन्निश्चयः तस्य क्षित्यादिद्रव्यतंत्रत्वेन प्रतीतेरस्वतंत्रत्वसिद्धिरिति चेत् शब्दस्यापि वक्तृभेर्यादिद्रव्यतंत्रस्योपलब्धेरस्वतंत्रत्वसिद्धेरस्तु । तस्य तदभिव्यंजकध्वनिनिबंधनत्वात्तंत्रत्वो-पलब्धेरिति चेत् तर्हि क्षित्यादिद्रव्यस्यापि गंधादिव्यंजकवायुविशेषनिबंधनत्वात्तु गंधादेस्तंत्रत्वोपपत्तिः । शब्दस्य वक्तुरन्यत्रोपलब्धेर्न तंत्रत्वं सर्वदेति चेत् गंधादेरपि कस्तूरिकादिद्रव्यादन्यत्रोपलंभात्तत्परतंत्रत्वं सर्वदा मा भूत् । ततोन्यत्रापि सूक्ष्मद्रव्याश्रिता गंधादयः प्रतीयंते इति चेत् शब्दोपि ताल्वादिभ्योऽन्यत्र सूक्ष्मपुद्गलाश्रित एव श्रूयत इति कथमिव स्वतंत्रः । तदाश्रयद्रव्यस्य चक्षुषोपलब्धिः स्यादिति चेत्

गंधाद्याश्रयस्य किं न स्यात्? सूक्ष्मत्वादिति चेत् तत एव शब्दाश्रयद्रव्यस्यापि न चक्षुषोपलब्धिरिति सर्वं समं पश्यामः। ततो यदि गंधादीनां शश्वदस्वतंत्रत्वान्महत्त्वाद्युपेतत्वाभावादाख्यातो न द्रव्यत्वं तदा शब्दस्यापि न तत्। ननु शब्दस्याद्रव्यत्वेप्यसर्वगतद्रव्याश्रयत्वे कथं सकृत्सर्वत्रोपलंभः यथा गंधादेः समानपरिणामभृतां पुद्गलानां स्वकारणवशात् समंततो विसर्पणात् वृक्षाद्यव्यवहितानां विसर्पणं कथं न तेषामितिचेत्, यथा गंधद्रव्यस्कंधानां तथा परिणामात् तदेव गंधादिकृतिमतिविधानया दूरादेकोत्करः शब्दे समस्तो नावतरतीति तद्वत्प्राप्तस्येंद्रियेण ग्रहणं निरारेकमवतिष्ठते तथाप्रतीतेरित्याह;—

**तत्रारेकोत्करः सर्वो गंधद्रव्ये समस्थितः। समाधिश्चेति न व्यासेनास्माभिरभिधीयते ॥ ९८॥**

प्रपंचतो विचारितमेतदन्यत्रास्माभिरिति नेहोच्यते ॥

## श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ २० ॥

किमर्थमिदमुपदिष्टं मतिज्ञानप्ररूपणानंतरमित्याह;—

**किं निमित्तं श्रुतज्ञानं किं भेदं किं प्रभेदकम्। परोक्षमिति निर्णेतुं श्रुतमित्यादि सूत्रितम् ॥१॥**

किं निमित्तं श्रुतज्ञानं नित्यशब्दनिमित्तमन्यनिमित्तं चेति शंकामपनुदति मतिपूर्वकमिति वचनात्। किं भेदं तत्? षड्भेदं द्विभेदमित्यभेदं वेति संशयं सहस्रप्रभेदं द्वादशप्रभेदमनेकभेदं वेति चारेकामपाकरोति द्व्यनेकद्वादशभेदमिति वचनात्। तत्र किमिदं श्रुतमित्याह;—

**श्रुतेनेकार्थतासिद्धे ज्ञानमित्यनुवर्तनात्। श्रवणं हि श्रुतज्ञानं न पुनः शब्दमात्रकम् ॥ २ ॥**

कथमेवं शब्दात्मकं श्रुतमिह प्रसिद्धं सिद्धांतविदामित्याह;—

**तच्चोपचारतो ग्राह्यं श्रुतशब्दप्रयोगतः। शब्दभेदप्रभेदोक्तः स्वयं तत्कारणत्वतः ॥ ३ ॥**

तच्च शब्दमात्रं श्रुतमिह ज्ञेयमुपचारात् द्व्यनेकद्वादशभेदमित्यनेन शब्दसंदर्भस्य भेदप्रभेदयोर्वचनात् स्वयं सूत्रकारेण श्रुतशब्दप्रयोगाच्च। स हि श्रूयतेस्मेति श्रुतं प्रवचनमित्यस्येष्टार्थस्य संग्रहार्थः श्रेयो नान्यथा स्पष्टज्ञानाभिधायिनः शब्दस्य प्रयोगार्हत्वात्। कुतः पुनरुपचारः तत्कारणत्वात्। श्रुतज्ञानकारणं हि प्रवचनं श्रुतमित्युपचर्यते मुख्यस्य श्रुतज्ञानस्य भेदप्रतिपादनं कथमुपपन्नं तज्ज्ञानस्य भेदप्रभेदरूपत्वोपपत्तेः द्विभेदप्रवचनजनितं हि ज्ञानं द्विभेदं अंगबाह्यप्रवचनजनितस्य ज्ञानस्यांगबाह्यत्वात् अंगप्रविष्टवचनजनितस्य चांगप्रविष्टत्वात्। तथानेकद्वादशप्रभेदवचनजनितं ज्ञानमनेकद्वादशप्रभेदकं कालिकोत्कालिकादिवचनजनितस्यानेकप्रभेदरूपत्वात्, आचारादिवचनजनितस्य च द्वादशप्रभेदत्वादिदमुपचरितं च श्रुतं द्व्यनेकद्वादशभेदमिहैव वक्ष्यते। द्विभेदमनेकद्वादशभेदमिति प्रत्येकं भेदशब्दस्याभिसंबंधात् तथा चतुर्भेदो वेदः षडंगः सहस्रशाखः इत्यादि श्रुताभासनिवृत्तिरप्रमाणत्वप्रत्यक्षत्वादिनिवृत्तिश्च कृता भवति। कथमित्याह;—

**सम्यगित्यधिकारात्तु श्रुताभासनिवर्तनम्। तस्याप्रमाण्यविच्छेदः प्रमाणपदसूचितः ॥ ४ ॥**

**परोक्षाविष्कृतेस्तस्य प्रत्यक्षत्वनिराक्रिया। नावध्यादिनिमित्तत्वं मतिपूर्वमिति श्रुतेः ॥ ५ ॥**

न नित्यत्वं द्रव्यश्रुतस्य भावश्रुतस्य वा न नित्यनिमित्तत्वमिति सामर्थ्यादवसीयते मतिपूर्वत्ववचनादवध्याद्यनिमित्तत्ववत्। श्रुतनिमित्तत्वं श्रुतस्यैव बाध्येतेति न शंकनीयं। कुतः?

**पूर्वं शब्दप्रयोगस्य व्यवधानेपि दर्शनात्। न साक्षान्मतिपूर्वस्य श्रुतस्येष्टस्य बाधनम् ॥ ६ ॥**

लिंगादिवचनश्रोत्रमतिपूर्वात्तदर्थगात् श्रुताच्छ्रुतमिति सिद्धं लिंगादिविषयं विदाम् ।

नन्वेवं केवलज्ञानपूर्वकं भगवदर्हत्प्रभाषितं द्रव्यश्रुतं विरुध्यत इति मन्यमानं प्रत्याह;—

**न च केवलपूर्वत्वात्सर्वज्ञवचनात्मनः। श्रुतस्य मतिपूर्वत्वनियमोत्र विरुध्यते ॥ ७ ॥**

**ज्ञानात्मनस्तथाभावप्रोक्ते गणभृतामपि। मतिप्रकर्षपूर्वत्वादर्हत्प्रोक्तार्थसंविदः ॥ ८ ॥**

श्रुतज्ञानं हि मतिपूर्वं साक्षात्पारंपर्येण वेति नियम्यते न पुनः शब्दमात्रं यतस्तस्य केवलपूर्वत्वेन विरोधः स्यात्। न च गणधरदेवादीनां श्रुतज्ञानं केवलपूर्वकं तन्निमित्तशब्दविषयमतिज्ञानातिशयपूर्वकत्वात्तस्येति निरवद्यं ॥

**मतिसामान्यनिर्देशान्न श्रोत्रमतिपूर्वकं। श्रुतं नियम्यतेऽशेषमतिपूर्वस्य वीक्षणात् ॥ ९ ॥**

**श्रुत्वा शब्दं यथा तस्मात्तदर्थं लक्षयेदयं। तथोपलभ्य रूपादीनर्थं तन्नांतरीयकम् ॥ १० ॥**

यथा हि शब्दः स्ववाच्यमविनाभाविनां प्रत्याययति तथा रूपादयोपि स्वाविनाभाविनमर्थं प्रत्याययंतीति श्रोत्रमतिपूर्वकमेव श्रुतज्ञानमीक्ष्यते। ततो न श्रोत्रमतिपूर्वमेव तदिति नियमः श्रेयान्, मतिसामान्यवचनात् ॥

**न स्मृत्यादि मतिज्ञानं श्रुतमेवं प्रसज्यते। मतिपूर्वत्वनियमात्तस्यास्य तु मतित्वतः ॥ ११ ॥**

**श्रुतज्ञानावृतिच्छेदविशेषापेक्षणस्य च। स्मृत्यादिष्वंतरंगस्याभावाच्च श्रुततास्थितिः ॥ १२ ॥**

मतिर्हि बहिरंगं श्रुतस्य कारणं अंतरंगं तु श्रुतज्ञानावरणक्षयोपशमविशेषः। स च स्मृत्यादेर्मतिविशेषणस्य नास्तीति न श्रुतत्वम् ॥

**मतिपूर्वं ततो ज्ञेयं श्रुतमस्पष्टतर्कणम्। न तु सर्वमतिव्याप्तिप्रसंगादिष्टबाधनात् ॥ १३ ॥**

श्रुतमस्पष्टतर्कणमित्यपि मतिपूर्वं नानार्थप्ररूपणं श्रुतज्ञानावरणक्षयोपशमापेक्षमित्यवगंतव्यमन्यथा स्मृत्यादीनामस्पष्टाक्षज्ञानानां च श्रुतत्वप्रसंगात् सिद्धांतविरोधापत्तिरिति सूक्तं मतिपूर्वं श्रुतं। तच्च—

**द्विभेदमंगबाह्यत्वादंगरूपत्वतः श्रुतम्। अनेकभेदमत्रैकं कालिकोत्कालिकादिकम् ॥ १४ ॥**

**द्वादशावस्थमंगात्मतदाचारादिभेदतः। प्रत्येकं भेदशब्दस्य संबंधादिति वाक्यभित् ॥ १५ ॥**

**मुख्या ज्ञानात्मका भेदप्रभेदास्तस्य सूत्रिताः। शब्दात्मकाः पुनर्गौणाः श्रुतस्येति विभिद्यते१६**

तत्र श्रुतज्ञानस्य मतिपूर्वकत्वेपि सर्वेषां विप्रतिपत्तिमुपदर्शयति;—

**शब्दज्ञानस्य सर्वेपि मतिपूर्वत्वमादृताः। वादिनः श्रोत्रविज्ञानाभावे तस्य समुद्भवात् ॥ १७ ॥**

भवतु नाम श्रुतज्ञानं मतिपूर्वकं याज्ञिकानामपि तत्राविप्रतिपत्तेः "शब्दादुदेत्य विज्ञानमप्रत्यक्षेथ वस्तुनि। शाब्दं तदिति मन्यंते प्रमाणांतरवादिनः" इति वचनात्। शब्दात्मकं तु श्रुतं वेदनाख्यं न मतिपूर्वकं तस्य नित्यत्वादिति मन्यमानं प्रत्याह—

**शब्दात्मकं पुनर्येषां श्रुतमज्ञानपूर्वकं। नित्यं तेषां प्रमाणेन विरोधो बहुचोदितः ॥ १८ ॥**

**प्रत्यक्षबाधनं तावदग्निमीळे पुरोहितं। इत्येवमादिशब्दस्य ज्ञानपूर्वत्ववेदनात् ॥ १९ ॥**

**तद्व्यक्तेः ज्ञानपूर्वत्वं स्वयं संवेद्यते न तु। शब्दस्येति न साधीयो व्यक्तेः शब्दात्मकत्वतः॥२०॥**

**शब्दाद्यर्थांतरं व्यक्तिः शब्दस्य कथमुच्यते। संबंधाच्चेति संबंधः स्वभाव इति सैकता ॥२१॥**

**शब्दव्यक्तेरभिन्नैकसंबंधात्मत्वतो न किम्। संबंधस्यापि तद्भेदेनवस्था केन वार्यते ॥ २२ ॥**

**भिन्नाभिन्नात्मकत्वे तु संबंधस्य ततस्तव। शब्दस्य बुद्धिपूर्वत्वं व्यक्तेरिव कथंचन ॥ २३ ॥**

**व्यक्तिर्वर्णस्य संस्कारः श्रोत्रस्याथोभयस्य वा। तद्बुद्धितावृतिच्छेदः साप्येतेनैव दूषिता ॥२४॥**

विशेषाधानमप्यस्य नाभिव्यक्तिर्विभाव्यते । नित्यस्यातिशयोत्पत्तिविरोधात्स्वात्मनाशवत्॥२५
कलशादेरभिव्यक्तिर्दीपादेः परिणामिनः । प्रसिद्धेति न सर्वत्र दोषोयमनुषज्यते ॥ २६ ॥
नित्यस्य व्यापिनो व्यक्तिः साकल्येन यदीष्यते । किं न सर्वत्र सर्वस्य सर्वदा तद्विनिश्चयः२७
स्वादृष्टवशतः पुंसां शब्दज्ञानविचित्रता । व्यक्तेपि कात्स्र्न्यतः शब्दे भावे सर्वात्मके न किम्२८
देशतस्तदभिव्यक्तौ सांशता न विरुध्यते । व्यंजके यत्तु शब्दानामभिन्ने सकलश्रुतिः ॥ २९ ॥
तस्य क्वचिदभिव्यक्तौ व्यापारे देशभाक् स्वतः । नानारूपे तु नानात्वं कुतस्तस्यावगम्यताम्३०
स्वाभिप्रेताभिलापस्य श्रुतेरन्योन्यसंश्रयः । सिद्धे व्यंजकनानात्वे विशिष्टवचसः श्रुतिः ॥३१॥
प्रसिद्धायां पुनस्तस्यां तत्प्रसिद्धिर्हि ते मते । यदि प्रत्यक्षसिद्धेयं विशिष्टवचसः श्रुतिः ॥ ३२ ॥
शेमुषीपूर्वतासिद्धिर्वाचां किं नानुमन्यते । ननु ज्ञाननिमित्तत्वं वाचामुच्चारणस्य नः ॥ ३३ ॥
सिद्धं नापूर्वरूपेण प्रादुर्भावः कदाचन । कर्तुरस्मरणं तासां तादृशीनां विशेषतः ॥ ३४ ॥
पुरुषार्थोपयोगत्वभाजामपि महात्मनां । नैवं सर्वनृणां कर्तुः स्मृतेरप्रतिसिद्धितः ॥ ३५ ॥
तत्कारणं हि काणादाः स्मरंति चतुराननं । जैनाः कालासुरं बौद्धाः स्वाष्टकात्सकलाः सदा३६
सर्वे स्वसंप्रदायस्याविच्छेदेनाविगानतः । नानाकर्तृस्मृतेर्नास्ति तासां कर्तेत्यसंगतं ॥ ३७ ॥
बहुकर्तृकतासिद्धेः खंडशस्तादृगन्यवत् । कर्तुरस्मरणं हेतुर्याज्ञिकानां यदीष्यते ॥ ३८ ॥
तदा स्वगृह्यमान्या स्याद्वेदस्यापौरुषेयता । जगतोऽकर्तृताप्येवं परेषामिति चेन्न वै ॥ ३९ ॥
कर्तुः स्मरणहेतुस्तत्सिद्धौ तैश्च प्रयुज्यते । महत्त्वं तु न वेदस्य प्रतिवाद्यागमात् स्थितम् ॥४०॥
येनाशक्यक्रियत्वस्य साधनं तत्तव स्मृतेः । पुरुषार्थोपयोगित्वं विवादाध्यासितं कथं ॥ ४१ ॥
विशेषणतया हेतोः प्रयोक्तुं युज्यते सतां । वेदाध्ययनवाच्यत्वं वेदाध्ययनपूर्वताम् ॥ ४२ ॥
न वेदाध्ययने शक्तं प्रज्ञापयितुमन्यवत् । यथा हिरण्यगर्भः सोऽध्येता वेदस्य साध्यते ॥४३॥
युगादौ प्रथमस्तद्वद्बुद्धादिः स्वागमस्य च । साक्षात्कृत्यागमस्यार्थवक्ता कर्तागमस्य चेत्॥४४॥
अग्निरित्यग्निरित्यादिर्वक्ता कर्ता तु तादृशः । पराभ्युपगमात्कर्ता स चेद्वेदे पितामहः ॥४५॥
तत एव न धातास्तु न वा कश्चित्समत्वतः । नानधीतस्य वेदस्याध्येतास्त्यध्यापकाद्विना ४६
न सोस्ति ब्रह्मणोत्रादाविति नाध्येतृता गतिः । स्वर्गेधीतान् स्वयं वेदाननुस्मृत्येह संभवी॥४७॥
ब्रह्माध्येता परेषां वाध्यापकश्चेद्यथायथं । सर्वेपि कवयः संतु तथाध्येतार एव च ॥ ४८ ॥
इत्यकृत्रिमता सर्वशास्त्राणां समुपागता । स्वयं जन्मांतराधीतमधीयामहि संप्रति ॥ ४९ ॥
इति संवेदनाभावात्तेषामध्येतृता न चेत् । पूर्वानुभूतपानादेस्तदहर्जातदारकाः ॥ ५० ॥
स्मर्तारः कथमेवं स्युस्तथा संवेदनाद्विना । स्मृतिलिंगविशेषाच्चेत्तेषां तत्र प्रसाध्यते ॥ ५१ ॥
कवीनां किं न काव्येषु पूर्वाधीतेषु सान्वया । यदि व्युत्पत्तिवर्णेषु पदेष्वर्थेष्वनेकधा ॥ ५२ ॥
वाक्येषु चेह कुर्वंतः कवयः काव्यमीक्षिताः । किं न प्रजापतिर्वेदान् कुर्वन्नेवं सतीक्षितः ५३
कश्चित्परीक्षकैर्लोकैः सद्भिस्तद्देशकालगैः । तथा च श्रूयते सापि गिरा सामानि रुग्विराट् ५४
ऋचः कृता इति केयं वेदस्यापौरुषेयता । प्रत्यभिज्ञायमानत्वं नित्यैकांतं न साधयेत् ॥ ५५ ॥
पौर्वापर्यविहीनेर्थे तदयोगाद्विरोधतः । पूर्वदृष्टस्य पश्चाद्वा दृश्यमानस्य चैकताम् ॥ ५६ ॥
वेत्ति सा प्रत्यभिज्ञेति प्रायशो विनिवेदितम् । दृष्टत्वदृश्यमानत्वे रूपे पूर्वापरे न चेत् ॥५७॥
भावस्य प्रत्यभिज्ञानं स्यात्तदत्राश्वशृंगवत् । तदा नित्यात्मकः शब्दः प्रत्यभिज्ञानतो यथा॥५८॥
देवदत्तादिरित्यस्तु विरुद्धो हेतुरीरितः । दर्शनस्य परार्थत्वादित्यपि परदर्शितः ॥ ५९ ॥

विरुद्धो हेतुरित्येवं शब्दैकत्वप्रसाधने । ततोऽकृतकता सिद्धेरभावाक्षयशक्तिकः ॥ ६० ॥
वेदस्य प्रथमोध्येता कर्तेति मतिपूर्वतः । पदवाक्यात्मकत्वाच्च भारतादिवदन्यथा ॥ ६१ ॥
तदयोगाद्विरुध्येत संगिरौ च महानसः । सर्वेषां हि विशेषाणां क्रिया शक्या वचोचरे॥६२॥
वेदवाक्येषु दृश्यानामन्येषां चेति हेतुता । युक्तान्यथा न धूमादेरग्न्यादिषु भवेदसौ ॥ ६३ ॥
ततः सर्वानुमानानामुच्छेदस्ते दुरुत्तरः । प्रमाणं न पुनर्वेदवचसोकृत्रिमत्वतः ॥ ६४ ॥
साध्यते चेद्भवेदर्थवादस्यापि प्रमाणता । अदुष्टहेतुजन्यत्वं तद्वत्प्रामाण्यसाधने ॥ ६५ ॥
हेत्वाभासनमित्युक्तमपूर्वार्थत्वमप्यदः । बाधवर्जितता हेतुस्तत्र चेल्लैंगिकादिवत् ॥ ६६ ॥
किमकृत्रिमता तस्य पोष्यते कारणं विना । पुंसो दोषाश्रयत्वेन पौरुषेयस्य दुष्टता ॥ ६७ ॥
शक्यते तज्जसंविचेरतो बाधनशंकनं । निःसंशयं पुनर्बाधवर्जितत्वं प्रसिद्ध्यति ॥ ६८ ॥
कर्तृहीनवचो वित्तेरित्यकृत्रिमतार्थकृत् । परेषामागमस्येष्टं गुणवद्वक्तृकत्वतः ॥ ६९ ॥
साधीयसीति यो वक्ति सोपि मीमांसकः कथं । समत्वादक्षलिंगादेः कस्यचिद्दुष्टता दृशः ७०
शब्दज्ञानवदाशंकापत्तेस्तज्जन्मसंविदः । मिथ्याज्ञाननिमित्तस्य यद्यक्षादेस्तदा न ताः ॥७१॥
तादृशः किं न वाक्यस्य श्रुत्याभासत्वमिष्यते । गुणवद्वक्तृकत्वं तु परैरिष्टं यदागमे ॥ ७२ ॥
तत्साधनांतरं तस्य प्रामाण्ये कांश्चन प्रति । सुनिर्बाधत्वहेतोर्वा समर्थनपरं भवेत् ॥ ७३ ॥
तन्नो न पौरुषेयत्वं भवतस्तत्र तादृशं । मंत्रार्थवादनिष्ठस्य पौरुषेयस्य बाधनात् ॥ ७४ ॥
वेदस्यापि पयोदादिध्वनेर्नैष्फल्यदर्शनात् । सत्यं श्रुतं सुनिर्णीतासंभवद्बाधकत्वतः ॥ ७५ ॥
प्रत्यक्षादिवदित्येतत्सम्यक् प्रामाण्यसाधनं । कदाचित्स्यादप्रमाणं शुक्तौ रजतबोधवत् ॥७६॥
नापेक्षं संभवद्बाधं देशकालनरांतरं । स्वेष्टज्ञानवदित्यस्य नानैकांतिकता स्थितिः ॥ ७७ ॥
न च हेतुरसिद्धोयमव्यक्तार्थवचोविदः । प्रत्यक्षबाधनाभावादनेकांते कदाचन ॥ ७८ ॥
अनुमेयेनुमानेन बाधवैधुर्यनिर्णयात् । तृतीयस्थानसंक्रांते त्वागमावयवेन च ॥ ७९ ॥
परागमे प्रमाणत्वं नैवं संभाव्यते सदा । दृष्टेष्टबाधनात्सर्वशून्यत्वागमबोधवत् ॥ ८० ॥
भावाद्येकांतवाचानां स्थितं दृष्टेष्टबाधनं । सामंतभद्रतो न्यायादिति नात्र प्रपंचितम् ॥ ८१ ॥
करिष्यते च तद्वत्स यथावसरमग्रतः । युक्त्या सर्वत्र तत्त्वार्थे परमागमगोचरम् ॥ ८२ ॥
प्रोक्तभेदप्रभेदं तच्छ्रुतमेव हि तद्दृढं । प्रामाण्यमात्मसात्कुर्यादिति नश्चितयात्र किम् ॥ ८३ ॥

तदेवं श्रुतस्यापौरुषेयतैकांतमपाकृत्य कथंचिदपौरुषेयत्वेपि चोदनायाः प्रामाण्यसाधनासंभवं विभाव्य स्याद्वादस्य च सुनिश्चितासंभवद्बाधकत्वं प्रामाण्यसाधनं व्यवस्थाप्य सर्वथैकांतानां तदसंभवं भगवत्समंतभद्राचार्यन्यायाद्भावाद्येकांतनिराकरणप्रवणादावेद्य वक्ष्यमाणाच्च न्यायात्संक्षेपतः प्रवचनप्रामाण्यदार्ढ्यमवधार्य तत्र निश्चितं नामात्मसात्कृत्य संप्रति श्रुतस्वरूपप्रतिपादकमकलंकग्रंथमनुवादपुरस्सरं विचारयति;—

अत्र प्रचक्षते केचिच्छ्रुतं शब्दानुयोजनात् । तत्पूर्वनियमायुक्तं नान्यथेष्टविरोधतः ॥ ८४ ॥
शब्दानुयोजनादेव श्रुतं हि यदि कथ्यते । तदा श्रोत्रमतिज्ञानं न स्यान्नान्यमतौ भवत् ॥८५॥
यद्यपेक्ष्यवचस्तेषां श्रुतं सांव्यवहारिकं । स्वेष्टस्य बाधनं न स्यादिति संप्रतिपद्यते ॥ ८६ ॥
न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते । इत्येकांतं निराकर्तुं तथोक्तं तैरिहेति वा॥८७॥
ज्ञानमाद्यं स्मृतिः संज्ञा चिंता चाभिनिबोधिकं । प्राङ्नामसंस्रुतं शेषं श्रुतं शब्दानुयोजनात्॥८८

अत्राकलंकदेवाः प्राहुः "ज्ञानमाद्यं स्मृतिः संज्ञा चिंता चाभिनिबोधिकं । प्राङ्नामयोजनाच्छेषं श्रुतं शब्दानुयोजनात् ॥" इति तत्रेदं विचार्यते मतिज्ञानादाद्यादाभिनिबोधिकपर्यंताच्छेषं श्रुतं शब्दानुयोजना-

देवेत्यवधारणं श्रुतमेव शब्दानुयोजनादिति वा ? यदि श्रुतमेव शब्दानुयोजनादिति पूर्वनियमस्तदा न कश्चिद्विरोधः शब्दसंसृष्टज्ञानस्याश्रुतज्ञानत्वव्यवच्छेदात् । अथ शब्दानुयोजनादेव श्रुतमिति नियमस्तदा श्रोत्रमतिपूर्वकमेव श्रुतं न चक्षुरादिमतिपूर्वकमिति सिद्धांतविरोधः स्यात् । सांव्यवहारिकं शाब्दं ज्ञानं श्रुतमित्यपेक्षया तथा नियमे तु नेष्टबाधास्ति चक्षुरादिमतिपूर्वकस्यापि श्रुतस्य परमार्थतोभ्युपगमात् स्वसमयसंप्रतिपत्तेः । अथवा "न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितं ॥" इत्येकांतं निराकर्तुं प्राग्नामयोजनादाद्यमिष्टं न तु तन्नामसंसृष्टमिति व्याख्यानमाकलंकमनुसर्तव्यं । तथा सति यदाह परः "वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी" इति तदपास्तं भवति तथा विनैवाभिनिबोधिकस्य प्रकाशनादित्यावेदयति—

**वाग्रूपता ततो न स्याद्योक्ता प्रत्यवमर्शिनी । मतिज्ञानं प्रकाशेत सदा तद्धि तया विना॥८९॥**

न हींद्रियज्ञानं वाचा संसृष्टमन्योन्याश्रयप्रसंगात् । तथाहि । न तावदज्ञात्वा वाचा संसृजेदतिप्रसंगात् । ज्ञात्वा संसृजतीति चेत् तेनैव संवेदनेनान्येन वा ? तेनैव चेदन्योन्याश्रयणमन्येन चेदनवस्थानं । अत्र शब्दाद्वैतवादिनामज्ञत्वमुपदर्श्य दूषयन्नाह;—

**वैखरीं मध्यमां वाचं विनाक्षज्ञानमात्मनः । स्वसंवेदनमिष्टं नोन्योन्याश्रयणमन्यथा ॥ ९० ॥**
**पश्यंत्या तु विना नैतद्व्यवसायात्मवेदनम् । युक्तं न चात्र संभाव्यः प्रोक्तोन्योन्यसमाश्रयः॥९१**
**व्यापिन्या सूक्ष्मया वाचा व्याप्तं सर्वं च वेदनं । तया विना हि पश्यंती विकल्पात्मा कुतः पुनः॥९२**
**मध्यमा तदभावे क निर्बीजा वैखरी स्वात् । ततः सा शाश्वती सर्ववेदनेषु प्रकाशते ॥ ९३ ॥**
**इति येपि समादध्युस्तेप्यनालोचितोक्तयः । शब्दब्रह्मणि निर्भागे तथा वक्तुमशक्तितः ॥९४॥**
**न ह्यवस्था च श्रोत्रस्य सत्याद्वैतप्रसंगतः । न च तासामविद्यात्वं तत्त्वासिद्धौ प्रसिद्ध्यति॥९५**

चतुर्विधा हि वाग्वैखरी मध्यमा पश्यंती सूक्ष्मा चेति । तत्राज्ञानं विनैव वैखर्या मध्यमया चात्मनः प्रभवति स्वसंवेदनं च अन्यथान्योन्याश्रयणस्य दुर्निवारत्वात् । तत एवानवस्थापरिहारोपि । न चैवं वाग्रूपता सर्ववेदनेषु प्रत्यवमर्शिनीति विरुध्यते पश्यंत्या वाचा विनाक्षज्ञानादेरप्यसंभवात् । तद्धि यदि व्यवसायात्मकं तदा व्यवसायरूपां पश्यंतीवाचं कस्तत्र निराकुर्यादव्यवसायात्मकत्वप्रसंगात् । न चैवमन्योन्याश्रयोनवस्था वा युगपत्स्वकारणवशाद्वाक्संवेदनयोस्तादात्म्यमापन्नयोर्भावात् । यत्पुनरव्यवसायात्मकं दर्शनं तत्पश्यंत्यापि विनोपजायमानं न वाचाननुगतं सूक्ष्मया वाचा सहोत्पद्यमानत्वात् तस्याः सकलसंवेदनानुयायिस्वभावत्वात् । तया विना पुनः पश्यंत्या मध्यमाया वैखर्याश्चोत्पत्तिविरोधादन्यथा निर्बीजत्वप्रसंगात् । ततस्तद्बीजमिच्छता तदुत्पादनशक्तिरूपा सूक्ष्मा वाक् व्यापिनी सततं प्रकाशमानाभ्युपगंतव्या । सैवानुपरिहरत्यभिधानाद्यपेक्षायां भवदन्योन्यसंश्रय इति दूषणं "अभिलापतद्भ्रशानामभिलापविवेकतः । अप्रमाणप्रमेयत्वमवश्यमनुषज्यते" इत्यनवस्थानं च अभिलापस्य तद्भागानां वा पराभिलापेन वैखरीरूपेण मध्यमारूपेण च विनिबाधसंवेदनोत्पत्तेरप्रमाणप्रमेयत्वानुषंगाभावादिति ये समादधते तेप्यनालोचितोक्तय एव, निरंशशब्दब्रह्मणि तथा वक्तुमशक्तेः । तस्यावस्थानां चतसृणां सत्यत्वेऽद्वैतविरोधात् । तासामविद्यात्वाददोष इति चेन्न, शब्दब्रह्मणोनंशस्य विद्यात्वसिद्धौ तदवस्थानामविद्यात्वाप्रसिद्धेः । तद्धि शब्दब्रह्म निरंशमिंद्रियप्रत्यक्षादनुमानात्स्वसंवेदनप्रत्यक्षादागमाद्वा न प्रसिध्यतीत्याह—

**ब्रह्मणो न व्यवस्थानमक्षज्ञानात् कुतश्चन । स्वप्नादाविव मिथ्यात्वात्तस्य साकल्यतः स्वयम्९६**
**नानुमानात्ततोर्थानां प्रतीतेर्दुर्लभत्वतः । परप्रसिद्धिरप्यस्य प्रसिद्धा नाप्रमाणिका ॥ ९७ ॥**
**स्वतः संवेदनात्सिद्धिः क्षणिकानंशवित्तिवत् । न परब्रह्मणो नापि सा युक्ता साधनाद्विना॥९८**

**आगमादेव तत्सिद्धौ भेदसिद्धिस्तथा न किम् । निर्बाधादेव चेत्सव्यं न प्रमाणांतरादृते ॥ ९९ ॥**
**तदागमस्य निश्चेतुं शक्यं जातु परीक्षकैः । न चागमस्ततो भिन्नः समस्ति परमार्थतः ॥ १०० ॥**
**तद्विवर्तस्त्वविद्यात्मा तस्य प्रज्ञापकः कथं । न चाविनिश्चिते तत्त्वे फेनबुद्बुदवद्भिदा ॥१०१॥**
**मायेयं बत दुःपारा विपश्चिदिति पश्यति । येनाविद्या विनिर्णीता विद्यां गमयति ध्रुवम् १०२**
**भ्रांतेर्बीजाविनाभावादनुमात्रैवमागता । ततो नैव परं ब्रह्मास्त्यनादिनिधनात्मकम् ॥ १०३ ॥**
**विवर्ततार्थभावेन प्रक्रिया जगतो यतः ।**

न हि भ्रांतिरियमखिलभेदप्रतीतिरित्यनिश्चये तदन्यथानुपपत्त्या तद्बीजभूतं शब्दतत्त्वमनादिनिधनं ब्रह्म सिद्ध्यति । नापि तदसिद्धौ भेदप्रतीतिभ्रांतिरिति परस्पराश्रयणात्कथमिदमवतिष्ठते "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं । विवर्ततार्थभावेन प्रक्रिया जगतो यतः ॥" इति यतस्तस्य चतस्रोवस्था वैखर्यादयः संभाव्यंते सत्योसत्यो वा । न च तदसंभवेनायं सर्वत्र प्रत्यये शब्दानुगमः सिद्ध्येत् सूक्ष्मायाः सर्वत्र भावात् । यतोभिधानापेक्षायामक्षादिज्ञानेन्योन्याश्रयोऽनवस्था च न स्यात्सर्वथैकांताभ्युपगमात् ॥

**स्याद्वादिनां पुनर्वाचो द्रव्यभावविकल्पतः । द्वैविध्यं द्रव्यवाग्द्वेधा द्रव्यपर्यायभेदतः ॥१०४॥**
**श्रोत्रग्राह्यात्र पर्यायरूपा सा वैखरी मता । मध्यमा च परैस्तस्याः कृतं नामांतरं तथा॥१०५॥**
**द्रव्यरूपा पुनर्भाषावर्गणाः पुद्गलाः स्थिताः । प्रत्ययान्मनसा नापि सर्वप्रत्ययगामिनी॥१०६॥**
**भाववाग्व्यक्तिरूपात्र विकल्पात्मनिबंधनं । द्रव्यवाचोभिधा तस्याः पश्यंतीत्यनिराकृताः १०७**
**वाग्विज्ञानावृतिच्छेदविशेषोपहितात्मनः । वक्तुः शक्तिः पुनः सूक्ष्मा भाववागभिधीयताम् १०८**
**तया विना प्रवर्तते न वाचः कस्यचित्कचित् । सर्वज्ञस्याप्यनंताया ज्ञानशक्तेस्तदुद्भवः ॥१०९**
**इति चिद्रूपसामान्यात्सर्वात्मव्यापिनी ननु । विशेषात्मतयेत्युक्ता मतिः प्राङ् नामयोजनात् ११०**
**शब्दानुयोजनादेव श्रुतमेवं न बाध्यते । ज्ञानशब्दाद्विना तस्य शक्तिरूपादसंभवात् ॥ १११ ॥**
**लब्ध्यक्षरस्य विज्ञानं नित्योद्घाटनविग्रहं । श्रुताज्ञानेपि हि प्रोक्तं तत्र सर्वजघन्यके ॥ ११२ ॥**
**स्पर्शनेंद्रियमात्रोत्थे मत्यज्ञाननिमित्तकं । ततोक्षरादिविज्ञानं श्रुते सर्वत्र संमतम् ॥ ११३ ॥**
**नाकलंकवचोबाधा संभवत्यत्र जातुचित् । तादृशः संप्रदायस्याविच्छेदाद्युक्त्यनुग्रहात्॥११४॥**

ननु च श्रोत्रग्राह्या पर्यायरूपा वैखरी मध्यमा च वागुक्ता शब्दाद्वैतवादिभिर्यतो नामांतरमात्रं तस्याः स्यान्न पुनरर्थभेद इति । नापि पश्यंती वाग् वाचकविकल्पलक्षणा सूक्ष्मा वा वाक् शब्दज्ञानशक्तिरूपा । किं तर्हि । स्थानेषूरःप्रभृतिषु विभज्यमाने विवृत्ते वायौ वर्णत्वमापद्यमाना वक्तृप्राणवृत्तिहेतुका वैखरी स्थानेषूरःप्रभृतिषु विभज्यमाने विवृत्ते वायौ कृतवर्णत्वपरिग्रहः । "वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना" इति वचनात् । तथा मध्यमा केवलमेव बुद्ध्युपादाना क्रमरूपानुपातिनी वक्तृप्राणवृत्तिमतिक्रम्य प्रवर्तमाना निश्चिता केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी । "प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते" इति वचनात् । पश्यन्ती पुनरविभागा सर्वतः संहृतक्रमा प्रत्येया । सूक्ष्मात्र स्वरूपज्योतिरेवान्तरवभासिनी नित्यावगन्तव्या । "अविभागानुपश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागवभासिनी । १ ।" इति वचनात् । ततो न स्याद्वादिनां कल्पयितुं युक्ताश्चतस्रोऽवस्थाः श्रुतस्य वैखर्यादयस्तदनिष्टलक्षणत्वादिति केचित् । तेऽपि न प्रातीतिकोक्तयः । वैखर्या मध्यमायाश्च श्रोत्रग्राह्यत्वलक्षणानतिक्रमात् । स्थानेषु विवृतो हि वायुर्वक्तॄणां प्राणवृत्तिश्च वर्णत्वं परिगृह्णंत्या वैखर्याः कारणं । वर्णत्वपरिग्रहस्तु लक्षणं । स च श्रोत्रग्राह्यत्वपरिणाम एव । इति न किंचिदनिष्टं । तथा केवला

बुद्धिर्वैकृप्राणवृत्त्यतिक्रमश्च मध्यमायाः कारणं तु लक्षणं क्रमरूपानुपातित्वमेव च तत्र श्रोत्रग्रहणयोग्यत्वाविरुद्धमिति न निराक्रियते। पश्यन्त्याः सर्वतः संहृतक्रमत्वमविभागत्वं च लक्षणं। तच्च यदि सर्वथा तदा प्रमाणविरोधो, वाच्यवाचकविकल्पक्रमाविभागयोस्तत्र प्रतिभासनात्। कथंचित्तु संहृतक्रमत्वं विभागत्वं च सत्रेष्टमेव, युगपदुपयुक्तश्रुतविकल्पानामसम्भवाद्वर्णादिविभागाभावाच्चानुपयुक्तश्रुतविकल्पस्येति। तस्याविकल्पात्मकत्वलक्षणानतिक्रम एव। सूक्ष्मायाः पुनरन्तःप्रकाशमानस्वरूपज्योतिर्लक्षणत्वं कथंचिन्नित्यत्वं च नित्योद्घाटितान्निरावरणलब्ध्यक्षरज्ञानाच्छक्तिरूपाच्च चित्सामान्यान्न विशिष्यते। सर्वथा नित्याद्वयरूपत्वं तु प्रमाणविरुद्धस्य वेदितप्रायम्। इत्यलं प्रपंचेन "श्रुतं शब्दानुयोजनादेव" इत्यवधारणस्याकलंकाभिप्रेतस्य कदाचिद्विरोधाभावात्; तथा संप्रदायस्याविच्छेदाद्युक्त्यनुग्रहाच्च सर्वमतिपूर्वकस्यापि श्रुतस्याक्षरज्ञानत्वव्यवस्थितेः। अत्रोपमानस्यान्तर्भावं विभावयन्नाह:—

**कृताभिदेयवाच्याभिः संस्कारस्य क्वचित्पुनः। संवित्प्रसिद्धसाधर्म्यात्तथा वाचकयोजिता ११५**
**प्रकाशितोपमा कैश्चित्सा श्रुतान्न विभिद्यते। शब्दानुयोजनात्तस्याः प्रसिद्धागमवित्तिवत्॥११६**
**प्रमाणान्तरतायान्तु प्रमाणनियमः कुतः। संख्या संवेदनादीनां प्रमाणांतरतास्थितौ॥११७॥**
**प्रत्यक्षं द्व्यादिविज्ञानमुत्तराधर्यवेदिनं। स्थविष्ठोरुदविष्ठाल्पलघ्वासन्नादिविच्च चेत्॥ ११८॥**
**नोपदेशमपेक्षेत जातु रूपादिवित्तिवत्। परोपदेशनिर्मुक्तं प्रत्यक्षं हि सतां मतं॥ ११९॥**
**तत्संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरपेक्षते। परोपदेशमध्यक्षं संख्यादिविषयं यदि॥ १२०॥**
**तत्रोपमानतः सैतत् प्रमाणान्तरमस्तु वः। नोपमानार्थता तस्यास्तद्वाक्येन विनोद्भवात् १२१**
**आगमत्वं पुनः सिद्धमुपमानं श्रुतं यथा। सिंहासने स्थितो राजेत्यादिशब्दोत्थवेदनं॥१२२॥**

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानं, गौरिव गवय इति ज्ञानं। तथा वैधर्म्याद् योऽगवयो महिषादिः स न गौरिवेति ज्ञानं। साधर्म्यवैधर्म्याभ्यां संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानार्थः। अयं स गवयशब्दवाच्यः पिंड, इति सोऽयं महिषादिरगवयशब्दवाच्य इति वा। साधर्म्यवैधर्म्योपमानवाक्यादिसंस्कारस्य प्रतिपाद्यस्योपजायते। इति द्वेधोपमानं शब्दात्प्रमाणान्तरं ये समाचक्षते तेषां द्व्यादिसंख्याज्ञानं प्रमाणान्तरं, गणितज्ञसंख्यावाक्याहितसंस्कारस्य प्रतिपाद्यस्य पुनर्द्व्यादिषु संख्याविशिष्टद्रव्यदर्शनादेतानि द्व्यादीनि तानीति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिर्द्व्यादिसंख्याज्ञानप्रमाणफलमिति प्रतिपत्तव्यं। तथोत्तराधर्यज्ञानं सोपमानादिषु[1] स्थविष्ठज्ञानं पर्वादिषु महत्त्वज्ञानं स्ववंशादिषु दविष्ठज्ञानं चन्द्रार्कादिष्वल्पत्वज्ञानं सर्षपादिषु, लघुत्वज्ञानं तूलादिषु, प्रत्यासन्नज्ञानं स्वगृहादिषु, संस्थानज्ञानं त्र्यस्त्र्यादिषु, वक्रर्ज्वादिज्ञानं च क्वचित्प्रमाणांतरमायातं। परोपदिष्टोत्तराधर्यादिवाक्याहितसंस्कारस्य विनेयजनस्य पुनरौत्तराधर्यदर्शनादिदं तदौत्तराधर्यादीति संज्ञासंज्ञिसम्बन्धप्रतिपत्तेस्तत्फलस्य भावान्न हि संख्याज्ञानादि प्रत्यक्षमिति युक्तं वक्तुं, परोपदेशापेक्षाविरहप्रसंगात् रूपादिज्ञानवत्, परोपदेशविनिर्मुक्तं प्रत्यक्षमित्यत्र सतां संप्रतिपत्तेः। यदि पुनः संख्यादिविषयज्ञानं प्रत्यक्षमपरोपदेशमेव तत्संज्ञासंज्ञिसम्बन्धप्रतिपत्तेरेव परोपदेशापेक्षानुभवादिति मतं तदा सैव संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः प्रमाणान्तरमस्तु, विनोपमानवाक्येन भावादुपमानेऽन्तर्भावितुमशक्यत्वात्। ननु चाप्तोपदेशात्प्रतिपाद्यस्य तत्संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरागमफलमेव ततोऽप्रमाणांतरमिति चेत्तर्ह्याप्तोपदिष्टोपमानवाक्यादपि तत्प्रतिपत्तिरागमज्ञानमेवेति नोपमानं श्रुतात्प्रमाणान्तरं, सिंहासनस्थो राजा मंचके महादेवी सुवर्णपीठे सचिवः एतस्मात्पूर्वत एतस्मादुत्तरत एतस्माद्दक्षिण एतन्नामाणवयं ग्रामवानक(?)मित्यादिवाक्याहितसंस्कारस्य पुनस्तथैव दर्शनात्सो-

[1] आम्रोपमानादिषु इति पाठः सम्यक्।

ऽयं राजेत्यादिसंज्ञासंज्ञिसंबन्धप्रतिपत्तिः । षडाननो गुहश्चतुर्मुखो ब्रह्मा तुंगनासो भागवतः क्षीराम्भोविवेचनतुण्डो हंसः सप्तच्छद इत्यादिवाक्याहितसंस्कारस्य तथा प्रतिपत्तिर्वा यथागमज्ञानं तदा तद्वदेवोपमानमवसेयं विशेषाभावात् । यदि पुनरुपमानोपमेयभावप्रतिपादनपरत्वेन विशिष्टादुपमानवाक्यादुत्पद्यमानं श्रुतात्प्रमाणान्तरमित्यभिनिवेशस्तदा रूप्यरूपकभावादिप्रतिपादनपरत्वेन ततोऽपि विशिष्टाद्रूपकादिवाक्यादुपजायमानं विज्ञानं प्रमाणान्तरमनुमन्यतां, तस्यापि स्वविषयप्रमितौ साधकतमत्वाद्विसंवादकत्वाभावादप्रमाणत्वायोगात् । अथ रूपकाद्यलंकारभाजोऽपि वाक्यविशेषादुपजातमर्थज्ञानं श्रुतमेव प्रवचनमूलत्वाविशेषादिति मतिस्तदोपमानवाक्योपजनितमपि वेदनं श्रुतज्ञानमभ्युपगन्तव्यं तत एवेत्यलं प्रपंचेन । प्रतिभा किं प्रमाणमित्याह;—

**उत्तरप्रतिपत्त्याख्या प्रतिभा च श्रुतं मता । नाभ्यासजा सुसंवित्तिः कूटद्रुमादिगोचरा ॥१२३**

उत्तरप्रतिपत्तिः प्रतिभा कैश्चिदुक्ता सा श्रुतमेव, न प्रमाणान्तरं, शब्दयोजनासद्भावात् । अत्यन्ताभ्यासादाशु प्रतिपत्तिरशब्दजा कूटद्रुमादावकृताभ्यासस्याशु प्रवृत्तिः प्रतिभा परैः प्रोक्ता । सा न श्रुतं, सादृश्यप्रत्यभिज्ञानरूपत्वात्तस्यास्तयोः(?) पूर्वोत्तरयोर्हि दृष्टदृश्यमानयोः कूटद्रुमयोः सादृश्यप्रत्यभिज्ञा झटित्येकतां परामृषन्ती तदेवेत्युपजायते । सा च मतिरेव निश्चितेत्याह;—

**"सोऽयं कूट इति प्राच्यौदीच्यदृष्टेक्षमाणयोः । सादृश्ये प्रत्यभिज्ञेयं मतिरेव हि निश्चिता १२४**
**शब्दानुयोजनात्त्वेषा श्रुतमस्त्वक्षवित्तिवत् । संभवाभावसंवित्तिरर्थापत्तिस्तथानुमा ॥ १२५ ॥**
**नामासंसृष्टरूपा हि मतिरेषा प्रकीर्तिता । नातः कश्चिद्विरोधोऽस्ति स्याद्वादामृतभोगिनां ॥१२६**

नामासंसृष्टरूपा प्रतिभा संभववित्तिरभाववित्तिरर्थापत्तिः स्वार्थानुमा च पूर्वं मतिरित्युक्ता । नामसंसृष्टा तु सम्प्रति श्रुतमित्युच्यमाने पूर्वापरविरोधो न स्याद्वादामृतभाजां सम्भाव्यते, तथैव युक्त्यागमानुरोधात् । तदेवं पूर्वोक्तया मत्या सह श्रुतं परोक्षं प्रमाणं सकलमुनीश्वरविश्रुतमुन्मूलितनिःशेषदुर्मतनिकरमिह तत्वार्थशास्त्रे समुदीरितमिति परीक्षकाश्चेतसि धारयन्तु स्वप्रज्ञातिशयवशादित्युपसंहरन्नाह ।

**इति श्रुतं सर्वमुनीशविश्रुतं । सहोक्तमत्यात्र परोक्षमीरितं ।**
**प्रमाणमुन्मूलितदुर्मतोत्करं । परीक्षकाश्चेतसि धारयन्तु तम् ॥ १२७ ॥**

इति तत्त्वार्थश्लोकवार्तिकालंकारे प्रथमस्याध्यायस्य तृतीयमाह्निकम् ॥

---

## भवप्रत्ययोऽवधिर्देवनारकाणाम् ॥ २१ ॥

किं पुनः कुर्वन्निदमावेदयतीत्याह;—

**भवप्रत्यय इत्यादिसूत्रमाहावधेर्बहिः । कारणं कथयन्नेकं स्वामिभेदव्यपेक्षया ॥ १ ॥**

देवनारकाणां भवभेदात्कथं भवस्तदवधेरेकं कारणमिति न चोद्यं भवसामान्यस्यैकत्वाविरोधात् । कथं बहिरंगकारणं भवस्तस्यात्मपर्यायत्वादिति चेत् ।

**नामायुरुदयापेक्षो नुः पर्यायो भवः स्मृतः । स बहिःप्रत्ययो यस्य स भवप्रत्ययोऽवधिः ॥२॥**

बहिरंगस्य देवगतिनामकर्मणो देवायुषश्चोदयाद्देवभवः । तथा नरकगतिनामकर्मणो नारकायुषश्चोदयान्नारकभव इति । तस्य बहिरंगतात्मपर्यायत्वेऽपि न विरुद्धा । कथमभावधारणं, देवनारकाणामेव भवप्रत्ययोऽवधिरिति वा भवप्रत्यय एव देवनारकाणामिति ? उभयथाप्यदोष इत्याह;—

येऽप्यतोऽत्र प्रवक्ष्यन्ते प्राणिनो देवनारकाः। तेषामेवायमित्यर्थान्नान्येषां भवकारणः ॥ ३ ॥
भवप्रत्यय एवेति नियमान्न गुणोद्भवः। संयमादिगुणाभावाद्देवनारकदेहिनाम् ॥ ४ ॥

नन्वेवमवधारणेऽवधौ ज्ञानावरणक्षयोपशमहेतुरपि न भवेदित्याशंकामपनुदति;—

नावधिज्ञानवृत्कर्मक्षयोपशमहेतुता। व्यवच्छेद्या प्रसज्येताप्रतियोगित्वनिर्णयात् ॥ ५ ॥
बाह्यौ हि प्रत्ययावत्राख्यातौ भवगुणौ तयोः। प्रतियोगित्वमित्येकनियमादन्यविच्छिदे ॥६॥

यथैव हि चैत्रो धनुर्द्धर एवेत्यत्रायोगव्यवच्छेदेऽप्यधानुर्द्धर्यस्य व्यवच्छेदो नापाण्डित्यादेस्तस्य तदप्रतियोगित्वात्। किं चैत्रो धनुर्द्धरः किं वायमधनुर्द्धर इति आशंकायां धानुर्द्धर्येतरयोरेव प्रतियोगित्वाद्धानुर्द्धर्यनियतेनाधानुर्द्धर्यं व्यवच्छिद्यते। तथा किमवधिर्भवप्रत्यय इति बहिरंगकारणयोर्भवगुणयोः परस्परं प्रतियोगिनोः शंकायामेकतरस्य भवस्य कारणत्वेन नियमे गुणकारणत्वं व्यवच्छिद्यते। न पुनरवधिज्ञानावरणक्षयोपशमविशेषः क्षेत्रकालादिवत्तस्य तदप्रतियोगित्वात्। तद्व्यवच्छेदे भवस्य साधारणत्वात्सर्वेषां साधारणोऽवधिः प्रसज्येत। तच्चानिष्टमेव। परिहृतं च भवतीत्याह;—

प्रत्ययस्यान्तरस्यातस्तत्क्षयोपशमात्मनः। प्रत्यग्भेदोऽवधेर्युक्तो भवाभेदेऽपि चाङ्गिनाम् ॥ ७ ॥

कुतः पुनर्भवाभेदेऽपि देवनारकाणामवधिज्ञानावरणक्षयोपशमभेदः सिद्ध्येत् इति चेत्, स्वशुद्धिभेदात्। सोऽपि जन्मान्तरोपपत्तिविशुद्धिभावात्, नाभेदात्। सोऽपि स्वकारणभेदात्। इति न पर्यनुयोगो विधेयः कारणविशेषपरम्परायाः सर्वत्रापर्यनुयोगार्हत्वात्।

## क्षयोपशमनिमित्तः षड्विकल्पः शेषाणाम् ॥ २२ ॥

किमर्थमिदमित्याह;—

गुणहेतुः स केषां स्यात् कियद्भेद इतीरितुम्। प्राह सूत्रं क्षयेत्यादि संक्षेपादिष्टसंविदे ॥१॥

कः पुनरत्र क्षयः कश्चोपशमः कश्च क्षयोपशम इत्याह;—

क्षयहेतुरित्याख्यातः क्षयः क्षायिकसंयमः। संयतस्य गुणः पूर्वं समभ्यर्हितविग्रहः ॥ २ ॥
तथा चारित्रमोहस्योपशमादुद्भवन्नयम्। कथ्यतेतोपशमो हेतोरुपचारस्त्वयं फले ॥ ३ ॥
क्षयोपशमतो जातः क्षयोपशम उच्यते। संयमासंयमोऽपीति वाक्यभेदाद्विविच्यते ॥ ४ ॥

क्षयनिमित्तोऽवधिः शेषाणामुपशमनिमित्तः क्षयोपशमनिमित्त इति वाक्यभेदात्क्षायिकौपशमिकक्षायोपशमिकसंयमगुणनिमित्तस्यावधिरवगम्यते। कार्ये कारणोपचारात् क्षयादीनां क्षायिकसंयमादिषूपचारः तथाभिधानोपपत्तेः॥ किमर्थं मुख्यशब्दानभिधानमित्याह;—

क्षायोपशम इत्यन्तरंगो हेतुर्निगद्यते। यदि वेति प्रतीत्यर्थं मुख्यशब्दाप्रकीर्तनम् ॥ ५ ॥
तेनेह प्राच्यविज्ञाने वक्ष्यमाणे च भेदिनि। क्षयोपशमहेतुत्वात्सूत्रितं संप्रतीयते ॥ ६ ॥

क्षयोपशम इत्यन्तरंगो हेतुः सामान्येनाभिधीयमानस्तदावरणापेक्षया व्यवतिष्ठते स च सकलक्षायोपशमिकज्ञानभेदानां साधारण इति। यथेह षड्विधस्यावधेर्निमित्तं तथा पूर्वत्र भवप्रत्ययेऽवधौ श्रुते मतौ चावसीयते। वक्ष्यमाणे च मनःपर्यये स एव तदावरणापेक्षयेति सूत्रितं भवति। मुख्यस्य शब्दस्याश्रवणात्सर्वत्र बहिरंगकारणप्रतिपादनाच्च मुख्यशब्दप्रयोगो युक्तोऽन्यथा गुणप्रत्ययस्यावधेरप्रतिपत्तेः।

के पुनः शेषा इत्याह;—

शेषा मनुष्यतिर्यञ्चो वक्ष्यमाणाः प्रपंचतः। ते यतः प्रतिपत्तव्या गतिनामाभिधाश्रयाः ॥७॥

**स्याच्छेषामवधिर्बाह्यगुणहेतुरितीरणात् । भवहेतुर्न मेऽस्तीति सामर्थ्यादवधार्यते ॥ ८ ॥**
**तेषामेवेति निर्णीतेर्देवनारकविच्छिदा । क्षयोपशमहेतुः सन्नित्युक्ते नाविशेषतः ॥ ९ ॥**

क्षयोपशमनिमित्त एव शेषाणामित्यवधारणाद्भवप्रत्ययत्वव्युदासः शेषाणामेव क्षयोपशमनिमित्त इति देवनारकाणां नियमात्ततो नोभयथाप्यवधारणे दोषोऽस्ति । क्षयोपशमनिमित्तोऽवधिः शेषाणामित्युभयत्रानवधारणाच्च नाविशेषतोऽवधिस्तिर्यङ्मनुष्याणामन्तरङ्गस्य तस्य कारणस्य विशेषात् । तथा पूर्वत्रानवधारणाद्बहिरंगकारणाव्यवच्छेदः । परत्रानवधारणाद्देवनारकाव्यवच्छेदः प्रसिद्धो भवति ॥

**षड्विकल्पः समस्तानां भेदानामुपसंग्रहात् । परमागमसिद्धानां युक्त्या सम्भावितात्मनाम् ॥१०॥**

अनुगाम्यननुगामी वर्द्धमानो हीयमानोऽवस्थितोऽनवस्थित इति षड्विकल्पोऽवधिः संप्रतिपाताप्रतिपातयोरत्रैवान्तर्भावात् । देशावधिः परमावधिः सर्वावधिरिति च परमागमप्रसिद्धानां पूर्वोक्तयुक्त्या सम्भावितानामत्रोपसंग्रहात् कुतः पुनरवधिः कश्चिदनुगामी कश्चिदन्यथा सम्भवतीत्याह;—

**विशुद्ध्यनुगमात्पुंसोऽनुगामी देशतोऽवधिः । परमावधिरप्युक्तः सर्वावधिरपीदृशः ॥ ११ ॥**
**विशुद्ध्यनन्वयादेशोऽननुगामी च कस्यचित् । तद्भवापेक्षया प्राच्यः शेषोऽन्यभववीक्षया १२**
**वर्द्धमानोऽवधिः कश्चिद्विशुद्धेर्वृद्धितः स तु । देशावधिरिहाम्नातः परमावधिरेव च ॥ १३ ॥**
**हीयमानोऽवधिः शुद्धेर्हीयमानत्वतो मतः । सद्देशावधिरेवात्र हाने सद्भावसिद्धितः ॥ १४ ॥**
**अवस्थितोऽवधिः शुद्धेरवस्थानान्नियम्यते । सर्वोऽङ्गिनां विरोधस्याथभावान्नानवस्थितेः ॥ १५ ॥**
**विशुद्धेरनवस्थानात्सम्भवेदनवस्थितः । स देशावधिरेवैकोऽन्यत्र तत् प्रतिघाततः ॥ १६ ॥**
**प्रोक्तः सप्रतिपातो वाऽप्रतिपातस्तथाऽवधेः । सोऽन्तर्भावममीष्वेव प्रयातीति न सूत्रितः १७**

विशुद्धेः प्रतिपाताप्रतिपाताभ्यां सप्रतिपाताप्रतिपातौ ह्यवधी षट्स्वेवान्तर्भवतः । अनगाम्यादयो हि केचित् प्रतिपाताः केचिदप्रतिपाता इति ।

## ऋजुविपुलमती मनःपर्ययः ॥ २३ ॥

नन्विह बहिरंगकारणस्य भेदस्य च ज्ञानानां प्रस्तुतत्वान्नेदं वक्तव्यं ज्ञानभेदकारणाप्रतिपादकत्वादित्यारेकायामाह;—

**मनःपर्ययविज्ञानभेदकारणसिद्धये । प्राहर्ज्वित्यादिकं सूत्रं स्वरूपस्य विनिश्चयात् ॥ १ ॥**

न हि मनःपर्ययज्ञानरूपस्य निश्चयार्थमिदं सूत्रमुच्यते यतोऽप्रस्तुतार्थं स्यात् । तस्य मत्यादिसूत्रे निरूपस्यैव निश्चयात् । किं तर्हि । प्रकृतस्य बहिरंगकारणस्य भेदस्य प्रसिद्धये समारभते । ऋज्वी मतिर्यस्य स ऋजुमतिः । विपुला मतिर्यस्य स विपुलमतिः । ऋजुमतिश्च विपुलमतिश्च ऋजुविपुलमती । एकस्य मतिशब्दस्य गम्यमानत्वाल्लोप इति व्याख्याने का सा ऋज्वी विपुला च मतिः किंप्रकारा च मतिशब्देन चान्यपदार्थानां वृत्तौ कोऽन्यपदार्थ इत्याह;—

**निर्वर्तितशरीरादिकृतस्यार्थस्य वेदनात् । ऋज्वी निर्वर्तिता त्रेधा प्रगुणा च प्रकीर्तिता ॥२॥**
**अनिर्वर्तितकायादिकृतार्थस्य च वेदिका । विपुला कुटिला षोढा चक्रर्जुत्रयगोचरा ॥ ३ ॥**
**एतयोर्मतिशब्देन वृत्तिरन्यपदार्थिका । कैश्चिदुक्ता स चान्योऽर्थो मनःपर्यय इत्यसन् ॥ ४ ॥**
**द्वित्वप्रसंगतस्तत्र प्रवक्तुं धीधनो जनः । न मनःपर्ययो युक्तो मनःपर्यय इत्यलम् ॥ ५ ॥**
**यदात्वन्यौ पदार्थौ स्तस्तद्विशेषौ बलाद्गतौ । सामान्यतस्तदेकोऽयमिति युक्तं तथा वचः ॥ ६ ॥**
**सामानाधिकरण्यं च न सामान्यविशेषयोः । प्रयाध्यते तदात्मत्वात्कथंचित्संप्रतीतितः ॥७॥**

येऽप्याहुः । ऋजुश्च विपुला च ऋजुविपुले ते च ते मतीति च स्वपदार्थवृत्तित्वेन ऋजुविपुलमती विशिष्टे परिच्छिन्नं मनःपर्यय उक्तो भवतीति तद्भेदकथनं प्रतीयत इति तेषामप्यविरोधमुपदर्शयति ॥

**स्वपदार्था च वृत्तिः स्यादविरुद्धा तथा सति । विशिष्टे हि मतिज्ञाने मनःपर्यय इष्यते ॥ ८ ॥**

यथर्जुविपुलमती मनःपर्ययविशेषौ मनःपर्ययसामान्येनेति सामानाधिकरण्यमविरुद्धं सामान्यविशेषयोः कथंचित्तादात्म्यात्तथा संप्रतीतेश्च तद्वदृजुविपुलमती ज्ञानविशेषौ मनःपर्यययोर्ज्ञानमित्यपि न विरुध्यते मनःपर्ययज्ञानभेदाप्रतिपत्तेः प्रकृतयोः सद्भावात् विशेषात् । कथं बाह्यकारणप्रतिपत्तिरत्रेत्याह;—

**परतोऽयमपेक्ष्यात्मनः स्वस्य परस्य वा । मनःपर्यय इत्यस्मिन्पक्षे बाह्यनिमित्तवत् ॥ ९ ॥**

मनःपरीत्यानुसंधाय वायनं मनःपर्यय इति व्युत्पत्तौ बहिरंगनिमित्तकोऽयं मनःपर्यय इति बाह्यनिमित्तप्रतिपत्तिरस्य कृता भवति ।

**न मतिज्ञानतापत्तिस्तस्यैवं मनसः स्वयं । निर्वर्त्तकत्ववैधुर्यादपेक्षामात्रतास्थितेः ॥ १० ॥**
**क्षयोपशममाबिभ्रदात्मा मुख्यं हि कारणं । तत्प्रत्यक्षस्य निर्वृत्तौ परहेतुपराङ्मुखः ॥ ११ ॥**
**मनोलिङ्गजतापत्तेर्न च तस्यानुमानतः । प्रत्यक्षलक्षणस्यैव निर्बाधस्य व्यवस्थितेः ॥ १२ ॥**

नन्वेवं मनःपर्ययशब्दनिर्वचनसामर्थ्यात्तद्बाह्यप्रतिपत्तिः कथमतः स्यादित्याह;—

**यदा परमनःप्राप्तः पदार्थो मन उच्यते । तात्स्थ्यात्ताच्छब्द्यसंसिद्धेर्मंचक्रोशनवत्तदा ॥१३॥**
**तस्य पर्ययणं यस्मात्तद्वा येन परीयते । स मनःपर्ययो ज्ञेय इत्युक्तेस्तत्स्वरूपवित् ॥ १४ ॥**

## विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २४ ॥

ननु ऋजुविपुलमत्योः स्ववचनसामर्थ्यादेव विशेषप्रतिपत्तेस्तदर्थमिदं किमारभ्यत इत्याशंकायामाह;—

**मनःपर्यययोरुक्तभेदयोः स्ववचोबलात् । विशेषहेतुसंवित्तौ विशुद्धीत्यादिसूत्रितम् ॥ १ ॥**

नर्जुमतित्वविपुलमतित्वाभ्यामेवर्जुविपुलमत्योर्विशेषोऽत्र प्रतिपाद्यते । यतो नानर्थकमिदं स्यात् । किं तर्हि विशुद्ध्यप्रतिपाताभ्यां तयोः परस्परं विशेषान्तरमिहोच्यते ततोऽस्य साफल्यमेव ।

का पुनर्विशुद्धिः कश्चाप्रतिपातः को वानयोर्विशेष इत्याह;—

**आत्मप्रसत्तिरत्रोक्ता विशुद्धिर्निजरूपतः । प्रच्युत्य संभवश्चास्याप्रतिपातः प्रतीयते ॥ २ ॥**
**ताभ्यां विशेषमाणत्वं विशेषः कर्मसाधनः । तच्छब्देन परामर्शो मनःपर्ययभेदयोः ॥ ३ ॥**

तयोरेवर्जुविपुलमत्योर्विशुद्ध्यप्रतिपाताभ्यां विशेषोऽवसेय इत्यर्थः ॥

**ननूत्तरत्र तद्भेदस्थिताभ्यां स विशिष्यते । विशुद्ध्यप्रतिपाताभ्यां पूर्वस्तु न कथंचन ॥ ४ ॥**
**इत्ययुक्तं विशेषस्य द्विष्ठत्वेन प्रसिद्धितः । विशिष्यते यतो यस्य विशेषः सोऽत्र हीक्षते ॥५॥**

पाठापेक्षयोत्तरो मनःपर्ययस्य भेदो विपुलमतिस्तद्गताभ्यां विशुद्ध्यप्रतिपाताभ्यां स एव पूर्वस्मात्तद्भेदादृजुमतेर्विशिष्यते न पुनः पूर्व उत्तरस्मात्कथमपीत्ययुक्तं विशेष्यस्योभयत्वेन प्रसिद्धेः । यतो विशिष्यते स विशेषो यश्च विशिष्यते स विशेष्य इति व्युत्पत्तेः । विशुद्ध्यप्रतिपाताभ्यां चोत्तरतद्भेदगताभ्यां पूर्वो यथोत्तरस्माद्विशिष्यते तथा पूर्वतद्भेदगाभ्यामुत्तर इति सर्वं निरवद्यं । ननु चर्जुमतेर्विपुलमतिर्विशुद्ध्या विशिष्यते तस्य ततो विशुद्धतरत्वान्मनःपर्ययज्ञानावरणक्षयोपशमप्रकर्षादुत्पन्नत्वात् । अप्रतिपातेन च तत्स्वामिनामप्रतिपतितसंयमत्वेन तत्संयमगुणैकार्थसमवायित्वेन विपुलमतेरप्रतिपाताद्वि-

पुलमतेस्तु कथमृजुमतिर्विशिष्यते ? ताभ्यामिति चेत्स्वविशुद्ध्याल्पया प्रतिपातेन चेति गम्यताम् । विपुलमत्यपेक्षयर्जुमतेरल्पविशुद्धित्वात्तत्स्वामिनामुपशान्तकषायाणामपि सम्भवत्प्रतिपतत्संयमगुणैकार्थसमवायिनः प्रतिपातसम्भवादिति प्रपंचितमस्माभिरन्यत्र ॥

## विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्यययोः ॥ २५ ॥

विशेष इत्यनुवर्त्तते । किमर्थमिदमुच्यते इत्याह;—

**कुतोऽवधेर्विशेषः स्यान्मनःपर्ययसंविदः । इत्याख्यातुं विशुद्ध्यादिसूत्रमाह यथागमं ॥ १ ॥**

विशुद्धिरुक्ता क्षेत्रं परिच्छेद्याद्यधिकरणं स्वामीश्वरं विषयः परिच्छेद्यस्तैर्विशेषोऽवधिमनःपर्यययोर्विशेषः । कथमित्याह;—

**भूयः सूक्ष्मार्थपर्यायविन्मनःपर्ययोऽवधेः । प्रभूतद्रव्यविषयादपि शुद्ध्या विशेष्यते ॥ २ ॥**
**क्षेत्रतोऽवधिरेवातः परमक्षेत्रतामितः । स्वामिना त्ववधेः सः स्याद्विशिष्टः संयतप्रभुः ॥ ३ ॥**
**विषयेण च निःशेषरूपरूप्यर्थगोचरः । रूप्यर्थगोचरादेव तस्मादेतच्च वक्ष्यते ॥ ४ ॥**
**एवं मत्यादिबोधानां सभेदानां निरूपणम् । कृतं न केवलस्यात्र भेदस्याप्रस्तुतत्वतः ॥ ५ ॥**
**वक्ष्यमाणत्वतश्चास्य घातिक्षयजमात्मनः । स्वरूपस्य निरुक्त्यैव ज्ञानं सूत्रे प्ररूपणात् ॥ ६ ॥**

## मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु ॥ २६ ॥

मत्यादिज्ञानेषु सभेदानि चत्वारि ज्ञानानि भेदतो व्याख्याय बहिरंगकारणतश्च केवलमभेदं वक्ष्यमाणकारणस्वरूपमिहाप्रस्तुतत्वात् तथानुक्त्वा किमर्थमिदमुच्यत इत्याह;—

**अथाद्यज्ञानयोरर्थविवादविनिवृत्तये । मतीत्यादि वचः सम्यक् सूत्रयन्सूत्रमाह सः ॥ १ ॥**

संप्रति के मतिश्रुते कश्च निबन्धः कानि द्रव्याणि के वा पर्याया इत्याह;—

**मतिश्रुते समाख्याते निबन्धो नियमः स्थितः । द्रव्याणि वक्ष्यमाणानि पर्यायाश्च प्रपंचतः ॥२॥**

ततो मतिश्रुतयोः प्रपंचेन व्याख्यातयोर्वक्ष्यमाणेषु द्रव्येष्वसर्वपर्यायेषु निबन्धो नियमो प्रत्येतव्य इति सूत्रार्थो व्यवतिष्ठते । विषयेष्वित्यनुक्तं कथमत्रागम्यत इत्याह;—

**पूर्वसूत्रोदितश्चात्र वर्त्तते विषयध्वनिः । केवलोऽर्थाद्विशुद्ध्यादिसहयोगं श्रयन्नपि ॥ ३ ॥**

विशुद्धिक्षेत्रस्वामिविषयोभ्योऽवधिमनःपर्यययोरित्यस्मात्सूत्रात्तद्विषयशब्दोऽत्रानुवर्त्तते । कथं स विशुद्ध्यादिभिः सह योगमाश्रयन्नपि केवलः शक्योऽनुवर्तयितुं ? सामर्थ्यात् । तथाहि—न तावद्विशुद्धेरनुवर्त्तनसामर्थ्यं प्रयोजनाभावात्, तत एव न क्षेत्रस्य स्वामिनो वा सूत्रसामर्थ्याभावात् । नन्वेवं द्रव्येष्वसर्वपर्यायेषु निबन्धन इति वचनसामर्थ्याद्विषयशब्दस्यानुवर्त्तनेष्विति कथं विषयेभ्य इति पूर्वं निर्देशात्तथैवानुवृत्तिप्रसंगादित्याशंकायामाह;—

**द्रव्येष्विति पदेनास्य सामानाधिकरण्यतः । तद्विभक्त्यन्ततापत्तेर्विषयेष्विति बुध्यते ॥ ४ ॥**

किं पुनः फलं विषयेष्विति सम्बन्धस्येत्याह;—

**विषयेषु निबन्धोऽस्तीत्युक्ते निर्विषयेन ते । मतिश्रुते इति ज्ञेयं न वा नियतगोचरे ॥ ५ ॥**

तर्हि द्रव्येष्वसर्वपर्यायेष्विति विशेषणफलं किमित्याह;—

**पर्यायमात्रगे नैते द्रव्येष्विति विशेषणात् । द्रव्यगे एव तेऽसर्वपर्याये द्रव्यगोचरे ॥ ६ ॥**

**द्रव्येष्वसर्वपर्यायेष्वित्युक्तेरिष्टनिर्णयात् । तथानिष्टौ तु सर्वस्य प्रतीतिव्याहतीरणात् ॥ ७ ॥**

मतिश्रुतयोर्ये तावद्बाह्यार्थानालम्बनत्वमिच्छन्ति तेषां प्रतीतिव्याहतिं दर्शयन्नाह;—

**मत्यादिप्रत्ययो नैव बाह्यार्थालम्बनं सदा । प्रत्ययत्वाद्यथा स्वप्नज्ञानमित्यपरे विदुः ॥ ८ ॥**
**तदसत्सर्वशून्यत्वापत्तेर्बाह्यार्थवित्तिवत् । स्वान्यसंतानसंवित्तेरभावात्तदभेदतः ॥ ९ ॥**

मतिश्रुतप्रत्ययाः न बाह्यार्थालंबनाः सर्वदा प्रत्ययत्वात्स्वप्नप्रत्ययवदिति योगाचारस्तदयुक्तं, सर्वशून्यत्वानुषंगात् । बाह्यार्थसंवेदनवत्स्वपरसंतानसंवेदनासम्भवाद्ग्राहकज्ञानापेक्षया स्वसन्तानस्य परसन्तानस्य च बाह्यत्वाविशेषात् । संवेदनं हि यदि किंचित् स्वस्मादर्थान्तरं परसन्तानं स्वसन्तानं वा पूर्वापरक्षणप्रवाहरूपमालम्बते । तदा घटाद्यर्थेन तस्य कोऽपराधः कृतः यतस्तमपि नालम्बते । अथ घटादिवत्स्वपरसन्तानमपि नालम्बत एव तस्य स्वसमानसमयस्य भिन्नसमयस्य वालंबनासम्भवात् । न चैवं स्वरूपसन्तानाभावः स्वरूपस्य स्वतो गतेः । नीलादेस्तु यदि स्वतो गतिस्तदा संवेदनत्वमेवेति स्वरूपमात्रपर्यवसिताः सर्वे प्रत्यया निरालम्बनाः सिद्धास्तत्कुतः सर्वशून्यत्वापत्तिरिति मतं तदसत्, वर्त्तमानसंवेदनात्स्वमनुभूयमानादन्यानि स्वपरसन्तानसंवेदनानि स्वरूपमात्रे पर्यवसितानीति निश्चेतुमशक्यत्वाद् विवादाध्यासितानि स्वरूपसन्तानज्ञानानि स्वरूपमात्रपर्यवसितानि ज्ञानत्वात्स्वसंवेदनवदित्यनुमानात्तथा निश्चय इति चेत्, तस्यानुमानज्ञानस्य प्रकृतसालम्बनत्वेऽनेनैव हेतोर्व्यभिचारात्स्वरूपमात्रपर्यवसितत्वे प्रकृतसाध्यस्यासादसिद्धेः । संवेदनाद्वैतस्यैवं प्रसिद्धेस्तथापि न सर्वशून्यत्वापत्तिरिति मन्यमानं प्रत्याह;—

**न चैवं सम्भवेदिष्टमद्वयं ज्ञानमुत्तमम् । ततोऽन्यस्य निराकर्तुमशक्तेस्तेन सर्वथा ॥ १० ॥**

यथैव हि सन्तानान्तराणि स्वसन्तानवेदनानि चानुभूयमानेन सवेदनेन सर्वथा विधातुं न शक्यन्ते । तथा प्रतिषिद्धमपि तद्धि तानि निराकुर्वदात्ममात्रविधानमुखेन वा तत्प्रतिषेधमुखेन वा निराकुर्यात् । प्रथमकल्पनायां दूषणमाह;—

**स्वतो न तस्य संवित्तिरस्य न स्यान्निराकृतिः । किमन्यस्य स्वसंवित्तिरन्यस्य स्यान्निराकृतिः ११**
**स्वयं संवेद्यमानस्य कथमन्यैर्निराकृतिः । परैः संवेद्यमानस्य भवतां सा कथं मता ॥ १२ ॥**

परैः संवेद्यमानं वेदनमस्तीति ज्ञातुमशक्तेस्तस्य निराकृतिरस्माकं मतेति चेत्, तर्हि तन्नास्तीति ज्ञातुमशक्तेस्तद्व्यवस्थितिः किन्न मता । ननु तदस्तीति ज्ञातुमशक्यत्वमेव । तन्नास्तीति ज्ञातुं शक्तिरितिचेत्, तन्नास्तीति ज्ञातुमशक्यत्वमेव । तदस्तीतिज्ञातुं शक्तिरस्तु विशेषाभावात् । यदि पुनस्तदस्तिनास्तीति वा ज्ञातुमशक्तेः संदिग्धमिति मतिस्तदापि कथं सवेदनाद्वैते सिद्ध्येदसंशयमिति चिन्त्यतां-संवेदनान्तरं प्रतिषेधमुखेननिराकरोतीति । द्वितीयकल्पनायां पुनरद्वैतवेदनासिद्धिदूरोत्सारितैव तत्प्रतिषेधज्ञानस्य द्वितीयस्याभावात् स्वयं तत्प्रतिषेधकरणाददोष इति चेत्, तर्हि स्वरूपविधिप्रतिषेधविषयमेकसंवेदनमित्यायातं । तथा चैकमेव वस्तु साध्यं साधनं वापेक्षातः कार्यं कारणं च बाध्यं बाधकं चेत्यादि किन्न सिध्येत् । विरुद्धधर्माध्यासादिति चेत्, तत एव संवेदनमेकं च पररूपविधिप्रतिषेधविषयं माभूत्स्वापेक्षाविधायकं परापेक्षया प्रतिषेधकमित्यविरोधे स्वकार्यापेक्षया कारणं स्वकारणापेक्षया कार्यमित्यविरोधोऽस्तु । अथ स्वतोऽन्यस्य कार्यस्य कारणस्य वा साध्यस्य साधकस्य वा सद्भावासिद्धेः कथं तदपेक्षा यतस्तत्कार्यं कारणं बाध्यं बाधकं च साध्यं साधनं च स्यादिति ब्रूते तर्हि परस्य सद्भावासिद्धेः कथं तदपेक्षा यतस्तत्परस्य प्रतिषेधकं सुविधायकं वा स्यादित्युपहासास्पदं तत्त्वं सुगतेन भावितमित्याह;—

**न साध्यसाधनत्वादिर्न च सत्येतरस्थितिः । ते स्वसिद्धिरपीत्येतत्तत्त्वं सुगतभावितम् ॥ १३ ॥**

ततः स्वरूपसिद्धिमिच्छता सत्येतरस्थितिरङ्गीकर्त्तव्या साध्यसाधनत्वादिरपि स्वीकरणीय इति बाह्यार्थालम्बनाः प्रत्ययाः केचित्सन्त्येव, सर्वथा तेषां निरालम्बनत्वस्य व्यवस्थानायोगात् ॥

**अक्षज्ञानं बहिर्वस्तु वेत्ति न स्मरणादिकं । इत्युक्तं तु प्रमाणेन बाह्यार्थस्यास्य साधनात् ॥१४॥**

श्रुतं तु बाह्यार्थालम्बनं । कथमित्युच्यते;—

**श्रुतेनार्थं परिच्छिद्य वर्त्तमानो न बाध्यते । अक्षजेनैव तत्तस्य बाह्यार्थालंबना स्थितिः ॥१५॥**

सामान्यमेव श्रुतं प्रकाशयति विशेषमेव परस्परनिरपेक्षमुभयमेवेति वाशंकामपाकरोति;—

**अनेकान्तात्मकं वस्तु संप्रकाशयति श्रुतं । सद्बोधत्वाद्यथाक्षोत्थबोध इत्युपपत्तिमत् ॥ १६ ॥**

**नयेन व्यभिचारश्चेन्न तस्य गुणभावतः । स्वगोचरार्थधर्माण्यधर्मार्थप्रकाशनात् ॥ १७ ॥**

**श्रुतस्यावस्तुवेदित्वे परप्रत्यायनं कुतः । संवृतेश्चेद्वृथैवैषा परमार्थस्य निश्चितेः ॥ १८ ॥**

ननु स्वत एव परमार्थव्यवस्थितेः कुतश्चिदविद्याप्रक्षयान्न पुनः श्रुतविकल्पात् तदुक्तशास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते । अनागमविकल्पा हि स्वयं विद्योपवर्त्तत इति तदयुक्तं, परेष्टतत्त्वस्याप्रत्यक्षविषयत्वात्तद्विपरीतस्यानेकान्तात्मनो वस्तुनः सर्वदा परस्याप्यवभासनात् । लिङ्गस्य त्वस्याङ्गीकरणीयत्वात् । न च तत्र लिंगं वास्तवमस्ति तस्य साध्याविनाभावित्वेन प्रत्यक्षत एव प्रतिपत्तुमशक्तेरनुमानान्तरत्वात् प्रतिपत्तावनवस्थाप्रसंगात्, प्रवचनादपि नेष्टतत्त्वव्यवस्थितिः तस्य तद्विषयत्वायोगादिति कथमपि तद्गतेरभावात् स्वतस्तत्त्वावभासनासम्भवात् । तथा चोक्तं । "प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिङ्गगम्यं न तदर्थलिङ्गं । वाचो न वा तद्विषये न योगः का तद्गतिः कष्टमसृज्यतान्ते ॥" इति तत एव वेद्यवेदकभावः प्रतिपाद्यप्रतिपादकभावो वा न परमार्थतः किन्तु संवृत्यैवेति चेत्, तदिह महाधार्ष्ट्यं येनायं निष्टिकमपि जपेत् । तथोक्तं । "संवृत्या साधयंस्तत्त्वं जये धार्ष्ट्येन डिंडिकं । मत्या मतविलासिन्या राजविभ्रोपदेशिनं ॥" इति । कथं वा संवृत्यसंवृत्योः विभागं बुध्येत्? संवृत्येति चेत्, सा चानिश्चिता तथैव किञ्चिन्निश्चिनोतीति कथमनुन्मत्तः, सुदूरमपि गत्वा स्वयं किञ्चिन्निश्चिन्वन् परं च निश्चाययन्वेद्यवेदकभावं प्रतिपाद्यप्रतिपादकभावं च परमार्थतः स्वीकर्तुमर्हत्येव, अन्यथोपेक्षणीयत्वाप्रसंगात् । तथा च वस्तुविषयमध्यक्षमिव श्रुतं सिद्धं सद्बोधवत्त्वान्यथानुपपत्तेः । तर्हि द्रव्येष्वेव मतिश्रुतयोर्निबंधोऽस्तु तेषामेव वस्तुत्वात् पर्यायाणां परिकल्पितत्वात् पर्यायेष्वेव वा द्रव्यस्यावस्तुत्वादि च मन्यमानं प्रत्याह;—

**सर्वपर्यायमुक्तानि न स्युर्द्रव्याणि जातुचित् । तद्वियुक्ताश्च पर्यायाः शशशृंगोच्चतादिवत् १९**

न सन्ति सर्वपर्यायमुक्तानि द्रव्याणि सर्वपर्यायानिर्मुक्तत्वाच्छशशृङ्गवत् । न सन्त्येकान्तपर्यायाः सर्वथा द्रव्यमुक्तत्वाच्छशशृङ्गोच्चत्वादिवत् । ततो न तद्विषयत्वं मतिश्रुतयोः शङ्कनीयं प्रतीतिविरोधात् ॥

**नाशेषपर्ययाक्रान्ततनूनि च चकासति । द्रव्याणि प्रकृतज्ञाने तथा योग्यत्वहानितः ॥ २० ॥**

ननु च यदि द्रव्याण्यनंतपर्यायाणि वस्तुत्वं बिभ्रति तदा मतिश्रुताभ्यां तद्विशेषाभ्यां भवितव्यमन्यथा तयोरवस्तुविषयत्वापत्तेरिति न चोद्यं, तथा योग्यतापायात् । न हि वस्तु सत्तामात्रेण ज्ञानविषयत्वमुपयाति । सर्वस्य सर्वदा सर्वपुरुषज्ञानविषयत्वप्रसङ्गात् । किं तर्हि वस्तुनः परिच्छित्तौ कारणमित्याह;—

**ज्ञानस्यार्थपरिच्छित्तौ कारणं नान्यदीक्ष्यते । योग्यतायास्तदुत्पत्तिः सारूप्यादिषु सत्स्वपि २१**

तस्मादुत्पद्यते ज्ञानं येन च सरूपं तस्य ग्राहकमित्ययुक्तं, समानार्थसमनन्तरप्रत्ययस्य समनंतरप्रत्ययस्य तेनाग्रहणात् । तद्ग्रहणयोग्यतापायात्तस्याग्रहणे योग्यतैव विषयग्रहणनिमित्तं वेदनस्येत्यायातम् । योग्यता पुनर्वेदनस्य स्वावरणविच्छेदविशेष एवेत्युक्तप्रायम् ॥

## रूपिष्ववधेः ॥ २७ ॥

किमर्थमिदं सूत्रमित्याह;—

प्रत्यक्षस्यावधेः केषु विषयेषु निबन्धनम् । इति निर्णीतये प्राह रूपिष्वित्यादिकं वचः ॥ १ ॥
रूपं पुद्गलसामान्यगुणस्तेनोपलक्ष्यते । स्पर्शादिरिति तद्योगात् रूपिणीति विनिश्चयः ॥ २ ॥
तेष्वेव नियमोऽसर्वपर्यायेष्ववधेः स्फुटम् । द्रव्येषु विषयेष्वेवमनुवृत्तिर्विधीयते ॥ ३ ॥

रूपं मूर्तिरित्येके, तेषामसर्वगतद्रव्यपरिमाणं मूर्तिः स्पर्शादिर्वा मूर्तिरिति मतं स्यात् । प्रथमपक्षे जीवस्यरूपत्वप्रसक्तिरसर्वगतद्रव्यपरिमाणलक्षणाया मूर्तेस्तत्र भावात् । सर्वगतत्वादात्मनस्तदभाव इति चेन्न शरीरपरिमाणानुविधायिनस्तस्य प्रसाधनात् । स्पर्शादिमूर्तिरित्यस्मिंस्तु पक्षे रूपं पुद्गलसामान्यगुणस्तेन स्पर्शादिरूपं लक्ष्यते इति तद्योगाद्द्रव्याणि रूपीणि मूर्तिमन्ति कथितानि भवन्त्येव तथेह द्रव्येष्वसर्वपर्यायेषु इति निबन्ध इति चानुवर्तते । तेनेदमुक्तं भवति मूर्तिमत्सु द्रव्येष्वसर्वपर्यायेषु विषयेषु अवधेर्निबन्ध इति । कुत एवं नान्यथेत्याह;—

स्वशक्तिवशतोऽसर्वपर्यायेष्वेव वर्तनम् । तस्य नानागतातीतानन्तपर्याययोगिषु ॥ ४ ॥
पुद्गलेषु तथाकाशादिष्वमूर्तेषु जातुचित् । इति युक्तं सुनिर्णीतासम्भवद्बाधकत्वतः ॥ ५ ॥

अथासर्वपर्यायरूपद्रव्यज्ञानावरणक्षयोपशमविशेषादवधेः स्वशक्तिस्तद्वशात्तस्यासर्वपर्यायेष्वेव पुद्गलेषु वृत्तिर्नातीताद्यनन्तपर्यायेषु नाप्यमूर्तेष्वाकाशादिषु इति युक्तमुत्पश्यामः । सुनिर्णीतासम्भवद्बाधकत्वान्मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेष्वित्यादिवत् ॥

## तदनन्तभागे मनःपर्ययस्य ॥ २८ ॥

किमर्थमिदमित्याह;—

क्व मनःपर्ययस्यार्थे निबन्ध इति दर्शयत् । तदित्याद्याह सत्सूत्रमिष्टसंग्रहसिद्धये ॥ १ ॥

कस्य पुनस्तच्छब्देन परामर्शो यदनन्तभागेऽसर्वपर्यायेषु निबंधो मनःपर्ययस्येत्याह;—

परमावधिनिर्णीते विषयेऽनन्तभागताम् । नीते सर्वावधेर्ज्ञेयो भागः सूक्ष्मोऽपि सर्वतः ॥ ५ ॥
एतस्यानन्तभागे स्याद्विषये सर्वपर्यये । व्यवस्थर्जुमतेरन्यमनःस्थे प्रगुणे ध्रुवम् ॥ ३ ॥
अमुष्यानन्तभागेषु परमं सौक्ष्म्यमागते । स्यान्मनःपर्ययस्यैवं निबन्धो विषयेऽखिले ॥ ४ ॥

तच्छब्दोऽत्रावधिविषयं परामृशति न पुनरवधिं विषयप्रकरणात् । स च मुख्यस्य परामर्श्यते गौणस्य परामर्शे प्रयोजनाभावात् । मुख्यस्य परमावधिविषयस्य सर्वतो देशावधिविषयात्सूक्ष्मस्यानंतभागीकृतस्यानन्तो भागः सर्वावधिविषयस्तस्य सम्पूर्णेन मुख्येन सर्वावधिपरिच्छेद्यत्वात् । तत्रर्जुमतेर्निबन्धो बोद्धव्यस्तस्य मनःपर्ययप्रथमव्यक्तित्वात्सामर्थ्यादृजुमतिविषयस्यानन्तभागे विषये विपुलमतेर्निबन्धोऽवसीयते तस्य परमनःपर्ययत्वादसर्वपर्यायग्रहणानुवृत्तेर्नास्तीति नानाद्यनन्तपर्यायाक्रान्ते द्रव्ये मनःपर्ययस्य प्रवृत्तिस्तद्ज्ञानावरणक्षयोपशमासम्भवात् । अतीतानागतवर्तमानानन्तपर्यायात्मकवस्तुनः सकलज्ञानावरणक्षयविजृंभितकेवलज्ञानपरिच्छेद्यत्वात् ।

कथं पुनस्तदेवंविधविषयं मनःपर्ययज्ञानं परीक्ष्यते इत्याह;—

क्षायोपशमिकं ज्ञानं प्रकर्षं परमं व्रजेत् । सूक्ष्मे प्रकर्षमाणत्वादर्थे तदिदमीरितम् ॥ ५ ॥

न हि क्षायोपशमिकस्य ज्ञानस्य सूक्ष्मेऽर्थे प्रकृष्यमाणत्वमसिद्धं तज्ज्ञानावरणहानेः प्रकृष्यमाणस्य

सिद्धेः । प्रकृष्यमाणज्ञानावरणहानित्वान्माणिक्याद्यावरणहानिवत् । कथमावरणहानेः प्रकृष्यमाणत्वे सिद्धेऽपि कस्यचिद्विज्ञानस्य प्रकृष्यमाणत्वं सिध्यतीति चेत् प्रकाशात्मकत्वात् । यद्धि प्रकाशात्मकं तत्स्वावरणहानिप्रकर्षे प्रकृष्यमाणं दृष्टं यथा चक्षुः । प्रकाशात्मकं च विवादाध्यासितं ज्ञानमिति स्वविषये प्रकृष्यमाणं सिध्यत्, तस्य परमप्रकर्षगमनं साधयति । यत्तत्परमप्रकर्षप्राप्तं क्षायोपशमिकं ज्ञानं स्पष्टं तन्मनःपर्यय इत्युक्तं । यथा चापि मतिश्रुतानि परमप्रकर्षभाञ्जि क्षायोपशमिकानीति दर्शयन्नाह;—

क्षेत्रद्रव्येषु भूयेषु तथा च विविधस्थितिः । स्पष्टा या परमा तद्वदस्य स्वार्थे यथोदिते ॥ ६ ॥
यथा चेन्द्रियजज्ञानं विषयेष्वतिशायनात् । स्वेषु प्रकर्षमापन्नं तद्विद्भिर्विनिवेदितम् ॥ ७ ॥
मतिपूर्वं श्रुतं यद्वदस्पष्टं सर्ववस्तुषु । स्थितं प्रकृष्यमाणत्वात्पर्यंतं प्राप्य तत्त्वतः ॥ ८ ॥
मनःपर्ययविज्ञानं तथा प्रस्पष्टभासनं । विकलाध्यक्षपर्यन्तं तथा सम्यक्परीक्षितं ॥ ९ ॥
प्रकृष्यमाणता त्वक्षज्ञानादेः संप्रतीयते । इति नासिद्धता हेतोर्न चास्य व्यभिचारिता ॥१०॥
साध्ये सत्येव सद्भावादन्यथानुपपत्तितः । स्वेष्टहेतुवदित्यस्तु ततः साध्यविनिश्चयः ॥ ११ ॥
दृष्टेष्टबाधनं तस्मात्पक्षे सर्ववादिनां । सर्वथैकान्तवादेषु तद्भावेऽपीति निर्णयः ॥ १२ ॥

## सर्वद्रव्यपर्यायेषु केवलस्य ॥ २९ ॥

ननु असिद्धत्वात्केवलस्य विषयनिबन्धकथनं न युक्तमित्याशंकायामिदमाह;—

केवलं सकलज्ञेयव्यापि स्पष्टं प्रसाधितम् । प्रत्यक्षमक्रमं तस्य निबन्धो विषयेष्विह ॥ १ ॥
बोध्यो द्रव्येषु सर्वेषु पर्यायेषु च तत्त्वतः । प्रक्षीणावरणस्यैव तदाविर्भावनिश्चयात् ॥ २ ॥
आत्मद्रव्यं ज्ञ एवेष्टः सर्वज्ञः परमः पुमान् । कैश्चित्तद्व्यतिरिक्तार्थाभावादित्यपसारितं ॥ ३ ॥
द्रव्येष्विति बहुत्वस्य निर्देशात्तत्प्रसिद्धितः । वर्तमानेऽस्तु पर्याये ज्ञानी सर्वज्ञ इत्यपि ॥ ४ ॥
पर्यायेष्विति निर्देशादन्वयस्य प्रतीतितः । सर्वथाभेदतत्त्वस्य यथेति प्रतिपादनात् ॥ ५ ॥
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यतां । कीटसंज्ञापरिज्ञानं तस्य नात्रोपयुज्यते ॥ ६ ॥
इत्येतच्च व्यवच्छिन्नं सर्वशब्दप्रयोगतः । तदेकस्याप्यविज्ञाने काक्षूणां शिष्यसाधनं ॥ ७ ॥
हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकं । सर्वज्ञतामितं निष्टं तज्ज्ञानं सर्वगोचरम् ॥ ८ ॥
उपेक्षणीयतत्त्वस्य हेयादिभिरसंग्रहात् । न ज्ञानं न पुनस्तेषां न ज्ञानेऽपीति केचन ॥ ९ ॥
तदसद्वीतरागाणामुपेक्षत्वेन निश्चयात् । सर्वार्थानां कृतार्थत्वात्तेषां कचिदवृत्तितः ॥ १० ॥
विनेयापेक्षया हेयमुपादेयं च किंचन । सोपायं यदि तेऽप्याहुस्तदोपेक्ष्यं न विद्यते ॥ ११ ॥
निःश्रेयसं परं तावदुपेयं सम्मतं सताम् । हेयं जन्मजरामृत्युकीर्णं संसरणं सदा ॥ १२ ॥
अनयोः कारणं तत्स्याद्यदन्यत्तन्न विद्यते । पारंपर्येण साक्षाच्च वस्तूपेक्ष्यं ततः किमु ॥ १३ ॥
द्वेषो हानमुपादानं रागस्तद्द्वयवर्जनं । स्यादुपेक्षेति हेयाद्या भावास्तद्विषया इमे ॥ १४ ॥
इति मोहाभिभूतानां व्यवस्था परिकल्प्यते । हेयत्वादिव्यवस्थानासम्भवात्तु प्रचिन्तय ॥ १५ ॥
ज्ञातुं योग्यं मुमुक्षूणां हेयतत्त्वं व्यवस्थितं । उपादातुं पुनर्योग्यमुपादेयमितीयते ॥ १६ ॥
उपेक्षन्तु पुनः सर्वमुपादेयस्य कारणम् । सर्वोपेक्षास्वभावत्वाच्चारित्रस्य महात्मनः ॥ १७ ॥
तत्त्वश्रद्धानसंज्ञानगोचरत्वं यथा द्वयम् । तच्चाभ्यमानसाक्षात्ममोक्षमार्गघातिभिः ॥ १८ ॥
मिथ्यादृग्बोधचारित्रगोचरत्वेन भावितम् । सर्वं हेयस्य तत्त्वस्य संसारस्यैव कारणं ॥ १९ ॥
तदपायं परिज्ञेयं तत्कार्यमनुपासता । विनेयानिति बोद्धव्यं धर्मवत्सकलं जगत् ॥ २० ॥

**धर्मादन्यत्परिज्ञानं विप्रकृष्टमशेषतः। येन तस्य कथं नाम धर्मज्ञत्वनिषेधनम् ॥ २१ ॥**
**सर्वानतींद्रियान् वेत्ति साक्षाद्धर्ममतीन्द्रियम्। प्रमातेति वदन्न्यायमतिक्रामति केवलं ॥२२॥**

यथैव हि हेयोपादेयतत्त्वं साभ्युपायं स वेत्ति न पुनः सर्वकीटसंख्यादिकमिति वदन्न्यायमतिक्रामति केवलं तत्संवेदने सर्वसंवेदनस्य न्यायप्राप्तत्वात्। तथा धर्मादन्यानतीन्द्रियान्सर्वानर्थान्विजानन्नपि धर्मं साक्षान्न स वेत्तीति वदन्नपि तत्साक्षात्करणे धर्म्मस्य साक्षात्करणसिद्धेरतीन्द्रियत्वेन जात्यन्तरत्वाभावात्। यस्य यज्जातीयाः पदार्थाः प्रत्यक्षास्तस्यासत्यावरणेऽपि प्रत्यक्षा यथा घटसमानजातीयभूतलप्रत्यक्षत्वे घटः। प्रत्यक्षाश्च कस्यचिद्विवादापन्नस्य धर्मसजातीयाः परमाण्वादयो देशकालस्वभावविप्रकृष्टा इति न्यायस्य सुव्यवस्थितत्वात्। ततो नेदं सूक्तं मीमांसकस्य। "धर्मज्ञत्वनिषेधस्तु केवलोऽत्रोपयुज्यते। सर्वमन्यद्विजानंस्तु पुरुषः केन वार्यते" इति। नत्ववधीरणानादरः। तत्सर्वमन्यद्विजानंस्तु पुरुषः केन वार्यत इति। तत्र नो नातितरामादरः। परमार्थतस्तु न कथमपि पुरुषस्यातीन्द्रियार्थदर्शनातिशयः सम्भाव्यते सातिशयानामपि प्रज्ञामेधादिभिः स्तोकस्तोकान्तरत्वेनैव दर्शनात्। तदुक्तं "येऽपि सातिशया दृष्टाः प्रज्ञामेधादिभिर्नराः। स्तोकस्तोकान्तरत्वेनातीन्द्रियज्ञानदर्शनात् ॥" इति कश्चित्तं प्रति विज्ञानस्य परमप्रकर्षगमनसाधनमाह;—

**ज्ञानं प्रकर्षमायाति परमं क्वचिदात्मनि। तारतम्याधिरूढत्वादाकाशे परिमाणवत् ॥ २३ ॥**

तारतम्याधिरूढत्वमसंशयप्राप्तत्वं तद्विज्ञानस्य सिध्यत् क्वचिदात्मनि परमप्रकर्षप्राप्तिं साधयति, तया तस्य व्याप्तत्वात्परिमाणवदाकाशे ॥

**अत्र यद्यक्षविज्ञानं तस्य साध्यं प्रभाष्यते। सिद्धसाधनमेतत्स्यात्परस्याप्येवमिष्टितः ॥ २४ ॥**
**लिङ्गागमादिविज्ञानं ज्ञानसामान्यमेव वा। तथा साध्यं वदंस्तेन दोषं परिहरेत्कथम् ॥ २५ ॥**
**अक्रमं करणातीतं यदि ज्ञानं परिस्फुटम्। धर्मीष्येत तदा पक्षस्याप्रसिद्धविशेष्यता ॥ २६ ॥**
**स्वरूपासिद्धता हेतोराश्रयासिद्धतापि च। तथैतत्साधनं सम्यगिति केचित्प्रवादिनः ॥ २७ ॥**
**अत्र प्रचक्ष्महे ज्ञानसामान्यं धर्मि नापरम्। सर्वार्थगोचरत्वेन प्रकर्षं परमं व्रजेत् ॥ २८ ॥**
**इति साध्यमनिच्छन्तं भूतादिविषयं परं। चोदनाज्ञानमन्यद्वा वादिनं प्रति नास्तिकम् ॥२९॥**
**न सिद्धसाध्यतैवं स्यान्नाप्रसिद्धविशेष्यता। पक्षस्य नापि दोषो…………(?) ॥ ३० ॥**

स हेतोः क्वचिदप्रदर्शितः। नह्यत्राक्षविज्ञानं परमं प्रकर्षं यातीति साध्यते नापि लिङ्गागमादिविज्ञानं येन सिद्धसाध्यतानाम पक्षस्य दोषो दुःपरिहारः स्यात्। परस्यापीन्द्रियज्ञाने लिङ्गादिज्ञाने च परमप्रकर्षगमनस्येष्टत्वात्। नाप्यक्रमं करणातीतं परिस्फुटं ज्ञानं तथा साध्यते यतस्तस्यैव धर्मिणोरप्रसिद्धविशेष्यता ···· रूपादेः सिद्धिश्च हेतुर्धर्मिणोसिद्धौ तद्धर्मस्य साधनस्यासम्भवादाश्रयासिद्धश्च भवेत्। किं तर्हि ज्ञानसामान्यं धर्मि? न च तस्य सर्वार्थगोचरत्वेन परमप्रकर्षमात्रे साध्ये सिद्धसाध्यता भूतादिविषयं चोदनाज्ञानमनुमानादिज्ञानं वा प्रकृष्टमनिच्छन्तं वादिनं नास्तिकं प्रति प्रयोगात्। मीमांसकं प्रति तत्प्रयोगे सिद्धसाधनमेव भूताद्यशेषार्थगोचरस्य चोदनाज्ञानस्य परमप्रकर्षप्राप्तस्य तेनाभ्युपगतत्वादिति चेन्न, तं प्रति प्रत्यक्षसामान्यस्य धर्मित्वात्तस्य तेन सर्वार्थविषयत्वेनात्यन्तप्रकृष्टस्यानभ्युपगमात्। न चैवमप्रसिद्धविशेष्यादिदोषः पक्षादेः सम्भवति केवलं मीमांसकान्प्रति यदैतत्साधनं तदा प्रत्यक्षं विशदं सूक्ष्माद्यर्थविषयं साधयत्येवानवद्यत्वात्। यदा तु नास्तिकं प्रति सर्वार्थगोचरं ज्ञानसामान्यं साध्यते तदा तस्य करणक्रमव्यवधानातिवर्तित्वं स्पष्टत्वं च कथं सिध्यति इत्याह;—

**तत्र सर्वार्थविज्ञानं पुनः सावरणं मतं। अदृष्टत्वाद्यथा चक्षुस्तिमिरादिभिरावृतं ॥ ३१ ॥**

**ज्ञानस्यावरणं याति प्रक्षयं परमं क्वचित् । प्रकृष्यमाणहानित्वाद्धेमादौ श्यामिकादिवत् ॥२२॥**
**ततोऽनावरणं स्पष्टं विप्रकृष्टार्थगोचरं । सिद्धमक्रमविज्ञानं सकलंकमहीयसाम् ॥ २३ ॥**

यत एवमतीन्द्रियार्थपरिच्छेदनसमर्थं प्रत्यक्षमसर्वज्ञवादिनं प्रति सिद्धम् ॥

**ततः सातिशया दृष्टाः प्रज्ञामेधादिभिर्नराः । भूताद्यशेषविज्ञानभाजश्चोदनाबलात् ॥२४॥**
**किञ्च क्षीणावृतिः सूक्ष्मानर्थान्द्रष्टुं क्षमः स्फुटं । मंदज्ञानानतिक्रामन्नातिशेते परावरान् ॥२५॥**

यदि पैरभ्यधायि । "दशहस्तान्तरं व्योम्नि यो न नामात्र गच्छति । न योजनमसौ गंतुं शक्तोऽभ्यासशतैरपि" इत्यादि । तदपि न युक्तमित्याह;—

**लङ्घनादिकदृष्टान्तः स्वभावाच्च विलंघने । नाविर्भावे स्वभावस्य प्रतिषेधः कुतश्चन ॥ २६ ॥**
**स्वाभाविकी गतिर्न स्यात्प्रक्षीणाशेषकर्मणः । क्षणादूर्ध्वं जगच्चूडामणौ व्योम्नि महीयसि ॥२७॥**
**वीर्यान्तरायविच्छेदविशेषवशतोपरा । बहुधा केन वार्येत नियतं व्योमलङ्घनात् ॥ २८ ॥**

ततो यदुपहसनमकारि भट्टेन । "यैरुक्तं केवलज्ञानमिन्द्रियाद्यनपेक्षिणः । सूक्ष्मातीतादिविषयं सूक्तं जीवस्य तैरदः" इति, तदपि परिहृतमित्याह;—

**ततः समन्ततश्चक्षुरिन्द्रियाद्यनपेक्षिणः । निःशेषद्रव्यपर्यायविषयं केवलं स्थितं ॥ २९ ॥**

तदेवं प्रमाणतः सिद्धे केवलज्ञाने सकलकुवाद्यविषये युक्तं तस्य विषयप्ररूपणं मतिज्ञानादिवत् ॥

## एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३० ॥

कान्प्रतीदं सूत्रमित्यावेदयति;—

**एकत्रात्मनि विज्ञानमेकमेवैकदेति ये । मन्यन्ते तान्प्रति प्राह युगपज्ज्ञानसम्भवम् ॥ १ ॥**

अत्रैकशब्दस्य प्राथम्यवचनत्वात्प्राधान्यवचनत्वाद्वा क्वचिदात्मनि ज्ञानं एकं प्रथमं प्रधानं वा संख्यावचनत्वादेकसंख्यं वा वक्तव्यं । तच्च किं द्वे च ज्ञाने किं युगपदेकत्र त्रीणि चत्वारि वा ज्ञानानि कानीत्याह;—

**प्राच्यमेकं मतिज्ञानं श्रुतिभेदानपेक्षया । प्रधानं केवलं वा स्यादेकत्र युगपन्नरि ॥ २ ॥**
**द्वेधा मतिश्रुते स्यातां ते चावधियुते क्वचित् । मनःपर्ययज्ञाने वा त्रीणि येन युते तथा ॥३॥**

प्रथमं मतिज्ञानं क्वचिदात्मनि श्रुतभेदस्य तत्र सतोऽप्यपरिपूर्णत्वेनानपेक्षणात् प्रधानं केवलमेतेनैकसंख्यावाच्यप्येकशब्दो व्याख्यातः स्वयमिष्टस्यैकस्य परिग्रहात् । पंचानामन्यतमस्यानिष्टस्यासम्भवात् । क्वचित्पुनर्द्वे मतिश्रुते क्वचित्ते चावधियुते मनःपर्यययुते चेति त्रीणि ज्ञानानि संभवन्ति क्वचित्ते एवावधिमनःपर्ययद्वयेन युते चत्वारि ज्ञानानि भवन्ति । पंचैकस्मिन्न भवन्तीत्याह;—

**आचतुर्भ्य इति व्याप्तवादो वचनतः पुनः । पंचैकत्र न विद्यन्ते ज्ञानान्येतानि जातुचित् ॥४॥**

क्षायोपशमिकज्ञानैः सहभावविरोधात्क्षायिकस्येत्युक्तं पंचानामेकत्रासहभवनमन्यत्र ॥

**भाज्यानि प्रविभागेन स्थाप्यानीति निबुध्यतां । एकादीन्येकदैकत्रानुपयोगानि नान्यथा ॥५॥**

सोपयोगस्यानेकस्य ज्ञानस्यैकत्र यौगपद्यवचने हि सिद्धान्तविरोधः सूत्रकारस्य न पुनरनुपयोगस्य सह द्वावुपयोगौ न स्त इति वचनात् ॥ सोपयोगयोर्ज्ञानयोः सह प्रतिषेधादिति निवेदयन्ति;—

**क्षायोपशमिकं ज्ञानं सोपयोगं क्रमादिति । नार्षस्य व्याहतिः काचित्क्रमज्ञानाभिधायिनः ६**

विकल्पकोपयोगस्यानेकस्य ज्ञानस्य सहभाववचनसामर्थ्यात् सोपयोगस्य क्रमभावः क्षायोपशमिकस्योपयुक्तं भवति। तथा च नार्थस्य हानिः क्रमभाविज्ञानावबोधकस्य सम्भाव्यते। अत्रापराकूतमनूद्य निराकुर्वन्नाह;—

मोपयोगौ सह स्यातामित्यार्याः ख्यापयन्ति ये। दर्शनज्ञानरूपौ तौ न तु ज्ञानात्मकाविति ७

ज्ञानानां सहभावाय तेषामेतद्विरुध्यते। क्रमभावि च यज्ज्ञानमिति युक्तं ततो न तत् ॥८॥

यदापि क्रमभावि च यज्ज्ञानमिति समन्तभद्रस्वामिवचनमन्यथा व्याचक्षते विरोधपरिहारार्थं तदापि दोषमुद्भावयति;—

शब्दसंसृष्टविज्ञानापेक्षया वचनं तथा। यस्मादुक्तं तदेवार्यैः स्याद्वादनयसंस्थितम् ॥ ९ ॥

इति व्याचक्षते ये तु तेषां मत्यादिवेदनं। प्रमाणं तत्र नेष्टं स्यात्ततः सूत्रस्य बाधनम् ॥ १०॥

तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनमित्यनेन केवलस्य क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतमित्यनेन च श्रुतस्यागमस्य प्रमाणान्तरवचनमिति व्याख्याने मतिज्ञानस्यावधिमनःपर्यययोश्च नात्र प्रमाणत्वमुक्तं स्यात्। तथा च 'मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानं' 'तत्प्रमाणे' इति ज्ञानपंचकस्य प्रमाणद्वयरूपत्वप्रतिपादकसूत्रेण बाधनं प्रसज्येत। यदा तु मत्यादिज्ञानचतुष्टयं क्रमभावि केवलं च युगपत्सर्वभावि प्रमाणं स्याद्वादेन प्रमाणेन सकलादेशिना तयोश्च विकलादेशिभिः संस्कृत सकलविप्रतिपत्तिनिराकरणद्वारेणागतमिति व्याख्यायते तदा सूत्रबाधा परिहृता भवत्येव। ननु परव्याख्यानेऽपि न सूत्रबाधा क्रमभावि चेति चशब्दान्मतिज्ञानस्यावधिमनःपर्यययोश्च संग्रहादित्यत्र दोषमाह;—

चशब्दात्संग्रहात्तस्य तद्विरोधो न चेत्कथम्। तस्य क्रमेण जन्मेति लभ्यते वचनाद्विना॥११॥

क्रमभावि स्याद्वादनयसंस्कृतं चशब्दान्मत्यादिज्ञानं क्रमभावीति न व्याख्यायते यतस्तस्य क्रमभावित्वं वचनाद्विना न लभ्येत। किं तर्हि स्याद्वादनयसंस्कृतं। यत्तु श्रुतज्ञानं क्रमभावि चशब्दादक्रमभावि च मत्यादिज्ञानमिति व्याख्यानं क्रियते सूत्रबाधापरिहारस्यैवं प्रसिद्धेरिति चेत्, नैवमितिवचनात् सूत्रान्मत्यादिज्ञानमक्रमभाविप्रकाशनाद्विना लब्धुमशक्तेः।

ननु बह्वादिसूत्रं मतिज्ञानयौगपद्यप्रतिपादकं तावदस्तीति शंकामुपदर्श्य प्रत्याचष्टे;—

बह्वाद्यवग्रहादीनामुपदेशात्सहोद्भवः। ज्ञानानामिति चेन्नैवं सूत्रार्थानवबोधतः ॥ १२ ॥

बह्वर्थेषु तत्रैकोऽवग्रहादिरितीष्यते। तथा च न बहूनि स्युः सहज्ञानानि जातुचित् ॥ १३ ॥

कथमेवमिदं सूत्रमेकस्य ज्ञानस्यैकत्र सहभावं प्रकाशयत्न विरुध्यते इति चेदुच्यते;—

शक्त्यर्पणात्तु तद्भावः सहेति न विरुध्यते। कथंचिदक्रमोद्भूतिः स्याद्वादन्यायवेदिनाम् ॥१४॥

क्षायोपशमिकज्ञानानां हि स्वावरणक्षयोपशमयौगपद्यशक्तेः सहभावोऽस्त्येकत्रात्मनि योग इति कथञ्चिदक्रमोत्पत्तिर्न विरुध्यते सूत्रोक्ता स्याद्वादन्यायविदां। सर्वथा सहभावयोरनभ्युपगमाच्च न प्रतीतिविरोधः शक्त्यात्मनैव हि सहभावो नोपयुक्तात्मनानुपयुक्तात्मना वा सहभावो न शक्त्यात्मनापीति प्रतीतिसिद्धं। सहोपयुक्तात्मनापि रूपादिज्ञानपंचकप्रादुर्भावमुपयन्तं प्रत्याह;—

शष्कुलीभक्षणादौ तु रसादिज्ञानपंचकम्। सकृदेव तथा तत्र प्रतीतेरिति यो वदेत् ॥ १५ ॥

तस्य तत्स्मृतयः किन्न सह स्युरविशेषतः। तत्र तादृक्षसंवित्तेः कदाचित्क्वचित्क्वचित् ॥१६

सर्वस्य सर्वदा त्वेवं तद्रसादिज्ञानपंचकम्। सहोपजायते नैव स्मृतिवत्तत्क्रमेक्षणात् ॥ १७ ॥

क्रमजन्म क्वचित् दृष्ट्वा स्मृतीनामनुमीयते। सर्वत्र क्रमभावित्वं यद्यन्यत्रापि तत्समं ॥ १८ ॥

[illegible] शष्कुलीभक्षणादिषु। रसादिवेदनेषु स्यादयमा [illegible] ॥ १९ ॥

लघुवृत्तेर्न विच्छेदः स्मृतीनामुपलक्ष्यते । यथा तथैव रूपादिज्ञानानामिति मन्यताम् ॥२०॥
असंख्यातैः क्षणैः पद्मपत्रछिद्रवभेदनम् । विच्छिन्नं सकृदाभाति येषां भ्रान्तेः कुतश्चन ॥२१॥
पंचषैः समयैस्तेषां किन्न रूपादिवेदनम् । विच्छिन्नमपि भातीहाविच्छिन्नमिव विभ्रमात् ॥२२
व्यवसायात्मकं चक्षुर्ज्ञानं गवि यदा तदा । मतङ्गजविकल्पोऽपीत्यनयोः सकृदुद्भवः ॥ २३ ॥
ज्ञानोदयसकृज्जन्मनिषेधे हन्ति चेन्न वै । तयोरपि सहैवोपयुक्तयोरस्ति वेदनम् ॥ २४ ॥
यदोपयुज्यते ह्यात्मा मतङ्गजविकल्पने । तदा लोचनविज्ञानं गवि मन्दोपयोगहृत् ॥ २५ ॥
तथा तत्रोपयुक्तस्य मतङ्गजविकल्पने । प्रतीयन्ति स्वयं सन्तो भावयन्तो विशेषतः ॥ २६ ॥
समोपयुक्तता तत्र कस्यचित्प्रतिभाति या । साशु संचरणाद्भ्रान्तेर्गोकुञ्जरविकल्पवत् ॥ २७ ॥
नन्वश्वकल्पनाकाले गोदृष्टेः सविकल्पताम् । कथमेवं प्रसाध्येत कश्चित्स्याद्वादवेदिभिः ॥२८॥
संस्कारस्मृतिहेतुर्या गोदृष्टिः सविकल्पिका । सान्यथा क्षणभंगादि दृष्टिवन्न तथा भवेत् ॥२९
इत्याश्रयोपयोगायाः सविकल्पत्वसाधनं । नेत्रालोचनमात्रस्य माप्रमाणात्मनः सदा ॥ ३० ॥
गोदर्शनोपयोगेन सहभावः कथं न तु । तद्विज्ञानेऽस्य योगस्य नार्थव्याघातकृत्तदा ॥ ३१ ॥
इत्यचोद्यं दृशस्तत्रानुपयुक्तत्वसिद्धितः । पुंसो विकल्पविज्ञानं प्रत्येवं प्रणिधानतः ॥ ३२ ॥
सोपयोगं पुनश्चक्षुर्दर्शनं प्रथमं ततः । चक्षुर्ज्ञानं श्रुतं तस्मात्तत्रार्थेऽन्यत्र च क्रमात् ॥ ३३ ॥
प्रादुर्भवत्करोत्याशु वृत्त्या सह जनौ धियं । यथा दृग्ज्ञानयोर्नृणामिति सिद्धान्तनिश्चयः ॥३४॥

जननं जनिरिति नायमिगन्तोऽयं यतो जिरिति प्रसज्यते किं तर्हि, औणादिकइकारोऽत्र क्रियते बहुलवचनात् । उणादयो बहुलं च सन्तीति वचनात् इकारादयोऽप्यनुक्ताः कर्तव्या एवेति सिद्धं जनिरिति । तत्र जनौ सहधियं करोत्याशुवृत्त्या चक्षुर्ज्ञानं तच्छ्रुतज्ञानं च क्रमादभवदपि कथंचिदिति हि सिद्धान्तविनिश्चयो न पुनः सह क्षायोपशमिकदर्शनज्ञाने सोपयोगे मतिश्रुतज्ञाने वा येन सूत्राविरोधो न भवेत् । न चैतावता परमतसिद्धिस्तत्र सर्वथा क्रमभाविज्ञानव्यवस्थितेरिह कथंचित्तथाभिधानात् ॥

## मतिश्रुतावधयो विपर्ययश्च ॥ ३१ ॥

कस्याः पुनराशंकाया निवृत्त्यर्थं कस्यचिद्वा सिद्ध्यर्थमिदं सूत्रमित्याह;—

अथ ज्ञानानि पंचानि व्याख्यातानि प्रपंचतः । किं सम्यगेव मिथ्या वा सर्वाण्यपि कदाचन ॥१॥
कानिचिद्वा तथा पुंसा मिथ्याशंकानिवृत्तये । स्वेष्टपक्षप्रसिद्ध्यर्थं मतीत्याद्याह संप्रति ॥२॥

पूर्वपदावधारणेन सूत्रं व्याचष्टे;—

मत्यादयः समाख्यातास्त एवेत्यवधारणात् । संगृह्येते कदाचिन्न मनःपर्ययकेवले ॥ ३ ॥
नियमेन तयोः सम्यग्भावनिर्णयतः सदा । मिथ्यात्वकारणाभावाद्विशुद्धात्मनि सम्भवात् ॥४॥
दृष्टिचारित्रमोहस्य क्षये वोपशमेऽपि वा । मनःपर्ययविज्ञानं भवन्मिथ्या न युज्यते ॥ ५ ॥
सर्वघातिक्षयेऽत्यन्तं केवलं प्रभवत्कथम् । मिथ्या सम्भाव्यते जातु विशुद्धिं परमं दधत् ॥६॥
मतिश्रुतावधिज्ञानत्रयं तु स्यात्कदाचन । मिथ्येति ते च निर्दिष्टा विपर्यय इहाङ्गिनाम् ॥७॥
स च सामान्यतो मिथ्याज्ञानमत्रोपवर्ण्यते । संशयादिविकल्पानां त्रयाणां संगृहीयते ॥ ८ ॥
समुच्चिनोति चस्तेषां सम्यक्त्वं व्यावहारिकम् । मुख्यं च तदनुक्तौ तु तेषां मिथ्यात्वमेव हि ९
ते विपर्यय एवेति सूत्रे येनावधार्यते । चशब्दमन्तरेणापि सदा सम्यक्त्वमन्यतः ॥ १० ॥
मिथ्याज्ञानविशेषः [illegible] विपर्ययत् । संशयाज्ञानभेदस्य चशब्देन [illegible] ॥ ११ ॥

अत्र मतिश्रुतावधीनामविशेषेण संशयविपर्यासानध्यवसायरूपत्वसक्तौ यथाप्रतीति तद्दर्शनार्थमाह;—

**तत्र त्रिधापि मिथ्यात्वं मतिज्ञाने प्रतीयते। श्रुते च द्विविधं बोध्यमवधौ संशयाद्विना॥१२॥**
**तस्येन्द्रियमनोहेतुसमुद्भूतिनियामतः। इन्द्रियानिन्द्रियाजन्यस्वभावश्चावधिः स्मृतः॥ १३ ॥**

मतौ श्रुते च त्रिविधं मिथ्यात्वं बोद्धव्यं मतेरिन्द्रियानिन्द्रियनिमित्तकत्वनियमात्। श्रुतस्यानिन्द्रियनिमित्तकत्वनियमात् द्विविधमवधौ संशयाद्विना विपर्ययानध्यवसायावित्यर्थः। कुतः संशयादिन्द्रियानिन्द्रियाजन्यस्वभावः प्रोक्तः। संशयो हि चलिताप्रतिपत्तिः, किमयं स्थाणुः किं वा पुरुष इति। स च सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षादुभयविशेषस्मरणात् प्रजायते। दूरस्थे च वस्तुनि इन्द्रियेण सामान्यतश्च सन्निकृष्टे सामान्यप्रत्यक्षत्वं विशेषाप्रत्यक्षत्वं च दृष्टं मनसा च पूर्वानुभूततदुभयविशेषस्मरणेन, न चावध्युत्पत्तौ क्वचिदिन्द्रियव्यापारोऽस्ति मनोव्यापारो वा स्वावरणक्षयोपशमविशेषात्मना सामान्यविशेषात्मनो वस्तुनः स्वविषयस्य तेन ग्रहणात्। ततो न संशयात्मावधिः। विपर्ययात्मा तु मिथ्यात्वोदयाद्विपरीतवस्तुस्वभावश्रद्धानसहभावात्सम्बोध्यते। तथानध्यवसायात्माप्याशु उपयोगसंहरणाद्विज्ञानान्तरोपयोगाद्गच्छत्तृणस्पर्शवदुत्पाद्यते। दृढोपयोगावस्थायां तु नावधिरनध्यवसायात्मापि कथमेवावस्थितोऽवधिरिति चेत्, कदाचिदनुगमनात्कदाचिदननुगमनात्कदाचिद्वर्धमानत्वात्कदाचिद्धीयमानत्वात्तथा विशुद्धिविपरिवर्तमानादवस्थितावधिरेकेन रूपेणावस्थानान्न पुनरदृष्टोपयोगत्वात्स्वभावपरावर्तनेऽपि, तस्य तथा तथा दृढोपयोगत्वाविरोधात्। कुतः पुनस्त्रिष्वेव बोधेषु मिथ्यात्वमित्याह;—

**मिथ्यात्वं त्रिषु बोधेषु दृष्टिमोहोदयाद्भवेत्। तेषां सामान्यतस्तेन सहभावाविरोधतः ॥१४॥**
**यदा मत्यादयः पुंसस्तदा न स्याद्विपर्ययः। स यदा ते तदा न स्युरित्येतेन निराकृतम्॥१५॥**
**विशेषापेक्षया ह्येषां न विपर्ययरूपता। मत्यज्ञानादिसंज्ञेषु तेषु तस्याः प्रसिद्धितः॥ १६ ॥**

सम्यक्त्वावस्थायामेव मतिश्रुतावधयो व्यपदिश्यन्ते मिथ्यात्मावस्थायां तेषां मत्यज्ञानव्यपदेशात्। ततो न विशेषरूपतया ते विपर्यय इति व्याख्यायते येन सहानवस्थालक्षणो विरोधः स्यात्। किं तर्हि सम्यग् मिथ्यामत्यादिव्यक्तिगतमत्यादिसामान्यापेक्षया ते विपर्यय इति निश्चीयते मिथ्यात्वेन सहभावाविरोधात्तथा मत्यादीनां॥ ननु च तेषां तेन सहभावेऽपि कथं मिथ्यात्वमित्याशंक्योत्तरमाह;—

**मिथ्यात्वोदयसद्भावे तद्विपर्ययरूपता। न युक्ताश्म्यादिसंपाते जात्यहेम्नो यथेति चेत्॥१७॥**
**नाश्रयस्यान्यथाभावसम्यक्परिदृढे सति। परिणामे तदाधेयस्यान्यथा भावदर्शनात्॥ १८ ॥**
**यथा सरजसालाम्बूफलस्य कटु किञ्च तत्। क्षिप्तस्य पयसो दृष्टः कटुभावस्तथाविधः॥१९॥**
**तथात्मनोऽपि मिथ्यात्वपरिणामे सतीष्यते। मत्यादिसंविदां तादृङ्मिथ्यात्वं कस्यचित्सदा २०**

जात्यहेम्नो माणिक्यस्य चाश्म्यादिर्वा गृहादिर्वा नाहेमत्वममाणिक्यत्वं वा कर्तुं समर्थस्तस्यापरिणामकत्वात्। मिथ्यात्वपरिणतस्तु आत्मा साश्रयीणि मत्यादिज्ञानानि विपर्ययरूपतामापादयति। तस्य तथा परिणामकत्वात्सरजसकटुकालाम्बूवत्स्वाश्रयि पय इति न मिथ्यात्वसहभावेऽपि मत्यादीनां सम्यक्स्वरूपत्यागः शङ्कनीयः। परिणामित्वमात्मनोसिद्धमिति चेदत्रोच्यते;—

**न चेदं परिणामित्वमात्मनो न प्रसाधितम्। सर्वथापरिणामित्वे सत्त्वस्यैव विरोधतः॥२१॥**
**ततो विपर्ययो न स्यात्परिणामः कदाचन। मत्यादिवेदनाकारपरिणामनिवृत्तितः॥ २२ ॥**

## सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३२ ॥

किंकुर्वन्निदं सूत्रं ब्रवीतीति शंकायामाह;—

**समानोर्थपरिच्छेदः सद्दृष्ट्यर्थपरिच्छिदा । कुतो विज्ञायते त्रेधा मिथ्यादृष्टेर्विपर्ययः ॥ १ ॥**
**इत्यत्र ज्ञापकं हेतुं सदृष्टान्तं प्रदर्शयत् । सदित्याद्याह संक्षेपाद्विशेषप्रतिपत्तये ॥ २ ॥**

मिथ्यादृष्टेरप्यर्थपरिच्छेदः सद्दृष्ट्यर्थपरिच्छेदेन समानो भूयते तत्कुतोऽसौ त्रेधा विपर्यय इत्यारेकायां सत्यां दर्शनं ज्ञापकं हेतुमनेनोपदर्शयति ॥

के पुनरत्र सदसती कश्च तयोरविशेषः का च यदृच्छोपलब्धिरित्याह;—

**नात्रोत्पादव्ययध्रौव्ययुक्तं सदिति वक्ष्यति । ततोऽन्यदसदित्येतत्सामर्थ्यादवसीयते ॥ ३ ॥**
**अविशेषस्तयोः सद्भिरविवेको विधीयते । सांकर्यतो हि तद्वित्तिस्तथा वैयतिकर्यतः ॥ ४ ॥**
**प्रतिपत्तिरभिप्रायमात्रं यदनिबन्धनं । सा यदृच्छा तया वित्तिरुपलब्धिः कथंचन ॥ ५ ॥**

किमत्र साध्यमित्याह;—

**मत्यादयोऽत्र वर्तन्ते ते विपर्यय इत्यपि । हेतोर्यथोदितादत्र साध्यते सदसत्त्वयोः ॥ ६ ॥**

तेनैतदुक्तं भवति मिथ्यादृष्टेर्मतिश्रुतावधयो विपर्ययः सदसतोरविशेषेण यदृच्छोपलब्धेरुन्मत्तस्यैवेति । समानेऽप्यर्थपरिच्छेदे कस्यचिद्विपर्ययसिद्धिं दृष्टान्ते साध्यसाधनयोर्व्याप्तिं प्रदर्शयन्नाह;—

**स्वर्णे स्वर्णमिति ज्ञानमस्वर्णे स्वर्णमित्यपि । स्वर्णे वास्वर्णमित्येवमुन्मत्तस्य कदाचन ॥ ७ ॥**
**विपर्ययो यथा लोके तद्यदृच्छोपलब्धितः । विशेषाभावतस्तद्वन्मिथ्यादृष्टेर्घटादिषु ॥ ८ ॥**

सर्वत्राहार्य एव विपर्ययः सहज एवेत्येकान्तव्यवच्छेदेन तदुभयं स्वीकुर्वन्नाह;—

**सहचार्यो विनिर्दिष्टः सहजश्च विपर्ययः । प्राच्यस्तत्र श्रुताज्ञानं मिथ्यासमयसाधितम् ॥ ९ ॥**
**मत्यज्ञानं विभङ्गश्च सहजः संप्रतीयते । परोपदेशनिर्मुक्तेः श्रुताज्ञानं च किंचन ॥ १० ॥**

चक्षुरादिमतिपूर्वकं श्रुताज्ञानमपरोपदेशत्वात्सहजं मत्यज्ञानविभङ्गज्ञानवत् । श्रोत्रमतिपूर्वकं तु परोपदेशापेक्षत्वादाहार्यं प्रत्येयं । तत्र सति विषये श्रुताज्ञानमाहार्यविपर्ययमादर्शयति;—

**सति स्वरूपतोऽशेषे शून्यवादो विपर्ययः । ग्राह्यग्राहकभावादौ संविदद्वैतवर्णनम् ॥ ११ ॥**
**चित्राद्वैतप्रवादश्च पुंशब्दाद्वैतवर्णनम् । बाह्यार्थेषु च भिन्नेषु विज्ञानांशप्रकल्पनं ॥ १२ ॥**
**बहिरन्तश्च वस्तूनां सादृश्ये वैसदृश्यवाक् । वैसदृश्ये च सादृश्यैकान्तवादावलम्बनम् ॥ १३ ॥**
**द्रव्ये पर्यायमात्रस्य पर्याये द्रव्यकल्पना । तद्द्वयात्मनि तद्भेदवादो वाच्यत्ववागपि ॥ १४ ॥**
**उत्पादव्ययवादश्च ध्रौव्ये तदवलम्बनम् । जन्मप्रध्वंसयोरेवं प्रतिवस्तु प्रबुध्यताम् ॥ १५ ॥**

सति तावत्कार्त्स्न्येनैकदेशेन च विपर्ययोऽस्ति तत्र कार्त्स्न्येन शून्यवादः स्वरूपद्रव्यक्षेत्रकालतः । सर्वस्य सत्त्वेन प्रमाणसिद्धत्वात् । विशेषतस्तु सति ग्राह्यग्राहकभावे कार्यकारणभावे च वाच्यवाचकभावादौ च तदसत्त्ववचनम् । तत्र संविदद्वैतस्य वावलम्बनेन सौगतस्य, पुरुषाद्वैतस्यालम्बनेन ब्रह्मवादिनः, शब्दाद्वैतस्याश्रयेण वैयाकरणस्येति प्रत्येयं । विपर्ययत्वं तु तस्य ग्राह्यग्राहकभावादीनां प्रतीतिसिद्धं । तद्वचनाद्यथा बहिरर्थे भिन्ने सति तद्वदसत्त्ववचनं विज्ञानांशप्रकल्पनाद्विपर्ययः । परमार्थतो बहिरन्तश्च वस्तूनां सादृश्ये सति तदसत्त्ववचनं सर्ववैसदृश्यावलम्बनेन तथागतस्यैव विपर्ययः । सादृश्यप्रत्यभिज्ञानस्याबाधितस्य प्रमाणत्वसाधनेन सादृश्यस्य साधनात् सत्यपि च कथंचिद्विशिष्टसादृश्ये तदसत्त्ववचनं । सर्वथा

सादृश्यावलम्बनात् सादृश्यैकान्तवादिनो विपर्ययः । एकत्वप्रत्यभिज्ञानस्याबाधितस्य प्रमाणत्वसाधनात्तत्सत्त्वसिद्धेः पर्याये च सति तदसत्त्ववचनं द्रव्यमात्रास्थानादपरस्य विपर्ययः । भेदज्ञानाद्यबाधितात्तत्सत्त्वसाधनात् । द्रव्यपर्यायात्मनि वस्तुनि सति तदसत्त्वाभिधानं परस्परभिन्नद्रव्यपर्यायवादाश्रयणादन्येषां तस्य प्रमाणतो व्यवस्थापनात् । तत्त्वान्यत्वाभ्यामवाच्यत्ववादालम्बनाद्वा तत्र विपर्ययः । सति ध्रौव्ये तदसत्त्वकथनमुत्पादव्ययमात्रांगीकरणात्केषांचिद्विपर्ययः कथंचित्सर्वस्य नित्यत्वसाधनात् । उत्पादव्यययोश्च सतोस्तदसत्त्वाभिनिवेशः शाश्वतैकान्ताश्रयणादन्येषां विपर्ययः । सर्वस्य कथंचिदुत्पादव्ययात्मनः साधनादेवं प्रतिवस्तुसत्त्वेऽसत्त्ववचनं विपर्ययः प्रपंचतो बुध्यतां । जीवे सति तदसत्त्ववचनं चार्वाकस्य विपर्ययस्तत्सत्त्वस्य प्रमाणतः साधनात् । अजीवे तदसत्त्ववचनं ब्रह्मवादिनो विपर्ययः । आस्रवे तदसत्त्ववचनं च बौद्धचार्वाकस्यैव । संवरे निर्जरायां मोक्षे च तदसत्त्ववचनं याज्ञिकस्य विपर्ययः । पूर्वमेव जीववदजीवादीनां प्रमाणतः प्ररूपणात् । विशेषतः संसारिणि मुक्ते च जीवे सति तदसत्त्ववचनं विपर्ययः । जीवे पुद्गले धर्मेऽधर्मे नभसि काले च सति तदसत्त्ववचनं । तत्कपुण्यास्रवे पापास्रवे च पुण्यबन्धे पापबन्धे च देशसंवरे सर्वसंवरे च यथाकालं निर्जरायामौपक्रमिकनिर्जरायां च आर्हन्त्यमोक्षे सिद्धत्वमोक्षे च सति तदसत्त्ववचनं कस्यचिद्विपर्ययस्तत्सत्त्वस्य पुरस्तात् प्रमाणतः साधनात् । एवं तदा भेदेषु प्रमाणसिद्धेषु तदसत्सु तदसत्त्ववचनं विपर्ययो बहुधावबोद्धव्यः परीक्षाक्षमधिषणैरित्यलं विचारेण ॥

**पररूपादितोऽशेषे वस्तुन्यसति सर्वथा । सत्त्ववादः समाम्नातः पराहार्यो विपर्ययः ॥ १६ ॥**

पररूपद्रव्यक्षेत्रकालतः सर्ववस्त्वसत्तत्र कार्त्स्न्यतः सत्त्ववचनमाहार्यो विपर्ययः । सत्त्वैकान्तावलम्बनात्कस्यचित्प्रत्येतव्यः । प्रमाणतस्तथा सर्वस्यासत्त्वसिद्धेः देशतोऽसतोऽसति सत्त्वविपर्ययमुपदर्शयति;—

**सत्यसत्त्वविपर्यासाद् वैपरीत्येन कीर्तितात् । प्रतीयमानकः सर्वोऽसति सत्त्वविपर्ययः ॥ १७॥**

सति ग्राह्यग्राहकभावादौ संविदद्वैताद्यालम्बनेन तदसत्त्ववचनलक्षणाद्विपर्ययात्पूर्वोक्ताद्विपरीतत्वेनासति प्रतीत्यारूढे ग्राह्यग्राहकभावादौ सौत्रान्तिकाद्युपवर्णिते सत्त्ववचनं विपर्ययः प्रपंचतोऽवबोद्धव्यः । एवमाहार्यं श्रुतविपर्ययमुपदर्श्य श्रुतानध्यवसायं चाहार्यं दर्शयति;—

**सति त्रिविप्रकृष्टार्थे संशयः श्रुतिगोचरे । केषांचिद्दृश्यमानेऽपि तत्त्वोपप्लववादिनाम् ॥ १८ ॥**

**तथानध्यवसायोऽपि केषांचित्सर्ववेदिनि तत्त्वे । सर्वत्र वाग्गोचराहार्योऽवगम्यताम् ॥ १९ ॥**

श्रुतविषये देशकालस्वभावविप्रकृष्टेऽर्थे संशयः । सौगतानामदृश्यसंशयैकान्तवादावलम्बनादाहार्योऽवसेयः । पृथिव्यादौ दृश्यमानेऽपि संशयः केषांचित्तत्त्वोपप्लववादावष्टंभात् । सर्ववेदिनि पुनः संशयोऽध्यवसायश्च केषांचिद्विपर्ययवदाहार्योऽवगम्यताम् । सर्वज्ञाभाववादावलेपात्सर्वत्र वा तत्त्वे केषांचिदन्योऽनध्यवसायः । संशयविपर्ययवत् "तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नासौ मुनिर्यस्य वचः प्रमाणं । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः" इति प्रलापमात्राश्रयणात् । तथा प्रलापिनां स्वोक्ताप्रतिष्ठानात् तत्प्रतिष्ठाने वा तथा वचनविरोधादित्युक्तप्रायं ॥ सम्प्रति मतिज्ञानविपर्ययसहजमावेदयति;—

**बह्वाद्यवग्रहाद्येषु चत्वारिंशत्सु त्रिषु । कुतश्चिन्मतिभेदेषु सहजः स्याद्विपर्ययः ॥ २० ॥**

**स्मृतावननुभूतार्थे स्मृतिसाधर्म्यसाधनः । संज्ञायामेकताज्ञानं सादृश्यः श्रोत्रदर्शितः ॥ २१॥**

**तथैकत्वेऽपि सादृश्यविज्ञानं कस्यचिद्भवेत् । स विसंवादतः सिद्धश्चिंतायां लिङ्गलिङ्गिनोः २२**

**हेत्वाभासबलाज्ज्ञानं लिङ्गिनि ज्ञानमुच्यते । स्वार्थानुमाविपर्यासो बहुधा तद्विदां मतः ॥२३॥**

के पुनस्ते हेत्वाभासा यतो जायमानं लिङ्गिनि ज्ञानं स्वार्थानुमानविपर्ययः । सहजो मतिः

स्मृतिसंज्ञाचिन्तानामिव स्वविषये तिमिरादिकारणवशादुपगम्यते इति पर्यनुयोगे समासव्यासतो हेत्वाभासमुपदर्शयति;—

हेत्वाभासस्तु सामान्यादेकः साध्याप्रसाधनः । यथा हेतुःस्वसाध्येनाविनाभावी निवेदितः२४
त्रिविधोऽसावसिद्धादिभेदात्कश्चिद्विनिश्चितः । स्वरूपाश्रयसंदिग्धाज्ञातासिद्धश्चतुर्विधः ॥ २५ ॥
तत्र स्वरूपतोऽसिद्धो वादिनः शून्यसाधने । सर्वो हेतुर्यथा ब्रह्मतत्त्वोपप्लवसाधने ॥ २६ ॥
सत्त्वादिः सर्वथा साध्ये शब्दभंगुरतादिके । स्याद्वादिनः कथंचिच्च सर्वथैकान्तवादिनः॥२७॥
शब्दाद्विनश्वराद्धेतुसाध्ये चाऽकृतकादयः । हेतवोऽसिद्धतां यान्ति बौद्धादेः प्रतिवादिनः २८
जैनस्य सर्वथैकान्तधूमवत्त्वादयोऽग्निषु । साध्येषु हेतवोऽसिद्धा पर्वतादौ तथाश्रितः ॥ २९ ॥
शब्दादौ चाक्षुषत्वादिरुभयासिद्ध इष्यते । निःशेषोऽपि यथा शून्यब्रह्माद्वैतप्रवादिनोः ॥३०॥
वाचसिद्धौ तत्र साध्यप्रसाधनौ ॥

समर्थनविहीनः स्यादसिद्धः प्रतिवादिनः । हेतोर्यस्याश्रयो न स्यात् आश्रयासिद्ध एव सः ३१
स्वसाध्येनाविनाभावाभावादगमको मतः । प्रत्यक्षादेः प्रमाणादेः संवादित्वादयो यथा ॥३२॥
शून्योपप्लवशब्दाद्यद्वैतवादावलम्बिनां । संदेहविषयः सर्वः संदिग्धासिद्ध उच्यते ॥ ३३ ॥
तथागमप्रमाणत्वे रुद्रोक्तत्वादिराश्रितः । सन्नप्यज्ञायमानोऽत्राज्ञातासिद्धो विभाव्यते ॥३४॥
सौगतादेर्यथा सर्वः सत्त्वादिस्वेष्टसाधने । न निर्विकल्पकाध्यक्षादस्तिहेतोर्विनिश्चयः ॥ ३५ ॥
तत्पृष्ठजाद्विकल्पाच्च वस्तुगोचरतः क सः । अनुमानान्तराद्धेतुनिश्चयो चानवस्थितिः ॥३६॥
परापरानुमानानां पूर्वपूर्वप्रवृत्तितः । ज्ञानं ज्ञानान्तराध्यक्षं वदतोनेन दर्शितः ॥ ३७ ॥
सर्वो हेतुरविज्ञातोऽनवस्थानाविशेषतः । अर्थापत्तिपरिच्छेद्यं परोक्षं ज्ञानमाहताः ॥ ३८ ॥
सर्वे ये तेऽप्यनेनोक्ता स्वाज्ञातासिद्धहेतवः । प्रत्यक्षं तु फलज्ञानमात्मानं वा स्वसंविदम् ३९
प्राभ्ययोकरणाज्ञानं व्यर्थं तेषां निवेदितं । प्रधानपरिणामत्वादचेतनमितीरितम् ॥ ४० ॥
ज्ञानं यैस्ते कथं न स्युरज्ञातासिद्धहेतवः । प्रतिज्ञार्थैकदेशस्तु स्वरूपासिद्ध एव नः ॥ ४१ ॥
शब्दो नासौ विनाशित्वादित्यादि साध्यसन्निभः। यस्साध्यविपरीतार्थो व्यभिचारी सुनिश्चितः॥
स विरुद्धोऽवबोद्धव्यस्तथैवेष्टविघातकृत् । सत्त्वादिः क्षणिकत्वादौ यथा स्याद्वादविद्विषां ॥४३॥
अनेकान्तात्मकत्वस्य नियमात्तेन साधनात् । परार्थ्यं चक्षुरादीनां संहत्त्वं प्रसाधयेत् ॥४४॥
परस्य परिणामित्वं तथेतीष्टविघातकृत् । अनुस्यूतमनीषादिसामान्यादीनि साधयेत् ॥ ४५ ॥
तेषां द्रव्यविवर्तत्वमेवमिष्टविघातकृत् । विरुद्धाच्च च भिन्नोऽसौ स्वयमिष्टाद्विपर्यये ॥ ४६ ॥
सामर्थ्यस्याविशेषेण भेदवादिप्रसंगतः । विवादाध्यासितं धीमद्धेतुकं कृतकत्वतः ॥ ४७ ॥
यथा शकटमित्यादि विरुद्धो तेन दर्शितः । यथा हि बुद्धिमत्पूर्वं जगदेतत्प्रसाधयेत् ॥ ४८ ॥
तथा बुद्धिमतो हेतोरनेकत्वशरीरिताम् । स्वशरीरस्य कर्तात्मा नाशरीरोऽस्ति सर्वथा ॥ ४९ ॥
कार्मणेन शरीरेणानादिसम्बन्धसिद्धितः । यतः साध्ये शरीरे स्वे धीमतो व्यभिचारता॥५०॥
जगत्कर्तुः प्रपद्येत तेन हेतोः कुतार्किकः । बोध्योऽनैकान्तिको हेतुःसम्भवाज्ञान्यथा तथा ५१
संक्षीर्तिं मिथिवत्सर्वः साधारणतया स्थितः । शब्दत्वश्रावणत्वादि शब्दादौ परिणामिनि ५२
साध्यहेतुस्ततो वृत्तेः पक्ष एव सुनिश्चितः । संक्षीत्यालिङ्गिताङ्गस्तु यः सपक्षविपक्षयोः॥५३॥
पक्षे स वर्तमानः स्यादनैकान्तिकलक्षणः । तेन साधारणो नान्यो हेत्वाभासस्ततोऽस्ति नः ॥५४
तस्यानैकान्तिके सम्बन्धेतौ ह्यन्तर्गतिः स्थितिः । प्रमेयत्वादिरेतेन सर्वथान्यपरिणामिनि॥५५॥

साध्ये वस्तुनि निर्णीतो व्याख्यातः प्रतिपद्यतां । पक्षत्रितयहानिस्तु यस्यानैकान्तिको मतः ५६
केवलव्यतिरेकादिस्तस्यानैकान्तिकः कथं । व्यक्तात्मनां हि भेदानां परिणामादिसाधनम् ५७
एकं कारणपूर्वत्वे केवलव्यतिरेकिनः । कारणत्रयपूर्वत्वात्कार्येणानन्वयागतेः ॥ ५८ ॥
पुरुषैर्व्यभिचारीष्टं प्रधानपुरुषैरपि । विना सपक्षसत्त्वेन गमकं यस्य साधनम् ॥ ५९ ॥
अन्यथानुपपन्नत्वात्तस्य साधारणो मतः । साध्ये च तदभावे च वर्तमानो विनिश्चितः ॥६०॥
संशीत्याक्रान्तदेहो वा हेतुः कार्त्स्न्यैकदेशतः । तत्र कार्त्स्न्येन निर्णीतस्तावत्साध्यविपक्षयोः ६१
यथा द्रव्यं नभः सत्त्वादित्यादिः कश्चिदीरितः । विश्ववेदीश्वरः सर्वजगत्कर्तृत्वसिद्धितः ॥६२
इति संश्रयतस्तत्राविनाभावस्य संशयात् । सति ह्यशेषवेदित्वे संदिग्धा विश्वकर्तृता ॥ ६३ ॥
तदभावे च तन्नायं गमको न्यायवेदिनाम् । नित्योऽर्थो निर्मूर्त्तत्वादिति स्यादेकदेशतः ॥६४॥
स्थितस्तयोर्विनिर्दिष्टपरोऽपीदृक्तदा तु कः । यत्रार्थे साधयेदेकं धर्मं हेतुर्विवक्षितम् ॥ ६५ ॥
तत्रान्यस्तद्विरुद्धं चेद्विरुद्धा व्यभिचार्यसौ । इति केचित्तदप्राप्तमनेकान्तस्य युक्तितः ॥ ६६ ॥
सम्यग्घेतुत्वनिर्णीतेर्नित्यानित्यत्वहेतुवत् । सर्वथैकान्तवादे तु हेत्वाभासोऽयमिष्यते ॥ ६७ ॥
सर्वगत्वे परस्मिंश्च जातेः ख्यापितहेतुवत् । स च सप्रतिपक्षोऽत्र कश्चिदुक्तः परैः पुनः ॥६८॥
अनैकान्तिक एवेति ततो नास्य विभिन्नता । स्वेष्टधर्मविहीनत्वे हेतुनान्येन साध्यते ॥ ६९ ॥
साध्याभावे प्रयुक्तस्य हेतोर्नाभावनिश्चयः । धर्मिणीति स्वयं साध्यासाध्ययोर्वृत्तिसंश्रयात् ७०
नानैकान्तिकता बाध्या तस्य तल्लक्षणान्वयात् । यः स्वपक्षसपक्षान्यतरवादः स्वनादिषु ॥७१॥
नित्यत्वे भंगुरत्वे वा प्रोक्तः प्रकरणे समः । सोऽप्यनैकान्तिकान्नान्य इत्यनेनैव कीर्तितम् ७२
स्वसाध्ये सति सम्भूतिः संशया सविशेषतः । कालात्ययापदिष्टोऽपि साध्यमानेन बाधिते ७३
यः प्रयुज्येत हेतुः स्यात्स नो नैकान्तिकोऽपरः । साध्याभावे प्रवृत्तो हि प्रमाणैः कुत्रचित्स्वयम् ७४
साध्ये हेतुर्न निर्णीतो विपक्षविनिवर्त्तनः । विपक्षे बाधके वृत्ते समीचीनो यथोच्यते ॥ ७५ ॥
साध्यके सति किन्न स्यात्तदा ह्यसत्तथैव सः । साध्याभावे प्रवृत्तेन किं प्रमाणेन बाध्यते ७६
हेतुः किं वा तदेतेनेत्यत्र संशीतिसम्भवः । साध्यस्याभाव एवायं प्रवृत्त इति निश्चये ॥ ७७॥
विरुद्धो हेतुरुद्भाव्योऽतीतकालो न चापरः । प्रमाणबाधनं नाम दोषः पक्षस्य वस्तुतः ॥७८॥
क्व तस्य हेतुभिन्नाणोऽनुत्पन्नेन तपोहतः । सिद्धे साध्ये प्रवृत्तोऽत्राकिंचित्कर इतीरितः ॥७९॥
कैश्चिद्धेतुर्न संचिन्त्यः स्याद्वादनयशालिभिः । गृहीतग्रहणात्तस्याप्रमाणत्वं यदीष्यते ॥ ८० ॥
स्मृत्यादेरप्रमाणत्वं स्मृत्यादेश्चेत्कथं तु तैः । सिद्धेऽर्थे वर्तमानस्य हेतोः संवादिता न ते ॥८१॥
प्रयोजनविशेषस्य सद्भावान्मानता यदि । तदाल्पज्ञानविज्ञानं हेतोः किं न प्रयोजनम् ॥८२॥
प्रमाणसंप्लवस्त्वेवं स्वयमिष्टो विरुध्यते । सिद्धे कुतश्चनार्थेन्यप्रमाणस्याफलत्वतः ॥ ८३ ॥
मानेनैकेन सिद्धेऽर्थे प्रमाणांतरवर्तने । यानवस्थोच्यते सापि नाकांक्षाक्षयतः स्थितेः ॥ ८४ ॥
सरागप्रतिपत्तॄणां स्याद्दृष्टत्वमतः क्वचित् । स्यादाकांक्षाक्षयः कालदेशादेः स्वनिमित्ततः ॥८५॥
वीतरागाः पुनः स्वार्थान् वेदनैरपरापरैः । परिक्षेत्रं प्रवर्तंते सदोपेक्षापरायणा ॥ ८६ ॥
प्रमाणसंप्लवे चैवमदोषे प्रत्युपस्थिते । गृहीतग्रहणात् क्व स्यात् केवलस्याप्रमाणता ॥ ८७ ॥
ततः सर्वप्रमाणानामपूर्वार्थत्वसम्भवे । स्यादकिंचित्करो हेत्वाभासो नैवान्यथार्पणात् ॥८८॥
तत्रापि केवलज्ञानं नाप्रमाणं प्रसज्यते । साद्यपर्यवसानस्य तस्यापूर्वार्थता स्थितेः ॥ ८९ ॥
प्रत्युत्पत्तिक्षणादूर्ध्वं प्ररिष्यामित्वविच्युतिः । केवलस्यैकरूपित्वादिति चोद्यं न युक्तिमत् ॥९०॥

परापरेण कालेन संबंधात्परिणामि च । ............(?)ज्ञातृत्वेनैकमेव हि ॥ ९१ ॥
एवं व्याख्याननिःशेषहेत्वाभाससमुद्भवं । ज्ञानं स्वार्थानुमाभासं मिथ्यादृष्टेर्विपर्ययः ॥ ९२ ॥

यथा श्रुतज्ञाने विपर्यासस्तद्वत्संशयोऽनध्यवसायश्च प्रतिपत्तव्यः । सामान्यतो विपर्ययशब्देन मिथ्याज्ञानसामान्यस्याभिधानात् ।

संप्रति वाक्यार्थज्ञानविपर्ययमाहार्यं दर्शयन्नाह;—

नियोगो भावनैकांताद्धात्वर्थो विधिरेव च । यन्त्रारूढादिव्यर्थोन्यापोहो वा वचसो यदा ॥९३॥
कैश्चिन्मन्येत तज्ज्ञानं श्रुताभं वेदनं तदा । तथा वाक्यार्थनिर्णीतेर्विधातुं दुःशकत्वतः ॥ ९४ ॥

कः पुनरयं नियोगो नाम नियुक्तोहमनेन वाक्येनेति निरवशेषो योगो नियोगस्तत्र मनागप्ययोगाशंकायाः संभवाभावात् । स चानेकधा, केषांचिल्लिङादिप्रत्ययार्थः शुद्धोऽन्यनिरपेक्षः कार्यरूपो नियोग इति मतम् ॥

प्रत्ययार्थो नियोगश्च यतः शुद्धः प्रतीयते । कार्यरूपश्च तेनात्र शुद्धं कार्यमसौ यतः ॥ ९५ ॥
विशेषणं तु यत्तस्य किंचिदन्यत्प्रतीयते । प्रत्ययार्थो न तद्युक्तः धात्वर्थः स्वर्गकामवत्॥९६॥
प्रेरकत्वं तु यत्तस्य विशेषणमिहेष्यते । तस्याप्रत्ययवाच्यत्वात् शुद्धे कार्ये नियोगता ॥ ९७ ॥

परेषां शुद्धा प्रेरणा नियोग इत्याशयः ।

प्रेरणैव नियोगोत्र शुद्धा सर्वत्र गम्यते । नाप्रेरितो यतः कश्चिन्नियुक्तं स्वं प्रबुध्यते ॥ ९८ ॥

प्रेरणासहितं कार्यं नियोग इति केचिन्मन्यंते ।

ममेदं कार्यमित्येवं ज्ञानं पूर्वं यदा भवेत् । स्वसिद्ध्यै प्रेरकं तत्स्यादन्यथा तन्न सिद्ध्यति॥९९॥

कार्यसहिता प्रेरणा नियोग इत्यपरे ॥

प्रेर्यते पुरुषो नैव कार्येणेह विना क्वचित् । ततश्चेत्प्रेरणा प्रोक्ता नियोगः कार्यसंगता ॥१००॥

कार्यस्यैवोपचारतः प्रवर्तकत्वं नियोग इत्यन्ये ।

प्रेरणाविषयः कार्यं न तु तत्प्रेरकं स्वतः । व्यापारस्तु प्रमाणस्य प्रमेय उपचर्यते ॥ १०१ ॥

कार्यप्रेरणयोः संबंधो नियोग इत्यपरे ।

प्रेरणा हि विना कार्यं प्रेरिका नैव कस्यचित् । कार्यप्रेरणयोर्योगो नियोगस्तेन सम्मतः॥१०२

तत्समुदायो नियोग इति चापरे ।

परस्पराविनाभूतं द्वयमेतत्प्रतीयते । नियोगः समुदायोस्मात्कार्यप्रेरणयोर्मतः ॥ १०३ ॥

तदुभयस्वभावनिर्मुक्तो नियोग इति चान्ये ।

सिद्धमेकं यतो ब्रह्मगतमाम्नायतः सदा । सिद्धत्वेन च तत्कार्यं प्रेरकं कुत एव तत् ॥१०४॥

यंत्रारूढो नियोग इति कश्चित् ।

कामी यत्रैव यः कश्चिन्नियोगे सति तत्र सः । विषयारूढमात्मानं मन्यमानः प्रवर्तते॥१०५॥

भोग्यरूपो नियोग इत्यपरः ॥

ममेदं भोग्यमित्येवं भोग्यरूपं प्रतीयते । ममत्वेन च विज्ञानं भोक्तर्येव व्यवस्थितम् ॥१०६॥
स्वामित्वेनाभिमानो हि भोक्तुर्यत्र भवेदयं । भोग्यं तदेव विज्ञेयं तदेवं स्वं निरुच्यते ॥१०७॥
साध्यरूपतया येन ममेदमिति गम्यते । तत्प्रसाध्येन रूपेण भोग्यं स्वं व्यपदिश्यते ॥१०८॥
सिद्धरूपं हि यद्भोग्यं न नियोगः स तावता । साध्यत्वेनेह भोग्यस्य प्रेरकत्वान्नियोगता१०९

पुरुष एव नियोग इत्यन्यः ।

**ममेदं कार्यमित्येवं मन्यते पुरुषः सदा । पुंसः कार्यविशिष्टत्वं नियोगः स्यादबाधितः ॥११०॥**

**कार्यस्य सिद्धौ जातायां तद्युक्तः पुरुषः सदा । भवेत्साधित इत्येवं पुमान् वाक्यार्थ उच्यते १११**

सोऽयमेकादशविकल्पो नियोग एव वाक्यार्थ इत्येकांतो विपर्ययः प्रभाकरस्य तस्य सर्वस्याप्येकादश-भेदस्य प्रत्येकं प्रमाणाद्यष्टविकल्पानतिक्रमात् । यदुक्तं—

**प्रमाणं किं नियोगः स्यात्प्रमेयमथवा पुनः । उभयेन विहीनो वा द्वयरूपोथवा पुनः॥११२॥**

**शब्दव्यापाररूपो वा व्यापारः पुरुषस्य वा । द्वयव्यापाररूपो वा द्वयाव्यापार एव वा ११३**

तत्रैकादशभेदोपि नियोगो यदि प्रमाणं तदा विधिरेव वाक्यार्थ इति वेदांतवादप्रवेशः प्रभाकरस्य स्यात् प्रमाणस्य चिदात्मकत्वात्, चिदात्मनः प्रतिभासमात्रत्वात्तस्य च परब्रह्मत्वात् । प्रतिभासमात्राद्धि पृथग्विधिः कार्यतया न प्रतीयते घटादिवत् प्रेरकतया वचनादिवत् । कर्मकारणसाधनतया च हि तत्प्रतीतौ कार्यताप्रेरकताप्रत्ययो युक्तो नान्यथा । किं तर्हि, द्रष्टव्योऽरेऽयमात्मा श्रोतव्योऽनुमंतव्यो निदिध्यासितव्य इत्यादि श्रवणादवस्थांतरविलक्षणेन प्रेरितोहमिति जाताकूतेनाकारेणैव स्वयमात्मैव प्रतिभाति स एव विधिरिति वेदांतवादिभिरभिधानात् । प्रमेयत्वं तर्हि नियोगस्यास्तु प्रमाणत्वे दोषा-भिधानात् इति कश्चित् । तदसत्, प्रमाणवचनाभावात् । प्रमेयत्वे हि तस्य प्रमाणमन्यद्वाच्यं, तदभावे कचित्प्रमेयत्वायोगात् । श्रुतिवाक्यं प्रमाणमिति चेन्न तस्याचिदात्मकत्वे प्रमाणत्वाघटनादन्यत्रोपचारात् । संविदात्मकत्वे श्रुतिवाक्यस्य पुरुष एव तदिति स एव प्रमाणं तत्संवेदनविवर्तश्च । नियुक्तोहमित्य-भिधानरूपो नियोगः प्रमेय इति नायं पुरुषादन्यः प्रतीयते यतो वेदांतवादिमतानुप्रवेशोऽस्मिन्नपि पक्षे न संभवेत् । प्रमाणप्रमेयस्वभावो नियोग इतिचेत् सिद्धस्तर्हि चिद्विवर्तोसौ प्रमाणरूपतान्यथानुपपत्तेः । तथा च स एव चिदात्मोभयस्वभावतयात्मानमादर्शयन् नियोग इति स एव ब्रह्मवादः । अनुभयस्वभावो नियोग इति चेत् तर्हि संवेदनमात्रमेव पारमार्थिकं तस्य कदाचिदहेयत्वात् तथाविधत्वसंभवात् सन्मात्र-देहतया निरूपितत्वादिति वेदांतवाद एव । शब्दव्यापारो नियोग इति चेत् भट्टमतप्रवेशः, शब्द-व्यापारस्य शब्दभावनारूपत्वात् । पुरुषव्यापारो नियोग इति चेत्, स एव दोषः तस्यापि भावना-रूपत्वात्; शब्दात्मव्यापाररूपेण भावनाया द्वैविध्याभिधानात् । तदुभयरूपो नियोग इत्यनेनैव व्याख्यातं । तदनुभयव्यापाररूपत्वे तन्नियोगस्य विषयस्वभावता फलस्वभावता निःस्वभावता वा स्यात् ? प्रथमपक्षे यागादिविषयस्याग्निष्टोमादिवाक्यकाले विरहात् तद्रूपस्य नियोगस्यासंभव एव । संभवे वा न वाक्यार्थो नियोगस्तस्य निष्पादनार्थत्वात् निष्पन्नस्य निष्पादनायोगात् पुरुषादिवत् । द्वितीये पक्षेपि नासौ नियोगः फलस्य भावत्वेन नियोगत्वाघटनात् तदा तस्यासंनिधानाच्च । तस्य वाक्यार्थत्वे निरा-लंबनशब्दवादाश्रयणात्कुतः प्रभाकरमतसिद्धिः ? निःस्वभावत्वे नियोगस्यायमेव दोषः । किं च, सन् वा नियोगः स्यादसन् वा ? प्रथमपक्षे विधिवाद एव द्वितीये निरालंबनवाद इति न नियोगो वाक्यार्थः संभवति; परस्य विचारासंभवात् । तथा वाक्यार्थ इत्येकांतोपि विपर्ययस्तथा व्यवस्थापयितुमशक्तेः । भावना हि द्विविधा शब्दभावना अर्थभावना चेति "शब्दात्मभावनामाहुरन्यामेव लिङादयः । इयं त्वन्यैव सर्वार्था सर्वाख्यातेषु विद्यते" इति वचनात् । अत्र शब्दभावना शब्दव्यापारस्तत्र शब्दव्यापारो भाव्यते पुरुषव्यापारेण धात्वर्थो धात्वर्थेन च फलमिति शब्दभावनावादिनो मतं, तच्च न युज्यते शब्द-व्यापारस्य शब्दार्थत्वायोगात् । न ह्यग्निष्टोमेन यजेत स्वर्गकाम इति शब्दाच्छब्दव्यापार एव प्रतिभाति [illegible] प्रतिपाद्यप्रतिपादकत्वविरोधात् । प्रतिपादकस्य सिद्धरूपत्वात्प्रतिपाद्यस्य चासिद्धस्य तथात्व-

सिद्धेरेकस्य च सकृत्प्रतिसिद्धेतररूपत्वासंभवात्तद्विरोधः । शब्दः स्वरूपमपि श्रोत्रज्ञानेर्पयतीति तस्य प्रतिपादकत्वाविरोधे रूपादयोपि स्वस्य प्रतिपादकाः संचक्षुरादिज्ञाने स्वरूपादयोप्यऽर्पणाद्विशेषाभावात् । स्वाभिधेयप्रतिपादकत्वसमर्पणात् । प्रतिपादकः शब्दो न रूपादय इति चायुक्तिकं, शब्दस्य स्वाभिधेयप्रतिपादकत्वसमर्पणे स्वयं प्रसिद्धे परोपदेशानर्थक्यप्रसंगात् । स्वत एव शब्देन प्रमेयसमभिधेयमिति प्रतिपादनात् । पुरुषसंकेतबलात्स्वाभिधेयप्रतिपादनव्यापारमात्मनः शब्दो निवेदयतीति चेत्, तर्हि यत्रार्थे संकेतितः शब्दस्तस्यार्थस्य पुरुषाभिप्रेतस्य प्रतिपादकत्वं तस्य व्यापार इति न शब्दव्यापारो भावना वक्त्रभिप्रायरूढार्थः । कथं? तस्य तथाभिधानात् । तथा च कथमग्निष्टोमादिवाक्येन श्रावकेन पुरुषस्य यागविषयप्रवृत्तिलक्षणो व्यापारो भाव्यते पुरुषव्यापारेण वा धात्वर्थो यजनक्रियालक्षणो धात्वर्थेन फलं स्वर्गाख्यं, यतो भाव्यभावककरणरूपतया त्र्यंशपरिपूर्णा भावना विभाव्यत इति पुरुषव्यापारो भावनेत्यत्रापि पुरुषो यागादिना स्वर्गं भावयतीति कथ्यते । न चैवं धात्वर्थभावना शब्दार्थः स्वर्गस्यासंनिहितत्वात् । प्रतिपादयितृविवक्षाबुद्धौ प्रतिभासमानस्य शब्दार्थत्वे बौद्ध विशब्दार्थ इत्यभिमतं स्यात् । तदुक्तं । "वक्तृव्यापारविषयो योर्थो बुद्धौ प्रकाशते । प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबंधनम् ॥" इति न भावनावादावतारो मीमांसकस्य, सौगतप्रवेशानुषंगादिति । तथा धात्वर्थो वाक्यार्थ इत्येकांतो विपर्ययः शुद्धस्य भावस्वभावतया विधिरूपत्वप्रसंगात् । तदुक्तं । "सन्मात्रं भावलिंगं स्यादसंपृक्तं तु कारकैः । धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥" इति विधिवाद एव, न च प्रत्ययार्थस्तयोर्धात्वर्थः कुतश्चिद्विधिवाक्यात् प्रतीयते तदुपाधेरेव तस्य ततः प्रतीतेः । प्रत्ययार्थस्तत्र प्रतिभासमानोपि न प्रधानं कर्मादिवदन्यत्रापि भावनादितिचेत्, तर्हि धात्वर्थोपि प्रधानं मा भूत् प्रत्ययांतरेपि भावात् । प्रकृतप्रत्ययापायेपीति समानं पश्यामः । नन्वेवं धात्वर्थस्य सर्वत्र प्रत्ययेष्वनुस्यूतत्वात् प्रधानत्वमिष्यत इति चेत्, प्रत्ययार्थस्य सर्वधात्वर्थेष्वनुगतत्वात् प्रधानत्वमस्तु । प्रत्ययार्थविशेषः सर्वधात्वर्थाननुयायीतिचेत्, धात्वर्थविशेषोपि सर्वप्रत्ययार्थाननुगाम्येव धात्वर्थसामान्यस्य सर्वप्रत्ययार्थाननुपायित्वमिति न विशेषसिद्धिः । तथा विधिर्वाक्यार्थ इत्येकांतोपि विपर्ययस्तस्य विचार्यमाणस्यायोगात् । तद्धि विधिविषयं वाक्यं गुणभावेन प्रधानभावेन विधौ प्रमाणं स्यात्? यदि गुणभावेन तदाग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादेरपि तदस्तु, गुणभावेन विधिविषयत्वस्य भावात् । तत्र भट्टमतानुसारिभिर्भावनाप्राधान्योपगमात् प्राभाकरैश्च नियोगगोचरत्वप्रधानांगीकरणात् । तौ च भावनानियोगौ नासद्विषयौ प्रवर्तेते प्रतीयेते वा सर्वथाप्यसतोः प्रवृत्तौ प्रतीतौ वा शशविषाणादेरपि तदनुषक्तेः सद्रूपतां च तयोर्विधिनांतरीयकत्वसिद्धेः सिद्धं गुणभावेन विधिविषयत्वं वाक्यस्येति न प्रमाणतापरैर्विप्रतिपत्तिः येन कर्मकांडस्य पारमार्थिकता न भवेत् । प्रधानभावेन विधिविषयं वेदवाक्यं प्रमाणमिति चायुक्तं, विधेः सत्यत्वे द्वैतावतारात् । तदसत्यत्वे प्राधान्यायोगात् । तथाहि—यो योऽसत्यः स स न प्रधानभावमनुभवति यथा तद्विद्याविलासः तथा चासत्यो विधिरिति न प्रधानभावेन तद्विषयतोपपत्तिः । स्यान्मतं, न सम्यगवधारितं विधेः स्वरूपं भवता तस्यैवमव्यवस्थितत्वात् । प्रतिभासमात्राद्धि पृथग्विधिः कार्यतया न प्रतीयते घटादिवत् प्रेरकतया वा वचनादिवत् । कर्मकरणसाधनतया हि तत्प्रतीतौ कार्यताप्रेरकताप्रत्ययो युक्तो नान्यथा । किं तर्हि द्रष्टव्योऽरेऽयमात्मा श्रोतव्यो अनुमन्तव्यो निदिध्यासितव्य इत्यादि शब्दश्रवणादवस्थांतरविलक्षणेन प्रेरितोहमिति जाताकूतेनाकारेण स्वयमात्मैव प्रतिभाति, स एव विधिरित्युच्यते । तस्य ज्ञानविषयतया संबंधमधितिष्ठतीति प्रधानभावविभावनाविधिर्न विहन्यते, तथाविधवेदवाक्यादात्मन एव विधायकतया बुद्धौ प्रतिभासनात् । तद्दर्शनश्रवणाद्

मननिदिध्यासनरूपस्य विधीयमानतयानुभवात् । तथा च स्वयमात्मानं द्रष्टुं श्रोतुमनुमंतुं निध्यातुं वा प्रवर्तते, अन्यथा प्रवृत्त्यसंभवेप्यात्मनः प्रेरितोहमित्यत्र गतिरप्रमाणिका स्यात् । ततो नासत्यो विधिर्येन प्रधानता न विरुध्यते । नापि सत्यत्वे द्वैतसिद्धिः आत्मस्वरूपव्यतिरेकेण तदभावात्, तस्यैकस्यैव तथा प्रतिभासनात् इति । तदप्यसत्यं । नियोगादिवाक्यार्थस्य निश्चयात्मतया प्रतीयमानत्वात् । तथाहि—नियोगस्तावदग्निहोत्रादिवाक्यादिवत् द्रष्टव्यो रेऽयमात्मा इत्यादिवचनादपि प्रतीयते एव नियुक्तोहमनेन वाक्येनेति निरवशेषो योगो नियोगः प्रतिभाति मनागप्ययोगाशंकानवतारादवश्यकर्तव्यतासंप्रत्ययात् । कथमन्यथा तद्वाक्यश्रवणादस्य प्रवृत्तिरुपपद्यते, मेघध्वन्यादेरपि प्रवृत्तिप्रसंगात् । स्यादेतत् । मिथ्येयं प्रतीतिर्नियोगस्य विचार्यमाणस्य प्रवृत्तिहेतुत्वायोगात् । स हि प्रवर्तकस्वभावो वा स्यादतत्स्वभावो वा ? प्रथमकल्पनायां प्राभाकराणामिव ताथागतादीनामपि प्रवर्तकः स्यात् । सर्वथा प्रवर्तकत्वात् तेषां विपर्यासादप्रवर्तक इत्यपि न निश्चेतुं शक्यं परेषामपि विपर्यासात्प्रवर्तकत्वादनुषंगात् । प्राभाकरा हि विपर्यस्तमनसः शब्दनियोगात् प्रवर्तंते नेतरे सविपर्यस्तत्वादिति वदतो निवारयितुमशक्तेः सौगतादिमतस्य प्रमाणबाधितत्वात् त एव विपर्यस्ता न प्राभाकरा इत्यपि पक्षपातमात्रं तन्मतस्यापि प्रमाणबाधनाविशेषात् । यथैव हि प्रतिक्षणविनश्वरसकलार्थवचनं प्रत्यक्षादिविरुद्धं तथा नियोगाद्विषयादिभेदकल्पनमपि सर्वप्रमाणानां विधिविषयतयावधारणात् सदेकत्वस्यैव परमार्थतोपपत्तेः । यदि पुनरप्रवर्तकस्वभावः शब्दनियोगस्तदा सिद्ध एव तस्य प्रवृत्तिहेतुत्वायोगः फलरहिताद्वा नियोगमात्रान्न प्रेक्षावतां प्रवृत्तिरप्रेक्षावत्त्वप्रसंगात्, प्रयोजनमनुद्दिश्य न मंदोपि प्रवर्तत इति प्रसिद्धेश्च । प्रचंडपरिदृढवचननियोगादफलादपि प्रवर्तनदर्शनाददोष इति चेन्न, तन्निमित्तापायपरिरक्षणस्य फलत्वात् । तन्नियोगादप्रवर्तने हि ममानपायोवश्यं भावीति तन्निवारणाय प्रवर्तमानाना प्रेक्षावतामपि तत्त्वाविरोधात् । तर्हि वेदवचनादपि नियुक्तप्रत्यवायपरिहाराय प्रवर्ततां "नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया" इति वचनात् । कथमिदानीं स्वर्गकाम इति वचनमवतिष्ठते, जुहुयात् जुहोतु होतव्यमिति लिंङ्लोट्तव्यप्रत्ययांतनिर्देशादेव नियोगमात्रप्रतिपत्तेः, तत एव च प्रवृत्तिसंभवात् । फलसहितान्नियोगात् प्रवृत्तिफलसिद्धौ च फलार्थितैव प्रवर्तिका न नियोगस्तमंतरेणापि फलार्थिनां प्रवृत्तिदर्शनात् । पुरुषवचनान्नियोगे अयमुपालंभो नापौरुषेयाग्निहोत्रादिवाक्यनियोगे तस्यानुपालभ्यत्वात् । इति न युक्तं, "सर्वं खल्विदं ब्रह्म" इत्यादि वचनस्याप्यनुपालभ्यत्वसिद्धेर्वेदांतवादपरिनिष्ठानात् । तस्मान्न नियोगो वाक्यार्थः कस्यचित्प्रवृत्तिहेतुरिति । तदेतद्विधिवादिनोपि समानं विधेरपि प्रवृत्तिहेतुत्वायोगस्याविशेषात् । प्रकृतविकल्पानतिवृत्तेः । तस्यापि हि प्रवर्तकस्वभावत्वे वेदांतवादिनामिव प्राभाकरतथागतादीनामपि प्रवर्तकत्वप्रसक्तेरप्रवर्तकस्वभावात्तेषामपि न प्रवर्तको विधिः स्यात् । स्वयमविपर्यस्तास्ततः प्रवर्तंते न विपर्यस्ता इति चेत्, कुतः संविभागो विभाव्यतां । प्रमाणाबाधितेतरमताश्रयणादितिचेत्, तर्हि वेदांतवादिनः कथं न विपर्यस्ताः सर्वथा सर्वैकत्वमतस्याध्यक्षविरुद्धत्वात् परस्परनिरपेक्षद्रव्यगुणादिभेदाभेदमननवत् । तद्विपरीतस्यानेकांतस्य जात्यंतरस्य प्रतीतेः फलरहितश्च विधिर्न प्रवर्तको नियोगवत् । सफलः प्रवर्तक इतिचेत्, किंचिज्ज्ञानां फलार्थिनां फलाय दर्शनादेव प्रवृत्त्युपपत्तेः । पुरुषाद्वैते न कश्चित् कुतश्चित् प्रवर्तत इतिचेत्, सिद्धस्तर्हि विधिरप्रवर्तको नियोगवदिति न वाक्यार्थः । पुरुषाद्वैतवादिनामुपनिषद्वाक्यादात्मनि दर्शनश्रवणानुमनननिध्यानविधानेप्यप्रवर्तने कुतस्तेषां तदभ्यासः साफल्यमनुभवति मत्तोन्मत्तादिप्रलापवत्, कथं वा सर्वथाप्यप्रवर्तको विधिरेव वाक्यार्थो न पुनर्नियोगः पटादिवत् तदर्थान्तरत्वेनाप्रतिभासनात् । नियुज्यमानविषयनियोक्तृधर्मत्वेन चानवस्थानात् नियोगो वाक्यार्थ इति

चेत् तदितरत्र समानं, विधेरपि घटादिवत्पदार्थांतरत्वेनाप्रतिभासनाद्विधीयमानविषयविधायकधर्मत्वे व्यवस्थितेश्च । यथैव हि नियोज्यस्य पुंसो धर्मे नियोगे अननुष्ठेयता नियोगस्य सिद्धत्वादन्यथानुष्ठानोपरमाभावानुषंगात् कस्यचित्तद्रूपस्यासिद्धस्याभावाद्, असिद्धरूपतायां वा नियोज्यत्वं विरोधाद्वंध्यास्तनंधयादिवत् । सिद्धरूपेण नियोज्यत्वे असिद्धरूपेण वा नियोज्यतामेकस्य पुरुषस्यासिद्धासिद्धरूपसंकरान्नियोज्येतरत्वविभागासिद्धिस्तद्रूपासंकरे वा भेदप्रसंगादात्मनः सिद्धासिद्धरूपयोः संबंधाभावोनुपकारात् । उपकारकल्पनायामात्मनस्तदुपकार्यत्वे नित्यत्वहानिस्तयोरात्मोपकार्यत्वे सिद्धरूपस्य सर्वथोपकार्यत्वव्याघातोऽसिद्धरूपस्याप्युपकार्यत्वेन गगनकुसुमादेरुपकार्यत्वानुषंगः । सिद्धासिद्धरूपयोरपि कथंचित्सिद्धरूपोपगमे प्रकृतपर्यनुयोगानिवृत्तेरनवस्थानुषंग इत्युपालंभः । तथा विधीयमानस्य पुरुषस्य धर्मे विधावपि सिद्धस्य पुंसो दर्शनश्रवणानुमननिध्यानविधानविरोधात् । तद्विधाने वा सर्वदा तदनुपरतिप्रसक्तिः । दर्शनादिरूपेण तस्यासिद्धौ विधानव्याघातः कूर्मरोमादिवत् । सिद्धरूपेण विधीयमानस्य विधाने सिद्धरूपेण विधाने सिद्धासिद्धरूपेण वा विधाने सिद्धासिद्धरूपसंकरात् विधाप्येतरविभागासिद्धेस्तद्रूपासंकरे वा भेदप्रसंगादात्मनः सिद्धासिद्धरूपयोस्तत्संबंधाभावादिदोषासंजननस्याविशेषः । तथा विषयस्य यागलक्षणस्य धर्मे नियोगे तस्यापरिनिष्पन्नत्वात् स्वरूपाभावाद्वाक्येन प्रत्येतुमशक्यत्वस्य विधावपि विषयधर्मे समानत्वात् कुतो विषयधर्मे विधिः ? पुरुषस्यैव विषयतयावभासमानस्य विषयत्वात्तस्य वा परिनिष्पन्नत्वान्न तद्धर्मस्य विधेरसंभव इति चेत्, तर्हि यजनाश्रयस्य द्रव्यादेः सिद्धत्वात्तस्य विषयत्वात्कथं तद्धर्मो नियोगोपि न सिध्येत् ? येन रूपेण विषयो विद्यते तेन धर्मेण नियोगोपीति, तदनुष्ठानाभावे विधिविषयो येन रूपेण नास्ति तेन तद्धर्मस्य विधेः कथमनुष्ठानं ? येनात्मनास्ति तेनानुष्ठानमितिचेत् तन्नियोगेन समानं । कथमसन्नियोगोऽनुष्ठीयते अप्रतीयमानत्वात् खरविषाणवत् इति चेत्, तत एव विधिरपि नानुष्ठेयः । प्रतीयमानतया सिद्धत्वादनुष्ठेयो विधिरिति चेत्, नियोगोपि तथास्तु । नन्वनुष्ठेयतयैव नियोगोवतिष्ठते न प्रतीयमानतया तस्याः सकलवस्तुसाधारणत्वात् । अनुष्ठेयता चेत्प्रतिभाता कोन्यो नियोगो यस्यानुष्ठितेरितिचेत्, तर्हि विधिरपि न प्रतीयमानतया प्रतिष्ठामनुभवति किं तु विधीयमानतया । सा चेदनुभूता कोन्यो विधिर्नाम ? यस्य विधानमुपनिषद्वाक्यादुपवर्ण्यते । द्रष्टव्यादिवाक्येनात्मदर्शनादिविहितं ममेति प्रतीतेरप्रतिक्षेपार्हो विधिः कथमपाक्रियते ? किमिदानीमग्निहोत्रादिवाक्येन यागादिविषये नियुक्तोहमिति प्रतीतिर्न विद्यते, येन नियोगः प्रतिक्षिप्यते । सा प्रतीतिरप्रमाणमितिचेत्, विधिप्रतीतिः कथमप्रमाणं न स्यात् ? पुरुषदोषरहितवेदवचनोपजनितत्वादितिचेत्, तत एव नियोगप्रतीतिरप्यप्रमाणं मा भूत् सर्वथाप्यविशेषात् । तथापि नियोगस्य विषयधर्मस्यासंभवे विधेरपि धर्मस्य न संभवः । शब्दस्य विधायकस्य च धर्मो विधिरित्यपि न निश्चेतुं शक्यं, नियोगस्यापि नियोक्तृशब्दधर्मार्थप्रतिघाताभावानुपक्तेः । शब्दस्य सिद्धरूपस्याथ तद्धर्मो नियोगः कथमसिद्धो येनासौ संपाद्यते कस्यचिदित्यपि न मंतव्यं, विधिसंपादनविरोधात् तस्यापि सिद्धोपनिषद्वाक्यधर्मत्वाविशेषात् । प्रसिद्धस्यापि संपादने पुनः पुनस्तत्संपादने प्रवृत्त्यनुपरमात्कथमुपनिषद्वचनस्य प्रमाणता अपूर्वार्थताविरहात् स्मृतिवत् । तस्य वा प्रमाणत्वे नियोगवाक्यं प्रमाणमस्तु विशेषाभावात् । स्यान्मतं, नियोगस्य सर्वपक्षेषु विचार्यमाणस्यायोगात्तद्वचनमप्रमाणं । तेषां हि न तावत्कार्यं शुद्धं नियोगः प्रेरणा नियोज्यवर्जितस्य नियोगस्यासंभवात् । तस्मिन् नियोगसंज्ञाकरणे स्वकंबलस्य कुर्वालिकेति नामांतरकरणमात्रं स्यात् । न च तावता स्वेष्टसिद्धिः । शुद्धा प्रेरणा नियोग इत्यप्यनेनापास्तं, नियोज्यफलरहितायाः प्रेरणायाः प्रलापमात्रत्वात् । प्रेरणासहितं

कार्यं नियोग इत्यप्यसंभवि, नियोगाद्यसंभवे तद्विरोधात् । कार्यसहिता प्रेरणा नियोग इत्यप्यनेन निरस्तं । कार्यस्यैवोपचारतः प्रवर्तकत्वं नियोग इत्यप्यसारं; नियोज्यादिनिरपेक्षस्य कार्यस्य प्रवर्तकत्वोपचारायोगात्, कदाचित्क्वचित्परमार्थतस्तस्य तथानुपलंभात् । कार्यप्रेरणयोः संबंधो नियोग इति वचनमसंगतं, ततो भिन्नस्य संबंधस्य संबंधिनिरपेक्षस्य नियोगत्वेनाघटनात् । संबंधात्मनः संबंधस्य नियोगत्वमित्यपि दुरन्वयं, प्रेर्यमाणपुरुषनिरपेक्षयोः संबंधात्मनोरपि कार्यप्रेरणयोः नियोगत्वानुपपत्तेः । समुदायनियोगवादोप्यनेन प्रत्याख्यातः । कार्यप्रेरणास्वभावनिर्मुक्तस्तु नियोगो न विधिवादमतिशेते । यत्पुनः स्वर्गकामः पुरुषोग्निहोत्रादिवाक्यनियोगे सति यागलक्षणं विषयमारूढमात्मानं मन्यमानः प्रवर्तत इति यंत्रारूढनियोगवचनं तदपि न परमात्मवादे प्रतिकूलं, पुरुषाभिमानमात्रस्य नियोगत्ववचनात् तस्य चाविद्योदयनिबंधनत्वात् । भोग्यरूपो नियोग इति चायुक्तं, नियोक्तृप्रेरणाशून्यस्य भोग्यस्य तद्भावानुपपत्तेः । पुरुषस्वभावोपि न नियोगो घटते, तस्य शाश्वतिकत्वेन नियोगस्य शाश्वतिकत्वप्रसंगात् । पुरुषमात्रविधेरेव तथा विधाने वेदांतवादिपरिसमाप्तेः । कुतो नियोगवादो नामेति? तदेतदसारं, सर्वथा विधेरपि वाक्यार्थानुपपत्तेः । सोपि हि शब्दादेर्द्रष्टव्यतादिव्यवच्छेदेन रहितो यदीष्यते तदा न कदाचित्प्रवृत्तिहेतुः, प्रतिनियतविषयविधिनांतरीयकत्वात् प्रेक्षावत्प्रवृत्तेः तस्य वा तद्विषयपरिहाराविनाभावित्वात् कटः कर्तव्य इति यथा । न हि कटकर्तव्यताविधिरतद्व्यवच्छेदमंतरेण व्यवहारमार्ग्यमवतारयितुं शक्यः । परपरिहारसहितो विधिः शब्दार्थ इति चेत्, तर्हि विधिप्रतिषेधात्मकः शब्दार्थ इति कुतो विध्येकांतवादप्रतिष्ठा प्रतिषेधैकांतवादवत् । स्यान्मतं, परपरिहारस्य गुणीभूताद्विधेरेव प्रवृत्त्यंगत्वे प्राधान्याद्विधिः शब्दार्थ इति । कथमिदानीं शुद्धकार्यादिरूपनियोगव्यवस्थितिर्न स्यात्? कार्यस्यैव शुद्धस्य प्रवृत्त्यंगतया प्रधानत्वोपपत्तेः, नियोज्यादेः सतोपि गुणीभावात् । तद्वत्प्रेरणादिस्वभावनियोगवादिनां प्रेरणादौ प्रधानताभिप्रायात् । तदितरस्य सतोपि गुणीभावाध्यवसायादुक्तो नियोगः शब्दार्थः । शुद्धकार्यप्रेरणादिषु स्वाभिप्रायात् कस्यचित्प्रधानभावेपि पराभिप्रायात्प्रधानत्वाभावादन्यतरस्यापि स्वभावस्याव्यवस्थितेर्नैकस्यापि शब्दार्थत्वमिति चेत्, तर्हि पुरुषाद्वैतवाद्याशयवशाद्विधेः प्रधानत्वेपि तथागतमताश्रयणादप्रधानताघटनात् सोपि न प्रतिष्ठामटाट्येत विप्रतिपत्तिसद्भावाविशेषात् । प्रमाणरूपश्च यदि विधिः तदा प्रमेयमन्यद्वाच्यं । तत्स्वरूपमेव प्रमेयमितिचेत्, कथमस्यार्थद्वयरूपता न विरुध्यते? कल्पनयेतिचेत्, तर्ह्यन्यापोहः शब्दार्थः कथं प्रतिषिध्यते? प्रमाणत्वव्यावृत्त्या विधेः प्रमाणत्ववचनादप्रमेयव्यावृत्त्या च प्रमेयत्वपरिकल्पनात् । पदार्थस्वरूपविधायकत्वमंतरेणान्यापोहमात्रविधायकस्य शब्दस्य क्वचित्प्रवर्तकत्वायोगादन्यापोहो न शब्दार्थ इतिचेत्, तर्हि पदार्थस्वरूपविधायकस्यापि शब्दस्यान्यापोहानभिधायिनः कथमन्यपरिहारेण क्वचित्प्रवृत्तिनिमित्तत्वसिद्धिः येन विधिमात्रं शब्दार्थः स्यात् । परमपुरुष एव विधिः स एव च प्रमाणं प्रमेयं चाविद्यावशादाभासते प्रतिभासमात्रव्यतिरेकेण व्यावृत्त्यादेरप्यसंभवादित्यपि दत्तोत्तरं, प्रतिभासव्यतिरिक्तस्य प्रतिभास्यस्यार्थस्य व्यवस्थापितत्वात् । प्रमेयरूपो विधिरिति वचनमयुक्तं, प्रमाणाभावे प्रमेयरूपत्वायोगात्तस्यैव च द्वयरूपत्वविरोधात् । कल्पनावशाद्विधेर्द्वयरूपत्वे अन्यापोहवादानुषंगस्याविशेषात् । प्रमाणप्रमेयोभयरूपो विधिरित्यप्यनेन निरस्तं भवतु । अनुभयरूपोऽसाविति चेत्, खरशृंगादिवदवस्तुतापत्तिः कथमिव तस्य निवार्यतां? तथा यंत्रारूढो वाक्यार्थ इत्येकांतोपि विपर्यय एवान्यापोहमंतरेण तस्य प्रवर्तकत्वायोगाद्विधिवचनवत् । एतेन भोग्यमेव पुरुष एव वाक्यार्थ इत्यप्येकान्तो निरस्तः, योगविशेषतया च यंत्रारूढादेः प्रतिविहितत्वात् । न पुनस्तत्प्रतिविधानेतितरामादरोस्माकमित्युपरम्यते । तथान्यापोह एव

शब्दार्थ इत्येकांतो विपर्ययः स्वरूपविधिमंतरेणान्यापोहस्यासंभवात् । वक्त्रभिप्रायारूढस्यार्थस्य विधिरेवान्यापोह इत्यं इति चेत्, तथैव बहिरर्थस्य विधिरस्तु विशेषाभावात् । तेन शब्दस्य संबंधाभावान्न शब्दात्तद्विधिरिति चेत्, तत एव वक्त्रभिप्रेतस्याप्यर्थस्य विधिर्मा भूत् । तेन सह कार्यकारणभावस्य संबंधस्य सद्भावाच्छब्दस्य तद्विधायित्वमिति चेन्न, विवक्षामंतरेणापि सुप्ताद्यवस्थायां शब्दस्य प्रवृत्तिदर्शनात्कार्यत्वाव्यवस्थानात् । प्रतिक्षिप्तश्चान्यापोहैकांतः पुरस्तादिति तर्कितं । नियोगो भावना धात्वर्थो विधिर्यंत्रारूढादिरन्यापोहो वा यदा कैश्चिदेकांतेन विषयो वाक्यस्यानुमन्यते तदा तज्जनितं वेदनं श्रुताभासं प्रतिपत्तव्यं, तथा वाक्यार्थनिर्णीतेर्विधातुं दुःशकत्वादिति ॥

कः पुनरवधिविपर्यय इत्याह;—

**भवं प्रतीत्य यो जातो गुणं वा प्राणिनामिह । देशावधिः स विज्ञेयो दृष्टिमोहाद्विपर्ययः॥ ११३ ॥**

**सत्संयमविशेषोत्थो न जातु परमावधिः । सर्वावधिरपि व्यस्तो मनःपर्ययबोधवत् ॥ ११४ ॥**

परमावधिः सर्वावधिश्च न कदाचिद्विपर्ययः सत्संयमविशेषोत्थत्वात् मनःपर्ययवदिति । देशावधिरेव कस्यचिन्मिथ्यादर्शनाविर्भावे विपर्ययः प्रतिपाद्यते । किं पुनः कर्तुं प्रमाणात्मकसम्यग्ज्ञानविधौ प्रकृते विपर्ययं ज्ञानमनेकधा मत्यादि प्ररूपितं सूत्रकारैरित्याह;—

**इति प्रमाणात्मविबोधसंविधौ विपर्ययज्ञानमनेकधोदितम् ।**
**विपक्षविक्षेपमुखेन निर्णयः सुबोधरूपेण विधातुमुद्यतः ॥ ११५ ॥**

पूर्वं सम्यगवबोधस्वरूपावधिरूपमुखेन निर्णयं विधाय विपक्षविक्षेपमुखेनापि तं विधातुमुद्यतैरनेकधा विपर्ययज्ञानमुदितं वादिनोभयं कर्तव्यं स्वपरपक्षसाधनदूषणमिति न्यायानुसरणात्, स्वविधिसामर्थ्यात् प्रतिषेधस्य सिद्धेस्तत्सामर्थ्याद्वा स्वपक्षविधिसिद्धेर्नोभयवचनमर्थवदिति प्रवादस्यावस्थापितुमशक्तेः, सर्वत्र सामर्थ्यसिद्धस्यावचनप्रसंगात् । स्वेष्टव्याघातस्यानुषंगात् । क्वचित्सामर्थ्यसिद्धस्यापि वचने स्याद्वादन्यायस्यैव सिद्धेः सर्वं शुद्धम् ॥

इति तत्त्वार्थश्लोकवार्तिकालंकारे प्रथमस्याध्यायस्य चतुर्थमाह्निकम् ॥

---

## नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः ॥ ३३ ॥

किं कृत्वाधुना किं च कर्तुमिदं सूत्रं ब्रवीतीत्याह;—

**निर्देश्याधिगमोपायं प्रमाणमधुना नयान् । नयैरधिगमेत्यादि प्राह संक्षेपतोखिलान् ॥ १ ॥**

प्रमाणनयैरधिगम इत्यनेन प्रमाणं नयाश्चाधिगमोपाया इत्युद्दिष्टं । तत्र प्रमाणं तत्त्वार्थाधिगमोपायं प्रपंचतो निर्देश्याधुना नयांस्तदधिगमोपायानखिलान् संक्षेपतोन्यथा च व्याख्यातुमिदं प्राह भगवान् । कथं? नयसामान्यस्य तल्लक्षणस्यैव संक्षेपतो विभागस्य विशेषलक्षणस्य च विस्तरतो नयविभागस्य अतिविस्तरतो नयप्रपंचस्य चात्र प्रतिपादनात् सर्वथा नयप्ररूपणस्य सूत्रितत्वादिति ब्रूमहे ॥

तत्र सामान्यतो नयसंख्यां लक्षणं च निरूपयन्नाह;—

**सामान्यादेशतस्तावदेक एव नयः स्थितः । स्याद्वादप्रविभक्तार्थविशेषव्यंजनात्मकः ॥ २ ॥**

सामान्यादेशात्तावदेक एव नयः स्थितः सामान्यस्यानेकत्वविरोधात् । स च स्याद्वादप्रविभक्तार्थविशेषव्यंजको नय इति वचनात् । ननु चेदं हेतुलक्षणवचनमिति केचित् । तदयुक्तं । हेतोः स्याद्वादेन प्रविभक्तस्यार्थस्य सकलस्य विशेषं व्यंजयितुमसमर्थत्वात्तन्यत्रोपचारात् । हेतुजनितस्य बोधस्य व्यंजकः

प्रधानभावत एव युक्तः । स च नय एव स्वार्थैकदेशव्यवसायात्मकत्वादित्युक्तं । नन्वेवं दृष्टेष्टविरुद्धेनापि रूपेण तस्य व्यंजको नयः स्यादिति न शंकनीयं, "सधर्मणैव शाब्दस्य साधर्म्यादविरोधतः" इति वचनात् ॥ समानो हि धर्मो यस्य दृष्टांतस्य तेन साधर्म्यं साध्यस्य धर्मिणो मनागपि वैधर्म्याभावात् । तेनौपम्यविरोधेनैव व्यंजक इति निश्चीयते दृष्टांतसाधर्म्याददृष्टांतोत्सरणादित्यनेन दृष्टविरोधस्य निवर्तनात् । ननु कथंचिदपि दृष्टांतवैधर्म्याद् दृष्टवैपरीत्यादित्यनेनेष्टविरोधस्य परिहरणात् दृष्टविपरीतस्य सर्वथानिष्टत्वात् स्वयमुदाहृतश्चैवं लक्षणो नयः स्वामिसमंतभद्राचार्यैः । "सदेव सर्वं को नेच्छेत्स्वरूपादिचतुष्टयात्" इति सर्वस्य वस्तुनः स्याद्वादप्रविभक्तस्य विशेषः सत्त्वं तस्य व्यंजको बोधः स्वरूपादिचतुष्टयाद् दृष्टसाधर्म्यस्य स्वरूपादिचतुष्टयात् सन्निश्चितं न पररूपादिचतुष्टयेन तद्वत्सर्वं विवादापन्नं सत् को नेच्छेत् ? कस्मात्र विप्रतिपत्तिरिति व्याख्यानात् ॥

संक्षेपतो नयविभागमामर्शयति;—

**संक्षेपाद्द्वौ विशेषेण द्रव्यपर्यायगोचरौ । द्रव्यार्थो व्यवहारांतः पर्यायार्थस्ततोपरः ॥ ३ ॥**

विशेषतः संक्षेपाद् द्वौ नयौ द्रव्यार्थः पर्यायार्थश्च । द्रव्यविषयो द्रव्यार्थः पर्यायविषयः पर्यायार्थः प्रथमो नैगमसंग्रहव्यवहारविकल्पः । ततोपरश्चतुर्धा ऋजुसूत्रशब्दसमभिरूढैवंभूतविकल्पात् ॥

**विस्तरेणेति सप्तैते विज्ञेया नैगमादयः । तथातिविस्तरेणैतद्भेदाः संख्यातविग्रहाः ॥ ४ ॥**

कुत एवमतः सूत्राल्लक्ष्यत इत्याह;—

**नयो नयौ नयाश्चेति वाक्यभेदेन योजिताः । नैगमादय इत्येवं सर्वसंख्याभिसूचनात् ॥ ५ ॥**

नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः इत्यत्र नय इत्येकं वाक्यं, ते नयौ द्रव्यार्थिकपर्यायार्थिकौ इति द्वितीयमेते नयाः सप्तेति तृतीयं, पुनरपि ते नयाः संख्याता शब्दत इति चतुर्थं । संक्षेपपराणां वाक्प्रवृत्तौ यौगपद्याश्रयणात् । नयश्च नयौ च नयाश्च नया इत्येकशेषस्य स्वाभाविकस्याभिधाने दर्शनात् । केषांचित्तथा वचनोपलंभाच्च न विरुध्यते । अत्र वाक्यभेदौ नैगमादिरेकस्य द्वयोश्च सामानाधिकरण्याविरोधाच्च गृहा ग्रामः देवमनुष्या उभौ राशी इति यथा । नन्वेवमेकत्वद्वित्वादिसंख्यागतावपि कथं नयस्य सामान्यलक्षणं द्विधा विभक्तस्य तद्विशेषणं विज्ञायत इत्याशंकायामाह;—

**नयानां लक्षणं लक्ष्यं तत्सामान्यविशेषतः । नीयते गम्यते येन श्रुतार्थांशो नयो हि सः ॥६॥**
**तदंशौ द्रव्यपर्यायलक्षणौ साध्यपक्षिणौ । नीयेते तु यकाभ्यां तौ नयाविति विनिश्चितौ ॥७॥**

नीयतेऽनेनेति नय इत्युक्ते तस्य विषयः सामर्थ्यादाक्षिप्यते । स च श्रुताख्यप्रमाणविषयीकृतस्यांश इति तदपेक्षा निरुक्तिर्नयसामान्यलक्षणे लक्षयति, तथा नीयेते यकाभ्यां तौ नयाविस्युक्ते तु द्रव्यार्थिकपर्यायार्थिकौ नयौ द्वौ तौ च द्रव्यपर्यायाविति तदपेक्षं निर्वचनं नयविशेषद्वयलक्षणं प्रकाशयति ।

ननु च गुणविषयो गुणार्थिकोपि तृतीयो वक्तव्य इत्यत्राह;—

**गुणः पर्याय एवात्र सहभावी विभावितः । इति तद्गोचरो नान्यस्तृतीयोस्ति गुणार्थिकः ॥८॥**

पर्यायो हि द्विविधः, क्रमभावी सहभावी च । द्रव्यमपि द्विविधं शुद्धमशुद्धं च । तत्र संक्षेपशुद्धवचने द्वित्वमेव युज्यते, पर्यायशब्देन पर्यायसामान्यस्य स्वव्यक्तिव्यापिनोभिधानात् । द्रव्यशब्देन च द्रव्यसामान्यस्य स्वशक्तिव्यापिनः कथनात् । ततो न गुणः सहभावी पर्यायस्तृतीयः शुद्धद्रव्यवत् । संक्षेपाविवक्षायां तु विशेषवचनस्य चत्वारो नयाः स्युः, पर्यायविशेषगुणं च द्रव्यविशेषशुद्धद्रव्यस्य पृथगुपादानप्रसंगात् । ननु च द्रव्यपर्यायद्वयोस्तदंशास्तृतीयोस्ति तद्विषयतृतीयो मूलनयोस्तीति चेत् न,

तत्परिकल्पनेऽनवस्थाप्रसंगात् द्रव्यपर्यायसद्भूतामपि तद्भेदांतरपरिकल्पनानुषक्तेर्दुर्निवारत्वात् । यदि तु यथा तंतवोऽवयवास्तद्वानवयवी पटस्तयोरपि तंतुपटयोर्नान्योस्ति तद्वांस्तस्याप्रतीयमानत्वात् । तथा पर्यायाः सन्भावास्तद्वद् द्रव्यं तयोरपि नान्यस्तद्वानस्ति प्रतीतिविरोधादिति मतिस्तदा प्रधानभावेन स्वपर्यायात्मकवस्तुप्रमाणविषयस्तवोपोद्धृतं । द्रव्यमात्रं द्रव्यार्थिकविषयः पर्यायमात्रं पर्यायार्थिकविषय इति न तृतीयो नयविशेषोस्ति यतो मूलनयस्तृतीयः स्यात् । तदेवम्—

प्रमाणगोचरार्थांशा नीयंते यैरनेकधा । ते नया इति व्याख्याता जाता मूलनयद्वयात् ॥ ९ ॥
द्रव्यपर्यायसामान्यविशेषपरिबोधिकाः । न मूलं नैगमादीनां नयाश्चत्वार एव तत् ॥ १० ॥
सामान्यस्य पृथक्त्वेन द्रव्यादनुपपत्तितः । सादृश्यपरिणामस्य तथा व्यंजनपर्ययात् ॥ ११ ॥
वैसदृश्यविवर्तस्य विशेषस्य च पर्यये । अंतर्भावाद्विभाव्येत द्वौ तन्मूलं नयाविति ॥ १२ ॥
नामादयोपि चत्वारस्तन्मूलं नेत्यतो गतं । द्रव्यक्षेत्रादयश्चैषां द्रव्यपर्यायगत्वतः ॥ १३ ॥
भावान्विता न पंचैते स्कंधा वा परिकीर्तिताः । रूपादयो त एवेह तेपि हि द्रव्यपर्ययौ ॥ १४
तथा द्रव्यगुणादीनां षोढात्वं न व्यवस्थितं । षट् स्युर्मूलनया येन द्रव्यपर्यायग्राहिते ॥ १५ ॥
ये प्रमाणादयो भावा प्रधानादय एव वा । ते नैगमादिभेदानामर्था नापरनीतयः ॥ १६ ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितंडाहेत्वाभासच्छलजातिनिग्रहस्थानाख्याः षोडश पदार्थाः कैश्चिदुपदिष्टाः, तेपि द्रव्यगुणकर्मसामान्यविशेषसमवायेभ्यो न जात्यंतरत्वं प्रतिपद्यंते, गुणादयश्च पर्यायान्नार्थांतरमित्युक्तप्रायं । ततो द्रव्यपर्यायावेव तैरिष्टौ स्यातां, तयोरेव तेषामंतर्भावान्नामादिवत् । येप्याहुः । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" इति पंचविंशतिस्तत्त्वानीति । तैरपि द्रव्यपर्यायावेवांगीकरणीयौ मूलप्रकृतेः पुरुषस्य च द्रव्यत्वात्, महदादीनां परिणामत्वेन पर्यायत्वात् रूपादिस्कंधसंतानक्षणवत् । ततो नैगमादिभेदानामेवार्थास्ते न पुनरपरानीतयः । अपरानीतिर्येषु त एव ह्यपरानीतयः इति गम्यते, न चैतेषु द्रव्यार्थिकपर्यायार्थिकाभ्यां नैगमादिभेदाभ्यां अपरानीतिः प्रवर्तत इति तावेव मूलनयौ, नैगमादीनां तत एव जातत्वात् ॥

तत्र नैगमं व्याचष्टे;—

तत्र संकल्पमात्रस्य ग्राहको नैगमो नयः । सोपाधिरित्यशुद्धस्य द्रव्यार्थस्याभिधानतः ॥ १७ ॥
संकल्पो निगमस्तत्र भवोयं तत्प्रयोजनः । तथा प्रस्थादिसंकल्पः तदभिप्राय इष्यते ॥ १८ ॥
नन्वयं भाविनीं संज्ञां समाश्रित्योपचर्यते । अप्रस्थादिषु तद्भावस्तंडुलेष्वोदनादिवत् ॥ १९ ॥
इत्यसद्बहिरर्थेषु तथानध्यवसानतः । स्ववेद्यमानसंकल्पे सत्येवास्य प्रवृत्तितः ॥ २० ॥
यद्वा नैकं गमो योत्र स सतां नैगमो मतः । धर्मयोर्धर्मिणो वापि विवक्षा धर्मधर्मिणोः ॥ २१ ॥
प्रमाणात्मक एवायमुभयग्राहकत्वतः । इत्ययुक्तं इह ज्ञप्तेः प्रधानगुणभावतः ॥ २२ ॥
प्राधान्येनोभयात्मानमर्थं गृह्णद्धि वेदनम् । प्रमाणं नान्यदित्येतत्प्रपंचेन निवेदितम् ॥ २३ ॥
संग्रहे व्यवहारे वा नांतर्भावः समीक्ष्यते । नैगमस्य तयोरेकवस्त्वंशप्रवणत्वतः ॥ २४ ॥
नर्जुसूत्रादिषु प्रोक्तहेतवो वेति षण्नयाः । संग्रहादय एवेह न वाच्याः प्रपरीक्षकैः ॥ २५ ॥
सप्तैते नियतं युक्ता नैगमस्य नयत्वतः । तस्य त्रिभेदव्याख्यानात् कैश्चिदुक्ता नया नव २६
तत्र पर्यायगस्त्रेधा नैगमो द्रव्यगो द्विधा । द्रव्यपर्यायगः प्रोक्तश्चतुर्भेदो ध्रुवं ध्रुवैः ॥ २७ ॥

अर्थपर्याययोस्तावद्गुणमुख्यस्वभावतः । कचिद्वस्तुन्यभिप्रायः प्रतिपत्तुः प्रजायते ॥ २८ ॥
यथा प्रतिक्षणं ध्वंसि सुखसंविच्छरीरिणः । इति सत्तार्थपर्यायो विशेषणतया गुणः ॥ २९ ॥
संवेदनार्थपर्यायो विशेष्यत्वेन मुख्यताम् । प्रतिगच्छन्नभिप्रेतो नान्यथैवं वचोगतिः ॥ ३० ॥
सर्वथा सुखसंविस्योर्नानात्वेभिमतिः पुनः । स्वाश्रया चार्थपर्यायनैगमाभो प्रतीतितः ॥ ३१ ॥
कश्चिद्व्यंजनपर्यायो विषयीकुरुतेंजसा । गुणप्रधानभावेन धर्मिण्येकत्र नैगमः ॥ ३२ ॥
सच्चैतन्यं नरीत्येवं सत्त्वस्य गुणभावतः । प्रधानभावतश्चापि चैतन्यस्याभिसिद्धितः ॥ ३३ ॥
तयोरत्यंतभेदोक्तिरन्योन्यं स्वाश्रयादपि । ज्ञेयो व्यंजनपर्यायनैगमाभो विरोधतः ॥ ३४ ॥
अर्थव्यंजनपर्यायौ गोचरीकुरुते परः । धार्मिके सुखजीवित्वमित्येवमनुरोधतः ॥ ३५ ॥
भिन्ने तु सुखजीवित्वे योभिमन्येत सर्वथा । सोर्थव्यंजनपर्यायनैगमाभास एव नः ॥ ३६ ॥
शुद्धद्रव्यमशुद्धं च तथाभिप्रैति यो नयः । स तु नैगम एवेह संग्रहव्यवहारजः ॥ ३७ ॥
सद्द्रव्यं सकलं वस्तु तथान्वयविनिश्चयात् । इत्येवमवगंतव्यस्तद्भेदोक्तिस्तु दुर्नयः ॥ ३८ ॥
यस्तु पर्यायवद्द्रव्यं गुणवद्वेति निर्णयः । व्यवहारनयाज्जातः सोऽशुद्धद्रव्यनैगमः ॥ ३९ ॥
तद्भेदैकांतवादस्तु तदाभासोनुमन्यते । तथोक्तेर्बहिरंतश्च प्रत्यक्षादिविरोधतः ॥ ४० ॥
शुद्धद्रव्यार्थपर्यायनैगमोस्ति परो यथा । सत्सुखं क्षणिकं शुद्धं संसारेस्मिन्नितीरणम् ॥ ४१ ॥
सत्त्वं सुखार्थपर्यायाद्भिन्नमेवेति संमतिः । दुर्नीतिः स्यात्सबाधत्वादिति नीतिविदो विदुः ॥ ४२
क्षणमेकं सुखी जीवो विषयीति विनिश्चयः । विनिर्दिष्टोर्थपर्यायाशुद्धद्रव्यगनैगमः ॥ ४३ ॥
सुखजीवभिदोक्तिस्तु सर्वथा मानबाधिता । दुर्नीतिरेव बोद्धव्या शुद्धबोधैरसंशयात् ॥ ४४ ॥
गोचरीकुरुते शुद्धद्रव्यव्यंजनपर्ययौ । नैगमोन्यो यथा सच्चित्सामान्यमिति निर्णयः ॥ ४५ ॥
विद्यते चापरोशुद्धद्रव्यव्यंजनपर्ययौ । अर्थीकरोति यः सोत्र नागुणीति निगद्यते ॥ ४६ ॥
भिदाभिदाभिरत्यंतं प्रतीतेरपलापतः । पूर्ववन्नैगमाभासौ प्रत्येतव्यौ तयोरपि ॥ ४७ ॥
नवधा नैगमस्यैवं ख्यातेः पंचदशोदिताः । नयाः प्रतीतिमारूढाः संग्रहादिनयैः सह ॥ ४८ ॥

त्रिविधस्तावन्नैगमः । पर्यायनैगमः, द्रव्यनैगमः, द्रव्यपर्यायनैगमश्चेति । तत्र प्रथमस्त्रेधा । अर्थपर्यायनैगमो व्यंजनपर्यायनैगमोऽर्थव्यंजनपर्यायनैगमश्च इति । द्वितीयो द्विधा । शुद्धद्रव्यनैगमः, अशुद्धद्रव्यनैगमश्चेति । तृतीयश्चतुर्धा । शुद्धद्रव्यार्थपर्यायनैगमः, शुद्धद्रव्यव्यंजनपर्यायनैगमः, अशुद्धद्रव्यार्थपर्यायनैगमः अशुद्धद्रव्यव्यंजनपर्यायनैगमश्चेति नवधा नैगमः साभास उदाहृतः परीक्षणीयः । संग्रहादयस्तु वक्ष्यमाणा षडिति सर्वे पंचदश नयाः समासतः प्रतिपत्तव्याः ॥

तत्र संग्रहनयं व्याचष्टे;—

एकत्वेन विशेषाणां ग्रहणं संग्रहो नयः । सजातेरविरोधेन दृष्टेष्टाभ्यां कथंचन ॥ ४९ ॥
समेकीभावसम्यक्त्वे वर्तमानो हि गृह्यते । निरुक्त्या लक्षणं तस्य तथा सति विभाव्यते ॥ ५०
शुद्धद्रव्यमभिप्रैति सन्मात्रं संग्रहः परः । स चाशेषविशेषेषु सदौदासीन्यभागिह ॥ ५१ ॥
निराकृतविशेषस्तु सत्ताद्वैतपरायणः । तदाभासः समाख्यातः सद्भिर्दृष्टेष्टबाधनात् ॥ ५२ ॥
अभिन्नं व्यक्तिभेदेभ्यः सर्वथा बहुधानकं । महासामान्यमित्युक्तिः केषांचिद्दुर्नयस्तथा ॥ ५३ ॥
शब्दब्रह्मेति चान्येषां पुरुषाद्वैतमित्यपि । संवेदनाद्वयं चेति प्रायशोन्यत्र दर्शितम् ॥ ५४ ॥
द्रव्यत्वं सकलद्रव्यव्याप्यभिप्रैति चापरः । पर्यायत्वं च निःशेषपर्यायव्यापिसंग्रहः ॥ ५५ ॥

**तथैवावांतरान् भेदान् संगृह्यैकत्वतो बहुः । वर्ततेयं नयः सम्यक् प्रतिपक्षानिराकृतेः ॥५६॥**
**स्वव्यक्त्यात्मकतैकांतस्तदाभासोप्यनेकधा । प्रतीतिबाधितो बोध्यो निःशेषोप्यनया दिशा ५७**

द्रव्यत्वं द्रव्यात्मकमेव ततोर्थांतरभूतानां द्रव्याणामभावादित्यपरसंग्रहाभासः, प्रतीतिविरोधात् । तथा पर्यायत्वं पर्यायात्मकमेव ततोर्थांतरभूतपर्यायासत्त्वादिति तत्त्वं तत एव । तथा जीवत्वं जीवात्मकमेव, पुद्गलत्वं पुद्गलात्मकमेव, धर्मत्वं धर्मात्मकमेव, अधर्मत्वं अधर्मात्मकमेव, आकाशत्वं आकाशात्मकमेव, कालत्वं कालात्मकमेवेति चापरसंग्रहाभासाः । जीवत्वादिसामान्यानां स्वव्यक्तिभ्यो भेदेन कथंचित्प्रतीतेरन्यथा तदन्यतरलोपे सर्वलोपानुषंगात् । तथा क्रमभाविपर्यायत्वं क्रमभाविपर्यायविशेषात्मकमेव, सहभाविगुणत्वं तद्विशेषात्मकमेवेति चापरसंग्रहाभासौ प्रतीतिप्रतिघातादेव । एवमपरापरद्रव्यपर्यायभेदसामान्यानि स्वव्यक्त्यात्मकान्येवेत्यभिप्रायाः सर्वेप्यपरसंग्रहाभासाः प्रमाणबाधितत्वादेव बोद्धव्याः, प्रतीत्यविरुद्धस्यैवापरसंग्रहप्रपंचस्यावस्थितत्वात् ॥

व्यवहारनयं प्ररूपयति;—

**संग्रहेण गृहीतानामर्थानां विधिपूर्वकः । योवहारो विभागः स्याद्व्यवहारो नयः स्मृतः ॥५८॥**
**स चानेकप्रकारः स्यादुत्तरः परसंग्रहात् । यत्सत्तद्द्रव्यपर्यायाविति प्रागृजुसूत्रतः ॥ ५९ ॥**
**कल्पनारोपितद्रव्यपर्यायप्रविभागभाक् । प्रमाणबाधितोन्यस्तु तदाभासोऽवसीयताम् ॥६०॥**

परसंग्रहस्तावत्सर्वं सदिति संगृह्णाति, व्यवहारस्तु तद्विभागमभिप्रैति यत्सत्तद्द्रव्यं पर्याय इति । यथैवापरसंग्रहः सर्वद्रव्याणि द्रव्यमिति संगृह्णाति सर्वपर्यायाः पर्याय इति । व्यवहारस्तद्विभजते यद्द्रव्यं तज्जीवादिषड्विधं, यः पर्यायः स द्विविधः क्रमभावी सहभावी चेति । पुनरपि संग्रहः सर्वान् जीवादीन् संगृह्णाति जीवः पुद्गलो धर्मोऽधर्मः आकाशं काल इति, क्रमभुवश्च पर्यायान् क्रमभाविपर्याय इति, सहभाविपर्यायांस्तु सहभाविपर्याय इति । व्यवहारस्तु तद्विभागमभिप्रैति यो जीवः स मुक्तः संसारी च, यः पुद्गलः सोणुः स्कंधश्च, यो धर्मास्तिकायः स जीवगतिहेतुः पुद्गलगतिहेतुश्च, यस्त्वधर्मास्तिकायः स जीवस्थितिहेतुरजीवस्थितिहेतुश्च पर्यायतो द्रव्यतस्तस्यैकत्वात् । तथा यदाकाशं तल्लोकाकाशमलोकाकाशं च, यः कालः स मुख्यो व्यावहारिकश्चेति, यः क्रमभावी पर्यायः स क्रियारूपोऽक्रियारूपश्च, विशेषः यः सहभावी पर्यायः स गुणः, सदृशपरिणामश्च सामान्यमिति अपरापरसंग्रहव्यवहारप्रपंचः प्रागृजुसूत्रात्परसंग्रहादुत्तरः प्रतिपत्तव्यः, सर्वस्य वस्तुनः कथंचित्सामान्यविशेषात्मकत्वात् । न चैवं व्यवहारस्य नैगमत्वप्रसक्तिः संग्रहविषयप्रविभागपरत्वात् सर्वत्र नैगमस्य तु गुणप्रधानोभयविषयत्वात् । यः पुनः कल्पनारोपितद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः, प्रमाणबाधितत्वात् । तथाहि—न कल्पनारोपित एव द्रव्यपर्यायप्रविभागः स्वार्थक्रियाहेतुत्वादन्यथा तदनुपपत्तेः। वंध्यापुत्रादिवत् व्यवहारस्य मिथ्यात्वे तदानुकूल्येन प्रमाणानां प्रमाणता च न स्यात्, स्वप्नादिविभ्रमानुकूल्येनापि तेषां प्रमाणत्वप्रसंगात् । तदुक्तं । "व्यवहारानुकूल्येन प्रमाणानां प्रमाणता । नान्यथा बाध्यमानानां तेषां च तत्प्रसंगतः ॥" इति ॥

सांप्रतमृजुसूत्रनयं सूत्रयति;—

**ऋजुसूत्रं क्षणध्वंसि वस्तु सत्सूत्रयेदृजु । प्राधान्येन गुणीभावाद्द्रव्यस्यानर्पणात्सतः ॥ ६१ ॥**
**निराकरोति यद्द्रव्यं बहिरंतश्च सर्वथा । स तदाभोऽभिमंतव्यः प्रतीतेरपलापतः ॥ ६२ ॥**
**कार्यकारणता चेति ग्राह्यग्राहकतापि वा । वाच्यवाचकता चेति कार्थसाधनदूषणं ॥ ६३ ॥**

**लोकसंवृतिसत्यं च सत्यं च परमार्थतः । क्वैवं सिध्येद्यदाश्रित्य बुद्धानां धर्मदेशना ॥ ६४ ॥**
**सामानाधिकरण्यं क्व विशेषणविशेष्यता । साध्यसाधनभावो वा क्वाधाराधेयतापि च ॥६५॥**
**संयोगो विप्रयोगो वा क्रियाकारकसंस्थितिः । सादृश्यं वैसदृश्यं वा स्वसंतानेतरस्थितिः ॥६६**
**समुदायः क्व च प्रेत्यभावादि द्रव्यनिह्नवे । बंधमोक्षव्यवस्था वा सर्वथेष्टाऽप्रसिद्धितः ॥ ६७॥**

क्षणध्वंसिन एव बहिरंतश्च भावाः, क्षणद्वयस्थाष्णुत्वेपि तेषां सर्वदा नाशानुपपत्तेः कौटस्थ्यप्रसंगात् क्रमाक्रमाभ्यामर्थक्रियाविरोधादवस्तुतापत्तेः इति यो द्रव्यं निराकरोति सर्वथा सोत्रर्जुसूत्राभासो हि मंतव्यः प्रतीत्यतिक्रमात् । प्रत्यभिज्ञानप्रतीतिर्हि बहिरंतश्चैकं द्रव्यं पूर्वोत्तरपरिणामवर्ति साधयंती बाधविधुरा प्रसाधितैव पुरस्तात् । तस्मिन् सति प्रतिक्षणविनाशेप्यस्येष्टत्वान्न विनाशानुपपत्तिर्न भावानां कौटस्थ्यापत्तिः यतः सर्वथार्थक्रियाविरोधात् अवस्तुता स्यात् । योपि च मन्यते परमार्थतः कार्यकारणभावस्याभावान्न ग्राह्यग्राहकभावो वाच्यवाचकभावो वा यतो बहिरर्थः सिध्येत् । विज्ञानमात्रं तु सर्वमिदं त्रैधातुकमिति, सोपि ऋजुसूत्राभासः स्वपरपक्षसाधनदूषणाभावप्रसंगात् । लोकसंवृत्त्या स्वपक्षस्य साधनात् परपक्षस्य बाधनात् दूषणाददोष इति चेन्न, लोकसंवृत्तिसत्यस्य परमार्थसत्यस्य च प्रमाणतोऽसिद्धेः तदाश्रयणेनापि बुद्धानपवर्णदेशनादूषणद्वारेण धर्मदेशनानुपपत्तेः । एतेन चित्राद्वैतं संवेदनाद्वैतं क्षणिकमित्यपि मननमृजुसूत्राभासतामायातीत्युक्तं वेदितव्यं । किं च, सामानाधिकरण्याभावो द्रव्यस्योभयाधारभूतस्य निह्नवात् । तथा च कुतः शब्दादेर्विशेष्यता क्षणिकत्वकृतकत्वादेः साध्यसाधनधर्मकलापस्य च तद्विशेषणता सिध्येत् ? तदसिद्धौ च न साध्यसाधनभावः साधनस्य पक्षधर्मत्वसपक्षत्वानुपपत्तेः । कल्पनारोपितस्य साध्यसाधनभावस्येष्टेरदोष इति चेन्न; बहिरर्थत्वकल्पनायाः साध्यसाधनधर्माधारानुपपत्तेः, क्वचिदप्याधाराधेयतायाः संभवाभावात् । किं च, संयोगविभागाभावो द्रव्याभावात् क्रियाविरहश्च ततो न कारकव्यवस्था यतः किंचित्परमार्थतोऽर्थक्रियाकारि वस्तु स्यात् । सदृशेतरपरिणामाभावश्च परिणामिनो द्रव्यस्यापह्नवात् । ततः स्वपरसंतानव्यवस्थितिविरोधः सदृशेतरकार्यकारणानामत्यंतमसंभवात् । समुदायायोगश्च, समुदायिनो द्रव्यस्यानेकस्यासमुदायावस्थापरित्यागपूर्वकसमुदायावस्थामुपाददानस्यापह्नवात् । तत एव न प्रेत्यभावः शुभाशुभानुष्ठानं तत्फलं च पुण्यं पापं बंधो वा व्यवतिष्ठते यतो संसारमोक्षव्यवस्था तत्र स्यात्, सर्वथापीष्टस्याप्रसिद्धेः । संवृत्या हि चेष्टस्य सिद्धिः संवृतेर्मृषात्वात् । नापि परमार्थतः पारमार्थिकैकद्रव्यसिद्धिप्रसंगात् तदभावे तदनुपपत्तेरिति परीक्षितमसकृद्विद्यानंदिमहोदये ॥

शब्दनयमुपवर्णयति;—

**कालादिभेदतोर्थस्य भेदं यः प्रतिपादयेत् । सोत्र शब्दनयः शब्दप्रधानत्वादुदाहृतः ॥ ६८ ॥**

कालकारकलिंगसंख्यासाधनोपग्रहभेदाद्भिन्नमर्थं शपतीति शब्दो नयः शब्दप्रधानत्वादुदाहृतः । यस्तु व्यवहारनयः कालादिभेदेप्यभिन्नमर्थमभिप्रैति तमनूद्य दूषयन्नाह—

**विश्वदृश्वास्य जनिता सूनुरित्येकमादृताः । पदार्थं कालभेदेपि व्यवहारानुरोधतः ॥ ६९ ॥**
**करोति क्रियते पुष्यस्तारका यौभ इत्यपि । कारकव्यक्तिसंख्यानां भेदेपि च परे जनाः ॥७०**
**एहि मन्ये रथेनेत्यादिकसाधनभित्यपि । संतिष्ठेतावतिष्ठेतेत्याद्युपग्रहभेदने ॥ ७१ ॥**
**तच्च श्रेयः परीक्षायामिति शब्दः प्रकाशयेत् । कालादिभेदनेप्यर्थाभेदनेतिप्रसंगतः ॥ ७२ ॥**

ये हि वैयाकरणव्यवहारनयानुरोधेन 'धातुसंबंधे प्रत्ययाः' इति सूत्रमारभ्य विश्वदृश्वास्य पुत्रो जनिता

जाथि कृत्यमासीदित्यत्र कालभेदेप्येकपदार्थमादृता यो विश्वं दृक्ष्यति सोपि पुत्रो जनितेति भविष्यत्काले-ऽतीतकालस्याभेदोभिमतः तथा व्यवहारदर्शनादिति । तत्र यः परीक्षाया मूलक्षतेः कालभेदेप्यर्थस्याभेदेतिप्रसंगात् रावणशंखचक्रवर्तिनोरप्यतीतानागतकालयोरेकत्वापत्तेः । आसीद्रावणो राजा शंखचक्रवर्ती भविष्यतीति शब्दयोर्भिन्नविषयत्वान्नैकार्थतेति चेत्, विश्वदृश्वा जनितेत्यनयोरपि मा भूत् तत एव । न हि विश्वं दृष्टवानिति विश्वदृशि त्वेतिशब्दस्य योर्थोतीतकालस्य जनितेति शब्दस्यानागतकालः पुत्रस्य भाविनोतीतत्वविरोधात् । अतीतकालस्याप्यनागतत्वाध्यपरोपादेकार्थताभिमेतेति चेत्, तर्हि न परमार्थतः कालभेदेप्यभिन्नार्थव्यवस्था । तथा करोति क्रियते इति कारकयोः कर्तृकर्मणोर्भेदेप्यभिन्नमर्थत एवाद्रियते स एव करोति किंचित् स एव क्रियते केनचिदिति प्रतीतेरिति । तदपि न श्रेयः परीक्षायां । देवदत्तः कटं करोतीत्यत्रापि कर्तृकर्मणोर्देवदत्तकटयोरभेदप्रसंगात् । तथा पुष्यं तारकेत्यव्यक्तिभेदेपि न कृतार्थमेकमाद्रियंते, लिंगमशिष्यं लोकाश्रयत्वादिति । तदपि न श्रेयः, पटः कुटीत्यत्रापि पटकुट्यो-रेकत्वप्रसंगात् तल्लिंगभेदाविशेषात् । तथापोंभ इत्यत्र संख्याभेदेप्येकमर्थं जलाख्यमादृताः संख्याभेदस्योद्भेदकत्वात् गुर्वादिवदिति । तदपि न श्रेयः परीक्षायां । घटसंत्तव इत्यत्रापि तथाभावानुषंगात् संख्याभेदाविशेषात् । एहि मन्ये रथेन यास्यसि न हि यास्यसि स यातस्ते पिता इति साधनभेदेपि पदार्थमभिन्नमादृताः "प्रहासे मन्य वाचि युष्मन्मन्यतेरस्मदेकवच्च" इति वचनात् । तदपि न श्रेयः परीक्षायां, अहं पचामि त्वं पचसीत्यत्रापि अस्मद्युष्मत्साधनाभेदेप्येकार्थत्वप्रसंगात् । तथा संतिष्ठते अवतिष्ठत इत्यत्रोपसर्गभेदेप्यभिन्नमर्थमादृता उपसर्गस्य धात्वर्थमात्रद्योतकत्वादिति । तदपि न श्रेयः । तिष्ठति प्रतिष्ठत इत्यत्रापि स्थितिगतिक्रिययोरभेदप्रसंगात् । ततः कालादिभेदाद्भिन्न एवार्थोऽन्यथातिप्रसंगादिति शब्दनयः प्रकाशयति तद्भेदेप्यर्थभेदे दूषणांतरं च दर्शयति—

**तथा कालादिनानात्वकल्पनं निःप्रयोजनम् । सिद्धं कालादिनैकेन कार्यस्येष्टस्य तत्त्वतः ॥७३**

कालादिभेदादर्थस्य भेदोस्त्विति हि तत्परिकल्पनं प्रयोजनवन्नान्यथा साधनास्तीति निःप्रयोजनमेव तत् । किं च—

**कालाद्यन्यतमस्यैव कल्पनं तैर्विधीयतां । येषां कालादिभेदेपि पदार्थैकत्वनिश्चयः ॥ ७४ ॥**

कालभेदेप्यभिन्नार्थः । कालकारकलिंगसंख्यासाधनभेदेभ्यो भिन्नोऽर्थो न भवतीति स्वरुचिप्रकाशनमात्रं ॥ कालादिभेदाद्भिन्नोर्थः इत्यत्रोपपत्तिमावेदयति;—

**शब्दः कालादिभिर्भिन्नाभिन्नार्थप्रतिपादकः । कालादिभिन्नशब्दत्वात्तादृक्सिद्धान्यशब्दवत् ७५**

सर्वस्य कालादिभिन्नशब्दस्यार्थप्रतिपादकत्वेनाभिमतस्य विवादाध्यासितत्वेन पक्षीकरणान्न केनचिद्धेतोर्व्यभिचारः । प्रमाणबाधितः पक्षः इति चेन्न, कालादिभिन्नशब्दस्याभिन्नार्थत्वग्राहिणः प्रमाणस्य भिन्नार्थग्राहिणा प्रमाणेन बाधितत्वात् ॥

समभिरूढमिदानीं व्याचष्टे;—

**पर्यायशब्दभेदेन भिन्नार्थस्याधिरोहणात् । नयः समभिरूढः स्यात् पूर्ववच्चास्य निश्चयः ॥७६॥**

विश्वदृश्वा सर्वदृश्वेति पर्यायभेदेपि शब्दो भिन्नार्थमभिमैति भविता भविष्यतीति च कालभेदाभिमननात् । क्रियते विधीयते करोति विदधाति पुष्यस्तिष्यः तारको द्रुः आपो वाः अंभः सलिलमित्यादिपर्यायभेदेपि नाभिन्नमर्थं शब्दो मन्यते कारकादिभेदादेवार्थभेदाभिमननात् । समभिरूढः पुनः पर्यायभेदेपि भिन्नार्थमभिमैति ॥ कथं ?

**इंद्रः पुरंदरः शक्र इत्याद्या भिन्नगोचराः। शब्दा विभिन्नशब्दत्वाद्वाजिवारणशब्दवत्॥७७॥**

न चात्र भिन्नार्थत्वे साध्ये विभिन्नशब्दत्वहेतोरन्यथानुपपत्तिरसिद्धेति न मंतव्यं, साध्यनिवृत्तौ साधननिवृत्तेरत्र भावात्। भिन्नार्थत्वं हि व्यापकं वाजिवारणशब्दयोर्विभिन्नयोरस्ति गोशब्दे वाग्भिन्नेपि तदस्ति विभिन्नशब्दत्वं तद्व्याप्यं साधनं विभिन्नार्थ एव साध्येस्ति नोभिन्नार्थत्वे, ततोन्यथानुपपत्तिरस्त्येव हेतोः॥

संप्रत्येवंभूतं नयं व्याचष्टे;—

**तत्क्रियापरिणामोर्थस्तथैवेति विनिश्चयात्। एवंभूतेन नीयेत क्रियांतरपराङ्मुखः॥ ७८॥**

समभिरूढो हि शकनक्रियायां सत्यामसत्यां च देवराज्यार्थस्य शक्रव्यपदेशमभिप्रैति, पशोर्गमनक्रियायां सत्यामसत्यां च गोव्यपदेशवत्तथारूढेः सद्भावात्। एवंभूतस्तु शकनक्रियापरिणतमेवार्थं तत्क्रियाकाले शक्रमभिप्रैति नान्यदा॥ कुत इत्याह—

**यो यं क्रियार्थमाचष्टे नासावन्यत्क्रियं ध्वनिः। पठतीत्यादिशब्दानां पाठाद्यर्थत्वसंजनात् ७९**

न हि कश्चिदक्रियाशब्दोस्यास्ति गौरश्व इति जातिशब्दाभिमतानामपि क्रियाशब्दत्वात् आशु गाम्यश्व इति, शुक्लो नील इति गुणशब्दाभिमता अपि क्रियाशब्दा एव। शुचिभवनाच्छुक्लः नीलनान्नील इति देवदत्त इति यदृच्छाभिः शब्दाभिमताः अपि क्रियाशब्दा एव देव एव देयादिति देवदत्तः यज्ञदत्त इति संयोगिद्रव्यशब्दाः समवायिद्रव्यशब्दाभिमताः क्रियाशब्दा एव। दंडोस्यास्तीति दंडी, विषाणमस्यास्तीति विषाणीत्यादि पंचतयी तु शब्दानां प्रवृत्तिः व्यवहारमात्रान्न निश्चयादित्ययं मन्यते॥

एवमेते शब्दसमभिरूढैवंभूतनयाः सापेक्षाः सम्यक्, परस्परमनपेक्षास्तु मिथ्येति प्रतिपादयति;—

**इतोन्योन्यमपेक्षायां संतः शब्दादयो नयाः। निरपेक्षाः पुनस्ते स्युस्तदाभासाविरोधतः॥८०॥**

के पुनरत्र सप्तसु नयेष्वर्थप्रधाना के च शब्दप्रधाना नयाः? इत्याह;—

**तत्रर्जुसूत्रपर्यंताश्चत्वारोर्थनया मताः। त्रयः शब्दनयाः शेषाः शब्दवाच्यार्थगोचराः॥८१॥**

कः पुनरत्र बहुविषयः कश्चाल्पविषयो नय इत्याह;—

**पूर्वपूर्वो नयो भूमविषयः कारणात्मकः। परः परः पुनः सूक्ष्मगोचरो हेतुमानिह॥ ८२॥**

तत्र नैगमसंग्रहयोस्तावन्न संग्रहो बहुविषयो नैगमात्परः। किं तर्हि, नैगम एव संग्रहात्पूर्व इत्याह;—

**सन्मात्रविषयत्वेन संग्रहस्य न युज्यते। महाविषयताभावाभावार्थान्नैगमाञ्जयात्॥ ८३॥**

**यथा हि सति संकल्पस्तथैवासति वेद्यते। तत्र प्रवर्तमानस्य नैगमस्य महार्थता॥ ८४॥**

संग्रहाद्व्यवहारो बहुविषय इति विपर्ययमपाकरोति;—

**संग्रहाद्व्यवहारोपि सद्विशेषावबोधकः। न भूमविषयोशेषसत्समूहोपदर्शितः॥ ८५॥**

व्यवहारादृजुसूत्रो बहुविषय इति विपर्यासं निरस्यति;—

**नर्जुसूत्रप्रभूतार्थो वर्तमानार्थगोचरः। कालत्रितयवृत्त्यर्थगोचराद्व्यवहारतः॥ ८६॥**

ऋजुसूत्राच्छब्दो बहुविषय इत्याशंकामपसारयति;—

**कालादिभेदतोप्यर्थमभिन्नमुपगच्छतः। नर्जुसूत्रान्महार्थोत्र शब्दस्तद्विपरीतवत्॥ ८७॥**

शब्दात्समभिरूढो महाविषय इत्यारेकां हंति;—

**शब्दात्पर्यायभेदेनाभिन्नमर्थमभीप्सितः। न स्यात्समभिरूढोपि महार्थस्तद्विपर्ययः॥ ८८॥**

समभिरूढादेवंभूतो भूमविषय इति चाकूतमपास्यति;—

**क्रियाभेदेपि चाभिन्नमर्थमभ्युपगच्छतः। नैवंभूतः प्रभूतार्थो नयः समभिरूढतः॥ ८९॥**

कथं पुनर्नयवाक्यप्रवृत्तिरित्याह;—

नैगमाप्रातिकूल्येन न संग्रहः प्रवर्तते । ताभ्यां वाच्यमिहाभीष्टा सप्तभंगीविभागतः ॥ ९० ॥
नैगमव्यवहाराभ्यां विरुद्धाभ्यां तथैव सा । सा नैगमर्जुसूत्राभ्यां तादृग्भ्यामविगानतः॥९१॥
सा शब्दान्निगमादन्यायुक्तात् समभिरूढतः । सैवंभूताच्च सा ज्ञेया विधानप्रतिषेधगा ॥९२॥
संग्रहादेश्च शेषेण प्रतिपक्षेण गम्यताम् । तथैव व्यापिनी सप्तभंगी नयविदां मता ॥ ९३ ॥
विशेषैरुत्तरैः सर्वैर्नयानामुदितात्मनाम् । परस्परविरुद्धार्थैर्द्वंद्ववृत्तेर्यथायथम् ॥ ९४ ॥
प्रत्येया प्रतिपर्यायमविरुद्धा तथैव सा । प्रमाणसप्तभंगी च तां विना नाभिवाग्गतिः ॥९५॥

इह तावन्नैगमस्य संग्रहादिभिः सह षड्भिः प्रत्येकं षट् सप्तभंग्यः, संग्रहस्य व्यवहारादिभिः सह वचनात् पंच, व्यवहारस्यर्जुसूत्रादिभिश्चतस्रः, ऋजुसूत्रस्य शब्दादिभिस्तिस्रः, शब्दस्य समभिरूढादिभ्यां द्वे, समभिरूढस्यैवंभूतेनेका, इत्येकविंशतिमूलनयसप्तभंग्यः पक्षप्रतिपक्षतया विधिप्रतिषेधकल्पनयावगंतव्याः । तथा नवानां नैगमभेदानां द्वाभ्यां परापरसंग्रहाभ्यां सह वचनादष्टादश सप्तभंग्यः, परापरव्यवहाराभ्यां चाष्टादश, ऋजुसूत्रेण नव, शब्दभेदैः षड्भिः सह चतुःपंचाशत्, समरूढेन सह नव, एवंभूतेन च नव, इति सप्तदशोत्तरं शतं । तथा संग्रहादिनयभेदानां शेषनयभेदैः सप्तभंग्यो योज्याः । एवमुत्तरनयसप्तभंग्यः पंचसप्तत्युत्तरशतं । तथोत्तरोत्तरनयसप्तभंग्योपि शब्दतः संख्याताः प्रतिपत्तव्याः । इति पर्यायं सप्तभंगी बहुधा वस्तुन्येकत्राविरोधेन विधिप्रतिषेधकल्पना प्रागवदुक्ताचार्यैः नान्या व्यापिन्यतिव्यापिनी वा नाप्यसंभविनी तथा प्रतीतिसंभवात् । तद्यथा—संकल्पनामात्रग्राहिणो नैगमस्य तावदाश्रयणाद्विधिकल्पना, प्रस्थादिसंकल्पमात्रं प्रस्थाद्यानेतुं गच्छामीति व्यवहारोपलब्धेः । भाविनि भूतवदुपचारात्तथा व्यवहारः तंदुलेष्वोदनव्यवहारवदिति चेन्न, प्रस्थादिसंकल्पस्य तदानुभूयमानत्वेन भावित्वाभावात् प्रस्थादिपरिणामाभिमुखस्य काष्ठस्य प्रस्थादित्वेन भावित्वात् तत्र तदुपचारस्य प्रसिद्धिः । प्रस्थादिभावाभावयोस्तु तत्संकल्पस्य व्यापिनोनुपचरितत्वात् । न च तद्व्यवहारो मुख्य एवेति तत्प्रतिसंग्रहाश्रयणात्प्रतिषेधकल्पना न प्रस्थादिसंकल्पमात्रं प्रस्थादिसन्मात्रस्य तथा प्रतीतेः असतः प्रतीतिविरोधादिति व्यवहाराश्रयणात् द्रव्यस्य तथोपलब्धेरद्रव्यस्यासतः सतो वा प्रत्येतुमशक्तेः पर्यायस्य तदात्मकत्वादन्यथा द्रव्यांतरत्वप्रसंगादिति ऋजुसूत्राश्रयणात्पर्यायमात्रस्य प्रस्थादित्वेनोपलब्धेः, अन्यथा प्रतीत्यनुपपत्तेरिति शब्दाश्रयणात् कालादिभेदाद्भिन्नस्यार्थस्य प्रस्थादित्वादन्यथातिप्रसंगात् । इति समभिरूढाश्रयणात् पर्यायभेदेन भिन्नस्यार्थस्य प्रस्थादित्वात् अन्यथातिप्रसंगादिति, एवंभूताश्रयणात् प्रस्थादिक्रियापरिणतस्यैवार्थस्य प्रस्थादित्वादन्यथातिप्रसंगादिति । तथा स्यादुभयं क्रमार्पितोभयनयार्पणात्, स्यादवक्तव्यं सहार्पितोभयनयाश्रयणात्, अवक्तव्योत्तराः शेषास्त्रयो भंगा यथायोगमुदाहार्या, इत्येताः षट्सप्तभंग्यः । तथा संग्रहाश्रयतो विधिकल्पना स्यात् सदेव सर्वमसतोऽप्रतीतेः खरशृंगवदिति तत् प्रतिषेधकल्पना व्यवहाराश्रयणान्न स्यात्, सर्वं सदेव द्रव्यत्वादिनोपलब्धेर्द्रव्यादिरहितस्य सन्मात्रस्यानुपलब्धेश्चेति ऋजुसूत्राश्रयणात् प्रतिषेधकल्पना न सर्वं स्यात् सदेव वर्तमानाद्रूपादन्येन रूपेणानुपलब्धेरन्यथा अनाद्यनंतसत्त्वोपलंभप्रसंगादिति शब्दाश्रयणात्प्रतिषेधकल्पना न सर्वं स्यात्सदेव कालादिभेदेन भिन्नस्यार्थस्योपलब्धेरन्यथा कालादिभेदानर्थक्यप्रसंगादिति समभिरूढाश्रया प्रतिषेधकल्पना न सर्वं सदेव स्यात्, पर्यायभेदेन भिन्नस्यार्थस्योपलब्धेरन्यथैकपर्यायत्वप्रसंगात् इति । एवंभूताश्रयात् प्रतिषेधकल्पना न सर्वं सदेव तत्क्रियापरिणतस्यैवार्थस्य तथोपपत्तेरन्यथा क्रियासंकरप्रसंगात् इति । तथोभयनयक्रमाक्रमार्पणादुभयावक्तव्यकल्पना विधिनयाश्रयणात् सहोभयनयाश्रयणाच्च प्रतिषेधावक्तव्यकल्पना

क्रमाक्रमोभयनयाश्रयणात्तदुभयावक्तव्यकल्पनेति पंचसप्तभंग्यः । तथा व्यवहारनयाद्विधिकल्पना सर्वं द्रव्याद्यात्मकं प्रमाणप्रमेयव्यवहारान्यथानुपपत्तेः कल्पनामात्रेण तद्व्यवहारे स्वपरपक्षव्यवस्थापननिराकरणयोः परमार्थतोनुपपत्तेरिति तं प्रति तावदृजुसूत्राश्रयात्प्रतिषेधकल्पना, न सर्वं द्रव्याद्यात्मकं पर्यायमात्रस्योपलब्धेरिति। शब्दसमभिरूढैवंभूताश्रयात् प्रतिषेधकल्पना न सर्वं द्रव्याद्यात्मकं, कालादिभेदेन पर्यायभेदेन क्रियाभेदेन च भिन्नस्यार्थस्योपलब्धेः इति । प्रथमद्वितीयभंगौ पूर्ववदुत्तरे भंगा इति चतस्रः सप्तभंग्यः प्रतिपत्तव्याः । तथर्जुसूत्राश्रयाद्विधिकल्पना सर्वं पर्यायमात्रं द्रव्यस्य क्वचिदवस्थितेरिति तं प्रति शब्दाश्रयात्प्रतिषेधकल्पना । समभिरूढैवंभूताश्रयाच्च न सर्वं पर्यायमात्रं कालादिभेदेन पर्यायभेदेन क्रियाभेदेन च भिन्नस्य पर्यायस्योत्पत्तिमत्त्वादिति । द्वौ भंगौ क्रमाक्रमार्पितोभयनयास्तृतीयचतुर्थभंगाः त्रयोन्ये प्रथमद्वितीयतृतीया एवावक्तव्योत्तरा यथोक्तनययोगादवसेया इति तिस्रः सप्तभंग्यः । तथा शब्दनयाश्रयात् विधिकल्पना सर्वं कालादिभेदाद्भिन्नं विवक्षितकालादिकस्यार्थस्याविवक्षितकालादित्वानुपपत्तेरिति । तं प्रति समभिरूढैवंभूताश्रया प्रतिषेधकल्पना न सर्वं कालादिभेदादेव भिन्नं पर्यायभेदात् क्रियाभेदाच्च भिन्नस्यार्थस्य प्रतीतेः इति मूलभंगद्वयं पूर्ववत् परे पंच भंगाः प्रत्येया इति द्वे सप्तभंग्यौ । तथा समभिरूढाश्रया विधिकल्पना सर्वं पर्यायभेदाद्भिन्नं विवक्षितपर्यायस्याविवक्षितपर्यायत्वेनानुपलब्धेरिति तं प्रत्येवंभूताश्रया प्रतिषेधकल्पना न सर्वं पर्यायभेदादेव भिन्नं क्रियाभेदेन पर्यायस्य भेदोपलब्धेरिति । एतत्संयोगजाः पूर्ववत्परे पंचभंगाः प्रत्येतव्या इत्येका सप्तभंगी । एवमेता एकविंशतिसप्तभंग्यः वैपरीत्येनापि तावंत्यः प्रपंचतोभ्यूह्या । तथोत्तरनयसप्तभंग्यः सर्वाः परस्परविरुद्धार्थयोर्द्वयोर्नयभेदयोरेकतरस्य स्वविषयविधौ तत्प्रतिपक्षस्य नयस्यावलंबनेन तत्प्रतिषेधे मूलभंगद्वयकल्पनया यथोदितन्यायेन तदुत्तरभंगकल्पनया च प्रतिपर्यायमवगंतव्याः । पूर्वोक्तप्रमाणसप्तभंगीवत्तद्विचारश्च कर्तव्यः । प्रतिपादितनयसप्तभंगीष्वपि प्रतिभंगं स्यात्कारस्यैवकारस्य च प्रयोगसद्भावात् । तासां विकलादेशत्वादे····सप्तभंगीतः सकलादेशात्मिकाया व्यवस्थापनात् । येन च कारणेन सर्वनयाश्रयाः सप्त वा वचनमार्गाः प्रवर्तते ॥

**सर्वे शब्दनयास्तेन परार्थप्रतिपादने । स्वार्थप्रकाशने मातुरिमे ज्ञाननयाः स्थिताः ॥ ९६ ॥**
**वै नीयमानवस्त्वंशाः कथ्यंतेऽर्थनयाश्च ते । त्रैविध्यं व्यवतिष्ठंते प्रधानगुणभावतः ॥ ९७ ॥**

किं पुनरमीषां नयानामेकस्मिन्नर्थे प्रवृत्तिराहोस्वित्प्रतिविशेषोस्तीत्याह;—

**यत्र प्रवर्तते स्वार्थे नियमादुत्तरो नयः । पूर्वपूर्वो नयस्तत्र वर्तमानो न वार्यते ॥ ९८ ॥**
**सहस्रे च शती यद्वत्तस्यां पंचशती मता । पूर्वसंख्योत्तरत्वाभ्यां संख्यायामविरोधतः ॥९९॥**

परः परः पूर्वत्र पूर्वत्र कस्मान्नयो न प्रवर्तेत इत्याह;—

**पूर्वत्र नोत्तरा संख्या यथायातानुवर्त्यते । तथोत्तरनयः पूर्वनयार्थसकले सदा ॥ १०० ॥**

प्रमाणनयानामपि परस्परविषयगमनविशेषेण विशेषितश्चेति शंकायामिदमाह;—

**नयार्थेषु प्रमाणस्य वृत्तिः सकलदेशिनः । भवेन्न तु प्रमाणार्थे नयानामखिलेषु सा ॥ १०१ ॥**

किमेवं प्रकारा एव नयाः सर्वेप्याहुस्तद्विशेषाः संति ? अपरेपीत्याह;—

**संक्षेपेण नयास्तावद्व्याख्यातास्तत्र सूचिताः । तद्विशेषाः प्रपंचेन संचिंत्या नयचक्रतः॥१०२॥**

एवमधिगमोपायभूताः प्रमाणनयाः व्याख्याताः (य) ॥

इति नवसूत्रस्य व्याख्यानं समाप्तं ॥

---

# तत्त्वार्थाधिगमभेदः।

तत्त्वार्थाधिगमभेदमाह;—

तत्त्वार्थाधिगमस्तावत्प्रमाणनयतो मतः। सर्वः स्वार्थः परार्थो वा···············स्थितः ॥ १॥

अधिगच्छत्यनेन तत्त्वार्थानधिगमयत्यनेनेति वाधिगमः स्वार्थो ज्ञानात्मकः परार्थो वचनात्मक इति प्रत्येयम् ॥

परार्थाधिगमस्तत्रानुद्भवद्रागगोचरः। जिगीषुगोचरश्चेति द्विधा शुद्धधियो विदुः ॥ २ ॥
सत्यवाग्भिर्विधातव्यः प्रथमस्तत्त्ववेदिभिः। यथा कथंचिदित्येष चतुरंगो न संमतः ॥ ३ ॥
प्रवक्त्राज्ञाप्यमानस्य प्रसभज्ञानपेक्षया। तत्त्वार्थाधिगमं कर्तुं समर्थो··········· ॥ ४ ॥
विश्रुतः···················स्वयं प्रभुः। तादृशान्यभसामीता भावेपि प्रतिबोधकः ॥ ५ ॥
साभिमानजनारभ्यश्चतुरंगो निवेदितः। तज्ज्ञैरन्यतमापायेप्यर्थापरिसमाप्तितः ॥ ६ ॥
जिगीषद्भ्यां विना तावन्न विवादः प्रवर्तते। ताभ्यामेव जयोन्योन्यं विधातुं न च शक्यते ७
वादिनो स्पर्द्धया वृद्धिरभिमानः प्रवृद्धितः। सिद्धे वात्राकलंकस्य महतो न्यायवेदिनः ॥८॥
स्वप्रजापरिपाकादिप्रयोजनेति केचन। तेषामपि विना मानाद्द्वयोर्यदि स संमतः ॥ ९ ॥
तदा तत्र भवेद्व्यर्थः सत्प्राश्निकपरिग्रहः।
तयोरन्यतमस्य स्यादभिमानः कदाचन। तन्निवृत्त्यर्थमेवेष्टं सभ्यापेक्षणमत्र चेत् ॥ १० ॥
राजापेक्षणमप्यस्तु तथैव चतुरंगता। वादस्य भाविनीमिष्टामपेक्षां विजिगीषताम् ॥ ११ ॥
सभ्यैरनुमतं तत्त्वज्ञानं दृढतरं भवेत्। इति ते वीतरागाभ्यामपेक्षा तत एव चेत् ॥ १२ ॥
तच्चेन्महेश्वरस्यापि स्वशिष्यप्रतिपादने। सभ्यापेक्षणमप्यस्तु व्याख्याने च भवादृशां ॥ १३ ॥
स्वयं महेश्वरः सभ्यो मध्यस्थस्तत्त्ववित्त्वतः। प्रवक्ता च विनेयानां तत्त्वख्यापनतो यदि॥१४
तदान्योपि प्रवक्तैवं भवेदिति वृथा तव। प्राश्निकापेक्षणं वा····················· ॥ १५ ॥
यथा चैकः प्रवक्ता च मध्यस्थोभ्युपगम्यते। तथा समापतिः किं न प्रतिपाद्यः स एव ते१६
मर्यादातिक्रमाभावहेतुत्वाद्बोध्यशक्तितः। प्रसिद्धप्रभवा तादृग्विनेयजनवद्ध्रुवम् ॥ १७ ॥
स्वयं बुद्धः प्रवक्ता स्यात् बोध्यसंदिग्धधीरिह। तयोः कथं सहैकत्र सद्भाव इति चाकुलं॥१८
प्राश्निकत्वप्रवक्तृत्वसद्भावस्यापि हानितः। स्वपक्षरागौदासीनविरोधस्यानिवारणात् ॥ १९ ॥
पूर्वं वक्ता बुधः पश्चात्सभ्यो न व्याहतो यदि। तदा प्रबोधको बोध्यस्तथैव न विरुध्यते २०
वक्तृवाक्यानुवक्तादि स्वस्य स्यात्प्रतिपादकः। तदर्थं बुध्यमानस्तु प्रतिपाद्यो न मन्यताम्॥२१
तथैकांगोपि वादः स्याच्चतुरंगो विशेषतः। पृथक् सभ्यादिभेदानामनपेक्षाच्च सर्वदा ॥ २२ ॥
यथा वाद्यादयो लोके दृश्यंते तेन्यभेदिनः। तथा न्यायविदामिष्टा व्यवहारेषु ते यदि ॥२३
तदभावात्स्वयं वक्तुः सभ्या भिन्ना भवंतु ते। सभापतिश्च तद्बोध्यजनवंतश्च नेष्यते ॥ २४ ॥
जिगीषाविरहात्तस्य तत्त्वं बोधयतो जनान्। न सभ्यादिप्रतीक्षास्ति यदि वादे क्व सा भवेत्२५
ततो वादो जिगीषायां वादिनोः संप्रवर्तते। सभ्यापेक्षणतो जल्पवितंडावदिति स्फुटं ॥२६॥
तदपेक्षा च तत्रास्ति जयेतरविधानतः। तद्वदेवान्यथा तत्र सा न स्यादविशेषतः ॥ २७ ॥
सिद्धो जिगीषतो वादश्चतुरंगस्तया सति। स्वाभिप्रेतव्यवस्थानाल्लोकप्रख्यातवादवत् ॥ २८ ॥

ननु च प्राश्निकापेक्षणाविशेषेपि वादजल्पवितंडानां न वादो जिगीषतोस्तत्त्वाध्यवसायसंरक्षणार्थत्वरहितत्वात् । यस्तु जिगीषतोर्न स तथा सिद्धो यथा जल्पो वितंडा च तथा वादः तस्मान्न जिगीषतोरिति । न हि वादस्तत्त्वाध्यवसायसंरक्षणार्थो भवति जल्पवितंडयोरेव तथात्वात् । तदुक्तं । "तत्त्वाध्यवसायसंरक्षणार्थे जल्पवितंडे बीजप्ररोहसंरक्षणार्थं कंटकशाखावरणवदिति । तदेतत्प्रलापमात्रं, वादस्यैव तत्त्वाध्यवसायसंरक्षणार्थत्वोपपत्तेः । तथाहि—वाद एव तत्त्वाध्यवसायरक्षणार्थः प्रमाणतर्कसाधनोपालंभत्वे सिद्धांताविरुद्धत्वे पंचावयवोपपन्नत्वे च सति पक्षप्रतिपक्षपरिग्रहत्वात् यस्तु न तथा स न यथा आक्रोशादिः तथा च वादस्तस्मात्तत्त्वाध्यवसायरक्षणार्थ इति युक्तिसद्भावात् । न तावदयमसिद्धो हेतुः प्रमाणतर्कसाधनोपालंभः सिद्धांताविरुद्धः पंचावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इति वचनात् । पक्षप्रतिपक्षपरिग्रहादित्युच्यमाने जल्पेपि तथा स्यादित्यवधारणविरोधस्तत्परिहारार्थं प्रमाणतर्कसाधनोपालंभत्वादिविशेषणं । न हि जल्पे तदस्ति यथोक्तोपपन्नछलजातिनिग्रहस्थानसाधनोपालंभो जल्प इति वचनात् । तत एव न वितंडा तथा प्रसज्यते पक्षप्रतिपक्षपरिग्रहरहितत्वाच्च । पक्षप्रतिपक्षौ हि वस्तुधर्मावेकाधिकरणौ विरुद्धौ एककालाध्यनवसितौ वस्तुविशेषौ वस्तुनः सामान्येनाधिगतत्वाच्च विशेषावगमनिमित्तो विवादः । एकाधिकरणाविति नानाधिकरणौ विचारं न प्रयोजत उभयोः प्रमाणेनोपपत्तेः । तद्यथा—अनित्या बुद्धिर्नित्य आत्मेति अविरुद्धावप्येवं विचारं न प्रयोजयतः । तद्यथा क्रियावद्द्रव्यं निःक्रियं च कालभेदे सतीत्येककालावित्युक्तं । तथावसितौ विचारं न प्रयोजयेते निश्चयोत्तरकालं विवादाभावादित्यनवसितौ निर्दिष्टौ । एवं विशेषणविशिष्टयोर्धर्मयोः पक्षप्रतिपक्षयोः परिग्रह इत्थंभावनियमः । एवं धर्मायं धर्मी नैवं धर्मेति वा सोऽयं पक्षप्रतिपक्षपरिग्रहो न वितंडायामस्ति सप्रतिपक्षस्थापनाहीनो वितंडा इति वचनात् । तथा यथोक्तो जल्पः प्रतिपक्षस्थापनाहीनतया विशेषतो वितंडात्वं प्रतिपद्यते । वैतंडिकस्य च स्वपक्ष एव साधनवादिपक्षापेक्षया प्रतिपक्षो हस्तिप्रतिहस्तिन्यायेन····वैतंडिको न साधनं वक्ति केवलं परपक्षनिराकरणायैव प्रवर्तत इति व्याख्यानात् । ननु वैतंडिकस्य प्रतिपक्षाभिधानः स्वपक्षोस्त्येवान्यथा प्रतिपक्षहीन इति सूत्रकारो ब्रूयात् न तु प्रतिपक्षस्थापनाहीन इति । न हि राजहीनो देश इति च कश्चिद्राजपुरुषहीन इति वक्ति तथाभिप्रेतार्थाप्रतिपत्तेरिति केचित् । तेपि न समीचीनवाचः, प्रतिपक्ष इत्यनेन विधिरूपेण प्रतिपक्षहीनस्यार्थस्य विवक्षितत्वात् । यस्य हि स्थापना क्रियते स विधिरूपः प्रतिपक्षो न पुनर्यस्य परपक्षनिराकरणसामर्थ्यान्नतिः सोत्र मुख्यविधिरूपतया व्यवतिष्ठते तस्य गुणभावेन व्यवस्थितेः । जल्पोपि कश्चिदेवं प्रतिपक्षस्थापनाहीनः स्यान्नेदं निरात्मकं जीवच्छरीरं प्राणादिमत्त्वप्रसंगादिति परपक्षप्रतिषेधवचनसामर्थ्यात् सात्मकं जीवच्छरीरमिति स्वपक्षस्य सिद्धेर्विधिरूपेण स्थापनाविरहादिति चेन्न, नियमेन प्रतिपक्षस्थापनाहीनत्वाभावाज्जल्पस्य । तत्र हि कदाचित्स्वपक्षविधानद्वारेण परपक्षप्रतिषेधः कदाचित्परपक्षप्रतिषेधद्वारेण स्वपक्षविधानमिष्यते नैवं वितंडायां परपक्षप्रतिषेधस्यैव सर्वदा तत्र नियमात् । नन्वेवं प्रतिपक्षोपि विधिरूपो वितंडायां नास्तीति प्रतिपक्षहीन इत्येव वक्तव्यं स्थापनाहीन इत्यस्यापि तथा सिद्धेः, स्थाप्यमानस्याभावे स्थापनायाः संभवायोगादिति चेन्न; अनिष्टप्रसंगात् सर्वथा प्रतिपक्षहीनस्यार्थस्यानिष्टस्य प्रसक्तौ च यथा वितंडायां साध्यनिर्देशाभावस्तस्य चेतसि परिस्फुरणाभावश्च तथार्थापत्त्यापि गम्यमानस्य प्रतिपक्षस्याभाव इति व्याहतिः स्याद्वचनस्य गम्यमानस्वपक्षाभावे परपक्षप्रतिषेधस्य भाविविरोधात् प्रतिपक्षस्थापनाहीन इति वचने तु न विरोधः सर्वशून्यवादिनां परपक्षप्रतिषेधे सर्वः शून्यमिति स्वपक्षगम्यमानस्य भावेपि स्थापनाया गम्यमानायास्तद्वाक्याभावे वा शून्यताव्याघातात् । तर्हि प्रतिपक्षहीनमपि

वा प्रयोजनार्थमर्थित्वेन समभ्युपेयादित्यत्रापि प्रतिपक्षहीनमपि चेति वक्तव्यं, सर्वथा प्रतिपक्षहीनवादस्यासंभवादिति चेत्। क एवं व्याचष्टे सर्वप्रतिपक्षहीनमिति ? परतः प्रतिज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षं वचनतोनवस्थापयत्स्वदर्शनं साधयेदिति व्याख्यानात् तत्र गम्यमानस्य स्वपक्षस्य भावात्, स्वपक्षमनवस्थापयन्निति भाष्यकारवचनस्यान्यथा विरोधात्। कुतोन्यथा भाष्यकारस्यैव व्याख्यानमितिचेत्, सर्वथा स्वपक्षहीनस्य वादस्य जल्पवितंडावदसंभवादेव कथमेवं वादजल्पयोर्वितंडातो भेदः ? प्रतिपक्षस्थापनाहीनत्वाविशेषादिति चेत्, उक्तमत्र नियमतः प्रतिपक्षस्थापनया हीना वितंडा, कदाचित्तया हीनौ वादजल्पाविति। केवलं वादः प्रमाणतर्कसाधनोपलंभत्वादिविशेषणः पक्षप्रतिपक्षपरिग्रहः। जल्पस्तु छलजातिनिग्रहस्थानसाधनोपालंभश्च यथोक्तोपपन्नश्चेति वितंडातो विशिष्यते। तदेवं पक्षप्रतिपक्षपरिग्रहस्य जल्पे सतोपि प्रमाणतर्कसाधनोपलंभत्वादिविशेषणाभावाद्वितंडायामसत्त्वाच्च न जल्पवितंडयोस्तत्त्वाध्यवसायसंरक्षणार्थत्वसिद्धिः प्रकृतसाधनाद्येनेष्टविघातकारीदं स्यादनिष्टस्य साधनादिति वाद एव तत्त्वाध्यवसायसंरक्षणार्थत्वाज्जिगीषतोर्युक्तो न जल्पवितंडे ताभ्यां तत्त्वाध्यवसायसंरक्षणासंभवात्। परमार्थतः ख्यातिलाभपूजावत् तत्त्वस्याध्यवसायो हि तत्त्वनिश्चयस्तस्य संरक्षणं न्यायबलात्सकलबाधकनिराकरणेन पुनस्तत्र बाधकमुद्भावयते यथाकथंचिन्निर्मुखीकरणं चपेटादिभिस्तत्पक्षनिराकरणस्यापि तत्त्वाध्यवसायसंरक्षणत्वप्रसंगात्। न च जल्पवितंडाभ्यां तत्र सकलबाधकपरिहरणं छलजात्याद्युपक्रमपराभ्यां संशयस्य विपर्यासस्य वा जननात्। तत्त्वाध्यवसाये सत्यपि हि वादिनः परनिर्मुखीकरणे प्रवृत्तौ प्राश्निकास्तत्र संशेरते विपर्यस्यन्निव किमस्य तत्त्वाध्यवसायोस्ति किं वा नास्तीति। नास्त्येवेति व्यापारनिर्मुखीकरणमात्रे तथा व्यवसायरहितस्यापि प्रवृत्तिदर्शनात्तत्त्वोपप्लववादिवत् तथा व्याख्यातिरेव प्रेक्षावत्सु न स्यादिति कुतः पूजालाभो वा ? ततश्चैवं वक्तव्यं वादो जिगीषतोरेव तत्त्वाध्यवसायसंरक्षणार्थत्वादन्यथा तदनुपपत्तेः। पराभ्युपगममात्राज्जल्पवितंडावत्त्वात् निग्रहस्थानवत्त्वाच्च। न हि वादे निग्रहस्थानानि न संति। सिद्धांताविरुद्धः इत्यनेनापसिद्धांतस्य पंचावयवोपपन्न इत्यत्र पंचग्रहणान्न्यूनाधिकयोरवयवोपपन्नग्रहणाद्धेत्वाभासपंचकस्य प्रतिपादनाद्दुष्टानां निग्रहस्थानानां तत्र नियमव्याख्यानात्। ननु वादे सतामपि निग्रहस्थानानां निग्रहबुद्ध्योद्भावनाभावान्न जिगीषास्ति। तदुक्तं तर्कशब्देन भूतपूर्वगतिन्यायेन वीतरागकथात्वज्ञापनादुद्भावननियमो लभ्यते तेन सिद्धांताविरुद्धः। पंचावयवोपपन्न इति चोत्तरपदयोः समस्तनिग्रहस्थानाद्युपलक्षणार्थत्वादेव प्रमाणबुद्ध्या परेण छलजातिनिग्रहस्थानानि प्रयुक्तानि न निग्रहबुद्ध्योद्भाव्यंते किं तु निवारणबुद्ध्या तत्त्वज्ञानायावयवः प्रवृत्तिर्न च साधनाभासो दूषणाभावे वा तत्त्वाज्ञानहेतुरतो न तत्प्रयोगो युक्तः इति। तदेतदसंगतं। जल्पवितंडयोरपि तथोद्भवननियमप्रसंगात्तयोस्तत्त्वाध्यवसायसंरक्षणाय स्वयमभ्युपगमात्। तस्य छलजातिनिग्रहस्थानैः कर्तुमशक्यत्वात्। परस्य तूष्णीभावार्थं जल्पवितंडयोश्छलाद्युद्भावनमितिचेन्न, तथा परस्य तूष्णीभावासंभवादसदुत्तराणामानंत्यान्न्यायबलादेव परनिराकरणसंभवात्। सोयं परनिराकरणायान्ययोगव्यवच्छेदेन व्यवसिताद्यनुजातं तत्त्वविषयप्रज्ञापरिपाकादि च फलमभिमेत्य वादं कुर्वन् परं निग्रहस्थानैर्निराकरोतीति कथमविरुद्धवाक् न्यायेन प्रतिवादिनः स्वाभिप्रायान्निवर्तनस्यैव निग्रहत्वादलाभे वा ततो निग्रहत्वायोगात्। तदुक्तं। "आस्तां तावदलाभादिरयमेव हि निग्रहः। न्यायेन विजिगीषूणां स्वाभिप्रायनिवर्तनम्॥" इति सिद्धमेतत् जिगीषतो वादो निग्रहस्थानवत्त्वान्यथानुपपत्तेरिति। स च चतुरंगः स्वाभिप्रेतस्वव्यवस्थानफलत्वाल्लोकप्रख्यातवादवत्। तथाहि—

**मर्यादातिक्रमं लोके यथा हंति महीपतिः। तथा न्यायेप्यहंकारप्रस्तयोर्वादिनोः क्वचित्॥२९॥**

वादिनोर्वादनं वादः समर्थे हि सभापतौ । समर्थयोः समर्थेषु प्राश्निकेषु प्रवर्तते ॥ ३० ॥
सामर्थ्यं पुनरीशस्य शक्तित्रयमुदाहृतम् । येन स्वमंडलस्याज्ञा विधेयत्वं प्रसिध्यति ॥ ३१ ॥
मंत्रशक्त्या प्रभुस्तावत्स्वलोकान् समयानपि । धर्मन्यायेन संरक्षेद्विप्लवात्साधुसात् सुधीः ॥३२
प्रभुसामर्थ्यतो वापि दुर्लंघ्यात्मबलैरपि । स्वोत्साहशक्तितो वापि दंडं नीतिविदांवरः ॥३३॥
रागद्वेषविहीनत्वं वादिनि प्रतिवादिनि । न्यायेऽन्याये च तद्वत्त्वं सामर्थ्यं प्राश्निकेष्वदः॥३४
सिद्धांतद्वयवेदित्वं प्रोक्तार्थग्रहणत्वता । प्रतिभादिगुणत्वं च तत्त्वनिर्णयकारिता ॥ ३५ ॥
जयेतरव्यवस्थायामन्यथानधिकारता । सभ्यानामात्मनः पत्युर्यशो धर्मं च वांछतः ॥ ३६ ॥
कुमारनंदिनश्चाहुर्वादन्यायविचक्षणाः । राजप्राश्निकसामर्थ्यमेवंभूतमसंशयम् ॥ ३७ ॥
एकतः कारयेत्सभ्यान् वादिनामेकतः प्रभुः । पश्चादभ्यर्णकान् वीक्ष्य प्रमाणगुणदोषयोः ३८
लौकिकार्थविचारेषु न तथा प्राश्निका यथा । शास्त्रीयार्थविचारेषु वा तज्ज्ञाः प्राश्निका यथा३९
सत्यसाधनसामर्थ्यसंप्रकाशनपाटवः । वाग्जेयो विजेता नो सदोन्मादेन केवलम् ॥४०॥ इति
समर्थसाधनाख्यानं सामर्थ्यं वादिनो मतं । सा त्ववश्यं च सामर्थ्यादन्यथानुपपन्नता॥४१॥
सद्दोषोद्भावनं वापि सामर्थ्यं प्रतिवादिनः । दूषणस्य च सामर्थ्यं प्रतिपक्षविघातिता ॥ ४२॥

ननु यथा सभापतेः प्राश्निकानां च सामर्थ्यमविरुद्धमुक्तं वादिनोः साधनदूषणयोश्च परस्परव्याघातात् । तथाहि—यदि वादिनः सम्यक्साधनवचनं सामर्थ्यं साधनस्य चान्यथानुपपन्नत्वं तदा कथं तत्र प्रतिवादिनः सद्दोषोद्भावनं सामर्थ्यं संसाध्यं दूषणस्य च पक्षविघातितावत्कथमितरदिति परस्परव्याहतं पश्यामः । तदन्यतमासमर्थत्वे वा यथा समर्थे सभापतौ प्राश्निकेषु वचनं वादस्तथा समर्थयोर्वादिप्रतिवादिनोः साधनदूषणयोश्चेति व्याख्यानमनुपपन्नमायातमिति कश्चित् । तदसत् । वादिप्रतिवादिनोः साधनदूषणवचने क्रमतः प्रवृत्तौ विरोधाभावात् । पूर्वं तावद्वादी स्वदर्शनानुसारितया समर्थः साधनं समर्थमुपन्यस्यति पश्चात्प्रतिवादी स्वदर्शनालंबनेन दोषोद्भावनसमर्थसद्दूषणं तत्सामर्थ्यं प्रतिपक्षविघातिता न विरुध्यते ॥

का पुनरियं प्रतिपक्षविघातितेत्याह;—

सा पक्षांतरसिद्धिर्वा साधनाशक्तितापि वा । हेतोर्विरुद्धता यद्वदभासांतरतापि च ॥ ४३ ॥

साधनस्य स्वपक्षघातिता पक्षांतरसाधनत्वं यथा विरुद्धं स्वपक्षसाधनाशक्तत्वमात्रं वा यथानैकांतिकत्वादि साधनाभासत्वं, तदुद्भवने स्वपक्षसिद्धेरपेक्षणीयत्वात् । तदुक्तं । "विरुद्धं हेतुमद्भाव्य वादिनं जयतीतरः । आभासांतरमुद्भाव्य पक्षसिद्धमपेक्षते ॥" इति । न चैवमष्टांगो विवादः स्यात्तत्साधनतद्वचनयोर्वादिसामर्थ्यरूपत्वात् सद्दूषणतद्वचनयोश्च प्रतिवादिसामर्थ्यरूपत्वाद्दिगंतरत्वायोगात् नैवं प्रभुः सभ्यो वा वादिप्रतिवादिनोः सामर्थ्यं तयोः स्वतंत्रत्वात् । ततो नाभिमानिकोपि वादो द्व्यंग एव वीतरागवादवदिति शक्यं वक्तुं, चतुर्णामंगानामन्यतमस्याप्यपाये अर्थापरिसमाप्तेरित्युक्तप्रायं । एवमयमाभिमानिको वादो जिगीषतोर्द्विविध इत्याह;—

इत्थमाभिमानिकः प्रोक्तस्तात्त्विकः प्रातिभोपि वा । समर्थवचनं वादश्चतुरंगो जिगीषतोः ४४

पूर्वाचार्योपि भगवानमुमेव द्विविधं जल्पमावेदितवानित्याह;—

द्विप्रकारं जगौ जल्पं तत्त्वप्रातिभगोचरम् । त्रिषष्टेर्वादिनां जेता श्रीदत्तो जल्पनिर्णये ॥ ४५ ॥

कः पुनर्जयोऽत्रेत्याह;—

तत्रेह तात्त्विके वादेऽकलंकैः कथितो जयः । स्वपक्षसिद्धिरेकस्य निग्रहोन्यस्य वादिनः ॥४६॥

कथं;—

स्वपक्षसिद्धिपर्यंता शास्त्रीयार्थविचारणा । वस्त्वाश्रयत्वतो यद्वल्लौकिकार्थे विचारणा ॥ ४७ ॥

कः पुनः स्वस्य पक्षो यत्सिद्धिर्जयः स्यादिति विचारयितुमुपक्रमते;—

जिज्ञासितविशेषोत्र धर्मी पक्षो न युज्यते । तस्यासंभवदोषेण बाधितत्वात्खपुष्पवत् ॥ ४८ ॥
कश्चित्साध्यविशेषं हि न वादी प्रतिपित्सते । स्वयं विनिश्चितार्थस्य परबोधाय वृत्तितः॥४९॥
प्रवृत्तिवादी तस्यैव प्रतिक्षेपाय वर्तनात् । जिज्ञासितेन सभ्याश्च सिद्धांतद्वयवेदिनः ॥ ५० ॥
स्वार्थानुमाने बाधे च जिज्ञासितेति चेन्मतं । वादे तस्याधिकारः स्यात् परप्रत्ययनादृते ॥५१॥
जिज्ञापयितात्मेह धर्मी पक्षो यदीष्यते । लक्षणद्वयमायातं पक्षस्य ग्रंथघातिने ॥ ५२ ॥
तथानुष्णोग्निरित्यादिः प्रत्यक्षादिनिराकृतः । स्वपक्षं स्यादतिव्याप्ति नेदं पक्षस्य लक्षणं॥५३॥
लिंगात्साधयितुं शक्यो विशेषो यस्य धर्मिणः । स एव पक्ष इति चेत् वृथा धर्मविशेषवाक्५४
लिंगं येनाविनाभावि सोर्थः साध्योवधार्यते । न च धर्मी तथाभूतः सर्वत्रानन्वयात्मकः ५५
न धर्मी केवलः साध्यो न धर्मः सिद्ध्यसंभवात् । समुदायस्तु साध्येत यदि संव्यवहारिभिः५६
तदा तत्समुदायस्य स्वाश्रयेण विना सदा । संभवाभावतः सोपि तद्विशिष्टः प्रसाध्यताम् ५७
तद्विशेषोपि सोन्येन स्वाश्रयेणेति न क्वचित् । साध्यव्यवस्थितिर्मूढचेतसामात्मविद्विषाम् ॥५८
विनापि तेन लिंगस्य भावात्तस्य न साध्यता । ततोनपेक्षतेत्येतदनुकूलं समाचरेत् ॥ ५९ ॥
धर्मिणापि विना भावात्क्वचिल्लिंगस्य पक्षता । तस्य मा भूत्ततः सिद्धः पक्षः साधनगोचरः६०

यादृगेव हि स्वार्थानुमाने पक्षः शक्यत्वादिविशेषणः साधनविषयस्तादृगेव परार्थानुमाने युक्तः स्वनिश्चयवदन्येषां निश्चयोत्पादनाय प्रेक्षावतां परार्थानुमानप्रयोगात्, अन्यथा तल्लक्षणस्यासंभवादिदोषानुषंगात् ॥ का पुनः पक्षस्य सिद्धिरित्याह;—

सभ्यप्रत्यायनं तस्य सिद्धिः स्याद्वादिनोथवा । प्रतिवादिन इत्येष निग्रहोन्यतरस्य तु ॥ ६१ ॥

वादिनः स्वपक्षप्रत्यायनं सभायां स्वपक्षसिद्धिः, प्रतिवादिनः स एव निग्रहः, प्रतिवादिनोथवा तत्स्वपक्षसिद्धिर्वादिनो निग्रह इत्येतत्प्रत्येयम् ॥ तथोक्तं । "स्वपक्षसिद्धिरेकस्य निग्रहोन्यस्य वादिनः । नासाधनांगवचनं नादोषोद्भावनं द्वयोः ॥" इति ॥

अत्र परमतमनूद्य विचारयति;—

असाधनांगवचनमदोषोद्भावनं द्वयोः । निग्रहस्थानमन्यत्तन्न युक्तमिति केचन ॥ ६२ ॥
स्वपक्षं साधयन् तत्र तयोरेको जयेद्यदि । तूष्णीभूतं ब्रुवाणं वा यत्किंचित्तत्समंजसम् ॥६३॥

सत्यमेतत्, स्वपक्षं साधयन्नेवासाधनांगवचनाददोषोद्भावनाद्वा वादी प्रतिवादी वा तूष्णीभूतं यत्किंचिद्ब्रुवाणं वा परं जयति नान्यथा केवलं पक्षो वादिप्रतिवादिनोः सम्यक् साधनदूषणवचनमेवेति प्राकृतमनूद्य प्रतिक्षिपति;—

तत्साधनवचः पक्षो मतः साधनवादिनः । सद्दूषणाभिधानं तु स्वपक्षः प्रतिवादिनः ॥ ६४ ॥
इत्ययुक्तं द्वयोरेकविषयत्वानवस्थितेः । स्वपक्षप्रतिपक्षत्वासंभवात्रिपक्षवत् ॥ ६५ ॥
वस्तुन्येकत्र वर्तेते तयोः साधनदूषणे । तेन तद्वचसोर्युक्ता स्वपक्षेतरता यदि ॥ ६६ ॥

**तदा वास्तवपक्षः स्यात्साध्यमानं कथंचन । दूष्यमाणं च निःशंकं तद्वादिप्रतिवादिनोः॥६७॥**

यद्वस्तु शब्दानित्यत्वादिना साध्यमानं वादिना, दूष्यमाणं च प्रतिवादिना तदेव वादिनः पक्षः शक्यत्वादिविशेषणस्य साधनविषयस्य पक्षत्वव्यवस्थापनात् । तथा यद्दूषणवादिना शब्दादि वस्तु अनित्यत्वादिना साध्यमानं वादिना दूष्यमाणं तदेव प्रतिवादिनः पक्ष इति व्यवतिष्ठते न पुनः साधन वचनं वादिनः दूषणवचनं च प्रतिवादिनः पक्ष इति विवादाभावात्तयोस्तत्र विवादे वा यथोक्तलक्षण एव पक्ष इति तस्यासिद्धेरेकस्य जयोऽपरस्य पराजयो व्यवतिष्ठते, न पुनरसाधनांगवचनमात्रमदोषोद्भावनमात्रं वा । पक्षसिद्ध्यविनाभाविनस्तु साधनांगस्यावचनं वादिनो निग्रहस्थानं प्रतिपक्षसिद्धौ सत्यां प्रतिवादिन इति न निवार्यत एव । तथाहि—

**पक्षसिद्ध्यविनाभावि साधनावचनं ततः । निग्रहो वादिनः सिद्धः स्वपक्षे प्रतिवादिनि॥६८॥**

सामर्थ्यात् प्रतिवादिनः सद्दूषणवत्त्वनिग्रहादिकरणं वादिनः पक्षसिद्धौ सत्यामित्यवगंतव्यं । तथा वादिनं साधनमात्रं ब्रुवाणमपि प्रतिवादी कथं जयतीत्याह;—

**विरुद्धसाधनोद्भावी प्रतिवादीतरं जयेत् । तथा स्वपक्षसंसिद्धेर्विधानं तेन तत्त्वतः ॥ ६९ ॥**

दूषणांतरमुद्भाव्य स्वपक्षं साधयन् जयत्येव अन्यथा तस्य न जयो न पराजयः । यत्र धर्मकीर्ति-नाभ्यधायि साधनं सिद्धिस्तदंगं त्रिरूपं लिंगं तस्यावचनं वादिनो निग्रहस्थानं । तथा साधनस्य त्रिरूपं लिंगं समर्थनं व्यतिरेकनिश्चयनिरूपणत्वात्, तस्य विपक्षे बाधकप्रमाणवचनस्य हेतोः समर्थत्वात् तस्या-वचनं वादिनो निग्रहस्थानमिति च तन्नैयायिकस्यापि समानमित्याह;—

**स्वेष्टार्थसिद्धिरंगस्य त्र्यंशहेतोरभाषणं । तस्यासमर्थनं चापि वादिनो निग्रहो यथा ॥ ७० ॥**
**पंचावयवलिंगस्याभाषणं न तथैव किम् । तस्यासमर्थनं चापि सर्वथाप्यविशेषतः ॥ ७१ ॥**

ननु च न सौगतस्य पंचावयवसाधनस्य तत्समर्थनस्य वा वचनं निग्रहस्थानं तत्र निगमनांतसामर्थ्या-द्गम्यमानत्वात् तद्वचनस्य पुनरुक्तत्वेनाफलत्वादित्यपि न संगतमित्याह;—

**सामर्थ्याद्गम्यमानस्य निगमस्य वचो यथा । पक्षधर्मोपसंहारवचनं च तथा फलम् ॥ ७२ ॥**

ननु च सपक्षधर्मोपसंहारस्य सामर्थ्याद्गम्यमानस्यापि हेतोरपक्षधर्मत्वेनासिद्धत्वस्य व्यवच्छेदः फल-मस्तीति युक्तं तद्वचनमनुमन्यते यत्सत्तत्सर्वं क्षणिकं यथा घटः संश्च शब्द इति । तर्हि निगमनस्यापि प्रतिज्ञाहेतूदाहरणोपनयानामेकार्थत्वोपदर्शनं फलमस्ति तत्तद्वचनमपि युक्तिमदेवेत्याह;—

**तस्यासिद्धत्वविच्छित्तिः फलं हेतोर्यथा तथा । निगमस्य प्रतिज्ञानाद्येकार्थत्वोपदर्शनम् ॥७३॥**

न हि प्रतिज्ञादीनामेकार्थत्वोपदर्शनमंतरेण संगतत्वमुपपद्यते भिन्नविषयप्रतिज्ञादिवत् । तथा प्रति-ज्ञातः साध्यसिद्धौ हेत्वादिवचनमनर्थकं स्यादन्यथा तस्या न साधनांगतेति यदुक्तं तदपि स्वमतघाति-धर्मकीर्तेरित्याह;—

**प्रतिज्ञातोऽर्थसिद्धौ स्याद्धेत्वादिवचनं वृथा । नान्यथा साधनांगत्वं तस्या इति यथैव तत्॥७४॥**
**तत्त्वार्थनिश्चये हेतोर्दृष्टांतोऽनर्थको न किम् ।**

ततोर्थातिविपरीतव्यतिरेकत्वं प्रदर्शितव्यतिरेकत्वमिति । न च वैधर्म्यदृष्टांतदोषाः कचिन्न्याय-विनिश्चयादौ प्रतिपाद्यानुरोधतः सद्दृष्टांतेषु संप्रयोगेषु सविभागमुदाहृताः न पुनः साधनांगत्वानिय-मात् । तदनुद्भावनं प्रतिवादिनो निग्रहाधिकरणं वादिना स्वपक्षस्यासाधनेपीति ब्रुवाणः सौगतो जडत्वेन जडानपि क्रमादिना व्यवहारतो नैयायिकान् भवेत् । किं च—

सत्ये च साधने प्रोक्ते वादिना प्रतिवादिनः । दोषानुद्भावने न स्याद्धकारो वितथेपि वा७५
प्राच्ये पक्षे कलंकोक्तिर्द्वितीये लोकबाधिता । द्वयोर्हि पक्षसंसिद्ध्यभावे कस्य विनिग्रहः॥७६॥
अत्रान्ये प्राहुरिष्टं नस्तथा निग्रहणं द्वयोः । तत्त्वज्ञानोक्तिसामर्थ्यशून्यत्वस्याविशेषतः ॥७७॥
यथोपात्तापरिज्ञानं साधनाभासवादिनः । तथा सद्दूषणाज्ञानं दोषानुद्भाविनः समं ॥ ७८ ॥
जानतोपि सभातीते ह्न्यतो वा कुतश्चन । दोषानुद्भावनं यद्वत्साधनाभासवाक् तथा ॥७९॥
दोषानुद्भावने तु स्याद्वादिना प्रतिवादिते । परस्य निग्रहस्तेन निराकरणतः स्फुटम् ॥ ८० ॥
अन्योन्यशक्तिनिर्घातापेक्षया हि जयेतरः । व्यवस्था वादिनोः सिद्धाः नान्यथातिप्रसंगतः८१
इत्येतद्दुर्विदग्धत्वे चेष्टितं प्रकटं न तु । वादिनः कीर्तिकारि स्यादेवं माध्यस्थहानितः ॥८२॥
दोषानुद्भावनाख्यानाद्यथा परनिराकृतिः। तथैव वादिनः स्वस्य दृष्टवान् का तिरस्कृतिः ॥८३
दोषानुद्भावनादेकं न कुर्वंति सभासदः । साधनानुक्तितो नान्यमित्यहो तेऽतिसज्जनाः॥८४॥

अत्र परेषामाकूतमुपदर्श्य विचारयति;—

पक्षसिद्धिविहीनत्वादेकस्यात्र पराजये । परस्यापि न किं न स्याज्जयोप्यन्यतरस्य तु ॥ ८५ ॥
तथा चैकस्य युगपत्स्यातां जयपराजयौ । पक्षसिद्धीतरात्मत्वात्तयोः सर्वत्र लोकवत् ॥ ८६ ॥
तदेकस्य परेणेह निराकरणमेव नः । पराजयो विचारेषु पक्षासिद्धिस्तु सा क्व नुः ॥ ८७ ॥
पराजयप्रतिष्ठानमपेक्ष्य प्रतियोगिनां । लोके हि दृश्यते यादृक् सिद्धं शास्त्रेपि तादृशम् ॥ ८८
सिद्ध्यभावः पुनर्दृष्टः सत्यपि प्रतियोगिनि । साधनाभावतः शून्ये सत्यपि च स जातुचित्८९
तन्निराकृतिसामर्थ्यशून्ये वादमकुर्वति । पराजयस्ततस्तस्य प्राप्त इत्यपरे विदुः ॥ ९० ॥
तत्रेदं चिंत्यते तावत्तन्निराकरणं किमु । निर्मुखीकरणं किं वा वाग्भिस्तत्तत्त्वदूषणम् ॥ ९१ ॥
नात्रादिकल्पना युक्ता परानुग्राहिणां सतां । निर्मुखीकरणावृत्तेर्बोधिसत्त्वादिवत्क्वचित् ॥९२॥
द्वितीयकल्पनायां तु पक्षसिद्धिः पराजयः । सर्वस्य वचनैस्तत्त्वदूषणे प्रतियोगिनाम् ॥ ९३ ॥
सिद्ध्यभावस्तु योगिनामसति प्रतियोगिनि । साधनाभावस्तत्र कथं वादे पराजयः ॥ ९४ ॥
यदैव वादिनोः पक्षः प्रतिपक्षपरिग्रहः । राजन्वति सदेकस्य पक्षासिद्धस्तथैव हि ॥ ९५ ॥
सा तत्र वादिनो सम्यक् साधनोक्तेर्विभाव्यते । तूष्णीभावाच्च नान्यत्र नान्यदेत्यकलंकवाक् ९६
तूष्णीभावोथवा दोषानाशक्तिः सत्यसाधने । वादिनोक्ते परस्येष्टा पक्षसिद्धिर्न चान्यथा ९७
कस्यचित्तत्त्वसंसिद्ध्यप्रतिक्षेपो निराकृतः । कीर्तिः पराजयोवश्यमकीर्तिकृदिति स्थितम्॥९८॥
असाधनांगवचनमदोषोद्भावनं द्वयोः । न युक्तं निग्रहस्थानं संधाहान्यादिवत्ततः ॥ ९९ ॥

के पुनस्ते प्रतिज्ञाहान्यादय इमे कथ्यंते ? प्रतिज्ञाहानिः प्रतिज्ञांतरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वंतरं अर्थांतरं निरर्थकं अविज्ञातार्थं अपार्थकं प्राप्तकालं पुनरुक्तं अननुभाषणं अज्ञानं अप्रतिभा पर्यनुयोज्यानुपेक्षणं निरनुयोज्यानुयोगः विक्षेपः मतानुज्ञा न्यूनं अधिकं अपसिद्धांतः हेत्वाभासाः छलं जातिरिति । तत्र प्रतिज्ञाहानिनिग्रहस्थानं कथमयुक्तमित्याह;—

प्रतिदृष्टांतधर्मस्य यानुज्ञा न्यायदर्शने । स्वदृष्टांते मता सैव प्रतिज्ञाहानिरैश्वरैः ॥ १०० ॥

प्रतिदृष्टांतधर्मानुज्ञा स्वदृष्टांते प्रतिज्ञाहानिरित्यक्षपादवचनात् । एवं सूत्रमनूद्य परीक्षणार्थं भाष्यमनुवदति;—

साध्यधर्मविरुद्धेन धर्मेण प्रत्यवस्थिते । अन्यदृष्टांतधर्मा..........मेवानुजानतः १०१ ॥

प्रतिज्ञाहानिरित्येव भाष्यकाराग्रहो न वा । प्रकारांतरोप्यस्य स्यात् संभवाद्विभ्रमाद् १०२
विनश्वरस्वभावोयं शब्द ऐंद्रियकत्वतः । यथा घट इति प्रोक्ते परः प्रत्यवतिष्ठते ॥ १०३ ॥
यद्यैंद्रियकं नित्यं सामान्यं तद्वदस्तु नः । शब्दोपीति स्वलिंगस्य ज्ञानात्ते नाप्यसंमतं ॥१०४
कामं घटोपि नित्योस्तु सामान्यं यदि शाश्वतं । इत्येवं भाष्यमाणेन प्रतिज्ञोत्पद्यते कथम्१०५
दृष्टांतस्य परित्यागात्स्वहेतोः प्रकृतक्षतेः । निगमांतस्य पक्षस्य त्यागादिति मतं यदि ॥१०६॥
तदा दृष्टांतहानिः स्यात्साक्षादियमनाकुला । साध्यधर्मपरित्यागाद् दृष्टांते स्वेष्टसाधने ॥१०७
पारंपर्येण तु त्यागो हेतूपनययोरपि । उदाहरणहानौ हि नानयोरस्ति साधुता ॥ १०८ ॥
निगमस्य परित्यागः पक्षवादोपि वा स्वयं । तथा च न प्रतिज्ञातहानिरेवेति संगतम् ॥१०९॥
पक्षत्यागात्प्रतिज्ञायास्त्यागस्तस्य तदाश्रुतेः । पक्षत्यागेपि दृष्टांतत्यागादिति यदीष्यते॥११०॥
हेत्वादित्यागतोपि स्यात् प्रतिज्ञात्यजनं तदा । ततः पक्षपरित्यागाविशेषान्नियमः कुतः १११

साधर्म्यप्रत्यनीकधर्मेण प्रत्यवस्थितः प्रतिदृष्टांतधर्मं स्वदृष्टांतेनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । यथा अनित्यः शब्द ऐंद्रियकत्वात् घटवदिति ब्रुवन् परेण दृष्टमैंद्रियकं सामान्यं नित्यं कस्मान्न तथा शब्द इत्येवं प्रत्यवस्थितः । प्रयुक्तस्य हेतोराभासतामवश्यमपि कथावसानमकुर्वन्निश्चयमतिलङ्घ्य प्रतिज्ञात्यागं करोति, यद्यैंद्रियकं सामान्यं नित्यं कामं घटोपि नित्योस्ति इति । स खल्वयं ससाधनस्य दृष्टांतस्य नित्यत्वं प्रसजन्निगमांतमेव पक्षं च परित्यजन् प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति भाष्यकारमतमालूनविशीर्णमादर्शितम् ॥

प्रतिज्ञाहानिसूत्रस्य व्याख्यां वार्तिककृत्पुनः । करोत्येवं विरोधेन न्यायभाष्यकृतः स्फुटम्११२
दृष्टश्चांते स्थितश्चायमिति दृष्टांत उच्यते । स्वदृष्टांतः स्वपक्षः स्यात् प्रतिपक्षः पुनर्मतः॥११३॥
प्रतिदृष्टांत एवेति तद्धर्ममनुजानतः । स्वपक्षे स्यात्प्रतिज्ञानमिति न्यायाविरोधतः ॥ ११४ ॥
सामान्यमैंद्रियं नित्यं यदि शब्दोपि तादृशः । नित्योस्त्विति ब्रुवाणस्यानित्यत्वत्यागनिश्चयात्
इत्येतच्च न युक्तं स्यादुद्योतकरजाड्यकृत् । प्रतिज्ञाहानिरित्थं तु यतस्तेनावधार्यते ॥ ११६ ॥
सा हेत्वादिपरित्यागात् प्रतिपक्षप्रसाधना । प्रायः प्रतीयते वादे मंदबोधस्य वादिनः॥११७॥
कुतश्चिदाकुलाभावादन्यतो वा निमित्ततः । तथा तद्वाचि सूत्रार्थो नियमान्न व्यवस्थितः११८

यथाह उद्योतकरः दृष्टश्चासावंते च व्यवस्थित इति दृष्टांतः स्वपक्षः, प्रतिदृष्टांतः प्रतिपक्षः प्रतिपक्षस्य धर्मं पक्षेन्यत्र जानन् प्रतिज्ञां जहाति । यदि सामान्यमैंद्रियकं नित्यं शब्दोप्येवमस्त्विति तदेतदपि तस्य जाड्यकारि संलक्ष्यते । इत्थमेव प्रतिज्ञाहानेरेव वारयितुमशक्तेः । प्रतिपक्षप्रसाधनाद्धि प्रतिज्ञायाः किल हानिः संपद्यते तत्त्वहेत्वादिपरित्यागादपि कस्यचिन्मंदबुद्धेर्वादिनो वादिप्रायेण प्रतीयते न पुनः प्रतिपक्षस्य धर्मं स्वपक्षेभ्यनुजानत एव येनायमेकप्रकारः प्रतिज्ञाहानौ स्यात् । तथा विक्षेपादिभिराकुलीभावात् प्रकृत्या सभाभीरुत्वादन्यमनस्कत्वादेर्वा निमित्तात् किंचित्साध्यत्वेन प्रतिज्ञाय तद्विपरीतं प्रति जनिरुपलभ्यत एव पुरुषभ्रांतेरनेककारणत्वोपपत्तेः । ततो नाशेषज्ञमेवेदं सूत्रं भाष्यकारस्य वार्तिककारस्य च व्यवस्थापयितुमशक्यत्वात् युक्त्यागमविरोधात् ॥ अत्र धर्मकीर्तेर्दूषणमुपदर्श्य परिहरन्नाह;—

यस्त्वाहैंद्रियकत्वस्य व्यभिचाराद्विनश्वरे । शब्दसाध्येन हेतुत्वं सामान्येनेति सोप्यधीः ११९
सिद्धसाधनतस्तेषां संधाहानेश्च भेदतः । साधनं व्यभिचारित्वात्तदनंतरतः कुतः ॥ १२० ॥
सास्त्येव हि प्रतिज्ञानहानिदोषः कुतश्चन । कस्यचिन्निग्रहस्थानं तन्मात्रात्तु न युज्यते॥१२१॥

**येषां प्रयोगयोग्यास्ति प्रतिज्ञानमितीरणे । तेषां तद्धानिरप्यस्तु निग्रहो वा प्रसाधने ॥ १२२ ॥**
**परेण साधिते स्वार्थे नान्यथेति हि निश्चितं । स्वपक्षसिद्धिरेवात्र जय इत्यभिजानतः ॥१२३॥**
**गम्यमाना प्रतिज्ञा न येषां तेषां च तत्क्षतिः । गम्यमानैव दोषः स्यादिति सर्वं समंजसम्१२४**

न हि वयं प्रतिज्ञाहानिर्दोष एव न भवतीति संगिरामहे अनैकांतिकत्वात् साधनदोषात् पश्चात् तद्भावात् ततो भेदेन प्रसिद्धेः । प्रतिज्ञां प्रयोज्यां सामर्थ्यगम्यां वा वदतस्तद्धानेस्तथैवाभ्युपगमनीयत्वात् सर्वथा तामनिच्छतो वादिन एवासंभवात् केवलमेतस्मादेव निमित्तात् प्रतिज्ञाहानिर्भवति प्रतिपक्षसिद्धमंतरेण च कस्यचिन्निग्रहाधिकरणमित्येतन्न क्षम्यते तत्त्वाव्यवस्थापयितुमशक्तेः ॥

प्रतिज्ञांतरमिदानीमनुवदति;—

**प्रतिषेधे प्रतिज्ञातार्थस्य धर्मविकल्पतः । योसौ तदर्थनिर्देशस्तत्प्रतिज्ञांतरं किल ॥ १२५ ॥**

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञांतरं तल्लक्षणसूत्रमनेनोक्तमिदं व्याचष्टे;—

**घटोऽसर्वगतो यद्वत्तथा शब्दोप्यसर्वगः । तद्वदेवास्तु नित्योयमिति धर्मविकल्पनात् ॥१२६॥**
**सामान्येनैंद्रियत्वस्य सर्वगत्वोपदर्शितं । व्यभिचारेपि पूर्वस्याः प्रतिज्ञायाः प्रसिद्धये ॥१२७॥**
**शब्दोऽसर्वगतस्तावदिति सत्त्वांतरं कृतम् । तच्च तत्साधनाशक्तमिति भाष्येन निग्रहः ॥१२८॥**

अनित्यः शब्दः ऐंद्रियकत्वाद्घटवदित्येकः सामान्यमैंद्रियकं नित्यं कस्मान्न तथा शब्द इति द्वितीयः । साधनस्यानैकांतिकत्वं सामान्येनोद्भावयति तेन प्रतिज्ञातार्थस्य प्रतिषेधे सति तं दोषमनुद्धरन् धर्मविकल्पं करोति, सोयं शब्दोऽसर्वगतो घटवदाहोस्वित्सर्वगतः सामान्यवदिति ? यद्यसर्वगतो घटवत्तदा तद्वदेवानित्योस्त्विति ब्रूते । सोयं सर्वगतत्वासर्वगतत्वधर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञांतरं अनित्यः शब्द इति प्रतिज्ञातोऽसर्वगतो अनित्यः शब्द इति प्रतिज्ञाया अन्यत्वात् । तदिदं निग्रहस्थानं साधनसामर्थ्यापरिज्ञानाद्वादिनः । न चोत्तरप्रतिज्ञा पूर्वप्रतिज्ञां साधयत्यतिप्रसंगात् इति परस्याकूतं ॥

अत्र धर्मकीर्तेः दूषणमुपदर्शयति;—

**नात्रेदं युज्यते पूर्वप्रतिज्ञायाः प्रसाधने । प्रयुक्तायां परस्यास्तद्भावहानेन हेतुवत् ॥ १२९ ॥**
**तदसर्वगतत्वेन प्रयुक्तादैंद्रियत्वतः । शब्दानित्यत्वमाहायमिति हेत्वंतरं भवेत् ॥ १३० ॥**
**न प्रतिज्ञांतरं तस्य कचिदप्यप्रयोगतः । प्रज्ञावतां जडानां तु नाधिकारो विचारणे ॥ १३१ ॥**
**विरुद्धादिप्रयोगस्तु प्राज्ञानामपि संभवात् । कुतश्चिद्विभ्रमाच्चत्रेत्याहुरन्ये तदप्यसत् ॥ १३२ ॥**
**प्रतिज्ञातार्थसिद्ध्यर्थं प्रतिज्ञायाः समीक्षणात् । भ्रांतैः प्रयुज्यमानायाः विचारे सिद्धहेतुवत् १३३**
**प्राज्ञेति विभ्रमाद्ब्रूयाद्वादेऽसिद्धादिसाधनम् । स्वपक्षसिद्धिर्येन स्यात्सत्त्वमित्यतिदुर्घटम्॥१३४॥**

ततो प्रतिपत्तिवत्प्रतिज्ञांतरं कस्यचित्साधनसामर्थ्याप्रतिज्ञानात् प्रतिज्ञाहानिवत् ॥

तर्हि कथमिदमयुक्तमित्याह;—

**ततोनेनैव मार्गेण प्रतिज्ञांतरसंभवः । इत्येतदेव निर्युक्तिस्तद्धि नानानिमित्तकं ॥ १३५ ॥**
**प्रतिज्ञाहानितश्चास्य भेदः कथमुपेयते । पक्षत्यागाविशेषेपि योगैरिति च विस्मयः ॥ १३६ ॥**
**प्रतिदृष्टांतधर्मस्य स्वदृष्टांतेऽभ्यनुज्ञया । यथा पक्षपरित्यागस्तथा संधांतरादपि ॥ १३७ ॥**
**स्वपक्षसिद्धये यद्वत्संधांतरमुदाहृतं । भ्रांत्या तद्वच्च शब्दोपि नित्योस्त्विति न किं पुनः ॥१३८**
**शब्दानित्यत्वसिद्ध्यर्थं नित्यः शब्द इतीरणं । स्वस्थस्य वाहतं यद्वत्तथा सर्वगशब्दवाक्॥१३९**

ततः प्रतिज्ञाहानिरेव प्रतिज्ञांतरं निमित्तभेदात्तद्भेदैर्निग्रहस्थानांतराणां प्रसंगात् । तेषां तत्रांतर्भावे प्रतिज्ञांतरस्येति प्रतिज्ञानावर्तमानस्य निवारयितुमशक्तेः ॥ प्रतिज्ञाविरोधमनूद्य विचारयन्नाह;—

**प्रतिज्ञाया विरोधो यो हेतुना संप्रतीयते । स प्रतिज्ञाविरोधः स्यादित्येतच्च न युक्तिमत्१४०**

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध इति सूत्रं । यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञयाः स प्रतिज्ञाविरोधो नाम निग्रहस्थानं, यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति न्यायवार्तिकं । तच्च न युक्तिमत् ॥

**प्रतिज्ञायाः प्रतिज्ञात्वे हेतुना हि निराकृते । प्रतिज्ञाहानिरेवेयं प्रकारांतरतो भवेत् ॥ १४१ ॥**
**द्रव्यं भिन्नं गुणात्स्वस्मादिति पक्षेभिभाषिते । रूपाद्यर्थांतरत्वेनानुपलब्धेरितीर्यते ॥ १४२ ॥**
**येन हेतुर्हतस्तेनासंदेहं भेदसंगरः । तद्भेदस्य निर्णीतेस्तत्र तेनेति बुध्यताम् ॥ १४३ ॥**
**हेतोर्विरुद्धता वा स्याद्दोषोयं सर्वसंमतः । प्रतिज्ञादोषता त्वस्य नान्यथा व्यवतिष्ठते ॥ १४४ ॥**

यदपि उद्योतकरेणाभ्यधायि; 'एतेनैव प्रतिज्ञाविरोधोप्युक्तः, यत्र प्रतिज्ञा स्ववचनेन विरुध्यते यथा श्रवणा गर्भिणी नास्त्यात्मेति वाक्यांतरोपप्लवादिति' तदपि न युक्तमित्याह;—

**प्रतिज्ञा च स्वयं यत्र विरोधमधिगच्छति । नास्त्यात्मेत्यादिवत्तत्र प्रतिज्ञाविधिरेव नः॥१४५**

तद्विरोधोद्भावनेन त्यागस्यावश्यं भावित्वात् । स्वयमत्यागान्नेयं प्रतिज्ञाहानिरिति चेत् न, तद्विरुद्धत्वप्रतिपत्तेरेव न्यायबलात्त्यागरूपत्वात् । यत्किंचिदवदतोपि प्रतिज्ञाकृतिसिद्धेर्वदतोपि दोषत्वेनैव तत्त्यागस्य व्यवस्थितेः । यदपि तेनोक्तं हेतुविरोधोपि प्रतिज्ञाविरोध एव एतेनोक्तो यत्र हेतुः प्रतिज्ञया बाध्यते यथा सर्वं पृथक् समूहे भावशब्दप्रयोगादिति, तदपि न साधीय इत्याह;—

**हेतुः प्रतिज्ञया यत्र बाध्यते हेतुदुष्टता । तत्र सिद्धान्यथा संधाविरोधोतिप्रसज्यते ॥ १४६ ॥**
**सर्वं पृथक् समुदायः भावशब्दप्रयोगतः । इत्यत्र सिद्धया भेदसंधया यदि बाध्यते ॥ १४७ ॥**
**हेतुस्तत्र प्रसिद्धेन हेतुना सापि बाध्यतां । प्रतिज्ञावत्परस्यापि हेतुसिद्धेरभेदतः ॥ १४८ ॥**
**भावशब्दः समूहं हि यस्यैकं वक्ति वास्तवं । तस्य सर्वं पृथक्तत्त्वमिति संधाविहन्यते ॥१४९॥**
**विरुद्धसाधनाद्वायं विरुद्धो हेतुरागतः । समूहावास्तवे हेतुदोषो नैकोपि पूर्वकः ॥ १५० ॥**
**सर्वथा भेदिनो नानार्थेषु शब्दप्रयोगतः । प्रकल्पितसमूहेष्वित्येवं हेत्वर्थनिश्चयात् ॥ १५१ ॥**
**तथा सति विरोधोयं तद्धेतोः संधया स्थितः । संधाहानिस्तु सिद्धेयं हेतुना तत्प्रबाधनात्१५२**

यदप्यभिहितं तेन, एतेन प्रतिज्ञाया दृष्टांतविरोधो वक्तव्यो हेतोश्च दृष्टांतादिभिर्विरोधः प्रमाणविरोधश्च प्रतिज्ञाहेतोर्यथा वक्तव्यः इति, तदपि न परीक्षाक्षममित्याह;—

**दृष्टांतस्य च यो नाम विरोधः संधयोदितः । साधनस्य च दृष्टांतप्रमुखैर्मानबोधनम् ॥१५३॥**
**प्रतिज्ञादिषु तस्यापि न प्रतिज्ञाविरोधता । सूत्रारूढतयोक्तस्य भांडालेख्यनयोक्तिवत् ॥१५४॥**
**प्रतिज्ञानेन दृष्टांतबाधने सति गम्यते । तत्प्रतिज्ञाविरोधः स्याद्विलत्त्वादिति चेन्मतम् ॥१५५॥**
**हंत हेतुविरोधोपि किं नैवोमीष्ट एव ते । दृष्टांतादिविरोधोपि हेतुरेतेन वर्णितः ॥ १५६ ॥**
**निग्रहस्थानसंख्यानविघातकृदयं ततः । यथोक्तनिग्रहस्थानेष्वंतर्भावाविरोधतः ॥ १५७ ॥**
**प्रत्यक्षादिप्रमाणेन प्रतिज्ञाबाधनं पुनः । प्रतिज्ञाहानिरायाता प्रकारांतरतः स्फुटम् ॥ १५८ ॥**
**निदर्शनादिबाधा च निग्रहांतरमेव ते । प्रतिज्ञानश्रुतेस्तत्राभावात्तद्बाधनात्ययात् ॥ १५९ ॥**

यदप्यवादि तेन. परपक्षसिद्धेन गोत्वादिनानैकांतिकचोदनाविरुद्धेति नः परपक्षसिद्धेन गोत्वादिना

व्यभिचारयति तद्विरुद्धमुत्तरं वेदितव्यम् । अनित्यः शब्दः ऐंद्रियकत्वात् घटवदिति केनचिद्बौद्धं प्रत्युक्तं, नैयायिकप्रसिद्धेन गोत्वादिना सामान्येन हेतोरनैकांतिकत्वचोदना हि विरुद्धमुत्तरं सौगतस्या-निष्टसिद्धेरिति । तदपि न विचारार्हमित्याह;—

मोक्षादिना स्वसिद्धेन यानैकांतिकचोदना । परपक्षविरुद्धं स्यादुत्तरं तदिहेत्वपि ॥ १६० ॥
न प्रतिज्ञाविरोधेंतर्भावमेति कथंचन । स्वयं तु साधिते सम्यग्गोत्वादौ दोष एव सः॥१६१॥
निराकृतौ परेणास्यानैकांतिकसमानता । हेतोरेव भवेत्तावत् संवादोषस्तु नेष्यते ॥ १६२ ॥

यदप्यभाणि तेन, स्वपक्षानपेक्षं च तथा यः स्वस्वपक्षानपेक्षं हेतुं प्रयुंक्ते अनित्यः शब्द ऐंद्रिय-कत्वादिति स स्वसिद्धस्य गोत्वादेरनित्यत्वविरोधाद्विरुद्ध इति । तदप्यपेशलमित्याह;—

हेतावैंद्रियकत्वे तु निजपक्षानपेक्षिणि । स प्रसिद्धस्य गोत्वादेरिति तत्त्वविरोधतः ॥ १६३ ॥
स्याद्विरोध इतीदं च तद्वदेव न मिद्यते । अनैकांतिकतादोषात्तद्भावाविशेषतः ॥ १६४ ॥
वादीतरप्रतानेन गोत्वेन व्यभिचारता । हेतोर्यथा चैकतरसिद्धेनासाधनेन किम् ॥ १६५ ॥
प्रमाणेनाप्रसिद्धौ तु तस्य सैव तदा भवत् । सर्वेषामपि तेनायं विभागो जडकल्पितः ॥१६६॥

सोयमुद्योतकरः स्वयमुभयपक्षसंप्रतिपन्नस्त्वनैकांतिक इति प्रतिपद्यमानो वादिनः प्रतिवादिन एव प्रमाणतः सिद्धेन गोत्वादिनानैकांतिकचोदनेन हेतोर्विरुद्धमुत्तरं ब्रुवाणमतिक्रमेण कथं न्यायवादी? अप्रमाणसिद्धेन तु सर्वेषां तच्चोदनं दोषाभास एवेति तद्विभागं कुर्वन् जडत्वमात्मनो निवेदयति । अत्र प्रतिज्ञावचनादेवासाधनांगवचनेन वादिनिगृहीते प्रतिज्ञाविरुद्धस्यानिग्रहत्वमेवेति धर्मकीर्तिनोक्तं दूषण-मसंगतं गम्यमानः प्राह;—

प्रतिज्ञावचनेनैव निगृहीतस्य वादिनः । न प्रतिज्ञाविरोधस्य निग्रहत्वमितीतरे ॥ १६७ ॥
तेषामनेकदोषस्य साधनस्याभिभाषणे । परेणैकस्य दोषस्य कथनं निग्रहो यथा ॥ १६८ ॥
तथान्यस्यात्र तेनैव कथनं तस्य निग्रहः । किं नेष्टो वादिनोरेवं युगपन्निग्रहस्तव ॥ १६९ ॥
साधनावयवस्यापि कस्यचिद्वचने सकृत् । जयोस्तु वादिनोन्यस्यावचने च पराजयः ॥१७०॥
प्रतिपक्षाविनाभाविदोषस्योद्भावने यदि । वादिनि न्यत्कृतेन्यस्य कथं नास्य विनिग्रहः॥१७१
तदा साध्याविनाभावि साधनावयवेरणे । तस्यैव शक्त्युभयाकारेन्यस्यवाक् च पराजयः १७२
विरुद्धोद्भावनं हेतोः प्रतिपक्षप्रसाधनं । यथा तथा विनाभाविहेतूक्तिः स्वार्थसाधना॥१७३॥
साधनावयवोनेकः प्रयोक्तव्यो यथापरः । तथा दोषोपि किं न स्यादुद्भाव्यस्तत्र तत्त्वतः१७४
तस्मात्प्रयुज्यमानस्य गम्यमानस्य वा स्वयं । संगरस्य व्यवस्थानकथाविच्छेदमात्रकृत् ॥१७५॥

संगरः प्रतिज्ञातस्य वादिना युज्यमानस्य पक्षधर्मोपसंहारवचनसामर्थ्याद्गम्यमानस्य वा यद्व्यवस्थानं स्वदृष्टांते प्रतिदृष्टांतधर्मानुज्ञानात् प्रतिज्ञातार्थप्रतिषेधेन धर्मविकल्पात् तदर्थनिर्देशाद्वा प्रतिज्ञाहेत्वो-र्विरोधात् प्रतिज्ञाविरोधाद्वा प्रतिवादिनापधेत तत्कथाविच्छेदमात्रं करोति न पुनः पराजयं वादिनः स्वपक्षस्य प्रतिवादिनावश्यं साधनीयत्वादिति न्यायं बुद्ध्यामहे । प्रतिज्ञावचनं तु कथाविच्छेदमात्रमपि न प्रयोजयति तस्यासाधनांगत्वाव्यवस्थितेः पक्षधर्मोपसंहारवचनादित्युक्तं प्राक् । केवलं स्वदर्शनानु-रागमात्रेण प्रतिज्ञावचनस्य निग्रहत्वेनोद्भावनेपि सौगतैः प्रतिज्ञाविरोधादिदोषोद्भावनं नावसरमनुमंतव्यं, अनेकसाधनवचनवदनेकदूषणवचनस्यापि विरोधाभावात् सर्वथा विशेषाभावादिति विचारितमस्माभिः ॥

संप्रति प्रतिज्ञासंन्यासं विचारयितुमुपक्रममाह;—

प्रतिज्ञार्थोपनयनं पक्षस्य प्रतिषेधने । न प्रतिज्ञासंन्यासः प्रतिज्ञाहानितः पृथक् ॥ १७६ ॥

ननु पक्षप्रतिषेधे 'प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः' इति सूत्रकारवचनात् यः प्रतिज्ञातमर्थं पक्षप्रतिषेधे कृते परित्यजति स प्रतिज्ञासंन्यासो वेदितव्यः उदाहरणं पूर्ववत् । सामान्येनैकांतिकत्वाद्धेतोः कृते ब्रूयादेक एव महान्नित्य शब्द इति । एतत्साधनस्य सामर्थ्यापरिच्छेदाद्विप्रतिपत्तितो निग्रहस्थानमित्युद्योतकरवचनात् प्रतिज्ञासंन्यासस्तस्य प्रतिज्ञाहानेर्भेद एवेति मन्यमानं प्रत्याह;—

एक एव महान्नित्योयं शब्दः इत्यनीयत । प्रतिज्ञार्थः किलानेन पूर्ववत्पक्षदूषणे ॥ १७७ ॥
हेतोरैंद्रियकत्वस्य व्यभिचारप्रदर्शनात् । तथा चापनयो हानिः संधाया इति नार्थभित् ॥ १७८
प्रतिज्ञाहानिरेवैतैः प्रकारैर्यदि कथ्यते । प्रकारांतरतोपीयं तदा किं न प्रकथ्यते ॥ १७९ ॥
तन्निमित्तप्रकाराणां नियमाभावतः क्व नु । यथोक्ता नियतिस्तेषां नसोपज्ञं वचस्ततः ॥ १८० ॥
पक्षस्य प्रतिषेधे हि तूष्णींभावो धरेक्षणं । व्योमेक्षणं दिगालोकः खात्कृतं चपलायितम् १८१
हस्तास्फालनमाकंपः प्रस्वेदाद्यप्यनेकधा । निग्रहांतरमस्यास्तु तत्प्रतिज्ञांतरादिवत् ॥ १८२ ॥

हेत्वंतरं विचारयन्नाह;—

अविशेषोदिते हेतौ प्रतिषिद्धे प्रवादिना । विशेषमिच्छतः प्रोक्तं हेत्वंतरमपीह यत् ॥ १८३ ॥
तदेवमेव संभाव्यं नान्यथेति न निश्चयः । परस्मिन्नपि हेतौ स्यादुक्ते हेत्वंतरं यथा ॥ १८४ ॥
यथा च प्रकृते हेतौ दोषवत्यपि दर्शिते । परस्य वचनं हेतोर्हेत्वंतरमुदाहृतम् ॥ १८५ ॥
तथा निदर्शनादौ च दृष्टांताद्यंतरं न किम् । निग्रहस्थानमास्थेयं व्यवस्थाप्यातिनिश्चितम् १८६
यदि हेत्वंतरेणैव निगृहीतस्य वादिनः । दृष्टांताद्यंतरं तत्स्यात्कथायां विनिवर्तनात् ॥ १८७ ॥
तदानैकांतिकत्वादिहेतुदोषेण निर्जिते । मा भूद्धेत्वंतरं तस्य तत एवाविशेषतः ॥ १८८ ॥
यथा चोद्भाविते दोषे हेतोर्यद्वा विशेषणं । ब्रूयात्कश्चित्तथा दृष्टांतादेरपि जिगीषया ॥ १८९ ॥

अविशेषोक्तौ हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वंतरमिति सूत्रकारवचनात् द्वित्वत्वं निग्रहस्थानं साधनांतरोपादाने पूर्वस्यासामर्थ्यख्यापनात् । सामर्थ्ये वा पूर्वस्य हेत्वंतरं व्यर्थमित्युद्योतकरो व्याचक्षाणो गतानुगतिकतामात्मसात्कुरुते प्रकारांतरेणापि हेत्वंतरवचनदर्शनात् । तथा अविशेषोक्ते दृष्टांतोपनयननिगमने प्रतिषिद्धे विशेषमिच्छतो दृष्टांताद्यंतरोपादाने पूर्वस्यासामर्थ्यख्यापनात् । सामर्थ्ये वा पूर्वस्य प्रतिदृष्टांताद्यंतरं व्यर्थमिति वक्तुमशक्यत्वात् । अत्राक्षेपसमाधानानां समानत्वात् यदप्यप्रादेशि-प्रकृतादर्थादप्रतिसंबंधत्वार्थमर्थांतरमभ्युपगमार्थासंगतत्वान्निग्रहस्थानमिति तदपि विचारयति;—

प्रतिसंबंधशून्यानामर्थानामभिभाषणम् । यत्पुनः प्रकृतादर्थादर्थांतरसमाश्रितम् ॥ १९० ॥
कश्चित्किंचिदपि न्यस्य हेतुं तच्छब्दसाधने । पदादिव्याकृतिं कुर्याद्यथानेकप्रकारतः ॥ १९१ ॥
तत्रापि साधनेनुक्ते प्रोक्तेर्थांतरवाक् कथम् । निग्रहो दूषणे वापि लोकनाद्विनियम्यते ॥ १९२ ॥
असमर्थे तु तत्र स्यात्कस्यचित्पक्षसाधने । निग्रहार्थांतरं वादे नान्यथेति विनिश्चयः ॥ १९३ ॥

निरर्थकं विचारयितुमारभते;—

वर्णक्रमस्य निर्देशो यथा तद्वन्निरर्थकं । (कथं)यथा जबझभेत्यादेः प्रत्याहारस्य कुत्रचित् १९४
यदुक्तं वर्णक्रमो निर्देशवन्निरर्थकं । तद्यथा—नित्यः शब्दो जबगडदस्त्वाज्झभघढधवदिति ॥
तत्सर्वथार्थशून्यत्वात् किं साध्य उपयोगतः । किं वानादिविकल्पोत्रासंभवादेव तादृशः १९५
वर्णक्रमादिशब्दस्याप्यर्थवत्त्वात्कथंचन । तद्विचारे कचिच्चमत्कार्यैवार्थेन योगतः ॥ १९६ ॥
द्वितीयकल्पनायां तु सर्वस्य निरर्थकम् । निग्रहस्थानमुक्तं स्यात्सिद्धवन्नोपयोगिवत् ॥ १९७ ॥

तथाचेदं पृथगुक्तं कथादित्रितयादिवत् । कथंचिद्भेदमात्रं तु भवेत्पक्षांतरोक्तिवत् ॥१९८॥

तथाहि—ब्रुवन् साध्यं न साधनं जानीते असाध्यसाधनं वोपादत्ते इति निगृह्यते स्वपक्षं साधयतान्येन नान्यथा, न्यायविरोधात् । यदप्युक्तं, "परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थं भाष्ये चोदनाद्रुतमसामर्थ्यं च स्थापनानिग्रहस्थानं ससामर्थ्यं चाज्ञानमिति, तदिह विचार्यते;—

परिषत्प्रतिवादिभ्यां त्रिरुक्तमपि वादिना । अविज्ञातमविज्ञातार्थं तदुक्तं जडात्मभिः ॥१९९॥
यदा मंदमती तावत्परिषत्प्रतिवादिनौ । तदा सत्यगिरोपेते निग्रहस्थानमापयेत् ॥ २०० ॥
यदा तु तौ महाप्राज्ञौ तदा गूढाभिधानतः । द्रुतोच्चारादितो वा स्यात्तयोरनवबोधनम् ॥२०१
प्राग्विकल्पे कथं युक्तं तस्य निग्रहणं सताम् । यत्र वाक्यप्रयोगेपि वक्तुस्तदनुषंगतः ॥ २०२ ॥
यत्र वाक्यं स्वयं वादी व्याचष्टेन्यैरनिश्चितम् । यथा तथैव व्याचष्टं गूढोपन्यासमात्मनः २०३
अव्याख्याने तु तस्यास्तु जयाभावो न निग्रहः । परस्य पक्षसंसिद्ध्यभावादेतावता ध्रुवम् २०४
द्रुतोच्चारादितस्त्वेताः कथंचिदवगच्छतः । सिद्धांतद्वयतत्त्वज्ञैस्ततो नाज्ञानसंभवः ॥ २०५ ॥
वक्तुः प्रलापमात्रे तु तयोरनवबोधनम् । नाविज्ञातार्थमेतत्स्याद्वर्णानुक्रमवादवत् ॥ २०६ ॥

ततो नेदमविज्ञातार्थं निरर्थकाद्भिद्यते नाप्यपार्थकमित्याह;—

प्रतिसंबंधहीनानां शब्दानामभिभाषणं । पौर्वापर्येण योगस्य तत्राभावादपार्थकम् ॥ २०७ ॥
दाडिमानि दशेत्यादिशब्दवत्परिकीर्तनम् । ते निरर्थकतो भिन्नं न युक्त्या व्यवतिष्ठते ॥२०८
नैरर्थक्यं हि वर्णानां यथा तद्वत्पदातिषु । नाभिधेतान्यथा वाक्यं नैरर्थक्यं ततोपरम् ॥२०९

न हि परस्परसंगतानि पदान्येव न पुनर्वाक्यानीति शक्यं वक्तुं, तेषामपि पौर्वापर्येणापि युज्यमानानां बहुलमुपलंभात् । "शंखः कदल्यां कदली च भेर्यां तस्यां च भेर्यां सुमहद्विमानं । तच्छंखभेरी कदली विमानमुन्मत्तगंगप्रतिमं बभूव ॥" इत्यादिवत् । यदि पुनः पदनैरर्थक्यमेव वाक्यनैरर्थक्यं पदसमुदायत्वाद्वाक्यस्येति मतिस्तदा वर्णनैरर्थक्यमेव पदनैरर्थक्यमस्तु वर्णसमुदायत्वात्पदस्येति मन्यतां, वर्णानां सर्वत्र निरर्थकत्वात्पदस्य निरर्थकत्वप्रसंग इति चेत्, पदस्यापि निरर्थकत्वात्तत्समुदायात्मनो वाक्यस्यापि निरर्थकत्वानुषंगः । पदार्थापेक्षया सार्थकं पदमिति चेत्, वर्णार्थापेक्षया वर्णः सार्थकोस्तु । प्रकृतिप्रत्ययादिवर्णवत् न प्रकृतिः केवला पदं प्रत्ययो वा, नापि तयोरर्थकत्वमभिव्यक्तार्थाभावादनर्थकत्वे पदस्याप्यनर्थकत्वं । यथैव हि प्रकृत्यर्थः प्रत्ययेनाभिभिधते प्रत्ययार्थः स्वप्रकृत्या तयोः केवलयोरप्रयोगार्हत्वात् । तथा देवदत्तस्तिष्ठतीत्यादिप्रयोगेषु सुबंतपदार्थस्य तिङंतपदेनाभिव्यक्तेः तिङंतपदार्थस्य च सुबंतपदेनाभिव्यक्तेः केवलस्याप्रयोगार्हत्वादभिव्यक्तार्थाभावो विभाव्यत एव । पदांतरापेक्षत्वे सार्थकत्वमेवेति तत्प्रकृत्यपेक्षस्य प्रत्ययस्य तदपेक्षस्य च प्रकृत्यादिवत्तस्य सार्थकत्वं साधयत्येव सर्वथा विशेषाभावात् । ततो वर्णानां पदानां च संगतार्थानां निरर्थकत्वमिच्छता वाक्यानामप्यसंगतार्थानां निरर्थकत्वमेषितव्यं । तस्य ततः पृथक्त्वेन निगृह्णन् स्थानत्वानिष्टौ वर्णपदनिरर्थकत्वयोरपि तथा निग्रहाधिकरणत्वं मा भूत् । यदप्युक्तं, अवयवविपर्यासं वचनमप्राप्तकालं अवयवानां प्रतिज्ञादीनां विपर्ययेणाभिधानं निग्रहस्थानमिति । तदपि न सुघटमित्याह—

संघातावयवाख्यातात्तद्विपर्यासेन भाषणम् । अप्राप्तकालमाख्यातं तथायुक्तं मनीषिणाम् ॥ २१०
पदानां क्रमनियमं विनार्थाध्यवसायतः । देवदत्तादिवाक्येषु शास्त्रेऽप्येवं विनिर्णयात् ॥२११॥
यथापशब्दतः शब्दप्रत्ययादर्थनिश्चयः । शब्दादेव तथा व्युत्क्रमात् क्रमस्य वित् २१२

**ततो वाक्यार्थनिर्णीतिः पारंपर्येण जायते । विपर्यासात्तु नैवेति केचिदाहुस्तदप्यसत् ॥२१३॥**
**व्युत्क्रमादर्थनिर्णीतिरपशब्दादिवेत्यपि । वक्तुं शक्तेस्तथा दृष्टेः सर्वथाप्यविशेषतः ॥ २१४ ॥**
**शब्दाव्याख्यानवैयर्थ्यमेवं चेत्तत्त्ववादिनाम् । नापशब्देष्वपि प्रायो व्याख्यानस्योपलक्षणात् २१५**
**तथा च संस्कृताच्छब्दात्सत्याद्धर्मस्तथान्यतः । स्यादसत्यं यदा धर्मः क्व नियमः पुण्यपापयोः २१६**
**वृद्धिप्रसिद्धितस्त्वेव व्यवहारः प्रवर्तते । संस्कृतैरिति सर्वापि शब्दैर्भाषास्वनैरिव ॥ २१७ ॥**
**ततोर्थानिश्चयो येन पदेन क्रमशः स्थितः । तद्व्यतिक्रमणाद्दोषो नैरर्थक्यं न चापरम् ॥२१८॥**

एतेनैतदपि प्रत्याख्यातं । यदाहोद्योतकरः, यथा गौरित्यस्य पदस्यार्थे गौणीति प्रयुज्यमानं पदं न ककादिमंतमर्थं प्रतिपादयतीति न शब्दाव्याख्यानं व्यर्थं अनेनापशब्देनासौ गोशब्दमेव प्रतिपद्यते गोशब्दाच्चककादिमंतमर्थं तथा प्रतिज्ञाद्यवयवविपर्ययेणानुपूर्वं प्रतिपद्यते तथानुपूर्व्यार्थमिति । पूर्वं हि तावत्कर्मोपादीयते लोके ततोधिकरणादि मृत्पिंडचक्रादिवत् । तथा नैवायं समयोपि त्वर्थस्यानुपूर्वी । सोयमर्थानुपूर्वीमन्वाचक्षाणो नाम व्याख्येयात् कस्यायं समय इति । तथा शास्त्रे वाक्यार्थसंग्रहार्थमुपादीयते संगृहीतं त्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयानुपूर्व्या प्रतिपादयतीति सर्वथानुपूर्वीप्रतिपादनभावादेवाप्राप्तकालस्य निग्रहस्थानत्वसमर्थनादन्यथा परचोद्यस्यैवमपि सिद्धेः । समवायानभ्युपगमाद्बहुप्रयोगाच्च नैवावयवविपर्यासवचनं निग्रहस्थानमित्येतस्य परिहर्तुमशक्तेः । सर्वार्थानुपूर्वीप्रतिपादनाभावोऽवयवविपर्यासवचनस्य निरर्थकत्वान्न्याय्यः । ततो नेदं निग्रहस्थानांतरं यथोक्तं हीनमन्यतमेनाप्यवयवेन न्यूनं । यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमावयवो न भवति तद्वाक्यं हीनं वेदितव्यं । तच्च निग्रहस्थानसाधनाभावे साध्यसिद्धेरभावात् प्रतिज्ञादीनां पंचानामपि साधनत्वात् प्रतिज्ञान्यूनं नास्तीत्येके । तेत्र पर्यनुयोज्याः, प्रतिज्ञान्यूनं वाक्यं यो ब्रूते स किं निगृह्यते? अथ नेति यदि निगृह्यते कथमनिग्रहस्थानं? न हि तत्र हेत्वादयो न संति न च हेत्वादिदोषाः संतीति निग्रहं चाभ्युपैति । तस्मात्प्रतिज्ञान्यूनमेवेति । अथ न निग्रहः न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति । यच्च ब्रवीषि सिद्धांतपरिग्रह एव प्रतिज्ञेति, तदपि न बुध्यामहे । कर्मण उपादानं हि प्रतिज्ञासामान्यं विशेषतोवधारितस्य वस्तुनः परिग्रहः सिद्धांत इति कथमनयोरैक्यं, यतः प्रतिज्ञासाधनविषयतया साधनांगं तत्स्यादित्युद्योतकरस्याकूतं, तदेतदपि न समीचीनमिति दर्शयति—

**हीनमन्यतमेनापि वाक्यं स्वावयवेन यत् । तन्न्यूनमित्यसत्स्वार्थे प्रतीतेस्तादृशादपि ॥ २१९ ॥**

यावदवयवं वाक्यं साध्यं साधयति तावदवयवमेव साधनं न च पंचावयवमेव साध्यं साधयति क्वचित्प्रतिज्ञामंतरेणापि साधनवाक्यस्योत्पत्तेर्गम्यमानस्य कर्मणः साधनात् । तथोदाहरणहीनमपि साधनवाक्यमुपपन्नं साधर्म्यवैधर्म्योदाहरणविरहेपि हेतोर्गमकत्वसमर्थनात् । तत एवोपनयनिगमनहीनमपि वाक्यं च साधनं प्रतिज्ञाहीनवत् विदुषः प्रति हेतोरेव केवलस्य प्रयोगाभ्युपगमात् । धूमोत्र दृश्यते इत्युक्तेपि कस्यचिदग्निप्रतिपत्तेः प्रवृत्तिदर्शनात् सामर्थ्याद्गम्यमानास्तत्र प्रतिज्ञादयोपि संतीति चेत्, तर्हि प्रयुज्यमाना न संतीति तैर्विनापि साध्यसिद्धेः न तेषां वचनं साधनं साध्याविनाभाविसाधनमंतरेण साध्यसिद्धेरसंभवात् । तद्वचनमेव साधनमतस्तन्न्यूनं न निग्रहस्थानं परस्य स्वपक्षसिद्धौ सत्यामित्येतदेव श्रेयः प्रतिपद्यामहे । प्रतिज्ञादिवचनं तु प्रतिपाद्याशयानुरोधेन प्रयुज्यमानं न निवार्यते तत एवासिद्धो हेतुरित्यादिप्रतिज्ञावचनं हेतुदूषणोद्भावनकाले कस्यचिन्न विरुध्यते तदवचननियमानभ्युपगमात् । तर्हि यथाविधान्न्यूनादर्थस्यापि सिद्धिस्तथाविधं तन्निग्रहस्थानमित्यपि न घटत इत्याह;—

**यथाप्रार्थाप्रतीतिः स्यात्तन्निरर्थकमेव ते । निग्रहांतरतोक्तिस्तु तत्र श्रद्धानुसारिणाम् ॥२२०॥**

यथोक्तं, हेतूदाहरणादिकमधिकं यस्मिन् वाक्ये द्वौ हेतू द्वौ वा दृष्टांतौ तद्वाक्यमधिकं निग्रहस्थानं आधिक्यादिति तदपि न्यूनेन व्याख्यातमित्याह;—

**हेतूदाहरणाभ्यां यद्वाक्यं स्यादधिकं परैः । प्रोक्तं तदधिकं नाम तच्च न्यूनेन वर्णितम् ॥ २२१**
**तस्याप्यर्यवसानायां कथायां तत्त्वनिर्णयः । यदा स्यादधिकादेव तदा का नाम दुष्टता ॥२२२**
**स्वार्थिके केधिके सर्वं नास्ति वाक्याभिभाषणे । तत्प्रसंगात्ततोर्थस्यानिश्चयात्तन्निरर्थकम् २२३**

सोयमुद्योतकरः, साध्यस्यैकेन ज्ञापितत्वाद्व्यर्थमभिधानं द्वितीयस्य, प्रकाशिते प्रदीपांतरोपादानवदनवस्थानं वा, प्रकाशितेपि साधनांतरोपादाने परापरसाधनांतरोपादानप्रसंगादिति ब्रुवाणः प्रमाणसंप्लवं समर्थयत इति कथं स्वस्थः ? कस्यचिदर्थस्यैकेन प्रमाणेन निश्चयेपि प्रमाणांतरविषयत्वेपि न दोषो दार्ढ्यादितिचेत्, किमिदं दार्ढ्यं नाम ? सुतरां प्रतिपत्तिरितिचेत् किमुक्तं भवति, सुतरामिति सिद्धेः । प्रतिपत्तिर्द्वाभ्यां प्रमाणाभ्यामितिचेत्, तर्ह्याद्येन प्रमाणेन निश्चितेर्थे द्वितीयं प्रमाणं प्रकाशितप्रकाशनवद्व्यर्थमनवस्थानं वा निश्चितेपि परापरप्रमाणान्वेषणात् । इति कथं प्रमाणसंप्लवः ? यदि पुनर्बहूपायप्रतिपत्तिः कथं दार्ढ्यमेकत्र भूयसां प्रमाणानां प्रवृत्तौ संवादसिद्धिश्चेति मतिस्तदा हेतुना दृष्टांतेन वा केनचिद्ज्ञापितेर्थे द्वितीयस्य हेतोर्दृष्टांतस्य वा वचनं कथमनर्थकं तस्य तथाविधदार्ढ्यत्वात् । न चैवमनवस्था, कस्यचित्क्वचिन्निराकांक्षतोपपत्तेः प्रमाणांतरवत् । कथं कृतकत्वादिति हेतुः क्वचिद्वदतः स्वार्थिकस्य कप्रत्ययस्य वचनं यत्कृतकं तदनित्यं दृष्टमिति व्याप्तिं प्रदर्शयते यत्तद्वचनमधिकं नाम निग्रहस्थानं न स्यात्, तेन विनापि तदर्थप्रतिपत्तेः । सर्वत्र वृत्तिपदप्रयोगादेव चार्थप्रतिपत्तौ संभाव्यमानायां वाक्यस्य वचनमर्थं पुष्णाति येनाधिकं न स्यात् । तथाविधवचनस्यापि प्रतिपत्त्युपायत्वात्तन्निग्रहस्थानमिति चेत्, कथमनेकस्य हेतोर्दृष्टांतस्य वा प्रतिपत्त्युपायभूतस्य वचनं निग्रहाधिकरणं ? निरर्थकस्य तु वचनं निरर्थकमेव निग्रहस्थानं न्यूनवन्न पुनस्ततोन्यत् ॥

पुनरुक्तं निग्रहस्थानं विचारयितुकाम आह;—

**पुनर्वचनमर्थस्य शब्दस्य च निवेदितम् । पुनरुक्तं विचारेन्यत्रानुवादात्परीक्षकैः ॥ २२४ ॥**
**तत्रायमेव मन्यंते पुनरुक्तं वचोर्थतः । शब्दसाम्येपि भेदस्यासंभवादित्युदाहृतम् ॥ २२५ ॥**
**हसति हसति स्वामित्युच्चैरुदत्यति रोदिति कृतपरिकरं स्वेदोद्गारि प्रधावति धावति ।**
**गुणसमुदितं दोषापेतं प्रणिंदति निंदति धनवति परिक्रीतं यंत्रं प्रनृत्यति नृत्यति ॥ २२६ ॥**
**सत्यप्रत्यायनं यावत्तावद्वाच्यमतो बुधैः । स्वेष्टार्थवाचिभिः शब्दैस्तैश्चान्यैर्वा निराकुलम् २२७**
**तदप्रत्यायि शब्दस्य वचनं तु निरर्थकम् । सकृदुक्तं पुनर्वेति तात्त्विकः संप्रचक्षते ॥ २२८ ॥**
**सकृद्वादे पुनर्वादोनुवादोर्थविशेषतः । पुनरुक्तं यथा नेष्टं क्वचित्तद्वदिहापि तत् ॥ २२९ ॥**
**अर्थादापद्यमानस्य यच्छब्देन पुनर्वचः । पुनरुक्तं मतं यस्य तस्य स्वेष्टोक्तिबाधनम् ॥ २३० ॥**

योप्याह, शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तमिति च तस्य प्रतिपन्नार्थप्रतिपादकत्वेन वैयर्थ्यान्निग्रहस्थानमिति मतं न पुनरन्यथा । तथा च निरर्थकान्न विशिष्यते, स्ववचनविरोधश्च । स्वयमुद्देशलक्षणपरीक्षावचनानां पुनरुक्तानां प्रायेणाभ्युपगमादर्थाद्गम्यमानस्य प्रतिज्ञादेर्वचनाच्च । यदप्युक्तं, विज्ञातस्य परिषदा त्रिभिरभिहितस्याप्रत्युच्चारणमननुभाषणं निग्रहस्थानमिति तदनूद्य विचारयन्नाह;—

**निर्वादिनोदितस्यापि विज्ञातस्यापि संसदा । अप्रत्युच्चारणं प्राह परस्याननुभाषणम् ॥२३१॥**

तदेतदुत्तरविषयापरिज्ञानंनिग्रहस्थानमप्रत्युच्चारयतो दूषणवचनविरोधात् । तत्रेदं विचार्यते, किं सर्वस्य वादिनोक्तस्याननुच्चारणं किं वा यन्नांतरीयका साध्यसिद्धिरभिमता तस्य साधनवाक्यस्याननुच्चारणमिति ? ॥

यन्नांतरीयका सिद्धिः साध्यस्य तदभाषणं । परस्य कथ्यते कैश्चित् सर्वथाननुभाषणं ॥२३२॥
आनुपूर्व्यस्य निःशेषं परोपन्यस्तमंजसा । प्रत्येकं दूषणावाच्ये पुनरुच्चार्यते यदि ॥ २३३ ॥
तदेव स्यात्तदा तस्य पुनरुक्तमसंशयम् । नोच्चार्यते यदा त्वेतत्तदा दोषः क गद्यते ॥ २३४ ॥
तत्राद्यदूष्यते यत्तत्कर्मत्वादि परोदितम् । तदुच्चारणमेवेष्टमन्योच्चारो निरर्थकः ॥ २३५ ॥
उक्तं दूषयतावश्यं दर्शनीयोत्र गोचरः । अन्यथा दूषणावृत्तेः सर्वोच्चारस्तु नेत्यपि ॥ २३६ ॥
कस्यचिद्वचनं नेष्टनिग्रहस्थानसाधनं । तस्याप्रतिभयैवोक्तेरुत्तराप्रतिपत्तितः ॥ २३७ ॥

तदेतद्धर्मकीर्तेर्मतमयुक्तमित्याह;—

प्रत्युच्चारासमर्थत्वं कथ्यतेऽननुभाषणं । तस्मिन्नुच्चारितेप्यन्यपक्षविक्षिप्त्यवेदनम् ॥ २३८ ॥
ख्याप्यते प्रतिभान्यस्येत्येतयोर्नैकतास्थितिः । साक्षात्संलक्ष्यते लोकैः कीर्तेरन्यत्र दुर्गतेः २३९

ततोऽननुभाषणं सर्वस्य दूषणविषयमात्रस्य वान्यदेवाप्रतिभायाः केवलं तन्निग्रहस्थानमयुक्तं, परोक्षमप्रत्युच्चारयतोपि दूषणवचनन्याय्यात् । तद्यथा—सर्वं प्रतिक्षणविनश्वरं सत्त्वादिति केनचिदुक्ते तदुक्ते प्रत्युच्चारयन्नेव परो विरुद्धत्वं हेतोरुद्भावयति, सर्वमनेकांतात्मकं सत्त्वात् । क्षणक्षयाद्येकांते सर्वथार्थक्रियाविरोधात् तत्त्वानुपपत्तेरिति समर्थयते च तावता परोपन्यस्तहेतोर्दूषणात् किं प्रत्युच्चारणेन । यथैवं दूषयितुमसमर्थः शास्त्रार्थज्ञानपरिणतिविशेषरहितत्वात् तदायमुत्तराप्रतिपत्तेरेव तिरस्क्रियते न पुनरप्रत्युच्चारणात् । सर्वस्य पक्षधर्मत्वादेर्वानुवादे पुनरुक्तत्वानिष्टेः प्रत्युच्चारणेपि तत्रोत्तरमप्रकाशयन् न हि न निगृह्यते स्वपक्षं साधयता, यतोऽप्रतिभैव निग्रहस्थानं न स्यात् । यदप्युक्तं, अविज्ञातं चाज्ञानमिति निग्रहस्थानं, तदपि न मतिविशिष्टमित्याह;—

अज्ञातं च किलाज्ञानं विज्ञातस्यापि संसदा । परस्य निग्रहस्थानं तत्समानं प्रतीयते ॥ २४० ॥
सर्वेषु हि प्रतिज्ञानहान्यादिषु न वादिनोः । अज्ञानादपरं किंचिन्निग्रहस्थानमांजसम् ॥२४१॥
तेषामेतत्प्रभेदत्वे बहुनिग्रहणं न किम् । अर्थाज्ञानादिभेदानां बहु वात्रावधारणात् ॥ २४२ ॥

उत्तराप्रतिपत्तिरप्रतिभेत्यपि निग्रहस्थानमस्य नाज्ञानान्यदित्याह;—

उत्तराप्रतिपत्तिर्या परैरप्रतिभासता । साप्येतेन प्रतिव्यूढा भेदेनाज्ञानतः स्फुटम् ॥ २४३ ॥

यदप्युक्तं, निग्रहप्राप्तस्यानिग्रहपर्यनुयोज्योपेक्षणं निग्रहस्थानमिति, तदपि न साधीय इत्याह;—

यः पुनर्निग्रहप्राप्तेप्यनिग्रह उपेयते । कस्यचित्पर्यनुयोज्योपेक्षणं तदपि कृतम् ॥ २४४ ॥
स्वयं प्रतिभया हि चेत्तदंतर्भावनिर्णयः । सभ्यैरुद्भावनीयत्वात्तस्य भेदो महानहो ॥ २४५ ॥
वादेप्युद्भावयत्नैतन्न हि केनापि धार्यते । स्वं कौपीनं न कोपीह विवृणोतीति चाकुलम् २४६
उत्तराप्रतिपत्तिर्हि परस्योद्भावयन्स्वयं । साधनस्य सदोषत्वमाविर्भावयति ध्रुवम् ॥ २४७ ॥
संभवत्युत्तरं यत्र तत्र तस्यानुदीरणम् । युक्तं निग्रहणं नान्यथेति न्यायविदां मतम् ॥ २४८ ॥
निर्दोषसाधनोक्तौ तु तूष्णींभावाद्विनिग्रहः । प्रलापमात्रतो वेति पक्षसिद्धेः स आगतः २४९

यदप्यभ्यधायि, स्वपक्षदोषाभ्युपगमात्परपक्षे दोषप्रसंगो मतानुज्ञा । यः परेण चोदितं दोषमनुद्धृत्य भवतोप्ययं दोष इति ब्रवीति सा मतानुज्ञास्य निग्रहस्थानमिति, तदप्यपरीक्षितमेवेति परीक्ष्यते—

स्वपक्षे दोषमुपयन् परपक्षे प्रसंजयन् । मतानुज्ञामवाप्नोति निगृहीतिं न युक्तितः ॥ २५० ॥
द्वयोरेवं सदोषत्वं तात्त्विकैः स्थाप्यते यतः । पक्षसिद्धिनिरोधस्य समानत्वेन निर्णयात् ॥२५१
अनैकांतिकतैवैवं समुन्नाव्येति केचन । हेतोरवचने तच नोपपत्तिमदीक्ष्यते ॥ २५२ ॥
तथोत्तराप्रतीतिः स्यादित्यप्याग्रहमात्रकं । सर्वस्याज्ञानमात्रत्वापत्तेर्दोषस्य वादिनोः ॥२५३॥
संक्षेपतोन्यथा कार्यं नियमः सर्ववादिनाम् । हेत्वाभासोत्तराविती कीर्तेः स्यातां यतः स्थितेः ॥
ननु चाज्ञानमात्रेपि निग्रहेति प्रसज्यते । सर्वज्ञानस्य सर्वेषां साद्श्यानामसंभवात् ॥ २५५ ॥
सत्यमेतदभिप्रेतवस्तुसिद्धप्रयोगिनोः । ज्ञानस्य यदि नाभावो दोषोन्यस्यार्थसाधने ॥ २५६ ॥
सत्स्वपक्षप्रसिद्धैव निग्राह्योन्य इति स्थितम् । समासतोनवद्यत्वादन्यथा तदयोगतः ॥ २५७ ॥
तस्करत्वं नरत्वादेरिति हेतुर्यदोच्यते । तदानैकांतिकत्वोक्तित्वमपीति न वार्यते ॥ २५८ ॥
वाचोयुक्तिप्रकाराणां लोके वैचित्र्यदर्शनात् । नोपालंभस्तथोक्तौ स्याद्विपक्षे हेतुदर्शनम् ॥२५९
दोषहेतुमभिगम्य स्वपक्षे परपक्षताम् । दोषमुद्भाव्य पश्चात्त्वे स्वपक्षं साधयेज्जयी ॥ २६० ॥

यदप्यभिहितमनिग्रहस्थाने निग्रहस्थानानुयोगोनिरनुयोज्यानुयोगो निग्रहस्थानमिति तदप्यसदित्याह;—

यदा त्वनिग्रहस्थाने निग्रहस्थानमुच्यते । तदा निरनुयोज्यानुयोगाख्यो निग्रहो मतः ॥२६१॥
सोप्यप्रतिभयोक्तः स्यादेवमुत्तरविकृतेः । तत्प्रकारपृथग्भावे किमेतैः स्वल्पभाषितैः ॥ २६२ ॥

यथोक्तं कार्यव्यासंगात्कथाविच्छेदो विक्षेपः यत्र कर्तव्यं व्यासज्यकथां विच्छिनत्ति प्रतिश्याय कलामेकां क्षणोति पश्चात्कथयिष्यामीति स विक्षेपो नाम निग्रहस्थानं तथा तेनाज्ञानस्याविष्करणादिति तदपि न सदित्याह;—

सभां प्राप्तस्य तस्य स्यात्कार्यव्यासंगतः कथा । विच्छेदस्तस्य निर्दिष्टो विक्षेपो नाम निग्रहः२६३
सोपि नाप्रतिभातोस्ति भिन्नः कश्चन पूर्ववत् । तदेवं भेदतः सूत्रं नाक्षपादस्य कीर्तिकृत्२६४

यदप्युक्तं, सिद्धांतमभ्युपेत्य नियमात्कथाप्रसंगोपसिद्धतः प्रतिज्ञातार्थव्यतिरेकेणाभ्युपेतार्थपरित्यागान्निग्रहस्थानमिति, तदपि विचारयति—

स्वयं नियतसिद्धांतो नियमेन विना यदा । कथां प्रसंजयेत्तस्यापसिद्धांतस्तथोदितः ॥ २६५ ॥
सोप्ययुक्तः स्वपक्षस्यासाधनेनेन तत्त्वतः । असाधनांगवचनाद्दोषोद्भावनमात्रवत् ॥ २६६ ॥
तत्राभ्युपेत्य शब्दादीन्नित्यानेव पुनः स्वयम् । ताननित्यान् ब्रुवाणस्य पूर्वसिद्धांतबाधनम्२६७
तथैव शून्यमास्थाय तस्य संविदमात्रतः । पूर्वस्योत्तरतो बाधा सिद्धांतस्यान्यथा क तत् ॥२६८
प्रधानं चैवमास्थाय तद्विकारप्ररूपणम् । तादृगेवान्यथा हेतुस्तत्र न स्यात्समन्वयः ॥ २६९ ॥
ब्रह्माद्याद्वैतमप्येवमुपेत्यागमवर्णनं । कुर्वन्नाम्नायनिर्दिष्टं बाध्योन्योप्यनया दिशा ॥ २७० ॥
स्वयं प्रवर्तमानाश्च सर्वथैकांतवादिनः । अनेकांताविनाभूतव्यवहारेषु तादृशाः ॥ २७१ ॥

यदप्यवादि, हेत्वाभासाश्च यथोक्ता इति तत्राप्याह;—

हेत्वाभासाश्च योगोक्ताः पंच पूर्वमुदाहृताः । सत्यमन्यैः समाख्याता निग्रहाधिकृता गतैः२७२
हेत्वाभासत्रयं तेपि समर्थं नातिवर्तितुं । अन्यथानुपपन्नत्ववैकल्यं तच नैककम् ॥ २७३ ॥
यथैकलक्षणो हेतुः समर्थः साध्यसाधने । तथा तद्विकलाशक्तो हेत्वाभासोनुमन्यताम् ॥२७४
यो ह्यसिद्धतया साध्यं व्यभिचारितयापि वा । विरुद्धत्वेन वा हेतुः साधयेन्न स कथितः२७५
असिद्धादयोपि हेतवो यदि साध्याविनाभावनियमलक्षणयुक्तास्तदा न हेत्वाभासा भवितुमर्हन्ति । न

नैवं, तेषां तदयोगात् । न ह्यसिद्धः साध्याविनाभावनियतस्तस्य स्वयमसत्त्वात् । नाप्यनैकांतिको विपक्षेपि भावात् । न च विरुद्धो विपक्ष एव भावादित्यसिद्धादिप्रकारेणाप्यन्यथानुपपन्नत्ववैकल्यमेव हेतोः समर्थ्यते । ततस्तस्य हेत्वाभासत्वमिति संक्षेपादेक एव हेत्वाभासः प्रतीयते अन्यथानुपपन्नत्वनियमवैकल्यैकहेतुवत् । अतस्तद्वचनं वादिनो निग्रहस्थानं परस्य पक्षसिद्धाविति प्रतिपत्तव्यं । तथा च संक्षेपतः 'स्वपक्षसिद्धिरेकस्य निग्रहोन्यस्य वादिन' इति व्यवतिष्ठते । न पुनर्विप्रतिपत्त्यप्रतिपत्ती तद्भावेपि कस्यचित्स्वपक्षसिद्ध्यभावे परस्य पराजयानुपपत्तेरसाधनांगवचनादोषोद्भावनमात्रवत् छलवद्वा ॥

किं पुनश्छलमित्याह;—

**योर्थारोपोपपत्त्या स्याद्विघातो वचनस्य तत् । छलं सामान्यतः शक्यं नोदाहर्तुं कथंचन २७६**

**विभागेनोदितस्यास्योदाहृतिः स त्रिधा मतः । वाक्सामान्योपचारेषु छलानामुपवर्णनात् २७७**

अर्थस्यारोपो विकल्पः कल्पनेत्यर्थः तस्योपपत्तिः घटना तया यो वचनस्य विशेषेणाभिहितस्य विघातः प्रतिपादकादभिप्रेतादर्थात् प्रच्यावनं तच्छलमिति लक्षणीयं, 'वचनविघातोर्थविकल्पोपपत्त्या छलं' इति वचनात् । तच्च सामान्यतो लक्षणे कथमपि न शक्यमुदाहर्तुं विभागेनोक्तस्य तच्छलस्योदाहरणानि शक्यंते दर्शयितुं । स च विभागस्त्रिधा मतोक्षपादस्य तु त्रिविधमिति वचनात् । वाक्सामान्योपचारेषु छलानां त्रयाणामेवोपवर्णनात् । वाक्छलं, सामान्यछलं, उपचारछलं चेति ॥

तत्र किं वाक्छलमित्याह;—

**तत्राविशेषदिष्टेर्थे वक्तुराकूततोन्यथा । कल्पनार्थांतरस्येष्टं वाक्छलं छलवादिभिः ॥ २७८ ॥**

तेषामविशेषेण दिष्टे अभिहितेर्थे वक्तुराकूतादभिप्रायादन्यथा स्वाभिप्रायेणार्थांतरस्य कल्पनमारोपणं वाक्छलमिष्टं, तेषामविशेषाभिहितेर्थे वक्तुरभिप्रायादर्थांतरकल्पना वाक्छलं इति वचनात् ॥

अस्योदाहरणमुपदर्शयति;—

**आढ्यो वै देवदत्तोयं वर्तते नवकंबलः । इत्युक्ते प्रत्यवस्थानं कुतोस्य नव कंबलाः ॥ २७९ ॥**

**यस्मादाढ्यत्वसंसिद्धिर्भवेदिति यदा परः । प्रतिब्रूयात्तदा वाचि छलं तेनोपपादितम् ॥२८०॥**

**नवकंबलशब्दे हि वृत्त्या प्रोक्ते विशेषतः । नवोऽस्य कंबलो जीर्णो नैवेत्याकूतमांजसम् २८१**

**वक्तुः संभाव्यते तस्मादन्यस्यार्थस्य कल्पना । नवास्य कंबला नाष्टावित्यस्यासंभवात्मनः २८२**

**प्रत्यवस्थातुरन्यायवादितामानयेद्ध्रुवं । संतस्तत्त्वपरीक्षायां कथं स्युश्छलवादिनः ॥ २८३ ॥**

कथं पुनरनियमविशेषाभिहितोर्थः वक्तुरभिप्रायादर्थांतरकल्पना वाक्छलाख्या प्रत्यवस्थातुरन्यायवादितामानयेदिति चेत्, छलस्यान्यायरूपत्वात् । तथाहि—तस्य प्रत्यवस्थानं सामान्यशब्दस्यानेकार्थत्वे अन्यतराभिधानकल्पनाया विशेषवचनाद्दर्शनीयमेतत् स्यात् विशेषाज्जानीमोऽयमर्थस्त्वया विवक्षितो नवास्य कंबला इति, न पुनर्नवोस्य कंबल इति । स च विशेषो नास्ति तस्मान्मिथ्याभियोगमात्रमेतदिति । प्रसिद्धश्च लोके शब्दार्थसंबंधोभिधानाभिधेयनियमनियोगोस्याभिधानस्यायमर्थोभिधेय इति समानार्थः सामान्यशब्दस्य, विशिष्टोर्थो विशेषशब्दस्य । प्रयुक्तपूर्वाश्चामी शब्दाः प्रयुज्यंतेऽर्थेषु सामर्थ्यान्नाप्रयुक्तपूर्वाः प्रयोगस्यार्थसंप्रत्ययाद्व्यवहार इति । तत्रैवमर्थगत्यार्थशब्दप्रयोगे सामर्थ्यात्सामान्यशब्दस्य प्रयोगनियमः । अजामानय ग्रामं, सर्पिराहर, ब्राह्मणं भोजयेति सामान्यशब्दाः संतोर्थावयवेषु प्रयुज्यंते सामर्थ्यात् । यत्रार्थे क्रियाचोदना संभवति तत्र वर्तंते, न चार्थसामान्ये अजादौ क्रियाचोदना संभवति । ततोजादिविशेषाणामेवानयनादयः क्रियाः प्रतीयंते न पुनस्तत्सामान्यस्यासंभवात् । एवमयं

सामान्यशब्दो नवकंबल इति योर्थः संभवति नवः कंबलोस्येति तत्र वर्तते, यस्तु न संभवति नवास्य कंबला इति तत्र न वर्तते प्रत्यक्षादिविरोधात् । सोयमनुपपद्यमानार्थकल्पनया परवाक्योपालंभो न कल्पते, तत्र परीक्षायां सतां छलेन प्रत्यवस्थानायोगात् । तदिदं छलवचनं परस्य पराजय एवेति मन्यमानं न्यायभाष्यकारं प्रत्याह;—

**एतेनापि निगृह्येत जिगीषुर्यदि धीधनैः । यत्र वाक्यं तदन्यार्थं व्याचक्षाणो निगृह्यताम् ॥२८४**
**तत्र स्वयमभिप्रेतमर्थं स्थापयितुं न यैः । योऽसामर्थ्योऽपरैः शक्तैः स्वाभिप्रेतार्थसाधने ॥२८५**
**योर्थसंभवन्नर्थः प्रमाणैरुपपद्यते । वाक्ये स एव युक्तोस्तु नापरोतिप्रसंगतः ॥ २८६ ॥**
**यत्र पक्षे विवादेन प्रवृत्तिर्वादिनोरभूत् । तत्सिद्ध्यैवास्य धिक्कारोन्यस्य पत्रे स्थितेन चेत् २८७**
**कैवं पराजयः सिद्धे छलमात्रेण ते मते । संधाहान्यादिदोषैश्च दात्रादात्रोः सपत्रकम् ॥२८८॥**

पत्रपक्षे वादिप्रतिवादिनोर्विमतिपत्त्या प्रवृत्तिस्तत्सिद्धिरेवैकस्य पराजयोन्यस्य, न पुनः यत्र वाक्यार्थोनवस्थापनमिति ब्रुवाणस्य कथं छलमात्रेण प्रतिज्ञाहान्यादिदोषैश्च स पराजयः स्यात् पत्रं दातुरदातुश्चेति चिंत्यतां । न हि यत्र वाक्यविदर्थे तस्य वृत्तिस्तत्सिद्धिश्च पत्रं दातुरदातुः पराजयस्तन्निराकरणं वा तदा दातुर्जयोऽदातुः पराजय इति च द्वितीयार्थेपि तस्य वृत्तिसंभवात्, प्रमाणतस्तथापि प्रतीतेः समानप्रकरणादिकत्वाद्विशेषाभावात् । तथाद्यो वै देवदत्तो नवकंबलस्त्वात्सोमदत्तवत् इति प्रयोगेपि यदि वक्तुर्नवः कंबलोस्येति नवास्य कंबला इति वार्थद्वयं नवकंबलशब्दस्याभिप्रेतं भवति तदा कुतोस्य नवकंबला इति प्रत्यवतिष्ठमानो हेतोरसिद्धतामेवोद्भावयति न पुनश्छलेन प्रत्यवतिष्ठते । तत्परिहाराय च चेष्टमानस्तदुभयार्थसमर्थनेन तदेकतरार्थसमर्थनेन वा हेतुसिद्धिमुपदर्शयति नवस्तावदेकः कंबलोस्य प्रतीतो भवताऽन्येस्याष्टौ कंबला गृहे तिष्ठंतीत्युभयथा नवकंबलत्वस्य सिद्धेः नासिद्धतोद्भावनीया । न कंबलयोगित्वस्य वा हेतुत्वेनोपादानात्सिद्ध एव हेतुरिति स्वपक्षसिद्धौ सत्यामेव वादिनो जयः परस्य च पराजयो नान्यथा । तदेवं वाक्छलमपास्य सामान्यछलमनूद्य निरस्यति;—

**यत्र संभवतोर्थस्य न सामान्यस्य योगतः । असद्भूतपदार्थस्य कल्पना क्रियते बलात् ॥२८९॥**
**तत्सामान्यछलं प्राहुः सामान्यविनिबंधनं । विद्याचरणसंपत्तिर्ब्राह्मणे संभवेदिति ॥ २९० ॥**
**केनाप्युक्ते यथैवं सा व्रात्येपि ब्राह्मणेन किम् । ब्राह्मणत्वस्य सद्भावाद्भवेदित्यपि भाषणम् २९१**
**तदेतन्न छलं युक्तं सपक्षेतरदर्शनात् । तल्लिंगस्यान्यथा तस्य व्यभिचारोखिलोस्तु तत् ॥२९२॥**
**क्वचिदेति तथात्येति विद्याचरणसंपदं । ब्राह्मणत्वमिति ख्यातमिति सामान्यमत्र चेत् ॥२९३॥**
**तथैवास्पर्शवत्त्वादि शब्दं नित्यत्वसाधने । किं न स्यादिति सामान्यं सर्वथाप्यविशेषतः २९४**
**तन्न तस्येति नित्यत्वमत्येति च सुखादिवत् । तेनानैकांतिकं युक्तं सपक्षेतरवृत्तितः ॥ २९५ ॥**
**विद्याचरणसंपत्तिर्विषयस्य प्रशंसनं । ब्राह्मणस्य यथा शालिगोचरक्षेत्रवर्णनम् ॥ २९६ ॥**
**यस्येष्टं प्रकृते वाक्ये तस्य ब्राह्मणधर्मिणि । प्रशस्तत्वे स्वयं साध्ये ब्राह्मणत्वेन हेतुना ॥२९७॥**
**केनानैकांतिको हेतुरुद्भाव्यो न प्रसह्यते । क्षेत्रे क्षेत्रत्ववच्छालियोग्यत्वस्य प्रसाधने ॥ २९८ ॥**

यत्र भवतोर्थस्यातिसामान्यस्य योगादसद्भूतार्थकल्पना हठात् क्रियते तत्सामान्यनिबंधनत्वात् सामान्यछलं प्राहुः । संभवतोर्थस्यातिसामान्यस्य योगादसद्भूतार्थकल्पना सामान्यछलमिति वचनात् । तद्यथा—अहो नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इत्युक्ते केनचित्कश्चिदाह संभवति ब्राह्मणे विद्याचरणसंपदिति, तं प्रत्यस्य वाक्यस्य विघातोर्थविकल्पोपपत्त्याऽसद्भूतार्थकल्पनया क्रियते । यदि ब्राह्मणो विद्या-

ब्राह्मणत्वं संभवति व्रात्येपि संभवात् । व्रात्योपि ब्राह्मणो विद्याचरणसंपन्नोस्तु । तदिदं ब्राह्मणत्वं विवक्षितमर्थं विद्याचरणसंपल्लक्षणं क्वचिद्ब्राह्मणे तादृश्येति क्वचिद्व्रात्येपि तद्भावेपि भावादित्यपि सामान्यं तेन योग्यावक्तुरभिप्रेतादर्थात् सद्भूतादन्यस्यासद्भूतस्यार्थस्य कल्पना सामान्यछलं । तच्च न युक्तं । यस्मादविवक्षिते हेतुकस्य विषयार्थवादः प्रशंसार्थत्वाद्वाक्यस्य तत्रासद्भूतार्थकल्पनानुपपत्तिः । यथा संभवत्यस्मिन् क्षेत्रे शालय इत्यत्राविवक्षितं शालिबीजमनिराकृतं च तन्निवृत्तिविषयक्षेत्रं प्रशस्यते । सोयं क्षेत्रार्थवादो नास्मिन् शालयो विधीयंत इति । बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता । तथा संभवति ब्राह्मणे विद्याचरणसंपदिति सम्यग्विषयो ब्राह्मणत्वं न संपद्धेतुर्न चात्र तद्धेतुर्विवक्षितस्तद्विषयार्थवादस्त्वयं प्रशंसार्थत्वाद्वाक्यस्य सति ब्राह्मणत्वे संपद्धेतुः समर्थ इति विषयत्वाप्रशंसता वाक्येन यथा हेतुफलाभिवृत्तिर्न प्रत्याख्यायते तदेवं सति वचनविघातोसद्भूतार्थकल्पनया नोपपद्यते इति परस्य पराजयस्तथा वचनादित्येवं न्यायभाष्यकारो ब्रुवन्नायं वेत्ति, तथा छलव्यवहारानुपपत्तेः । हेतुदोषस्यानैकांतिकत्वस्य परेणोद्भावना वा न वानैकांतिकत्वोद्भावनमेव सामान्यछलमिति सत्यं वक्तुं सर्वत्र, तस्य सामान्यछलत्वप्रसंगात् । शब्दो नित्योऽस्पर्शवत्त्वादाकाशवदित्यत्र हि यथा शब्दनित्यत्वे साध्ये अस्पर्शवत्त्वमाकाशे नित्यत्वमेति । सुखादिष्वत्येतीति व्यभिचारित्वादनैकांतिकमुच्यते न पुनः सामान्यछलं, तथा प्रकृतमपीति न विशेषः कश्चिदस्ति । सोयं ब्राह्मणे धर्मिणि विद्याचरणसंपद्विषये प्रशंसनं ब्राह्मणत्वेन हेतुना साध्यते, यथा शालिविषयक्षेत्रे प्रशंसा क्षेत्रत्वेन साक्षान्न पुनर्विद्याचरणसंपत्सत्ता साध्यते येनातिप्रशक्यत इति स्वयमनैकांतिकत्वं हेतोः परिहरन्नपि तन्नानुमन्यत इति कथं न्यायवित् ?

तथोपचारछलमनूद्य विचारयन्नाह;—

**धर्माध्यारोपनिर्देशे सत्यार्थप्रतिषेधनम् । उपचारछलं मंचाः क्रोशंतीत्यादिगोचरम् ॥ २९९ ॥**
**मंचाः क्रोशंति गायंतीत्यादिशब्दप्रयोजनम् । आरोप्य स्थानिनां धर्मं स्थानेषु क्रियते जनैः ॥ ३०० ॥**
**गौणं शब्दार्थमाश्रित्य सामान्यादिषु सत्त्ववत् । तत्र मुख्याभिधानार्थे प्रतिषेधश्छलं स्थितम् ॥ ३०१ ॥**
**न चेदं वाक्छलं युक्तं किंचित्साधर्म्यमात्रतः । स्वरूपभेदसंसिद्धेरन्यथातिप्रसंगतः ॥ ३०२ ॥**
**कल्पनार्थांतरस्योक्ता वाक्छलस्य हि लक्षणं । सद्भूतार्थनिषेधस्तूपचारछललक्षणम् ॥ ३०३ ॥**

अत्राभिधानस्य धर्मो यथार्थे प्रयोगस्तस्याध्यारोप्यो विकल्पः अन्यत्र दृष्टस्यान्यत्र प्रयोगः, मंचाः क्रोशंति गायंतीत्यादौ शब्दप्रयोगवत् । स्थानेषु हि मंचेषु स्थानिनां पुरुषाणां धर्ममाक्रोष्टित्वादिकं समारोप्य जनैस्तथा प्रयोगः क्रियते गौणशब्दार्थश्रयणात् सामान्यादिष्वस्तीति शब्दप्रयोगवत् तस्य धर्माध्यारोपनिर्देशे सत्यर्थस्य प्रतिषेधनं न मंचाः क्रोशंति मंचस्थाः पुरुषाः क्रोशंतीति । तदिदमुपचारछलं प्रत्येयं । धर्मविकल्पनिर्देशे अर्थसद्भावप्रतिषेध उपचारछलं इति वचनात् । का पुनरत्रार्थविकल्पोपपत्तिर्यया वचनविघातश्छलमिति, अन्यथा प्रयुक्तस्याभिधानस्य न तथा परिकल्पनं । भक्त्या हि प्रयोगोऽयं मंचाः क्रोशंतीति तात्स्थ्यात्तच्छब्दोपचारात् प्राधान्ये तस्य परिकल्पनं कृत्वा परेण प्रत्यवस्थानं विधीयते । कः पुनरुपचारो नाम ? साहचर्यादिना निमित्तेन तदभावेपि तद्वदभिधानमुपचारः । यद्येवं वाक्छलादुपचारछलं न भिद्यते अर्थांतरकल्पनाया अविशेषात् । इहापि हि स्थानार्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यते नान्यथेति । नैतत्सारं । अर्थांतरकल्पनातोर्थसद्भावप्रतिषेधस्यान्यथात्वात्, किंचित्साधर्म्यात्तयोरेकत्वे वा त्रयाणामपि छलानामेकत्वप्रसंगः । अथ वाक्छलसामान्यछलयोः किंचित्साधर्म्ये सदपि द्वित्वं न निवर्तयति, तर्हि तयोरुपचारछलस्य च किंचित्साधर्म्यं विद्यमानमपि त्रित्वं तेषां न निवर्तयिष्यति, वचनविघातस्यार्थविकल्पोपपत्त्या त्रिष्वपि भावात् । तत्रोभय-

देव वाक्छलादुपचारछलं। तदपि परस्य पराजयायावकल्पते यथावक्त्रभिप्रायमप्रतिषेधात्। शब्दस्य हि प्रयोगो लोके प्रधानभावेन गुणभावेन च प्रसिद्धः। तत्र यदि वक्तुर्गुणभूतोर्थोऽभिप्रेतस्तदा तस्यानुज्ञानं प्रतिषेधो वा विधीयते, प्रधानभूतश्चेत्तस्यानुज्ञानप्रतिषेधौ कर्तव्यौ प्रतिपाद्येत इति न्यायः। यदात्र गौणमात्रं वक्ताभिप्रैति प्रधानभूतं तु तं परिकल्प्य परः प्रतिषेधति तदा तेन स्वमनीषा प्रतिषिद्धा स्यान्न परस्याभिप्राय इति न तस्यायमुपालंभः स्यात्। तदनुपालंभाच्चासौ पराजीयते तदुपालंभापरिज्ञानादिति नैयायिका मन्यंते ॥

तदेतस्मिन् प्रयुक्ते स्यान्निग्रहो यदि कस्यचित्। तदा योगो निगृह्येत प्रतिषेधात् प्रमादिकम्॥३०४

मुख्यरूपतया शून्यवादिनं प्रति सर्वथा। तेन संव्यवहारेण प्रमादेरुपवर्णनात्॥ ३०५॥

सर्वथा शून्यता वादे प्रमाणादेर्विरुध्यते। ततो नायं सतां युक्त इत्यशून्यत्वसाधनात्॥३०६॥

योगेन निग्रहः प्राप्यः स्वोपचारच्छलेपि चेत्। सिद्धः स्वपक्षसिद्ध्यैव परस्यायमसंशयम्॥३०७

अथ जातिं विचारयितुमारभते;—

स्वसाध्यादविनाभावलक्षणे साधने स्थिते। जननं यत्प्रसंगस्य सा जातिः कैश्चिदीरिता॥३०८

"प्रयुक्ते हेतौ यः प्रसंगो जायते सा जातिः" इति वचनात्॥

कः पुनः प्रसंगः? इत्याह;—

प्रसंगः प्रत्यवस्थानं साधर्म्येणेतरेण वा। वैधर्म्योक्तेऽन्यथोक्ते च साधने स्याद्यथाक्रमम् ३०९

उदाहरणवैधर्म्येणोक्ते साधने साधर्म्येण प्रत्यवस्थानमुदाहरणसाधर्म्येणोक्ते वैधर्म्येण प्रत्यवस्थानमुपालंभः प्रतिषेधः प्रसंग इति विज्ञेयं, "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति वचनात्॥

एतदेवाह;—

उदाहरणसाधर्म्यात्साध्यस्यार्थस्य साधनं। हेतुस्तस्मिन् प्रयुक्तेन्यो यदा प्रत्यवतिष्ठते ॥३१०॥

उदाहरणवैधर्म्यात्तत्र व्याप्तिमखंडयत्। तदासौ जातिवादी स्याद्दूषणाभासवाक्ततः॥ ३११॥

यथोदाहृतिवैधर्म्यात्साध्यस्यार्थस्य साधनं। हेतुस्तस्मिन् प्रयुक्तेपि परस्य प्रत्यवस्थितिः॥३१२॥

साधर्म्येणेह दृष्टांते दूषणाभासवादिनः। जायमाना भवेज्जातिरित्यन्वर्थे प्रवक्ष्यते॥ ३१३॥

उद्योतकरस्त्वाह—जातेर्नामस्थापनाहेतौ प्रयुक्ते यः प्रतिषेधासमर्थो हेतुरिति सोपि प्रसंगस्य परपक्षप्रतिषेधार्थस्य हेतोर्जननं जातिरित्यन्वर्थसंज्ञामेव जातिं व्याचष्टेऽन्यथा न्यायभाष्यविरोधात्॥

कथमेवं जातिबहुत्वं कल्पनीयमित्याह;—

सर्वसत्त्वविधर्मत्वप्रत्यवस्थाविकल्पतः। कल्प्यं जातिबहुत्वं स्याद्व्यासतोऽनंतशः सताम्॥३१४

यथा विपर्ययज्ञानाज्ञाननिग्रहभेदतः। बहुत्वं निग्रहस्थानस्योक्तं पूर्वं सुविस्तरम्॥ ३१५॥

तत्र ह्यप्रतिभाज्ञानाननुभाषणपर्यनु—। योज्योपेक्षणविक्षेपा लभंते प्रतिपत्तिताम्॥ ३१६॥

शेषा विप्रतिपत्तित्वं प्राप्नुवंति समासतः। तद्विभिन्नस्वभावस्य निग्रहस्थानमीक्षणात्॥३१७॥

तत्रातिविस्तरेणानंतजातयो न शक्या वक्तुमिति विस्तरेण चतुर्विंशतिजातयः प्रोक्ता इत्युपदर्शयति—

प्रयुक्ते स्थापनाहेतौ जातयः प्रतिषेधिकाः। चतुर्विंशतिरत्रोक्तास्ताः साधर्म्यसमादयः॥३१८

तथा चाह न्यायभाष्यकारः। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षे—

पेणोक्तं, तद्विस्तरेण विभिष्यते । ताश्च खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसंगप्रतिदृष्टांतानुपपत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः" इति सूत्रकारवचनात् ॥

**यत्राविशिष्यमाणेन हेतुना प्रत्यवस्थितिः । साधर्म्येण समा जातिः सा साधर्म्यसमा मता ॥३१९**
**निर्वक्तव्यास्तथा शेषास्ता वैधर्म्यसमादयः । लक्षणं पुनरेतासां यथोक्तमभिभाष्यते ॥ ३२० ॥**

अत्र जातिषु या साधर्म्येण प्रत्यवस्थितिरविशिष्यमाणस्थापनाहेतुतः सा साधर्म्यसमा जातिः । एवमविशिष्यमाणस्थापनाहेतुतो वैधर्म्येण प्रत्यवस्थितिः वैधर्म्यसमा । तथोत्कर्षादिभिः प्रत्यवस्थितयः उत्कर्षादिसमा इति निर्वक्तव्याः । लक्षणं तु यथोक्तमभिभाष्यते तत्र ॥

**साधर्म्येणोपसंहारे तद्धर्मस्य विपर्ययात् । यस्तत्र दूषणाभासः स साधर्म्यसमो मतः ॥ ३२१ ॥**
**यथा क्रियाभृदात्मायं क्रियाहेतुगुणाश्रयात् । य ईदृक्षः स ईदृक्षो यथा लोष्ठस्तथा च सः ॥३२२**
**तस्मात्क्रियाभृदित्येवमुपसंहारभाषणे । कश्चिदाहाक्रियो जीवो विभुद्रव्यत्वतो यथा ॥ ३२३ ॥**
**व्योम तथा न विज्ञातो विशेषस्य प्रसाधकः । हेतुः पक्षद्वयेऽप्यस्ति ततोयं दोषसन्निभः ॥ ३२४**
**साध्यसाधनयोर्व्याप्तेर्विच्छेदस्यासमर्थनात् । तत्समर्थनतंत्रस्य द्वेषत्वेनोपवर्णनात् ॥ ३२५ ॥**

नास्त्यात्मनः क्रियावत्त्वे साध्ये क्रियाहेतुगुणाश्रयत्वस्य साधनस्य स्वसाध्येन व्याप्तिर्विमुत्वान्निष्क्रियत्वसिद्धौ विच्छिद्यते, न च तदविच्छेदे तद्दूषणत्वं साध्यसाधनयोर्व्याप्तिविच्छेदसमर्थनतंत्रस्यैव दोषत्वेनोपवर्णनात् । तथा चोक्तं न्यायभाष्यकारेण । "साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः प्रतिषेध" इति । निदर्शनं, क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगात् । द्रव्यं लोष्ठः स च क्रियाहेतुगुणयुक्तः क्रियावांस्तथा चात्मा तस्मात्क्रियावानित्येवमुपसंहृत्य परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वात् । विभ्वाकाशं निष्क्रियं तथा चात्मा तस्मान्निष्क्रिय इति । न चास्ति विशेषः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं, न पुनर्निष्क्रियसाधर्म्यात् क्रियेणेति विशेषः । हेत्वभावात्साधर्म्यसमात्तदूषणाभासो भवतीत्यत्र वार्तिककार एवमाह—साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येणोपसंहारे तत्साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः । यथा अनित्यः शब्द उत्पत्तिधर्मकत्वात् । उत्पत्तिधर्मकं कुंभाद्यनित्ये दृष्टमिति वादिनोपसंहृते परः प्रत्यवतिष्ठते । यद्यनित्यघटसाधर्म्यादयमनित्यो नित्येनाप्यस्याकाशेन साधर्म्यममूर्तत्वमस्तीति नित्यप्राप्तः, तथा अनित्यः शब्द उत्पत्तिधर्मकत्वात् यत्पुनरनित्यं न भवति तन्नोत्पत्तिमदर्थकं यथाकाशमिति प्रतिपादिते परः प्रत्यवतिष्ठते । यदि नित्याकाशवैधर्म्यादनित्यः शब्दस्तदा साधर्म्यमप्यस्याकाशेनास्त्यमूर्तत्वमतो नित्यः प्राप्तः । अथ सत्यप्येतस्मिन् साधर्म्ये न नित्यो भवति, न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वा अनित्यः शब्द इति । सेयं जातिः विशेषहेत्वभावं दर्शयति विशेषहेत्वभावाच्चानैकांतिकचोदनाभासो गोत्वाद्गोसिद्धिवदुत्पत्तिधर्मकत्वादनित्यत्वसिद्धिः । साधर्म्यं हि यदन्वयव्यतिरेकि गोत्वं तस्मादेव गौः सिध्यति न सत्त्वादेस्तस्य गोरित्यत्राश्वादावपि भावादव्यतिरेकित्वात् । एवमगोवैधर्म्यमपि गोः साधनं नैकशफत्वादित्वस्याव्यतिरेकित्वादेव पुरुषादावपि भावात् । गोत्वं पुनर्गोवि दृश्यमानमन्वयव्यतिरेकि गोः साधनमुपपद्यते तद्वदुत्पत्तिधर्मकत्वं घटादावनित्यत्वे सति भावादाकाशादौ वा नित्यत्वाभावे अभावादन्वयव्यतिरेकि शब्दे समुपलभ्यमानमनित्यत्वस्य साधनं, न पुनरनित्यघटसाधर्म्यमात्रसत्त्वादिकमप्याकाशवैधर्म्यमात्रममूर्तत्वादि तस्यान्वयव्यतिरेकित्वाभावात् । ततोन

प्रत्यवस्थानमयुक्तं दूषणाभासत्वादिति । एतेनात्मनः क्रियावत्साधर्म्यमात्रं निष्क्रियवैधर्म्यमात्रं वा क्रियावत्त्वसाधनं प्रत्याख्यातमन्वयव्यतिरेकित्वात्, अन्वयव्यतिरेकिण एव साधनस्य साध्यसाधनसामर्थ्यात् ॥

तत्रैव प्रत्यवस्थानं वैधर्म्येणोपदर्श्यते । यः क्रियावान्स दृष्टोत्र क्रियाहेतुगुणाश्रयः ॥ ३२६ ॥
यथा लोष्ठो न चात्मैवं तस्मान्निष्क्रिय एव सः । पूर्ववद्दूषणाभासो वैधर्म्यसम ईदृशम् ३२७

क्रियावानात्मा क्रियाहेतुगुणाश्रयत्वाल्लोष्ठवदित्यत्र वैधर्म्येण प्रत्यवस्थानं, यः क्रियाहेतुगुणाश्रयो लोष्ठः स क्रियावान् परिच्छिन्नो दृष्टो न च तथात्मा तस्मान्न लोष्ठवत्क्रियावानिति निष्क्रिय एवेत्यर्थः । सोऽयं साधर्म्येणोपसंहारे वैधर्म्येण प्रत्यवस्थानात् वैधर्म्यसमः प्रतिषेधः पूर्ववद्दूषणाभासो वेदितव्यः ॥ का पुनर्वैधर्म्यसमा जातिरित्याह;—

वैधर्म्येणोपसंहारे साध्यधर्मविपर्ययात् । वैधर्म्येणेतरेणापि प्रत्यवस्थानमिष्यते ॥ ३२८ ॥
या वैधर्म्यसमा जातिरिदं तस्या निदर्शनम् । नरो निष्क्रिय एवायं विभुत्वात्सक्रियः पुनः ॥
विभुत्वरहितं दृष्टं लोष्ठादि न तथा नरः । तस्मान्निष्क्रिय इत्युक्ते प्रत्यवस्था विधीयते॥३३०॥
वैधर्म्येणैव सा तावत्कैश्चिन्निग्रहभीरुभिः । कर्मबंधक्रियाहेतुगुणादीनां समीक्षितं ॥ ३३१ ॥
नैवमात्मा ततो नायं निष्क्रियः संप्रतीयते । साधर्म्येणापि तत्रैवं प्रत्यवस्थानमुच्यते ॥३३२॥
क्रियावानेव लोष्ठादिः क्रियाहेतुगुणाश्रयः । तृष्णातादृक्त्वजीवोपि तस्मात्सक्रिय एव सः ३३३
इति साधर्म्यवैधर्म्यसमयो दूषणोद्भवात् । सधर्मत्वविधर्मत्वमात्रात्साध्याप्रसिद्धितः ॥ ३३४ ॥

अथोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा साध्याया विधीयंते;—

साध्यदृष्टांतयोर्धर्मविकल्पाद्वयसाध्यता । सद्भावाच्च मता जातिरुत्कर्षेणापकर्षतः ॥ ३३५ ॥
वर्ण्यावर्ण्यविकल्पैश्च साध्येन च समाः पृथक् । तस्याः प्रतीयतामेतल्लक्षणं सन्निदर्शनम्॥३३६

यदाह, साध्यदृष्टांतयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा इति ॥

तत्रोत्कर्षसमा तावल्लक्षणतो निदर्शनतश्चापि विधीयते;—

दृष्टांतधर्मं साध्यार्थे समासंजयतः स्मृता । तत्रोत्कर्षसमा यद्वत्क्रियावज्जीवसाधने ॥ ३३७ ॥
क्रियाहेतुगुणासंगी यद्यात्मा लोष्ठवत्तदा । तद्वदेव भवेदेष स्पर्शवानन्यथा न सः ॥ ३३८ ॥

दृष्टांतधर्मं साध्ये समासंजयतः स्मृतोत्कर्षसमा जातिः स्वयं, यथा क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्ठवत् इत्यत्र क्रियावज्जीवसाधने प्रोक्ते सति परः प्रत्यवतिष्ठते । यदि क्रियाहेतुगुणासंगी पुमांल्लोष्ठवत्तदा लोष्ठवदेव स्पर्शवान् भवेत् । अथ न स्पर्शवांल्लोष्ठवदात्मा क्रियावानपि न स स्यादिति विपर्यये वा विशेषो वाच्य इति ॥

का पुनरपकर्षसमेत्याह;—

साध्यधर्मिणि धर्मस्याभावं दृष्टांततो वदन् । अपकर्षसमां वक्ति जातिं तत्रैव साधने ॥३३९॥
लोष्ठः क्रियाश्रयो दृष्टो विभुः कामं तथास्तु मा । तद्विपर्ययपक्षे वा वाच्यो हेतुर्विशेषकृत् ३४०

तत्रैव क्रियावज्जीवसाधने प्रयुक्ते सति साध्यधर्मिणि धर्मस्याभावं दृष्टांतात् समासंजयन् यो वक्ति सोऽपकर्षसमां जातिं वदति । यथा लोष्ठः क्रियाश्रयोऽसर्वगतो दृष्टस्तद्वदात्मा सदाप्यसर्वगतोऽस्तु विपर्यये वा विशेषकृद्धेतुर्वाच्य इति ॥

वर्ण्यावर्ण्यसमौ प्रतिषेधकावित्याह;—

**स्थापनीयो मतो वर्ण्यः स्यादवर्ण्यो विपर्ययात् । तत्समा साध्यदृष्टांतधर्मयोरत्र साधने ३४१**
**विपर्यासनतो जातिर्विज्ञेया तद्विलक्षणा । भिन्नलक्षणतायोगात्कथंचित्पूर्वजातिवत् ॥ ३४२ ॥**

स्थापनीयो वर्ण्यस्तद्विपर्ययादस्थापनीयः पुनरवर्ण्यस्तेन वर्ण्येनावर्ण्येन च समा जातिर्वर्ण्यसमावर्ण्यसमा च विज्ञेया । अत्रैव साधने साध्यदृष्टांतधर्मयोर्विपर्यासनात् । उत्कर्षापकर्षसमाभ्यां कुतोनयोर्भेद इति चेत्, लक्षणभेदात् । तथाहि—अविद्यमानधर्मव्यापक उत्कर्षः विद्यमानधर्मापनयोऽपकर्षः । वर्ण्यस्तु साध्योऽवर्ण्योऽसाध्य इति, तत्प्रयोगाज्जातयो विभिन्नलक्षणाः साधर्म्यवैधर्म्यसमवत् ॥

**साध्यधर्मविकल्पं तु धर्मांतरविकल्पतः । प्रसंजयत इष्येत विकल्पेन समा बुधैः ॥ ३४३ ॥**
**क्रियाहेतुगुणोपेतं किंचिद्गुरु समीक्ष्यते । परं लघु यथा लोष्ठो वायुश्चेति क्रियाश्रयं ॥३४४॥**
**किंचित्तदेव युज्येत यथा लोष्ठादि निष्क्रियं । किंचिन्न स्याद्यथात्मेति विशेषो वा निवेदताम् ३४५**

विशेषो विकल्पाविशेषः साध्यधर्मस्य विकल्पः साध्यधर्मविकल्पस्तं धर्मांतरविकल्पात्प्रसंजयतस्तु विकल्पसमा जातिः तत्रैव साधने प्रयुक्ते परः प्रत्यवतिष्ठते । क्रियाहेतुगुणोपेतं किंचिद्गुरु दृश्यते यथा लोष्ठादि, किंचित्तु लघु समीक्ष्यते यथा वायुरिति । तथा क्रियाहेतुगुणोपेतमपि किंचित्क्रियाश्रयं युज्यते यथा लोष्ठादि, किंचित्तु लघु समीक्ष्यते यथा वायुरिति, किंचित्तु निष्क्रियं यथात्मेति वर्ण्यावर्ण्यसमाभ्यामियं भिन्ना तत्रैवं प्रत्यवस्थानाभावात् वर्ण्यावर्ण्यसमयोर्ह्येवं प्रत्यवस्थानं, यद्यात्मा क्रियावान् वर्ण्यः साध्यस्तदा लोष्ठादिरपि साध्योस्तु । अथ लोष्ठादिरवर्ण्यस्तर्ह्यात्माप्यवर्ण्योस्तु, विशेषो वा वक्तव्य इति । विकल्पसमायां तु क्रियाहेतुगुणाश्रयस्य गुरुलघुविकल्पवत्सक्रियनिष्क्रियत्वविकल्पोस्त्विति प्रत्यवस्थानं । अतोसौ भिन्ना ॥

का पुनः साध्यसमेत्याह;—

**हेत्वादिकांगसामर्थ्ययोगी धर्मोवधार्यते । साध्यस्तमेव दृष्टांते प्रसंजयति यो नरः ॥ ३४६ ॥**
**तस्य साध्यसमा जातिरुद्भाव्या तत्त्ववित्तकैः । यथा लोष्ठस्तथा चात्मा यथात्मायं तथा न किम् ॥**
**लोष्ठः स्यात्सक्रियश्चात्मा साध्यो लोष्ठोपि तादृशः । साध्योस्तु नेति चेल्लोष्ठो यथात्मापि तथा कथं**

हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्योऽवधार्यते तमेव दृष्टांते प्रसंजयति यो वादी तस्य साध्यसमा जातिस्तत्त्वपरीक्षकैरुद्भावनीया । तद्यथा—तत्रैव साधने प्रयुक्ते परः प्रत्यवस्थानं करोति यदि यथा लोष्ठस्तथात्मा, तदा यथात्मा तथायं लोष्ठः स्यात् सक्रिय इति, साध्यश्चात्मा लोष्ठोपि साध्योस्तु सक्रियः इति । अथ लोष्ठः क्रियावान् साध्यस्तर्ह्यात्मापि क्रियावान् साध्यो मा भूत्, विशेषो वा वक्तव्य इति ॥

कथमासां दूषणाभासत्वमित्याह;—

**दूषणाभासता त्वत्र दृष्टांतादिसमर्थना । युक्ते साधनधर्मेपि प्रतिषेधमलब्धितः ॥ ३४९ ॥**
**साध्यदृष्टांतयोर्धर्मविकल्पादुपवर्णितात् । वैधर्म्ये गवि सादृश्ये गवयेन यथा स्थिते ॥ ३५० ॥**
**साध्यातिदेशमात्रेण दृष्टांतस्योपपत्तितः । साध्यत्वासंभवाच्चोक्तं दृष्टांतस्य न दूषणं ॥ ३५१ ॥**

क्रियावानात्मा क्रियाहेतुगुणाश्रयत्वाल्लोष्ठवदित्यादौ दृष्टांतादिसमर्थनयुक्ते साधनधर्मे प्रयुक्ते सत्यपि साध्यदृष्टांतयोर्धर्मविकल्पादुपवर्णिताद्वैधर्म्येण प्रतिषेधस्य कर्तुमलब्धेः किंचित्साधर्म्यादुपसंहारसिद्धेः ।

तदाह न्यायभाष्यकारः । "अलभ्यः सिद्धस्य निह्नवः सिद्धं च किंचित्साधर्म्यादुपमानं यथा गौस्तथा गवय" इति । तत्र न लभ्यो गोगवययोर्धर्मविकल्पश्चोदयितुं । एवं साधनधर्मे दृष्टांतादिसामर्थ्ययुक्ते सति न लभ्यः साध्यदृष्टांतयोर्धर्मविकल्पाद्वैधर्म्यात् प्रतिषेधो वक्तुमिति । साध्यातिदेशमात्राच्च दृष्टांतस्योपपत्तेः साध्यत्वासंभवात् । यत्र हि लौकिकपरीक्षकाणां बुद्धेरभेदस्तेनाविपरीतोर्थः साध्येऽतिदिश्यते प्रज्ञापनार्थं । एवं च साध्यातिदेशाद् दृष्टांते क्वचिदुपपद्यमाने साध्यत्वमनुपपन्नमिति । तथोद्योतकरोप्याह । दृष्टांतः साध्य इति⋯⋯⋯⋯यथा भवता न दृष्टांतलक्षणं व्यज्ञायि । दृष्टांतो हि नाम दर्शनयोर्विहितयोर्विषयः । तथा च साध्यमनुपपन्नं । अथ दर्शनं विहन्यते तर्हि नासौ दृष्टांतो लक्षणाभावादिति ॥

**प्राप्त्या यत्प्रत्यवस्थानं जातिः प्राप्तिसमैव सा । अप्राप्त्या पुनरप्राप्तिसमा सत्साधनेरणे ॥ ३५२**
**यथायं साधयेद्धेतुः साध्यप्राप्यान्यथापि वा । प्राप्त्या चेद्युगपद्भावात्साध्यसाधनधर्मयोः ३५३**
**प्राप्तयोः कथमेकस्य हेतुतान्यस्य साध्यता । युक्तेति प्रत्यवस्थानं प्राप्त्या तावदुदाहृतम् ॥३५४**
**अप्राप्य साधयेत्साध्यं हेतुश्चेत्सर्वसाधनः । सोस्तु दीपो हि नाप्राप्तपदार्थस्य प्रकाशकः॥३५५**
**इत्यप्राप्यावबोद्धव्यं प्रत्यवस्थानिदर्शनम् । तावेतौ दूषणाभासौ निषेधस्यैवमन्वयात् ॥ ३५६ ॥**
**प्राप्तस्यापि दंडादेः कुंभसाधकतेष्यते । तथाभिचारमंत्रस्य प्राप्तस्यासातकारिता ॥ ३५७ ॥**

नन्वत्र कारकस्य हेतोः प्राप्तस्याप्राप्तस्य च दंडादेरभिचारमंत्रादेश्च स्वकार्यकारितोपदर्शिता ज्ञापकस्य तु हेतोः प्राप्तस्याप्राप्तस्य वा स्वसाध्या प्रकाशिता चोदितेति न संगतिरस्तीति कश्चित् । तदसत् । कारकस्य ज्ञापकस्य वा विशेषेण प्रतिक्षेपोयमित्येवं ज्ञापनार्थत्वात्कारकहेतुव्यवस्थापनस्य । तेन ज्ञापकोपि हेतुः कश्चित्प्राप्तः स्वसाध्यस्य ज्ञापको दृष्टो यथा संयोगी धूमादिः पावकादेः । कश्चिदप्राप्तो विश्लेषे, यथा कृत्तिकोदयः शकटोदयस्येत्यपि विज्ञायते । यथायं सर्वोपि पक्षीकृतस्तर्हि येन हेतुना प्रतिषिध्यते सोपि प्रतिषेधको न स्यादुभयथोक्तदूषणप्रसंगादित्यप्रतिषेधस्ततो दूषणाभासाविमौ प्रतिपत्तव्यौ ॥

**वक्तव्यं साधनस्यापि साधनं वादिनेति तु । प्रसंगवचनं जातिः प्रसंगसमतां गता ॥ ३५८ ॥**
**क्रियाहेतुगुणोपेतः क्रियावांल्लोष्ठ इष्यते । कुतो हेतोर्विना तेन कस्यचिन्न व्यवस्थितिः ॥३५९**
**एवं हि प्रत्यवस्थानं न युक्तं न्यायवादिनां । वादिनोर्यत्र वा साम्यं तस्य दृष्टांततास्थितिः ३६०**
**यथा रूपं दिदृक्षूणां दीपादीनां प्रतीयते । स्वयं प्रकाशमानं तु दीपं दीपांतराग्रहात् ॥३६१॥**
**तथा साध्यप्रसिद्ध्यर्थं दृष्टांतग्रहणं मतं । प्रज्ञातात्मनि दृष्टांते त्वफलं साधनांतरम् ॥ ३६२ ॥**
**प्रतिदृष्टांतरूपेण प्रत्यवस्थानमिष्यते । प्रतिदृष्टांततुल्येति जातिस्तत्रैव साधना ॥ ३६३ ॥**
**क्रियाहेतुगुणोपेतं दृष्टमाकाशमक्रियं । क्रियाहेतुर्गुणो व्योम्नि संयोगो वायुना स च ॥३६४॥**
**संस्कारापेक्षणो यद्वत्संयोगस्तेन पादपे । स चायं दूषणाभाससाधनाप्रतिबंधकः ॥ ३६५ ॥**
**साधकः प्रतिदृष्टांतो दृष्टांतोपि हि हेतुना । तेन तद्वचनाभावात् सदृष्टांतोस्तु हेतुकः ॥३६६॥**

एवं ह्याह, दृष्टांतस्य कारणमपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टांतेन प्रसंगप्रतिदृष्टांतसमौ । तत्र साधनस्यापि दृष्टांतस्य साधनं कारणं प्रतिपत्तौ वाच्यमप्रसंगेन प्रत्यवस्थानं प्रसंगसमः प्रतिषेधः तत्रैव साधने क्रियाहेतुगुणयोगात् क्रियावांल्लोष्ठ इति हेतुनापदिश्यते, न च हेतुमंतरेण कस्यचित्सिद्धिरस्तीति । सोयमेवं वदन्दूषणाभासवादी न्यायवादिनामेवं प्रत्यवस्थानस्यायुक्तत्वात् । अत्र वादिप्रतिवादिनोः बुद्धि-

सामान्यस्य दृष्टांतत्वव्यवस्थितेः । यथा हि रूपं दिदृक्षूणां प्रदीपोपादानं प्रतीयते न पुनः स्वयं प्रकाशमानं प्रदीपं दिदृक्षूणां तेषां तद्ग्रहणात् । तथा साध्यस्यात्मनः क्रियावत्त्वस्य प्रसिद्ध्यर्थं दृष्टांतस्य लोष्ठस्य ग्रहणमभिप्रेतं न पुनर्दृष्टांतस्यैव प्रसिद्ध्यर्थं साधनांतरस्योपादानं प्रज्ञातस्वभावदृष्टांतत्वोपपत्तेः तत्र साधनांतरस्याफलत्वात् । तथा प्रतिदृष्टांतरूपेण प्रत्यवस्थानं प्रतिदृष्टांतसमा जातिस्तत्रैव साधने प्रयुक्ते कश्चित् प्रतिदृष्टांतेन प्रत्यवतिष्ठते क्रियाहेतुगुणाश्रयमाकाशं निष्क्रियं दृष्टमिति । कः पुनराकाशस्य क्रियाहेतुर्गुणसंयोगो वायुना सह, स च संस्कारापेक्षो दृष्टो यथा पादपे वायुना संयोगः कालत्रयेप्यसंभवादाकाशे क्रियायाः । कथं क्रियाहेतुर्वायुना संयोग इति न शंकनीयं, वायुना संयोगो न वनस्पतौ क्रियाकारणेन प्रसिद्धेन समानधर्मत्वादाकाशे वायुसंयोगस्य, यत्त्वसौ तथाभूतः क्रियां न करोति तत्राकारणत्वादपि तु प्रतिबंधान्महापरिमाणेन । यथा मंदवायुनानंतानां लोष्ठादीनामिति । यदि च क्रिया दृष्टा क्रियाकारणं वायुसंयोग इति मन्यसे तदा सर्वकारणं क्रियानुशेषं भवतः प्राप्तं । ततश्च कस्यचित्कारणस्योपादानं प्राप्नोति क्रियार्थिनां किमिदं करिष्यति किं वा न करिष्यतीति संदेहात् । यस्य पुनः क्रियासमर्थत्वादुपादानं कारणस्य युक्तं तस्य सर्वमाभाति । अथ क्रियाकारणवायुवनस्पतिसंयोगसदृशो वा प्रकाशसंयोगोन्यश्चान्यत् क्रियाकारणमिति मन्यसे, तर्हि न कश्चिद्धेतुरनैकांतिकः स्यात् । तथाहि । अनित्यः शब्दो मूर्तत्वात्सुखादिवदित्यत्रामूर्तत्वहेतुः शब्दोन्योन्यश्चाकाशे तत्सदृश इति कथमस्याकाशेनानैकांतिकत्वं सर्वानुमानाभावप्रसंगश्च भवेत्, अनुमानस्यान्येन दृष्टस्यान्यत्र दृश्यादेव प्रवर्तनात् । न हि ये धूमधर्माः क्वचिद्धूमे दृष्टांत एव, धूमांतरेष्वपि दृश्यंते तत्सदृशानां दर्शनात् । ततोऽनेन कस्यचिद्धेतोरनैकांतिकत्वमिच्छता क्वचिदनुमानाप्रवृत्तिश्चाकुर्वता तद्धर्मसदृशस्तद्धर्मोनुमंतव्य इति क्रियाकारणवायुवनस्पतिसंयोगसदृशो वाय्वाकाशसंयोगोपि क्रियाकारणमेव । तथा च प्रतिदृष्टांतेनाकाशेन प्रत्यवस्थानमिति प्रतिदृष्टांतसमप्रतिषेधवादिनोभिप्रायः । स चायुक्तः । प्रतिदृष्टांतसमस्य दूषणाभासत्वात् प्रकृतसाधनाप्रतिबंधित्वात्तस्य, प्रतिदृष्टांतो हि स्वयं हेतुः साधकः साध्यस्य न पुनरन्येन हेतुना तस्यापि दृष्टांतांतरापेक्षायां दृष्टांतांतरस्य वा परेण हेतुना साधकत्वे परापरदृष्टांतहेतुपरिकल्पनायामनवस्थाप्रसंगात् । तथा दृष्टांतोपि न परेण हेतुना साधकः प्रोक्तानवस्थानुषंगसमानत्वात्ततो दृष्टांतेपि प्रतिदृष्टांत इव हेतुवचनाभावाद्भवतो दृष्टांतोस्तु हेतुक एव । तदाहोद्योतकरः । प्रतिदृष्टांतस्य हेतुभावं प्रतिपद्यमानेन दृष्टांतस्यापि हेतुभावोभ्युपगंतव्यः । हेतुभावश्च साधकत्वं स च कथमहेतुर्न स्यात् । यद्यप्रतिषिद्धः स्यात् अप्रतिसिद्धश्चायं साधकः । किं च, यदि तावदेवं ब्रूते यथायं त्वदीयो दृष्टांतो लोष्ठादिस्तथा मदीयोप्याकाशादिरिति तदा दृष्टांतस्य लोष्ठादेरभ्युपगमान्न दृष्टांतत्वं व्याघातत्वात् । अथैवं ब्रूते यथायं मदीयो दृष्टांतस्तथा त्वदीय इति तथापि न दृष्टांतः कश्चित् व्याघातादेव दृष्टांतप्रतिदृष्टांतत्वैः परस्परं व्याघातः समानबलत्वात् । तयोरदृष्टांतत्वे तु प्रतिदृष्टांतत्वे दृष्टांतस्यादृष्टांतत्वव्याघातः प्रतिदृष्टांताभावे तस्य दृष्टांतत्वोपपत्तेः दृष्टांतस्य चादृष्टांतत्वे प्रतिदृष्टांतस्यादृष्टांतत्वव्याघातः दृष्टांताभावे तस्य प्रतिदृष्टांततोपपत्तेः । न चोभयोर्दृष्टांतत्वं व्याघातादिति न प्रतिदृष्टांतेन प्रत्यवस्थानं युक्तम् ॥

**कारणाभावतः पूर्वमुत्पत्तेः प्रत्यवस्थितिः । यानुत्पत्त्या परस्योक्ता सानुत्पत्तिसमा भवेत् ३६७**
**शब्दो विनश्वरात्सैवमुपपन्नो भवत्वतः । कदंबादिवदित्युक्ते साधने प्राह कश्चन ॥ ३६८ ॥**
**प्रागुत्पत्तेरनुत्पन्ने शब्दे नित्यत्वकारणं । प्रयत्नानंतरोत्थत्वं नास्तीत्येषोऽविनश्वरः ॥ ३६९ ॥**
**प्रागवस्थस्य च शब्दस्य नोत्पत्तिः स्यात्प्रयत्नतः । प्रत्यवस्थेत्यनुत्पत्त्या जातिर्न्यायातिलंघनात् ३७०**

उत्पन्नस्यैव शब्दस्य तथाभावप्रसिद्धितः । प्रागुत्पत्तेर्न शब्दोस्तीत्युपालंभः किमाश्रयः ॥३७१॥
सत एव तु शब्दस्य प्रयत्नानंतरोत्थता । कारणं नश्वरत्वेस्ति तन्निषेधस्ततः कथम् ॥ ३७२ ॥

उत्पत्तेः पूर्वं कारणाभावतो या प्रत्यवस्थितिः परस्यानुत्पत्तिसमा जातिरुक्ता भवेत् । "प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इति वचनात् । तद्यथा—विनश्वरः शब्दः पुरुषप्रयत्नोद्भवात् कटकादिवदित्युक्ते साधने सति पर एवं ब्रवीति प्रागुत्पत्तेरनुत्पन्ने शब्दविनश्वरत्वस्य कारणं यत्प्रयत्नानंतरीयकत्वं तन्नास्ति ततोयमविनश्वरः, शाश्वतस्य च शब्दस्य न प्रयत्नानंतरं जन्मेति सेयमनुत्पत्त्या प्रत्यवस्था दूषणाभासो न्यायातिलंघनात् । उत्पन्नस्यैव हि शब्दधर्मिणः प्रयत्नानंतरीयकत्वमुत्पत्तिधर्मकत्वं वा भवति, नानुत्पन्नस्य प्रागुत्पत्तेः शब्दस्य चासत्त्वे किमाश्रयोयमुपालंभः । न ह्ययमनुत्पत्तौ सन्नेव शब्द इति वा प्रयत्नानंतरीयक इति वा अनित्य इति वा व्यपदेशं शक्यः । शब्दे तु सिद्धमेव प्रयत्नानंतरीयकत्वं कारणं नश्वरत्वे साध्ये । ततः कथमस्य प्रतिषेधः किं वायं हेतुर्ज्ञापको न पुनः कारको, ज्ञापके च कारकवत्प्रत्यवस्थानमसंबद्धमेव । ज्ञापकस्यापि किंचित्कुर्वतः कारकत्वमेवेति चेत् न, क्रियाहेतोरेव कारकत्वोपपत्तेरस्यानुत्पत्तेस्ति हेतोर्ज्ञापकत्वात् । कारकता हि वस्तूत्पादयति ज्ञापकस्तूत्पन्नं वस्तु ज्ञापयतीत्यस्ति विशेषः । कारकविशेषे वा ज्ञापके कारकसामान्यवत्प्रत्यवस्थानमयुक्तं । किं च—प्रागुत्पत्तेरप्रयत्नानंतरीयको अनुत्पत्तिधर्मको वा शब्द इति ब्रुवाणः शब्दमभ्युपैति नासतो प्रयत्नानंतरीयकत्वादिधर्म इति तत्त्वस्य विशेषणमनर्थकं प्रागुत्पत्तौ इति । अपरे तु प्राहुः, प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयमिति प्रागुत्पत्तेः प्रयत्नानंतरीयकत्वस्याभावादप्रयत्नानंतरीयकत्वाच्च इति कृते सत्यत्युत्तरं ब्रूते । नायं नियमो अप्रयत्नानंतरीयकत्वं नित्यमिति तु, न हि तस्य गतिः किंचिन्नित्यमाकाशाद्येव, केषांचिदनित्यं विद्युदादि, किंचिदसदेवाकाशपुष्पादीति । एतत्तु न पश्यन्त्युक्तमिति पश्यामः । कथमिति? यत्तावदसत्तदप्रयत्नानंतरीयकत्वं व्यजन्मविशेषणत्वात् । यस्याप्रयत्नानंतरं जन्म तदप्रयत्नानंतरीयकं न चाभावो विद्यते अतो न तस्य जन्म यच्चासत् किं तस्य विशेष्यमस्ति । एतेन नित्यं प्रयुक्तं, न हि नित्यमप्रयत्नानंतरीयकमिति युक्तं वक्तुं, तस्य जन्माभावादिति जातिलक्षणाभावान्नेयमनुत्पत्तिसमा जातिरितिचेत् नानुत्पत्तेरहेतुभिः साधर्म्यात् योनुत्पन्न··········भिस्तद्यथानुत्पन्नास्तंतवो न पटस्य कारणमिति ॥

सामान्ये घटयोस्तुल्य ऐंद्रियत्वे व्यवस्थिते । नित्यानित्यत्वसाधर्म्यात् संशयेन समा मता ३७३
तत्रैव साधने प्रोक्ते संशयेन स्वयं परः । प्रत्यवस्थानमाधत्ते पश्यन् सद्भूतदूषणम् ॥ ३७४ ॥
प्रयत्नानंतरोत्थेपि शब्दे साधर्म्यमैंद्रिये । सामान्येनास्ति नित्येन घटेन च विनाशिना॥३७५॥
तादृशेनेति संदेहो नित्यानित्यत्वधर्मयोः । स चायुक्तो विशेषेण शब्दानित्यत्वसिद्धितः ३७६
यथा पुंसि विनिर्णीते शिरःसंयमनादिना । पुरुषस्थाणुसाधर्म्याद्धर्मत्वान्नास्ति संशयः॥३७७॥
तथा प्रयत्नजत्वेनानित्ये शब्दे विनिश्चिते । घटसामान्यसाधर्म्यादैंद्रियत्वान्न संशयः ॥३७८॥
संदेहेत्यंतसंदेहः साधर्म्यस्याविनाशतः । पुंसित्वादिगतस्येति निर्णयः क्वास्पदं व्रजेत्॥३७९॥

ननु नैषा संशयसमा साधर्म्यसमातो न भिद्यते एवोदाहरणसाधर्म्यात् तस्याप्रवर्तनादिति न चोद्यं, संशयसमानोभयसाधर्म्यात्प्रवृत्तेः । साधर्म्यसमाया एकसाधर्म्यादुपदेशात् । ततो जात्यंतरमेव संशयसमा । तथाहि—नित्यः शब्दः प्रयत्नानंतरीयकत्वात् घटवदिति, अत्र च साधने प्रयुक्ते सति परः स्वयं संशयेन प्रत्यवस्थानं करोति सद्भूतं दूषणमपश्यन्, प्रयत्नानंतरीयकेपि शब्दे सामान्येन साधर्म्यमैंद्रियकत्वं

नित्येनास्ति घटेन वानित्येनेति संशयः । शब्दे नित्यानित्यत्वधर्माधर्मयोरित्येषा संशयसमा जातिः । सामान्यघटयोरैंद्रियकत्वे सामान्ये स्थिते नित्यानित्यसाधर्म्यान्न पुनरेकसाध र्म्यात् । सामान्यदृष्टां-तयोरैंद्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसम इति वचनात् । अत्र संशयो न युक्तो विशेषेण शब्दानित्यत्वसिद्धेः । तथाहि—पुरुषे शिरःसंयमनादिना विशेषेण नित्यत्वे सति न पुरुषस्थाणुसाधर्म्यादूर्द्धत्वात्संशयस्तथा प्रयत्नानंतरीयकत्वेन विशेषेणानित्ये शब्दे निश्चिते सति न घटसामान्यसाधर्म्यादैंद्रियकत्वात्संशयः अत्यंतसंशयः । साधर्म्यस्याविनाशित्वात् पुरुषस्थाण्वादिगत-स्येति निर्णयः क्वास्पदं प्राप्नुयात् । साधर्म्यमात्राद्धि संशये क्वचिद्वैधर्म्यदर्शनान्निर्णयो युक्तो न पुनर्वैधर्म्यात्साधर्म्यवैधर्म्याभ्यां वा संशये तथात्यंतसंशयात् । न चात्यंतसंशयो ज्यायान् सामान्यात् संशयाद्विशेषदर्शनात् संशयनिवृत्तिसिद्धेः ॥

**अथानित्येन नित्येन साधर्म्यादुभयेन या । प्रक्रियायाः प्रसिद्धिः स्यात्ततः प्रकरणे समा३८०**

उभाभ्यां नित्यानित्याभ्यां साधर्म्याद्या प्रक्रियासिद्धिस्ततः प्रकरणसमा जातिरवसेया, "उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमा" इति वचनात् ॥

किमुदाहरणमेतस्या इत्याह;—

**तत्रानित्येन साधर्म्यान्निःप्रयत्नोद्भवत्वतः । शब्दस्यानित्यतां कश्चित्साधयेदपरः पुनः॥३८१॥**
**तस्य नित्येन गोत्वादिसामान्येन हि नित्यता । ततः पक्षे विपक्षे च समाना प्रक्रिया स्थिता ३८२**

तत्र हि प्रकरणसमायां जातौ कश्चिदनित्यः शब्दः प्रयत्नानांतरीयकत्वाद्घटवदित्यनित्यसाधर्म्यात् पुरुषप्रयत्नोद्भवत्वाच्छब्दस्यानित्यत्वं साधयति । परः पुनर्गोत्वादिना सामान्येन साधर्म्याच्चस्य नित्यतां साधयेत् । ततः पक्षे विपक्षे च प्रक्रिया समानेत्युभयपक्षपरिग्रहेण वादिप्रतिवादिनोर्नित्यत्वानित्यत्वे साधयतः । साधर्म्यसमायां संशयसमायां च नैवमिति ताभ्यां भिन्नेयं प्रकरणसमा जातिः ॥

कथमीदृशं प्रत्यवस्थानमयुक्तमित्याह;—

**प्रक्रियांतनिवृत्त्या च प्रत्यवस्थानमीदृशं । विपक्षे प्रक्रियासिद्धौ न युक्तं तद्विरोधतः ॥३८३॥**
**प्रतिपक्षोपपत्तौ हि प्रतिषेधो न युज्यते । प्रतिषेधोपपत्तौ च प्रतिपक्षकृतिर्ध्रुवम् ॥ ३८४ ॥**
**तत्त्वावधारणे चैतत्सिद्धं प्रकरणं भवेत् । तदभावेन तत्सिद्धिर्येनेयं प्रत्यवस्थितिः ॥ ३८५ ॥**

प्रक्रियांतनिवृत्त्या प्रत्यवस्थानमीदृशमयुक्तं, विपक्षे प्रक्रियासिद्धौ तयोर्विरोधात् । प्रतिपक्षप्रक्रिया-सिद्धौ हि प्रतिषेधो विरुध्यते, प्रतिषेधोपपत्तौ च प्रतिपक्षप्रक्रियासिद्धिर्व्याहन्यते इति विरुद्धस्तयोरेव सांभवी । किं च, तत्त्वावधारणे सत्येवैतत्प्रकरणं सिद्धं भवेन्नान्यथा । न चात्र तत्त्वावधारणं ततोऽसिद्धं प्रकरणं, तदसिद्धौ च नैवेयं प्रत्यवस्थितिः संभवति ॥

का पुनरहेतुसमा जातिरित्याह;—

**त्रैकाल्यानुपपत्तेस्तु हेतोः साध्यार्थसाधने । स्यादहेतुसमा जातिः प्रयुक्ते साधने क्वचित्३८६**
**पूर्वं वा साधनं साध्यादुत्तरं वा सहापि वा । पूर्वं तावदसत्यर्थे कस्य साधनमिष्यते ॥३८७॥**
**पश्चाच्चेत् किं न तत्साध्यं साधनेऽसति कथ्यतां । युगपद्वापि चेत्साध्यसाधनत्वं न युज्यते३८८**
**सर्वथापोस्तथाभावासिद्धेर्विन्ध्यहिमाद्रिवत् । तथा चाहेतुना हेतुर्न कथंचिद्विशिष्यते ॥३८९॥**

इत्यहेतुसमत्वेन प्रत्यवस्थाप्य युक्तिता । हेतोः प्रत्यक्षतः सिद्धेः कारकस्य घटादिषु ॥ ३९० ॥
कार्येषु कुंभकारस्य तन्निवृत्तेस्ततो ग्रहात् । ज्ञापकस्य च धूमादेरग्न्यादौ ज्ञप्तिकारिणः ॥३९१॥
स्वज्ञेये परसंताने वागादेरपि निश्चयात् । त्रैकाल्यानुपपत्तेश्च प्रतिषेधे कथंचिदथा ॥ ३९२ ॥

समा न कार्यासौ प्रतिषेध····विद्भिः, कथं पुनस्त्रैकाल्या सिद्धिर्हेतोरहेतुसमा जातिरभिधीयते ? अहेतु-सामान्यात्प्रत्यवस्थानात् । यथा ह्यहेतुः साध्यस्यासाधकस्तथा हेतुरपि त्रिकालत्वेनाप्रसिद्ध इति स्पष्टत्वादहेतुसमा जातेर्लक्षणोदाहरणप्रतिविधानानामलं व्याख्यानेन ॥

प्रयत्नानंतरोत्थत्वाद्धेतोः पक्षे प्रसाधिते । प्रतिपक्षप्रसिद्ध्यर्थमर्थापत्त्या विधीयते ॥ ३९३ ॥
या प्रत्यवस्थितिः सात्र मता जातिविदांवरैः । अर्थापत्तिः समैवोक्ता साधनाप्रतिवेदिनी ३९४
यदि प्रयत्नजत्वेन शब्दस्यानित्यताभवत् । तदार्थापत्तितो नित्यसाधर्म्यादस्तु नित्यता ॥३९५
यथैवास्पर्शनत्वादेर्नित्ये दृष्टा तथा ध्वनौ । इत्यत्र विद्यमानत्वात्समाधानस्य तत्त्वतः ॥ ३९६
शब्दो नास्तीति·········पक्षे हेतोरसंशयम् । एष नास्तीति पक्षस्य हानिरर्थात्प्रतीयते ॥३९७॥
यया च प्रत्यवस्थानमर्थापत्त्या विधीयते । नानैकांतिकता दृष्टा समत्वादुभयोरपि ॥ ३९८ ॥
ग्रा····घनस्य पातः स्यादित्युक्तेर्थान्न सिद्ध्यति । द्रव्यात्मनामसंघातामावोर्थापत्तितो यथा ॥
तस्याः साध्याविनाभावशून्यत्वं तद्वदेव हि । शब्दानित्यत्वसंसिद्धौ नार्थानित्यत्वसाधनं४००

न ह्यर्थापत्त्यानैकांतिक्या प्रतिपक्षः सिध्यति येन प्रयत्नानंतरीयकत्वात् शब्दस्यानित्यत्वे साधितेपि अस्पर्शवत्त्वान्यथानुपपत्त्या तस्य नित्यत्वं । सिद्धे तु सुखादिनानैकांतिकी चेयमर्थापत्तिरतो न प्रतिपक्षस्य सिद्धिस्तदसिद्धौ च ना·······················उपपद्यते, सर्वापत्त्यर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसम इति वचनात् ॥

का पुनरविशेषसमा जातिरित्याह;—

कैचिदेकस्य धर्मस्य घटनादुररीकृते । अविशेषोत्र सद्भावाघटनात्सर्ववस्तुनः ॥ ४०१ ॥
अविशेषः प्रसंगः स्यादविशेषसमा स्फुटं । जातिरेवंविधं न्यायप्राप्तदोषासमीक्षणात् ॥४०२॥

एको धर्मः प्रयत्नानंतरीयकत्वं तस्य क्वचिच्छब्दघटयोर्घटनादविशेषे समानत्वे सत्यनित्यत्वे वादिनोररीकृते पुनः सद्भावः सर्वस्य सत्त्वधर्मस्य वस्तुषु घटनादविशेषस्यानित्यत्वप्रसंजनमविशेषसमा जातिः स्फुटं, एवं विधस्य न्यायप्राप्तस्य दोषस्यासमीक्षणात् । एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसंगात् सद्भावोपपत्तेरविशेषः सम इत्येवंविधो हि प्रतिषेधेन न्यायप्राप्तः ॥

कुत इत्याह;—

प्रयत्नानंतरीयत्वधर्मस्यैकस्य संभवात् । अविशेषे ह्यनित्यत्वे सिद्धेपि घटशब्दयोः ॥ ४०३ ॥
न सर्वस्याविशेषः स्यात्सत्त्वधर्मोपपत्तितः । धर्मांतरस्य सद्भावनिमित्तस्य निरीक्षणात् ॥४०४॥
प्रयत्नानंतरीयत्वे निमित्तस्य च दर्शनात् । न समोयमुपन्यासः प्रतिभातीति युच्यताम् ॥४०५
सर्वार्थेष्वविशेषस्य प्रसंगात् प्रत्यवस्थितिः ।

न हि यथा प्रयत्नानंतरीयकत्वं साधनधर्मः साध्यमनित्यत्वं साधयति शब्दे तथा सर्ववस्तुनि सत्त्वं

यतः सर्वस्याविशेषः स्यात् सत्त्वधर्मोपपत्तितथैव धर्मांतरस्यापि नित्यत्वस्याकाशादौ सद्भावनिमित्तस्य दर्शनात् प्रयत्नानंतरीयकत्वनिमित्तस्य वा नित्यत्वस्य घटादौ दर्शनात् । ततो विषमोयमुपन्यासः इति लक्ष्यतां सर्वार्थेष्वविशेषप्रसंगात् प्रत्यवस्थानं । यदि तु सर्वेषामर्थानामनित्यता सत्वस्यानिमित्तमिष्यते तदापि प्रत्यवस्थानादनित्याः सर्वे भावाः सत्त्वादिति पक्षः प्राप्नोति तत्र च प्रतिज्ञार्थव्यतिरिक्तं क्वोदाहरणो हेतुरस्तु । उदाहरणसाधर्म्यात् साध्यसाधनत्वं हेतुरिति समर्थनात् । पक्षैकदेशस्य प्रदीपज्वालादेरुदाहरणत्वे साध्यत्वविरोधः साध्यत्वे तूदाहरणं विरुध्यते । न च सर्वेषां सत्त्वमनित्यत्वं साधयति नित्यत्वेपि केषांचित्सत्त्वप्रतीतेः । संप्रति सिद्धार्था वा सर्वेषामनित्यतायाः कथं शब्दानित्यत्वं प्रतिषिध्यते सत्त्वैरिति परीक्ष्यतां । सोयं सर्वस्यानित्यत्वं साधयेन्नैव शब्दानित्यत्वं प्रतिषेधतीति कथं स्वस्थः ? ॥

**कारणस्योपपत्तेः स्यादुभयोः पक्षयोरपि । उपपत्तिसमा जातिः प्रयुक्ते सत्यसाधने ॥ ४०६ ॥**

उभयोरपि पक्षयोः कारणस्योभयोरुपपत्तिः प्रत्येया उभयकारणोपपत्तिसम इति वचनात् ॥

एतदुदाहरणमाह;—

**कारणं यद्यनित्यत्वे प्रयत्नोत्थत्वमित्ययं । शब्दोऽनित्यस्तदा तस्य नित्यत्वेऽस्पर्शनास्ति तत् ४०७**
**ततो नित्योप्यसावस्तु न नित्यः कथमन्यथा ।**

यद्यनित्यत्वं कारणं प्रयत्नांतरीकत्वं शब्दस्यास्तीत्यनित्यः शब्दस्तदा नित्यत्वेपि तस्य कारणमस्पर्शत्वमुपपद्यते । ततो नित्योप्यस्तु कथमनित्योन्यथा स्यादित्युभयस्य नित्यत्वस्यानित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमो दूषणाभासः ॥

**इत्येष हि नपुंस्कोत्र प्रतिषेधः कथंचन । कारणस्याभ्यनुज्ञादि यादृशं ब्रुवता स्वयं ॥ ४०८ ॥**
**शब्दानित्यत्वसिद्धिश्चोपपत्तेरविगानतः । व्याघातस्तु द्वयोस्तुल्यः सपक्षप्रतिपक्षयोः ॥ ४०९ ॥**
**साधनादिति नैवासौ तयोरेकस्य साधकः । एवं ह्येष न युक्तोत्र प्रतिषेधः कथं मयि ॥ ४१० ॥**

कारणस्याभ्यनुज्ञानात् उभयकारणोपपत्तेरिति ब्रुवता स्वयमेव स्वत्वे नित्यकारणं प्रयत्नानंतरीयकत्वं तावदभ्यनुज्ञातमनेनाभ्यनुज्ञानान्नानुपपन्नस्तत्प्रतिषेधः । शब्दानित्यत्वसिद्धाया उपपत्तेरविवादात् । यदि पुनर्नित्यत्वकारणोपपत्तौ सत्यामनित्यत्वकारणोपपत्तेर्व्याघातादनित्यत्वादसिद्धेर्युक्तः प्रतिषेध इति मतिस्तदास्त्यनित्यत्वकारणोपपत्तौ सत्यां नित्यत्वकारणोपपत्तिरपि व्याघातान्न नित्यत्वसिद्धिरपीति नित्यत्वानित्यत्वयोरेकतरस्यापि न साधकस्तुल्यत्वादुभयोर्व्याघातस्य ॥

का पुनरुपलब्धिसमा जातिरित्याह;—

**साध्यधर्मनिमित्तस्याभावेप्युक्तस्य यत्पुनः । साध्यधर्मोपलब्ध्या स्यात् प्रत्यवस्थानमात्रकम् ४११**
**सोपलब्धिसमा जातिर्यथा श्वासादिभंगजे । शब्देस्त्यनित्यता यत्नजत्वाभावेप्यसाविति ॥ ४१२**

साध्यधर्मस्तावदनित्यत्वं तस्य निमित्तकारणं प्रयत्नानंतरीयकत्वं ज्ञापकं तस्योक्तस्य वादिना क्वचिदभावेपि पुनः साध्यधर्मस्योपलब्ध्या यत्प्रत्यवस्थानमात्रकं सोपलब्धिसमा जातिर्विज्ञेया, "निर्दिष्टकारणाभावेप्युपलंभादुपलब्धिसम" इति वचनात् । तद्यथा—श्वासादिभंगजे शब्दे प्रयत्नानंतरीयकत्वाभावेप्यनित्यत्वमस्ति साध्यधर्मोसाविति ॥

स चायं प्रतिषेधो न युक्त इत्याह;—

**कारणांतरतोप्यत्र साध्यधर्मस्य सिद्धितः । न युक्तः प्रतिषेधोऽयं कारणानियमोक्तितः ॥४१३॥**

प्रयत्नानंतरीयकत्वात् कारणादन्यदुत्पत्तिधर्मकत्वादिकारणांतरमनित्यत्वस्य साधर्म्यस्य, ततोपि सिद्धिर्न युक्तः प्रतिषेधोयं तत्र कारणानियमवचनात् । नाभिज्ञापकमंतरेण ज्ञाप्यं न भवतीति नियमोक्ति, साध्याभावे साधनस्यानियमव्यवस्थितेः इति ॥

**निषेध्यानुपलब्धेश्चानुपलब्धेः प्रसाधने । अभावस्य विपर्यासादुपपत्तिः प्रकीर्तिता ॥ ४१४ ॥**
**प्रस्तुतार्थविघातायानुपलब्धिसमानघैः ।**

कश्चिदाह, न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिः सदावरणश्चानुपलब्धेरुत्पत्तेः प्राग्घटादेरिव । यस्य तु दर्शनात् प्राग्विद्यमानस्यानुपलब्धिस्तस्य नावरणाद्यनुपलब्धिः यथा भूम्यावृत्तस्योदकादेर्नावरणाद्यनुपलब्धिश्च श्रवणात् प्राक् शब्दस्य । तस्मान्न विद्यमानस्यानुपलब्धिरित्यविद्यमानः शब्दश्रवणात्पूर्वमनुपलब्धिरिति निषेधस्य शब्दस्यानुपलब्धिर्या तस्याश्चानुपलब्धेरभावस्य साधने कृते सति विपर्यासादभावेऽस्योपपत्तिरनुपलब्धिसमा जातिः प्रकीर्तितानघैः, प्रस्तुतार्थाविघाताय तस्याः प्रयोगात् । तदुक्तं । "तदनुपलब्धेरनुपलंभादभावसिद्धौ विपरीतोपपत्तेरनुपलब्धिसम" इति ॥

कथमिति श्लोकैरुपदर्शयति;—

**यथा न विद्यमानस्य शब्दस्य प्रागुदीरणात् । अश्रुतिः स्यात्तदावृत्त्या वा दृष्टेरिति भाषिते४१५**
**कश्चिदावरणादीनामदृष्टेरप्यदृष्टितः । शिवं मा भूत्ततः शब्दे सत्ये वा श्रवणात्तदा ॥४१६॥**
**वृत्या स्वभावसंसिद्धेरभावादिति जल्पति ।**

तदीदृशं प्रत्यवस्थानमसंगतमित्यावेदयति;—

**तदसंबंधमेवास्यानुपलब्धेः स्वयं सदा—। नुपलब्धिस्वभावो नोपलब्धिविषयत्वतः ॥ ४१७ ॥**
**नैवोपलब्ध्यभावेनाभावो यस्मात्प्रसिद्ध्यति । विपरीतोपपत्तिश्च नास्पदं प्रतिपद्यते ॥४१८॥**
**शब्दस्यावरणादीनि प्रागुच्चारणतो न वै । सर्वत्रोपलभे हंत इत्याबालमनाकुलम् ॥ ४१९ ॥**
**ततश्चावरणादीनामदृष्टेरप्यदृष्टितः । सिद्ध्यत्यभाव इत्येष नोपालंभः प्रमान्वितः ॥ ४२० ॥**

नाविद्यमानस्य शब्दस्य प्रागुच्चारणाद्यनुपलब्धेरित्युपमस्ते यत्कस्यचित्प्रत्यवस्थानं तदावरणादीनामनुपलब्धेरप्यनुपलंभात् । सैवावरणाद्यनुपलब्धिर्मा भूत् ततः शब्दस्य प्रागुच्चारणात् सत एवाश्रवणं तदावरणाद्यभावसिद्धेरभावादावरणादिसद्भावादिति संबंधमेवानुपलब्धेः सर्वदा स्वयमेवानुपलंभस्वभावत्वादुपलब्धिविषयत्वात् । यथैव ह्युपलब्धिर्विषयस्तथानुपलब्धिरपि । कथमन्यथास्ति मे घटोपलब्धिर्नास्ति मे घटोपलब्धिरिति संवेदनमुपपद्यते यतश्चैवमावरणाद्यनुपलब्धिरनुपलंभान्नैवाभावः सिद्ध्यति तदसिद्धौ च विपरीतस्यावरणादिसद्भावस्योपपत्तिश्च नास्पदं प्रतिपद्यते । यतश्च प्रागुच्चारणाच्छब्दस्यावरणादीनि सोहं नैवोपलभे, तदनुपलब्धिमुपलभे सर्वत्रेत्याबालमनाकुलं संवेदनमस्ति । तस्मादावरणादीनामदृष्टेरदृष्टेर्नः सिद्ध्यत्यभावः इत्ययमुपालंभो न प्रमाणान्वितः, सर्वत्रोपलंभानुपलंभव्यवस्थित्यभावप्रसंगात् । ततोनुपलब्धेरपि समयानुपलब्ध्या प्रत्यवस्थानमनुपलब्धिमतो दूषणाभास एवेति प्रतिपत्तव्यं ॥

का पुनरनित्यसमा जातिरित्याह;—

**कृतकत्वादिना साम्यं घटेन यदि साधयेत् । शब्दस्यानित्यतां सर्वं वस्तु नित्यं तदा न किम्४२१**

**अनित्येन घटेनास्य साधर्म्यं गमयेत्स्वयं । सत्त्वेन साम्यमात्रस्य विशेषाप्रतिवेदनात् ॥ ४२२ ॥**
**इत्यनित्येन या नाम प्रत्यवस्था विधीयते । सात्रानित्यसमा जातिर्विज्ञेया न्यायबाधनात् ४२३**

अनित्यः शब्दः कृतकत्वाद्घटवदिति प्रयुक्ते साधने यदा कश्चित्प्रत्यवतिष्ठते यदि शब्दस्य घटेन साधर्म्यात् कृतकत्वादिना कृत्वा साधयेदनित्यत्वं तदा सर्वं वस्तु नित्यं किं न गमयेत्? सत्त्वेन कृत्वा साधर्म्यं, अनित्येन घटेन साधर्म्यमात्रस्य विशेषाप्रवेदादिति । तदेवमनित्यसमा जातिर्विज्ञेया न्यायेन बाध्यमानत्वात् । तदुक्तं । "साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसंगादनित्यसमा" इति ॥

एतच्च सर्वमसमंजसमित्याह;—

**निषेधस्य तथोक्तस्यासिद्धिप्राप्तेः समत्वतः । पक्षेणासिद्धिमाप्तेनेत्यशेषमसमंजसं ॥ ४२४ ॥**
**पक्षस्य हि निषेधस्य प्रतिपक्षोभिलप्यते । निषेधो धीधनैरत्र तस्यैव विनिवर्तकः ॥ ४२५ ॥**
**प्रतिज्ञानादियोगस्तु तयोः साधर्म्यमिष्यते । सर्वत्रासंभवात्तेन विना पक्षविपक्षयोः ॥४२६॥**
**ततोसिद्धिर्यथा पक्षे विपक्षेपि तथास्तु सा । नो चेदनित्यता शब्दे घटवन्नाखिलार्थगा ॥४२७**
**दृष्टांतेपि च यो धर्मः साध्यसाधनभावतः । प्रज्ञायते स एवात्र हेतुरुक्तोर्थसाधनः ॥४२८॥**
**तस्य केनचिदर्थेन समानत्वात्सधर्मता । केनचित्तु विशेषात्स्याद्वैधर्म्यमिति निश्चयः ॥ ४२९ ॥**
**हेतुर्विशिष्टसाधर्म्यं न तु साधर्म्यमात्रकं । साध्यसाधनसामर्थ्यभागयं न च सर्वगः ॥४३०॥**
**सत्त्वेन च सधर्मत्वात् सर्वस्यानित्यतेरणे । दोषः पूर्वोदितो वाच्यः साविशेषः समाश्रयः४३१**

तेन प्रकारेणोक्तो यो निषेधस्तस्याप्यसिद्धिप्रसक्तेरसमंजसमशेषं स्यादित्यनित्यसमवादिनः । कुत इति चेत्, पक्षेणासिद्धिं प्राप्तेन समानत्वात्प्रतिषेधस्येति । निषेधो ह्यत्र पक्षः प्रतिषेधस्तस्य प्रतिपक्षः कथ्यते धीमद्भिः प्रतिपक्ष इति प्रसिद्धिः, तयोश्च पक्षप्रतिपक्षयोः साधर्म्यं प्रतिज्ञादिभिर्योग इष्यते तेन विना तयोः सर्वत्रासंभवात् । ततः प्रतिज्ञादियोगाद्यथा पक्षस्यासिद्धिस्तथा प्रतिपक्षस्याप्यस्तु । अथ सत्यपि साधर्म्ये पक्षप्रतिपक्षयोः पक्षस्यैवासिद्धिर्न प्रतिपक्षस्येति मन्यते तर्हि घटेन साधर्म्यात्कृतकत्वादेः शब्दस्यानित्यतास्तु । सकलार्थगत्वं नित्यता तेन साधर्म्यमात्रात् मा भूदिति समंजस । अपि च, दृष्टांते घटादौ यो धर्मः साध्यसाधनभावेन प्रज्ञायते कृतकत्वादिः स एवात्र सिद्धिहेतुः साध्यसाधनोभिहितस्तस्य च केनचिदर्थेन सपक्षेण समानत्वात्साधर्म्यं केनचिद्विपक्षेणासमानत्वाद्वैधर्म्यमिति निश्चयो न्यायविदां । ततो विशिष्टसाधर्म्यमेव हेतुः साध्यसाधनसामर्थ्यभाक् । स च न सर्वार्थेष्वनित्यत्वे साध्ये संभवतीति न सर्वगतः । सर्वे भावाः क्षणिकाः सत्त्वादिति संभवत्येवेति चेत् न, अन्वयासंभवाद्व्यतिरेकानिश्चयात् । किं च, न सत्त्वेन साधर्म्यात्सर्वस्य पदार्थस्यानित्यत्वसाधने सर्वो अविशेषसमाश्रयी दोषः पूर्वोदितो वाच्यः । सर्वस्यानित्यत्वं साधयन्नेव शब्दस्यानित्यत्वं प्रतिषेधतीति कथं स्वस्थ इत्यादिः । तन्नेयमनित्यसमा जातिरविशेषसमातो भिद्यमानापि कथंचिदुपपत्तिमतीति ॥

**अनित्यः शब्द इत्युक्ते नित्यत्वप्रत्यवस्थितिः । जातिर्नित्यसमा वक्तुरज्ञानात्संप्रवर्तते ॥४३२॥**
**शब्दाश्रयमनित्यत्वं नित्यं वानित्यमेव वा । नित्ये शब्दोपि नित्यं स्यात्तदाधारोऽन्यथा क तत्४३३**
**तत्रानित्येप्ययं दोषः स्यादनित्यत्वविच्युतौ । नित्यं शब्दस्य सद्भावादित्येतद्धि न संगतम्४३४**
**अनित्यत्वप्रतिज्ञाने तन्निषेधविरोधतः । स्वयं तदप्रतिज्ञानेप्येष तस्य निराश्रयः ॥ ४३५ ॥**

**सर्वदा किमनित्यत्वमिति प्रश्नोप्यसंभवी । प्रादुर्भूतस्य भावस्य निरोधिश्च तदिष्यते ॥ ४३६ ॥**
**नाश्रयाश्रयिभावोपि व्याघातादनयोः सदा । नित्यानित्यत्वयोरेकवस्तुनीष्टौ विरोधतः ॥ ४३७**
**ततो नानित्यता शब्दे नित्यत्वप्रत्यवस्थितिः । परैः शक्या निराकर्तुं वाचालैर्जयलोलुपैः ४३८**

अथ कार्यसमा जातिरभिधीयते;—

**प्रयत्नानेककार्यत्वाज्जातिः कार्यसमोदिता । त्रिप्रयत्नोद्भवत्वेन शब्दानित्यत्वसाधने ॥ ४३९ ॥**
**प्रयत्नानंतरं तावदात्मलाभः समीक्षितः । कुंभादीनां तथाव्यक्तिर्व्यवधानेप्यपोहनात् ॥ ४४० ॥**
**तद्बुद्धिलक्षणात् पूर्वं सतामेवेत्यनित्यता । प्रयत्नानंतरं भावाच्च शब्दस्याविशेषतः ॥ ४४१ ॥**
**तत्रोत्तरमिदं शब्दः प्रयत्नानंतरोद्भवः । प्रागदृष्टिनिमित्तस्याभावेप्यनुपलब्धितः ॥ ४४२ ॥**
**सत्याभावादभूत्वास्य भावो जन्मैव गम्यते । नाभिव्यक्तिः सतः पूर्वं व्यवधानाव्यपोहनात् ४४३**
**अनैकांतिकता हेतोरेवं चेदुपपद्यते । प्रतिषेधेपि सा तुल्या ततोऽसाधक एव सः ॥ ४४४ ॥**
**विधाविव निषेधेपि समा हि व्यभिचारिता । विशेषस्योक्तितश्चायं हेतोर्दोषो निवारितः ४४५**
**एवं भेदेन निर्दिष्टा जातयो····दिष्ट । ये चतुर्विंशतिरन्यानंता बोध्यास्तथा बुधैः ॥ ४४६ ॥**
**नैताभिर्निग्रहो वादे सत्यसाधनवादिनः । साधनाभं ब्रुवाणस्तु तत एव निगृह्यते ॥ ४४७ ॥**
**निग्रहाय प्रकल्प्यंते त्वेता जल्पवितंडयोः । जिगीषया प्रवृत्तानामिति यौगाः प्रचक्षते ॥ ४४८**
**तत्रेदं दुर्घटं तावज्जातेः सामान्यलक्षणं । साधर्म्येणेतरेणापि प्रत्यवस्थानमीरितम् ॥ ४४९ ॥**
**साधनाभप्रयोगेपि तज्जातित्वप्रसंगतः । दूषणाभासरूपस्य जातित्वेन प्रकीर्तने ॥ ४५० ॥**
**अस्तु मिथ्योत्तरं जातिरकलंकोक्तलक्षणा ।**

युक्तं तावदिह यदनंता जातय इति वचनं तथेष्टत्वादसदुत्तराणामानंत्यप्रसिद्धेः । संक्षेपतस्तु विशेषेण चतुर्विंशतिरित्ययुक्तं, जात्यंतराणामपि भावात् । तेषामास्वेवांतर्भावाददोष इति चेत् न, जातिसामान्यलक्षणस्य तत्र दुर्घटत्वात् । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरित्येतद्धि सामान्यलक्षणं जातेरुदीरितं यौगैस्तच्च न सुघटं, साधनाभासप्रयोगेपि साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य जातित्वप्रसंगात् । तथेष्टत्वान्न दोष इत्येके । तथाहि—असाधौ साधने प्रयुक्ते यो जातीनां प्रयोगः सोनभिज्ञतया वा साधनदोषः स्यात्, तद्दोषप्रदर्शनार्थत्वात्प्रसंगव्याजेनेति । तदप्ययुक्तं । स्वयमुद्योतकरेण साधनाभासे प्रयुक्ते जातिप्रयोगस्य निराकरणात् । जातिवादी हि साधनाभासमेतदिति प्रतिपद्यते वा न वा? यदि प्रतिपद्यते एवास्य साधनाभासत्वहेतुर्दोषोनेन प्रतिपन्नः स एव वक्तव्यो न जातिः, प्रयोजनाभावात् । प्रसंगव्याजेन दोषप्रदर्शनत्वमिति चायुक्तं, अनर्थसंशयात् । यदि हि परेण प्रयुक्तायां जातौ साधनाभासबाधा स्वप्रयुक्तसाधनदोषं पश्यन् सभायामेवं ब्रूयात् मया प्रयुक्ते साधने अयं दोषः स च परेण नोद्भावितः किं तु जातिरुद्भावितेति, तदापि न जातिवादिनो जयः प्रयोजनं स्यात्, उभयोरज्ञानसिद्धेः । नापि साम्यं प्रयोजनं सर्वथा जयस्यासंभवे तस्याभिप्रेतत्वादेकांतपराजयाद्वरं संदेह इति वचनात् । यदा तु साधनाभासवादी स्वसाधनदोषं प्रच्छाद्य युक्तां जातिमेवोद्भावयति तदापि न तस्य जयः प्रयोजनं साम्यं वा पराजयस्यैव तथा संभवात् । अथ साधनदोषमनवबुध्यमानो जातिं प्रयुंक्ते तदा निःप्रयोजनो जातिप्रयोगः स्यात् । यत्किंचन वदतोपि तूष्णीभावतोपि वा साम्यप्रातिभैर्व्यवस्थापनाद्द्वयोरज्ञानस्य निश्चयात् । एवं तर्हि साधुसाधने प्रयुक्ते यत्परस्य साधर्म्याभ्यां प्रत्यवस्थानं दूषणाभास-

कथं तज्जातेः सामान्यलक्षणमस्तु निरवद्यत्वादिति चेत्, मिथ्योत्तरं जातिरित्येतावदेव जातिलक्षण-सकलंकमतीतमस्तु किमपरेण । "तत्र मिथ्योत्तरं जातिर्यथानेकांतविद्विषाम्" इति वचनात् ॥

तथासति अव्याप्तिदोषस्यासंभवान्निरवद्यमेतदेवेत्याह;—

**सांकर्यात् प्रत्यवस्थानं यथानेकांतसाधने । यथा वैयधिकर्येण विरोधेनानवस्थया ॥ ४५१ ॥**
**व्यभिचारतया ताभ्यां दोषाभ्यां संशयेन च । अप्रतीत्या तया भावेनान्यथा वा यथेच्छया४५२**
**वस्तुतस्तादृशैर्दोषैः साधनाप्रतिघाततः । सिद्धं मिथ्योत्तरत्वं नो निरवद्यं हि लक्षणम्॥४५३॥**

न चैवं परलक्षणस्याव्याप्तिदोषाभाव इत्याह;—

**परोक्तं पुनरव्याप्तिप्रोक्तेष्वेतेष्वसंभवात् । ततो न निग्रहस्थानं युक्तमेतदिति स्थितम् ॥४५४॥**

परोक्तं पुनर्जातिसामान्यलक्षणमयुक्तमेव, संकरव्यतिकरविरोधानवस्थावैयधिकरण्योभयदोषसंशयाप्रतीत्यभावादिभिः प्रत्यवस्थानेषु तस्यासंभवात् । ततो न निग्रहस्थानमेतद्युक्तं तात्त्विके वादे, प्रतिज्ञाहान्यादिवच्छलवदसाधनांगदोषोद्भावनवच्चेति ॥

**तथा च तात्त्विको वादः स्वेष्टसिद्ध्यवसानभाक् । पक्षे पतत्वयुक्त्यैव नियमानुपपत्तितः ४५५**

एवं तावत्तात्त्विको वादः स्वाभिप्रेतपक्षसिद्धिपर्यंतभावावस्थितः पक्षेयत्तायाः कर्तुमशक्तेर्नियमानुपपत्तिश्च न सकलपक्षसिद्धिपर्यंतः कस्यचिज्जयो व्यवस्थितः ॥

सांप्रतं प्रातिभे वादे निग्रहव्यवस्थां दर्शयति;—

**यस्तूक्तः प्रातिभो वादः संप्रातिभपरीक्षणः ।**
**निग्रहस्तत्र विज्ञेयः स्वप्रतिज्ञाव्यतिक्रमः ॥ ४५६ ॥**
**यथा पद्यं मया वाच्यमाप्रस्तुतविनिश्चयात् ।**
**सालंकारं तथा गद्यमस्खलद्रूपमित्यपि ॥ ४५७ ॥**
**पंचावयववाक्यं वा त्रिरूपं वान्यथापि वा ।**
**निर्दोषमिति वा संधास्थलभेदं तमूह्यते ॥ ४५८ ॥**
**तथा संगरहान्यादिनिग्रहस्थानतोप्यसौ ।**
**छलोक्त्या जातिवाच्यत्वात्तथा संधाव्यतिक्रमात् ॥ ४५९ ॥**
**यथा द्यूतविशेषादौ स्वप्रतिज्ञाक्षतेर्जयः ।**
**लोके तथैव शास्त्रेषु वादे प्रातिभगोचरे ॥ ४६० ॥**
**द्विप्रकारं ततो जल्पात्तत्त्वप्रातिभगोचरात् ।**
**नान्यभेदप्रतिष्ठानं प्रक्रियामात्रघोषणात् ॥ ४६१ ॥**
**सोऽयं जिगीषुबोधाय वादन्यायः सतां मतं ।**
**प्रकर्तव्यो ब्रुवाणेन नयवाक्यैर्यथोदितैः ॥ ४६२ ॥**

एवं प्रपंचेन प्रथमाध्यायं व्याख्याय संगृह्णन्नाह;—

समुद्दिष्टो मार्गस्त्रिवपुरभवत्वस्य नियमा-
द्विनिर्दिष्टा दृष्टिर्निखिलविधिना ज्ञानममलम् ।
प्रमाणं संक्षेपाद्विविधनयसंपच्च मुनिना
सुगृह्याद्येऽध्यायेऽधिगमनपथः स्वान्यविषयः ॥ ४६३ ॥

इति प्रथमाध्यायस्य पंचममाह्निकं समाप्तम् ॥ ५ ॥



इति श्रीविद्यानंदि–आचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालङ्कारे
प्रथमोऽध्यायः समाप्तः ॥ १ ॥





# अथ द्वितीयोऽध्यायः ।

सम्यग्दृग्गोचरो जीवस्तस्यौपशमिकादयः ।
स्वं तत्त्वं पंच भावाः स्युः सप्तसूत्र्या निरूपिताः ॥ १ ॥

सम्यग्दृक्तत्त्वार्थश्रद्धानं तस्याः गोचरो विषयो जीवो निरूपितस्तावदजीवादिवत् तस्य स्वमसाधारणं तत्त्वमौपशमिकादयः पंच भावाः स्युर्न पुनः पारिणामिक एव भावश्चैतन्यमात्रं, यतश्चैतन्यं पुरुषस्य स्वं रूपमिति दर्शनं केषांचिद्व्यवतिष्ठते । बुद्ध्यादयो न चैवात्मनो विशेषगुणा इति वा, आनंदमात्रं ब्रह्मरूपमिति वा प्रभाकरमेवेदं चित्तमिति वा, प्रमाणाभावात् । प्रमाणोपपन्नास्तु जीवस्यासाधारणाः स्वभावाः पंचौपशमिकादयस्ते सप्तसूत्र्या निरूपिताः सूत्रकारेण लक्षणतः संख्यातः प्रभेदतश्च ॥

तत्र तेषां लक्षणतो निरूपणार्थमिदमाद्यं सूत्रमुपलक्ष्यते;—

## औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥

अत्रौपशमिकादिशब्दनिरुक्तित एवौपशमिकादिभावानां लक्षणमुपदर्शितं तस्यास्तदव्यभिचारात् ॥ तथाहि;—

अनुद्भूतस्वसामर्थ्य वृत्तितोपशमो मतः । कर्मणां पुंसि तोयादावधःप्रापितपङ्कवत् ॥ २ ॥
तेषामात्यंतिकी हानिः क्षयस्तदुभयात्मकः । क्षयोपशम उद्गीतः क्षीणाक्षीणबलत्वतः ॥ ३ ॥
उदयः फलकारित्वं द्रव्यादिप्रत्ययद्वयात् । द्रव्यात्मलाभहेतुः स्यात् परिणामोनपेक्षिणः ॥४॥
एतत्प्रयोजना भावाः सर्वौपशमिकादयः । इत्यौपशमिकादीनां शब्दानामुपवर्णिता ॥ ५ ॥
निरुक्तिरर्थसामर्थ्याद् ज्ञातुमव्यभिचारिणी । ततोन्यत्राप्रवृत्तत्वात् ज्ञानचारित्रशब्दवत् ॥६॥
प्रागौपशमिकस्योक्तिर्भव्यस्यानादिसंसृतौ । वर्तमानस्य सम्यक्त्वग्रहणे तस्य संभवात् ॥ ७ ॥
स्तोकत्वात्सर्वभावेभ्यः स्तोककालत्वतोपि वा । शेषेभ्यः क्षायिकादिभ्यः कथंचित्तद्विरुध्यते॥८
ततस्तु क्षायिकस्योक्तिरसंख्येयगुणत्वतः । भव्यजीवस्वभावत्वख्यापनार्थत्वतोपि च ॥ ९ ॥
क्षायोपशमिकस्यातो या संख्येयगुणत्वतः । युक्तास्ति तद्द्वयात्मत्वाद्भव्येतरसमत्वतः ॥१०॥
उक्तिरौदयिकस्यातस्तेन जीवावबोधतः । पारिणामिकभावस्य ततोंते सर्वनृस्थितेः ॥ ११ ॥
न चैषां द्वन्द्वनिर्देशः सर्वेषां सूरिणा कृतः । क्षायोपशमिकस्यैव मिश्रस्य प्रतिपत्तये ॥ १२ ॥
नानर्थकश्चशब्दो तौ मध्ये सूत्रस्य लक्ष्यते । नाप्यंते त्वादिसंयोगजन्मभावोपसंग्रहात् ॥१३॥
क्षायोपशमिकं चांते नोक्तं मध्येत्र युज्यते । ग्रंथस्य गौरवाभावादन्यथा तत्प्रसंगतः ॥ १४ ॥
निरवद्यमतः सूत्रं भावपंचकलक्षणम् । प्रख्यापयति निःशेषदुरारेकाविवेकतः ॥ १५ ॥

अथौपशमिकादिभेदसंख्याख्यापनार्थं द्वितीयं सूत्रम्;—

## द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥

**आदीनां भेदशब्देन वृत्तिरन्यपदार्थिका । द्वंद्वभाजां भवेदत्र स्वाभिप्रेतार्थसिद्धितः ॥ १ ॥**
**प्रत्येकं भेदशब्दस्य समाप्तिर्भुजिवन्मता । यथाक्रममिति ख्यातेप्यक्रमस्य निराक्रिया ॥ २ ॥**

तथा च सत्येतदुक्तं भवति औपशमिको भावो द्विभेदः क्षायिको नवभेदः मिश्रोष्टादशभेदः औदयिक एकविंशतिभेदः पारिणामिकस्त्रिभेद इति ॥

तत्रौपशमिकभेदद्वयप्रविख्यापयिषया तृतीयसूत्रमाह;—

## सम्यक्त्वचारित्रे ॥ ३ ॥

औपशमिकस्य द्वौ भेदावित्यभिसंबंधः सामर्थ्यात् । तत्र दर्शनमोहस्योपशमादौपशमिकसम्यक्त्वं, चारित्रमोहोपशमादौपशमिकचारित्रं ॥

दर्शनमोहस्य चारित्रमोहस्य चोपशमः कथं क्वचिदात्मनि सिद्ध इति चेदुच्यते;—

**पुंसि सम्यक्त्वचारित्रमोहस्योपशमः क्वचित् । शांतप्रसत्तिसंसिद्धेर्यथा पंकस्य वारिणि ॥ १ ॥**

यथैव हि जले सपंके कुतश्चित्प्रसन्नता सा च साध्यमाना पंकस्योपशमे सति भवति नानुपशमे, कालुष्यप्रतीतेः; नापि क्षये, शांतत्वविरोधात् । तथात्मनि सम्यक्त्वचारित्रलक्षणा प्रसन्नता सत्येव दर्शनचारित्रमोहस्योपशमे भवति नानुपशमे, मिथ्यात्वासंयमलक्षणकालुष्योपलब्धेः । न क्षये, तस्याः शांतत्वविरोधादिति युक्तं पश्यामः ॥

कुतः पुनः प्रसन्नता तादृशी प्रसिद्धात्मन इति चेदिमे ब्रूमहे;—

**यो यत्कालुष्यहेतुः स्यात्स कुतश्चित् प्रशाम्यति । तत्र तोये यथा पंकः कतकादिनिमित्ततः २**
**न चाभव्यादिकालुष्यहेतुना व्यभिचारिता । कुतश्चित्कारणात्तस्य प्रशमः साध्यते यतः ॥३॥**
**न च तत्प्रशमे किंचिदभव्यस्यास्ति कारणं । तद्भावे तस्य भव्यत्वप्रसंगाद्विपक्षता ॥ ४ ॥**
**स्वयं संविद्यमाना वा सम्यक्त्वादिप्रसन्नता । सिद्धात्र साधयत्येव तन्मोहस्योपशांतताम् ॥५॥**

ततो युक्तिमानौपशमिको भावो द्विभेदतः । तथा क्षायिको नवभेदः ॥

कथमिति प्रतिपादनार्थं चतुर्थं सूत्रमाह;—

## ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥

चशब्देन सम्यक्त्वचारित्रे समुच्चीयेते । ज्ञानावरणक्षयात् क्षायिकज्ञानं केवलं, दर्शनावरणक्षयात्केवलदर्शनं, दानांतरायक्षयादभयदानं, लाभांतरायक्षयाल्लाभः, परमशुभपुद्गलादानलक्षणः परमौदारिकशरीरस्थितिहेतुः भोगांतरायक्षयाद्भोगः, उपभोगांतरायक्षयादुपभोगः, वीर्यांतरायक्षयादनंतवीर्यं, दर्शनमोहक्षयात्सम्यक्त्वं, चारित्रमोहक्षयाच्चारित्रमिति नवैते क्षायिकभावस्य भेदाः ॥

कुतः पुनर्ज्ञानावरणादीनां क्षयः सिद्ध इत्याह;—

**आत्यंतिकः क्षयो ज्ञानदर्शनावरणस्य च । सांतरायप्रपंचस्यानंतशुद्धिप्रसिद्धितः ॥ १ ॥**

ज्ञानावरणस्य दर्शनावरणस्य चशब्दाद्दर्शनमोहस्य चारित्रमोहस्य चांतरायपंचकसहितस्यात्यंतः क्षयः क्वचिदस्ति अनंतशुद्धिप्रसिद्धेः ॥

तथाहि;—

शुद्धिः प्रकर्षमायाति परमं क्वचिदात्मनि । प्रकृष्यमाणवृद्धित्वात्कनकादिविशुद्धिवत् ॥ २ ॥
शुद्धिर्ज्ञानादिकस्यात्र जीवस्यास्त्यतिशायिनी । भव्यस्य बाधकाभावादित्यसिद्धात्र साधना ३
नानैकांतिकमप्येतत्तदस्तु ग्या विभाव्यते । तस्या अपि क्वचित्सिद्धेः प्रकर्षस्य परस्य च ॥४॥
प्राक्साधितात्र सर्वज्ञज्ञानवृद्धिः प्रमाणतः । दर्शनस्य विशुद्धिर्वा तत एवाविनाभुवः ॥ ५ ॥

ततो युक्तः क्षायिको भावो नवभेदः ॥

क्षायोपशमिकोष्टादशभेदः । कथमिति तत्प्रतिपादनार्थं पंचमं सूत्रमाह;—

## ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपंचभेदाः सम्यक्त्वचारित्रसंयमा-संयमाश्च ॥ ५ ॥

चत्वारश्च त्रयश्च पंच चतुस्त्रिपंचभेदा यासां ताश्चतुस्त्रित्रिपंचभेदाः । कास्ताः ? ज्ञानदर्शनलब्धयः । यथाक्रममित्यनुवर्तते तेनैवमभिसंबंधः कर्तव्यः । ज्ञानं चतुर्भेदं, अज्ञानं त्रिभेदं, दर्शनं त्रिभेदं, लब्धिः पंचभेदा, सम्यक्त्वचारित्रसंयमासंयमाश्च त्रयः क्षायोपशमिकभावस्याष्टादश भेदा इति । मत्यादिज्ञाना-वरणचतुष्टयमत्यज्ञानाद्यावरणत्रयस्य चक्षुर्दर्शनाद्यावरणत्रयस्य च दानातरायादिपंचकस्य दर्शनमोहस्य चारित्रमोहस्य संयममोहस्य च क्षयोपशमादुपजायमानत्वात् । कुतः पुनरयं मिश्रो भावः स्यादिति चेत्, मतिज्ञानावरणादिसर्वघातिस्पर्धकानामुदयक्षयात्तेषामेव सदुपशमात्तद्देशघातिस्पर्धकानामुदयात् क्षायोपश-मिको भावः । किं पुनः स्पर्धका नाम ? अविभागपरिच्छिन्नकर्मप्रदेशरसभागप्रचयपंक्तेः क्रमवृद्धिः क्रमहानिः स्पर्धकं कर्मस्कंधशक्तिविशेषः । संज्ञित्वसम्यग्मिथ्यात्वयोगानां ज्ञानसम्यक्त्वलब्धिष्वंतर्भावान्न पृथगुपादानं ॥

कुतः पुनः क्षयोपशमः कर्मणां सिद्ध इत्याह;—

क्षीणाक्षीणात्मनां घातिकर्मणामवसीयते । शुद्धाशुद्धात्मतासिद्धिरन्यथानुपपत्तितः ॥ १ ॥

स्वसंवेदनादेवात्मनः शुद्धाशुद्धात्मतायाः सिद्धिरप्रतिबंधा सती घातिकर्मणां क्षीणोपशांतस्वभावतां साधयति तदभावे तदनुपपत्तेः, पयसि पंकस्य क्षीणोपशांततामंतरेण शुद्धात्मतानुपपत्तिवत् ॥

ततो मत्यादिविज्ञानचतुष्टयमिह स्मृतं । शुद्धाशुद्धात्मकं लिंगं तदावरणकर्मणाम् ॥ २ ॥
क्षयोपशमसद्भावे मत्यज्ञानादि च त्रयं । दर्शनत्रितयं चापि निजावरणकर्मणां ॥ ३ ॥
लब्धयः पंच तादृश्यः स्वांतरायस्य कर्मणः । सम्यक्त्वं दृष्टिमोहस्य वृत्तं वृत्तमुहस्तथा ॥ ४ ॥
संयमासंयमोपीति घातिक्षीणोपशांतता । सिद्धा तद्भवभावानां तथा भावं प्रसाधयेत् ॥ ५ ॥

एवं च सिद्धोष्टादशभेदो मिश्रो भावः ॥

यः पुनरौदयिको भाव एकविंशतिभेदोत्रोद्दिष्टस्तस्य निर्देशार्थं षष्ठमिदं सूत्रम्;—

## गतिकषायलिंगमिथ्यादर्शनाज्ञानासंयतासिद्धलेश्याश्चतु-श्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥

चतुरादीनां कृतद्वंद्वानां भेदशब्देनान्यपदार्था वृत्तिः पूर्ववत् । यथाक्रममिति चानुवर्तते तेनैवम-भिसंबंधः क्रियते—गतिश्चतुर्भेदा कषायश्चतुर्भेदो लिंगं त्रिभेदं मिथ्यादर्शनमेकभेदमदर्शनस्य तत्रैवांतर्भा-

वात्, अज्ञानमेकमेदं असंयतत्वमेकमेदं लिंगे हास्यरत्याद्यंतर्भावः सहचारित्वात् । गतिग्रहणमघात्यु-पलक्षणमिति न कस्यचिदौदयिकमेदस्यासंग्रहः ॥

कुतः पुनर्गतिनामादिकर्मणामुदयः सिद्धो यतोऽमीषामेकविंशतिभावानामौदयिकत्वं सिध्यतीत्याह;—

**अन्यथाभावहेतूनां केषांचिदुदयः स्थितः । कालुष्यविदितस्तद्वद्गतिनामादयस्तु ते ॥ १ ॥**

स्वयमगतिस्वभावस्य पुंसो नरकादिगतिपरिणामविशेषः कालुष्यमन्यथाभावाद्वेद्यते तद्वदकषायलिंग-मिथ्यादर्शनाज्ञानासंयतासिद्धलेश्यास्वभावस्य सतस्तस्य कषायादिपरिणामकालुष्याभाव एव तद्विचिरेव चात्मनोन्यथाभावहेतूनां केषांचिदुदयं साधयति, तदभावे सर्वथानुपपद्यमानत्वात् परिदृष्टहेतूनां तत्र व्यभिचारात् । तथा सति येषामुदयाद्गत्यादयः परिणामविशेषाः कादाचित्कास्ते गतिनामादयः कर्म-प्रकृतिभेदा इति परिशेषादवसीयते ॥

**गतिनामोदयादेव गतिरौदयिकी मता । तद्विशेषोदयात्सैव चतुर्धा तु विशिष्यते ॥ २ ॥**
**तयोपलक्षिताघातिकर्मोदयनिबंधनं । सुखाद्यौदयिकं सर्वमेतेनैवोपवर्णितम् ॥ ३ ॥**
**तथा क्रोधादिभेदस्य कषायस्योदयान्नृणाम् । चतुर्भेदः कषायः स्यादन्यथाभावसाधनः ॥४॥**
**लिंगं वेदोदयात्त्रेधा हास्याद्युदयतोपि च । हास्यादिस्तेन जीवस्य मुनिना प्रतिवर्णितः ॥ ५ ॥**
**दृष्टिमोहोदयात्पुंसो मिथ्यादर्शनमिष्यते । दृगावरणसामान्योदयाच्चादर्शनं तथा ॥ ६ ॥**
**सासादनं च सम्यक्त्वं यदानंतानुबंधिनः । कषायस्योदयाज्जातं तदप्येतेन वर्णितम् ॥ ७ ॥**
**सम्यग्मिथ्यात्वमेकेषां तत्कर्मोदयजन्मकं । मतमौदयिकं कैश्चित्क्षायोपशमिकं स्मृतम् ॥ ८ ॥**
**ज्ञानावरणसामान्यस्योदयादुपवर्णितं । जीवस्याज्ञानसामान्यमन्यथानुपपत्तितः ॥ ९ ॥**
**वृत्तिमोहोदयात्पुंसोऽसंयतत्वं प्रचक्ष्यते । कर्ममात्रोदयादेवासिद्धत्वं प्रणिगम्यते ॥ १० ॥**
**कषायोदयतो योगप्रवृत्तिरुपदर्शिता । लेश्या जीवस्य कृष्णादिः षड्भेदा भावतोनघैः ॥ ११**

अथ पारिणामिकभावभेदप्रतिपादनार्थं सप्तममिदं सूत्रमाह;—

## जीवभव्याभव्यत्वानि च ॥ ७ ॥

पारिणामिकस्य भावस्य त्रयोऽसाधारणा भेदा इत्यभिसंबंधः । चशब्दसमुच्चितास्तु साधारणाः अ-साधारणाश्चास्तित्वान्यत्वकर्तृत्वहरत्वपर्यायवत्त्वासर्वगतत्वानादिसंततिबंधत्वप्रदेशवत्त्वारूपत्वनित्यत्वादयः । तर्ह्यादिग्रहणमत्र न्याय्यमितिचेन्न, त्रिविधपारिणामिकभावप्रतिज्ञाहानिप्रसंगात् । समुच्चयार्थेपि चशब्दे सति तुल्यो दोष इति चेन्न, प्रधानापेक्षत्वात्त्रित्वप्रतिज्ञायाः । समुच्चीयमानास्तु चशब्देनाप्रधानभूता एवास्तित्वादय इति न दोषः । कुतः पुनः पारिणामिका जीवत्वादयो भावा इति चेत्, कर्मोपशम-क्षयक्षयोपशमोदयानपेक्षत्वात् । न ह्यायुरुदयापेक्षं जीवत्वं सिद्धस्याजीवत्वप्रसंगात् । तस्य जीवितपूर्व-कत्वाज्जीवत्वमिति चेन्न, उपचारतो जीवत्वप्रसंगात् । मुख्यं तु जीवत्वं तस्येष्यते, ततो न चौदयिकं । ननु च ज्ञानादेर्भावप्राणस्य धारणात् सिद्धस्य मुख्यं जीवत्वमित्यभ्युपगमे क्षायिकमेतत्स्यादनंतज्ञानादेः क्षायिकत्वादिति चेत् न, जीवनक्रियायाः शब्दनिष्पत्त्यर्थत्वात् तदेकार्थसमवेतस्य जीवत्वसामान्यस्य जीवशब्दप्रवृत्तिनिमित्तत्वोपपत्तेः । अथवा न त्रिकालविषयजीवनामभवनं जीवत्वं । किं तर्हि? चित्त्वं न च तदायुरुदयापेक्षं, न चापि कर्मक्षयापेक्षं सर्वदाभावात् । एतेन सम्यग्दर्शनज्ञानचारित्रपरिणामेन सिद्धभवनयोग्यत्वं भव्यत्वं तद्विपरीतमभव्यत्वं च पारिणामिकमुक्तेयं तस्यापि कर्मोदयाद्यनपेक्षत्वसिद्धेः सर्वदा भावात् । अनादिपरिणाममात्रनिमित्तत्वात् ॥

कुतः पुनरनादिः परिणामः कर्मोदयाद्युपाधिनिरपेक्षो जीवस्य सिद्ध इत्यारेकायामाह;—

**अनादिपरिणामोस्ति तत्रोपाधिपराङ्मुखः। सोपाधिपरिणामानामन्यथातत्त्वहानितः॥ १॥**

न हि स्फटिकादेरसति स्वाभाविकपरिणामे स्वच्छत्वे जपाकुसुमाद्युपाधिसान्निध्यभावानुजन्मा रक्तत्वादिपरिणामः प्रतीयते तद्वदात्मनोप्यौपाधिकाः परिणामा औपशमिकादयो नानादिपरिणाममंतरेणोपपद्यंते शशविषाणादेरपि स्वाभाविकपरिणामरहितस्यौपाधिकपरिणामप्रसंगात्। ततोस्ति जीवस्यानादिनिरुपाधिकः परिणामः कर्मोपशमादिपरिणामवत्। तथासति—

**एतत्समुद्भवा भावा द्व्यादिभेदा यथाक्रमम्। जीवस्यैवोपपद्यंते चित्स्वभावसमन्वयात्॥ २॥**

कर्मणामुपशमक्षयक्षयोपशमोदयप्रयोजना औपशमिकक्षायिकक्षायोपशमिकौदयिका भावाः कर्मण एवेति न मंतव्यं, कर्मोपशमादिभिः प्रयुज्यमानादौपशमिकादीनां जीवपरिणामत्वोपपत्तेः। चेतनासंबंधत्वाच्च प्रधानस्यैवैते परिणामा, इत्यप्यनालोचिताभिधानं तत एव। न हि द्व्यादिभेदेषु यथाक्रममौपशमिकादिषु भावेषु चित्समन्वयोऽसिद्धस्तेषामहंकारास्पदत्वेन प्रतीतेरात्मोपभोगवत्। न चाहंकारोपि प्रधानपरिणामः पुरुषतादात्म्येन स्वयं संवेदनात्। भ्रांतं तत्तथा संवेदनमितिचेत् न, बाधकाभावात्। अहंकारादयोऽचेतना एवानित्यत्वात् कलशादिवत्येतदनुमानं बाधकमितिचेन्न, पुरुषानुभवेनानैकांतिकत्वात् तस्यापि परापेक्षितया कादाचित्कत्वेनानित्यत्वसिद्धेरित्युक्तत्वादुपयोगसिद्धौ॥ किं च—

**क्षायिका नव भावाः स्युः पुरुषस्यैव तत्त्वतः। क्षायिकत्वाद्यथा तस्य सिद्धत्वमिति निश्चयः ३**
**कृत्स्नकर्मक्षयात्तावत् सिद्धत्वं क्षायिकं मतं। सर्वेषामात्मरूपं चेत्यप्रसिद्धं न साधनम्॥ ४॥**
**द्वावौपशमिकौ भावौ जीवस्य भवतो ध्रुवं। मोक्षहेतुत्वतः कर्मक्षयजन्मदृगादिवत्॥ ५॥**
**क्षायोपशमिका दृष्टिज्ञानचारित्रलक्षणाः। भावाः पुंसोऽत एव स्युरन्यथानुपपत्तितः॥ ६॥**
**प्रधानाद्यात्मका ह्येषा सम्यग्दृष्ट्यादिभावना। न पुंसो मोक्षहेतुः स्यात्सर्वथातिप्रसंगतः॥७**
**क्षायोपशमिकाः शेषा भावाः पुंवन्मता भृतः। क्षायोपशमिकत्वात्स्युः सम्यग्दृग्बोधवृत्तवत् ८**
**जीवस्यौदयिकाः सर्वे भावा गत्यादयः स्मृताः। जीवे सत्येव सद्भावादसत्यनुपपत्तितः॥९॥**
**कर्मोदये च तस्यैव तथा परिणमत्वतः। तेषां तत्परिणामत्वं कथंचिन्न विरुध्यते॥ १०॥**
**भव्याभव्यत्वयोर्जीवस्वभावत्वं विभाव्यते। पारिणामिकतायोगाच्चेतनत्वविवर्तवत्॥ ११॥**
**चेतनत्वस्वभावत्वमात्मनोऽसिद्धमित्यसत्। स्वोपयोगस्वभावत्वसिद्धेः प्रागभिधानतः॥१२॥**
**नन्वौपशमिकादीनां त्यागश्चेन्निर्वृतात्मनः। निःस्वभावत्वमासक्तं नैरात्म्यं सर्वथा ततः॥१३**
**तदत्यागे तु मोक्षस्याभावः स्यादात्मनः सदा। ततो न तत्स्वभावत्वं जीवस्येत्यपरे विदुः १४**
**तदसंगतमादेशवचनादेव देहिनः। तेषां तद्रूपताभीष्टेरत्यागाच्च कथंचन॥ १५॥**
**चित्स्वभावतया तावत्तेषां त्यागः कथंचन। क्षायोपशमिकत्वौपशमिकत्वेन तत्क्षये॥ १६॥**
**तेषामौदयिकत्वेन नैव स्यान्निःस्वभावता। मोक्षाभावोपि चापुंसः क्षायिकाद्यविनाशतः॥१७**
**न चौपशमिकादीनां नाशाज्जीवास्वभावता। प्रतिक्षणविवर्तानां तत्स्वभावत्वहानितः॥ १८॥**
**कूटस्थात्मकतापत्तेः सर्वथार्थक्रियाक्षतेः। वस्तुत्वहानितो जीवतत्त्वाभावप्रसंगतः॥ १९॥**
**तथा च नाशिनो भावाः स्वभावा नात्मनस्तथा। अनात्मनोपि ते न स्युरिति वस्तुता कुतः**
**एवं निःशेषतत्त्वानामभावः केन वार्यते। नास्तिभावस्वभावत्वाभावः साधनवादिनाम्॥२१॥**
**ततः स्याद्वादिनां सिद्धः शाश्वतोऽशाश्वतोपि च। स्वभावः सर्ववस्तूनामिति जुष्टतत्स्वभावता॥**

एवं जीवस्य स्वतत्त्वं व्याख्याय लक्षणं व्याचिख्यासुरिदं सूत्रमाह;—

## उपयोगो लक्षणम् ॥ ८ ॥

जीवस्येत्यनुवर्तते । कः पुनः स्वतत्त्वलक्षणयोर्विशेषः? स्वतत्त्वं लक्ष्यं स्याल्लक्षणं च लक्षणं । लक्षणं तु न लक्ष्यं इति तयोर्विशेषः ॥

यद्येवं किमत्र जीवस्य स्वतत्त्वं लक्षणमित्याह;—

**तत्र क्षयोद्भवो भावः क्षयोपशमजश्च यः । तद्व्यक्तिव्यापि सामान्यमुपयोगोस्य लक्षणं ॥ १ ॥**

क्षयोद्भवो भावः क्षायिको भावस्तस्य व्यक्ती केवलज्ञानदर्शने गृह्येते, क्षयोपशमजो मिश्रस्तस्य च व्यक्तयो मत्यादिज्ञानानि चत्वारि मत्यज्ञानादीनि त्रीणि चक्षुर्दर्शनादीनि च गृह्यंते तत्रैवोपयोगसामान्यस्य वृत्तेरन्यत्रावर्तनात् । तद्व्यापि सामान्यमुपयोगोस्य जीवस्य लक्षणमिति विवक्षितत्वात्, तद्व्यक्तेर्लक्षणत्वे लक्षणस्याव्याप्तिप्रसंगात् । बाह्याभ्यंतरहेतुद्वयसन्निधाने यथासंभवमुपलब्धुश्चैतन्यानुविधायी परिणाम उपयोग इति वचनात् । अत्र हि न चैतन्यमात्रमुपयोगो यतस्तदेव जीवस्य लक्षण स्यात् । किं तर्हि? चैतन्यानुविधायी परिणामः स चोपलब्धुरात्मनो न पुनः प्रधानादेः चैतन्यानुविधायित्वाभावप्रसंगात् । न चासावहेतुको बाह्यस्याभ्यंतरस्य च हेतोर्द्वयस्योपात्तानुपात्तविकल्पस्य सन्निधाने सति भावात् । न चैवं परिणामविशेष उपयोगो मतिज्ञानादिव्यक्तिरूपः प्रतिपादितो भवति यथासंभवमिति वचनात् । ततो दर्शनज्ञानसामान्यमुपयोग इति सूक्तं । किं पुनर्लक्षणं? परस्परव्यतिकरे सति येनान्यत्वं लक्ष्यते तल्लक्षणं । हेमश्यामिकयोर्वर्णादिविशेषवत् । तद्द्विविधं आत्मभूतानात्मभूतविकल्पात् । तत्रात्मभूतं लक्षणमग्नेरुष्णगुणवत्, अनात्मभूतं देवदत्तस्य दंडवत् । तत्रेहात्मभूतं लक्षणमुपयोगो जीवस्येति प्रतिपत्तव्यं । नात्मभूतो जीवस्योपयोगो गुणत्वादग्नेरुष्णवदिति चेन्न, एकांतभेदनिराकरणस्योक्तत्वाद्गुणगुणिनोः, गुणिनः कथंचिदभिन्नस्यैव गुणत्वोपपत्तेरन्यथा गुणगुणिभावविरोधात् । घटपटादिवत् सर्वथा भिन्नमेव लक्ष्याल्लक्षणं दंडादिवत् इतिचेन्न, अनवस्थाप्रसंगात् । लक्षणाद्भिन्नं लक्ष्यं कुतः सिद्ध्येत्? लक्षणांतराच्चेत्ततोऽपि यदि तद्भिन्नं तदा लक्षणांतरादेव सिद्ध्येदित्यनवस्था । सुदूरमपि गत्वा यद्यभिन्नाल्लक्षणात्कुतश्चित्तत्सिद्ध्येत् तदा न सर्वं लक्षणं लक्ष्याद्भिन्नमेव । तथा यदि प्रसिद्धं तल्लक्षणं लक्ष्यस्य प्रज्ञापकं तदा कुतस्तत्प्रसिद्धं? स्वलक्षणांतरादिति चेत्तदपि स्वलक्षणांतरादित्यनवस्था । सुदूरमप्यनुसृत्य यदि लक्षणं स्वरूपत एव प्रसिद्ध्येत्तदा न सकलं भिन्नमेव लक्षणं लक्षणस्य स्वात्मभूतलक्षणत्वात् । न वा प्रसिद्धं किंचित्कस्यचिल्लक्षणमिति प्रयोगात् । तर्ह्यभिन्नमेव लक्ष्याल्लक्षणमग्नेरुष्ण्यादिवदिति चेन्न, विपर्ययप्रसंगात् । तादात्म्याविशेषेप्यात्मोपयोगयोरग्न्यौष्ण्ययोर्वोपयोगादिरेव लक्षणमात्मादेः न पुनरात्मादिरुपयोगादेरिति नियमहेत्वभावात् । प्रसिद्धत्वादुपयोगादिर्लक्षणमिति चेत्, किं पुनरात्मादिरप्रसिद्धः तथोपयोगमेकं कथमात्मोपयोगयोरग्न्युष्णयोर्वा तादात्म्यं प्रसिद्धाप्रसिद्धयोः सर्वथा तादात्म्यविरोधात् । न चैकांतेनाप्रसिद्धस्य लक्ष्यत्वं खरविषाणवत् । नापि प्रसिद्धस्यैव । लक्षणवत् कथंचित्प्रसिद्धस्यैव लक्ष्यत्वोपपत्तेः द्रव्यत्वेन प्रसिद्धस्य हि वन्हेरग्नित्वेनाप्रसिद्धस्य लक्ष्यत्वमुपलब्धं द्रव्यस्य च सत्त्वेन प्रसिद्धस्य द्रव्यत्वेनाप्रसिद्धस्य लक्ष्यत्वमुपपद्यते सतोपि वस्तुत्वेन प्रसिद्धस्यासत्त्वव्यतिरेकेणाप्रसिद्धस्य लक्षणत्वमुपलक्ष्यते नान्यथा । न चैवमनवस्था कस्यचित्कचिन्निर्णयोपलब्धेः । सर्वत्रानिर्णयस्य व्याहतत्वात् तस्यैव स्वरूपेण निर्णयात् । तदनिर्णये वा कथं सर्वत्रानिर्णयसिद्धिः । सर्वथा प्रसिद्धं लक्षणमित्यप्ययुक्तं, वृत्तद्राघिमादिना प्रसिद्धस्य दंडस्य कैश्चिद्गुरुलक्ष्यैर्विशेषैरप्रसिद्धस्यापि

परिणामी यथा काले गतिमानाहरत्यतः । सोपात्तकर्मसंस्पृष्टदेशादीन् पुद्गलान्तरं ॥ ७ ॥
इति विग्रहसंप्राप्तौ गतिर्जीवस्य युज्यते । यद्भिः सूत्रैः सुनिर्णीता निर्बाधं जैनदर्शने ॥ ८ ॥

अथैवं निरूपितगतेर्जीवस्य नियतकालात्मकाभस्य षष्टिकाद्यात्मलाभवत्संभाव्यमानस्य जन्मभेदप्रतिपादनार्थमाह;—

## संमूर्छनगर्भोपपादा जन्म ॥ ३१ ॥

समंततो मूर्छनं शरीराकारतया सर्वतः पुद्गलानां सम्मूर्छनं, शुक्रशोणितगरणाद्गर्भः मातृप्रयुक्ताहारात्मसात्करणाद्वा, उपेत्य पद्यतेस्मिन्नित्युपपादः । एतेषामितरेतरयोगे द्वंद्वे । संमूर्छनस्य ग्रहणमादावतिस्थूलत्वात् अल्पकालजीवित्वात् तत्कार्यकारणप्रत्यक्षत्वाच्च, तदनंतरं गर्भस्य ग्रहणं कालप्रकर्षानिष्पत्तेः, उपपादस्य ग्रहणमंते दीर्घजीवित्वात् । त एते जीवस्य जन्मेति प्रत्येयं । संमूर्छनादिभेदात् जन्मभेदवचनभेदप्रसंग इति चेन्न, जन्मसामान्योपादानानां तदेकत्वोपपत्तेः ॥

कुतः पुनः संमूर्छनादय एव जन्मभेदा इत्याह;—

**संमूर्छनादयो जन्म पुंसो भेदेन संग्रहात् । सतोपि जन्मभेदस्य परस्यांतर्गतेरिह ॥ १ ॥**

संस्वेदोद्भेदादयः परे जन्मभेदाः संमूर्छनात् तेषां तत्रैवांतर्गमनात् । भेदेन तु संगृह्यमाणं जन्म त्रिविधं व्यवतिष्ठते संमूर्छनादिभेदः पुनर्जीवस्य तत्कारणकर्मभेदात्, सोपि स्वनिमित्ताध्यवसायभेदादिति प्रतिपत्तव्यं ॥

तद्योनिप्रतिपादनार्थमाह;—

## सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३२ ॥

आत्मनः परिणामविशेषश्चित्तं, शीतः स्पर्शविशेषः, संवृतो दुरुपलक्ष्यः । सह चित्तेन वर्तत इति सचित्तः, शीतोस्यास्तीति शीतः, संव्रीयते संवृतः । सचित्तश्च शीतश्च संवृतश्च सचित्तशीतसंवृताः सहेतरैरचित्तोष्णविवृतैर्वर्तते इति सेतराः सप्रतिपक्षाः, मिश्रग्रहणमुभयात्मसंग्रहार्थं । चशब्दः प्रत्येकं समुच्चयार्थ इत्येके, तदयुक्तं तमंतरेणापि तत्प्रतीतेः पृथिव्यप्तेजोवायुरिति यथा । इतरयोनिभेदसमुच्चयार्थस्तु युक्तश्चशब्दः, एकशो ग्रहणं क्रममिश्रप्रतिपत्त्यर्थं तेन सचित्तोचित्तो मिश्रश्च शीत उष्णो मिश्रश्च संवृतो विवृतो मिश्रश्चेति नवयोनिभेदास्तस्य जन्मनः प्रतीयंते तच्छब्दस्य प्रकृतापेक्षत्वात् । सचित्तादीनां द्वंद्वे पुंवद्भावाभावो भिन्नाश्रयत्वादित्येके, तदयुक्तं । पुल्लिंगस्य योनिशब्दस्येहाश्रयणात्तस्योभयलिंगत्वात् । स्त्रीलिंगस्य वा प्रयोगस्योत्तरे यदिकस्य ह्रस्वत्वस्य विधानात् द्रुतायां तपरकरणकरणान्मध्यमवलंबितयोरुपसंख्यानमित्यत्र द्वंद्वेपि तस्य दर्शनात् । योनिजन्मनोरविशेष इति चेन्न, आधाराधेयभेदाद्विशेषोपपत्तेः । सचित्तग्रहणमादौ तस्य चेतनात्मकत्वात्तदनंतरं शीताभिधानं तदप्याये हेतुत्वात् । अंते संवृतग्रहणं गुप्तरूपत्वात् । तत्राचित्तयोनयो देवनारकाः, गर्भजा मिश्रयोनयः, शेषास्त्रिविकल्पाः; शीतोष्णयोनयो देवनारकाः, उष्णयोनिस्तेजस्कायिकः, इतरे त्रिप्रकाराः; देवनारकैकेंद्रियाः संवृतयोनयः, विकलेंद्रिया विवृतयोनयः, मिश्रयोनयो गर्भजाः तद्भेदाश्चशब्दसमुच्चिताः प्रत्यक्षज्ञानदृष्टाः, इतरेषामागमगम्याश्चतुरशीतिशतसहस्रसंख्याः । तदुक्तं । "णिच्चिदरधादुसत्तयतरुदसवियलिंदियेसु छच्चेव । सुरणिरयतिरियचदुरो चोद्दस मणुए सदसहस्सा" ॥ अथैतेषां योनिभेदानां सद्भावे युक्तिमुपदर्शयति;—

**तत्रापि योनयः संति सचित्ताद्या यथोदिताः । कारणेन विना जन्म क्रियाया आत्मनीक्षणात् १**

**तद्वैचित्र्यं पुनः कर्मवैचित्र्यात्तद्विहन्यते । कार्यवैचित्र्यसिद्धेस्तु कर्मवैचित्र्यनिर्णयः ॥ २ ॥**

न हि स्वभावत एव प्राणिनां सुखदुःखानुभवादिकार्यवैचित्र्यं नियमाभावप्रसंगात् । कालादेवेति वा युक्तं, एकस्मिन्नपि काले तद्वैचित्र्यानुभवात् । भूतवैचित्र्यात्सुखादिवैचित्र्यमिति चेत् न, सुखादेः भूतकार्यत्वनिषेधात् । ततः कर्मवैचित्र्यमेव सुखादिकार्यवैचित्र्यं गमयति, तद्व्यतिरेकेण दृष्टकारणसाकल्येपि कदाचिदनुत्पत्तेः । तच्च कर्मवैचित्र्यमस्य जन्मनिमित्तमिति पर्याप्तं प्रपंचकेन ॥

केषां पुनर्गर्भजन्मेत्याह;—

## जरायुजांडजपोतानां गर्भः ॥ ३३ ॥

जालवत्प्राणिपरिवरणं जरायुः जरायौ जाता जरायुजाः, शुक्रशोणितपरिवरणमुपात्तकाठिन्यं नखत्वक्सदृशं परिमंडलमंडं अंडे जाता अंडजाः पूर्णावयवः परिस्पंदादिसामर्थ्योपलक्षितः पोतः । पोतज इत्ययुक्तमर्थभेदाभावात् । आत्मा पोतज इति चेन्न, तस्यापि पोतपरिमाणात्मात्मनः पोतत्वात् । जरायुजाश्च अंडजाश्च पोताश्च जरायुजांडजपोता इति सिद्धं द्वंद्वे । जरायुग्रहणमादावभ्यर्हितत्वात् क्रियारंभशक्तियोगात् केषांचिन्महाप्रभावत्वान्मार्गफलाभिसंबंधाच्च । तदनंतरमंडजग्रहणं पोतेभ्योऽभ्यर्हितत्वात् । एतेषां गर्भ एव जन्मेति सूत्रार्थः । उद्देशे च निर्देशो युक्त इति चेन्न, गौरवप्रसंगात् । शेषाणां संमूर्छनमिति लघुनोपायेन गर्भोपपादानंतरं वचनोपपत्तेः ॥ कुतः पुनर्जरायुजादीनां गर्भ एव युक्त इत्याह;—

**युक्तो जरायुजादीनामेव गर्भोवधारणात् । देवनारकशेषाणां गर्भाभावविभावनात् ॥ १ ॥**

यदि हि जरायुजादीनां गर्भ एवेत्यवधारणं स्यात्तदा जरायुजादयो गर्भनियताः स्युः गर्भस्तु तेष्वनियत इति देवनारकेषु शेषेषु स प्रसज्येत । यदा तु जरायुजादीनामेवेत्यवधारणं तदा तेषु गर्भाभावो विभाव्यत इति युक्तो जरायुजादीनामेव गर्भः ॥

केवलमुपपादेपि जरायुजादीनां प्रसक्तौ तन्निवारणार्थमिदमाह;—

## देवनारकाणामुपपादः ॥ ३४ ॥

**स्याद्देवनारकाणामुपपादो नियतस्तथा । तस्याभावात्ततोन्येषां तेषां जन्मांतरच्युतेः ॥ १ ॥**

देवनारकाणामेवोपपाद इति हि नियमे देवनारकेषु नियत उपपादः देवनारकास्तूपपादेन नियता इति गर्भसंमूर्छनयोरपि प्रसक्ताः पूर्वोत्तरसूत्रावधारणात् । तत्र निरुवाच, कोसौ ? उपपाद एव नारका अवतिष्ठंते न गर्भे संमूर्छने वा प्रसज्यंते ततस्तेषां जन्मांतरच्युतिसिद्धेरुपपाद एव ॥

नन्वेवं जरायुजादीनां देवनारकाणां च संमूर्छनेपि प्रसक्तिरित्याख्यातं प्रतिघ्नन्नाह;—

## शेषाणां संमूर्छनम् ॥ ३५ ॥

शेषाणामेव संमूर्छनमित्यवधारणीयं । के पुनः शेषाः कुतो वा तेषामेव संमूर्छनमित्याह;—

**निर्दिष्टेभ्यस्तु शेषाणां युक्तं संमूर्छनं सदा । गर्भोपपादयोस्तत्र प्रतीत्यनुपपत्तितः ॥ १ ॥**

उक्तेभ्यो जरायुजादिभ्यो देवनारकेभ्यश्च अन्ये शेषास्तेषामेव संमूर्छनं युक्तं सदा गर्भोपपादयोस्तत्र प्रतीत्यनुपपत्तेः । तर्हि संस्वेदजादीनां जन्मकारोन्यः सूत्रयितव्य इत्याशंकामपसारयन्नाह;—

**तथा संस्वेदजादीनामपि संमूर्छनं मतं । जन्मेति नापरो जन्मप्रकारो सूत्रितोस्ति नः ॥ २ ॥**

**इत्येवं पंचभिः सूत्रैः सूत्रितं जन्म जन्मिनां । भेदप्रभेदतश्चित्रं युक्त्यागमसमाश्रयं ॥ ३ ॥**

अथ जीवस्य कति शरीराणीत्याह;—

## औदारिकवैक्रियिकाहारकतैजसकार्मणानि शरीराणि ॥ ३६ ॥

शरीरनामकर्मोदये सति शीर्यंत इति शरीराणि । शरणक्रियात्र व्युत्पत्तिनिमित्तं तु शरीरनामकर्मोदय एवोदितः शरीरत्वपरिणामः न पुनरर्थांतरभूतशरीरत्वसामान्यं तस्य विचार्यमाणस्यायोगात् ॥

केन पुनः कारणेन जन्मांतरं शरीराण्याहुरित्युच्यते;—

**स्वयोनौ जन्म जीवस्य शरीरोत्पत्तिरिष्यते । तेनात्रौदारिकादीनि शरीराणि प्रचक्षते ॥१॥**

औदारिकादिशरीरनामकर्मविशेषोदयापादितानि पंचैवौदारिकादीनि शरीराणि जीवस्य चतुर्गतिः स्वयोनौ जन्मोक्तं, न हि गतिनामोदयमात्रं जन्म, अनुत्पन्नशरीरस्यापि तत्प्रसंगात् । तत्रोदारं स्थूलं प्रयोजनमस्येत्यौदारिकं उदारे भवमिति वा, विक्रिया प्रयोजनमस्येति वैक्रियिकमाह्रियते तदित्याहारकं, तेजोनिमित्तत्वात्तैजसं, कर्मणामिदं कार्मणं तत्समूहो वा । एतेषां द्वंद्वे, पूर्वमौदारिकस्य ग्रहणमतिस्थूलत्वात् उत्तरेषां क्रमवचनं । सूक्ष्मक्रमसूक्ष्मप्रतिपत्त्यर्थं कार्मणग्रहणमादौ युक्तमौदारिकादिशरीराणां तत्कार्यत्वादिति चेन्न, तस्यात्यंतपरोक्षत्वात् । औदारिकमपि परोक्षमिति चेन्न, तस्य केषांचित्परोक्षत्वात् । तथाहि—

**सिद्धमौदारिकं तिर्यङ्मानुषाणामनेकधा । शरीरं तत्र तन्नामकर्मवैचित्र्यतो बृहत् ॥ २ ॥**

बृहद्धि शरीरमौदारिकं मनुष्याणां तिरश्चां च प्रत्यक्षतः सिद्धं तेषु शरीरेषु मध्ये । तच्चानेकधा तन्नामकर्मणोनेकविधत्वात् ॥ शेषाणि कुतः सिद्धानीत्याह—

**संभाव्यानि ततोन्यानि बाधकाभावनिर्णयात् । परमागमसिद्धानि युक्तितोपि च कार्मणं ॥ ३**

न कर्मणामिदं कार्मणमित्यस्मिन्पक्षे सर्वमौदारिकादि कार्मणं प्रसक्तमिति चेन्न, प्रतिनियतकर्मनिमित्तत्वात् तेषां भेदोपपत्तेः । कर्मसामान्यकृतत्वादभेद इति चेन्न, एकमृदादिकारणपूर्वकस्यापि घटोदंचनादेर्भेददर्शनात् कार्मणप्रणालिकया च तन्निष्पत्तिः स्वोपादानभेदाद्भेदः प्रसिद्धः । पृथगुपलंभप्रसंग इति चेन्न, विस्रसोपचयेन स्थानात् क्लिन्नगुडरेणुश्लेषवदौदारिकादीनां कार्मणनिमित्तत्वे कार्मणं किंनिमित्तमिति वाच्यं? न तावन्निर्निमित्तं तदनिर्मोक्षप्रसंगाद्वाभिभावप्रसंगाद्वा शरीरांतरनिमित्तत्वे तु तस्याप्यन्यशरीरनिमित्तत्वेनवस्थापत्तिरिति चेन्न, तस्यैव निमित्तभावात् । पूर्वं हि कार्मणं कार्मणस्य निमित्तं तदपि तदुत्तरस्येति निमित्तनैमित्तिकभावोऽविरुध्यते । नचैवमनवस्थापत्तिः कार्यकारणभावेन तत्संतानस्यानादेरविरोधात् । मिथ्यादर्शनादिनिमित्तत्वाच्च नानिमित्तं कार्मणं, ततो नानिर्मोक्षप्रसंगः । तच्चैवंविधं परमागमात्सिद्धं वैक्रियिकादिवत् युक्तितश्च यथाप्रदेशं साधयिष्यते ॥

ननु यथौदारिकं स्थूलं तदा परं परं कीदृशमित्याह;—

## परं परं सूक्ष्मम् ॥ ३७ ॥

परशब्दस्यानेकार्थत्वे विवक्षातो व्यवस्थार्थगतिः पृथग्भूतानां सूक्ष्मगुणेन वीप्सानिर्देशः तेनौदारिकात्परं वैक्रियिकं सूक्ष्मं न स्थूलतरं, ततोप्याहारकं, ततोपि तैजसं सूक्ष्मं, ततोपि कार्मणमिति संप्रतीयते ॥

प्रदेशतः परं परं कीदृगित्याह;—

## प्रदेशतोऽसंख्येयगुणं प्राक्तैजसात् ॥ ३८ ॥

प्रदेशाः परमाणवस्ततोऽसंख्येयगुणं परंपरमित्यभिसंबंधः प्राक्तैजसादिति वचनात् । न तैजसकार्म-

णयोरसंख्येयगुणत्वं । किं तर्हि? औदारिकाद्वैक्रियिकं प्रदेशतोऽसंख्येयगुणं ततोप्याहारकमिति निश्चयः ॥

तैजसकार्मणे किंगुणे इत्याह;—

## अनंतगुणे परे ॥ ३९ ॥

प्रदेशत इत्यनुवर्तते परं परमिति च, तेनाहारकात्परं तैजसं प्रदेशतोऽनंतगुणं ततोपि कार्मणमनंतगुणमिति विज्ञायते । तत एव नोभयोस्तुल्यत्वमाहारकादनंतगुणत्वाभावात् । अन्यदेव हि आहारकादनंतगुणत्वं तैजसस्य, तैजसाच्चान्यत् कार्मणस्य तस्यानंतविकल्पत्वात् परस्मिन् सत्यारातीयस्यावरत्वावरे इति निर्देशो न प्रसज्यते बुद्धिविषयव्यापारादुभयोराहारत्वोपपत्तेः । व्यवहितेपि वा परशब्दप्रयोगात् । ननु च यदि प्रदेशापेक्षया परं परमसंख्येयगुणमनंतगुणं चोच्यते सूक्ष्मं कथमित्याह;—

**क्षेत्रावगाहनापेक्षां कृत्वा सूक्ष्मं परं परं । तैजसात्प्रागसंख्येयगुणं ज्ञेयं प्रदेशतः ॥ १ ॥**
**तथानंतगुणे ज्ञेये परे तैजसकार्मणे ।**

तर्हि सप्रतिघाते ते प्राप्ते इत्याह;—

## अप्रतीघाते ॥ ४० ॥

प्रतीघातो मूर्त्यंतरव्याघातः स न विद्यते ययोस्तेऽप्रतीघाते तैजसकार्मणे । कुत इत्याह;—

**सर्वतोप्यप्रतीघाते परिणामविशेषतः ।**

वैक्रियिकाहारयोरप्यप्रतीघातत्वमिति न मंतव्यं, सर्वतोऽप्रतीघातस्य तयोरभावात् । न हि वैक्रियिकं सर्वतो प्रतीघातमाहारकं वा प्रतिनियतविषयत्वात्तदप्रतीघातस्य । तैजसकार्मणे पुनः सर्वस्य संसारिणः सर्वतोप्रतीघाते ताभ्यां सह सर्वत्रोत्पादान्यथानुपपत्तेः । ततस्तर्हि सूत्रे सर्वतो ग्रहणं कर्तव्यमिति चेत् न, मुख्यस्य प्रतीघातस्यात्र विवक्षितत्वात् । कुतः पुनस्तादृशोऽप्रतीघात इति चेत्, सूक्ष्मपरिणामविशेषादयस्पिंडे तेजोनुप्रवेशवत् । ये त्वाहुः, पूर्वं पूर्वं सूक्ष्मं युक्तं प्रदेशतोल्पत्वादिति तान् प्रत्याह;—

**प्रदेशतोल्पतातारतम्यं कायेषु ये विदुः । सूक्ष्मतातारतम्यस्य साधनं ते कुतार्किकाः ॥ १ ॥**
**तस्य कार्पासपिंडेनानेकांताश्रिष्विलात्मनां । प्रदेशबहुतातारतम्यवत्स्थौल्यबंधने ॥ २ ॥**

यथैव प्रदेशबहुत्वतारतम्यमुत्तरोत्तरशरीरेषु स्थूलत्वप्रकर्षे साध्ये निबिडावयवसंयोगपरिणामेनायस्पिंडेनानैकांतिकमिति न तत्र स्थूलतातारतम्यं साधयति तथा प्रदेशाल्पत्वतारतम्यमपि पूर्वशरीरेषु न सूक्ष्मतातारतम्यमिति स्वहेतुविशेषसांनिध्यात् तैजसकार्मणयोरनंतगुणत्वेपि पूर्वकायः सूक्ष्मपरिणामः सिद्धः सर्वतोप्रतीघातत्वं साधयत्येवायस्पिंडे तेजोनुप्रवेशवदिति सूक्तं । न हि तेजसोयस्पिंडेन प्रतीघाते तत्रानुप्रवेशो युज्येत । स्यान्मतं, तेजसः संयोगविशेषादयस्पिंडावयवेषु कर्माण्युत्पतिपद्यंते ततो विभागस्ततः संयोगविनाशस्ततोपि तस्यायस्पिंडावयविनो विनाशस्ततोप्यौष्ण्यापेक्षादग्निसंयोगात्तदवयवेष्वनुष्णाशीतस्पर्शविनाशः परस्मादग्निसंयोगादुष्णस्पर्शोत्पत्तिः ततस्तदुपभोक्तुरदृष्टविशेषवशाद्व्यणुकादिप्रक्रमेण तादृशस्यैवायस्पिंडस्योत्पत्तिः । एवं च नायस्पिंडे तदवस्थे तेजसोनुप्रवेशोस्ति यतोऽप्रतीघातस्य विघाते निदर्शनीक्रियेतेति । तदयुक्तं, प्रतीतिविरोधात् । स एवायमयस्पिंडस्तेजोव्याप्तः प्रतिभाति यः पूर्वमनुष्णः समुपलब्ध इति प्रतीतेः । परत्र प्रक्रियामात्रस्य जातुचिदप्रतीतेर्न भ्रांतत्वं सदृशापरोत्पत्तेस्तथा प्रतीतिरिति चेन्न, एकत्वादिवत् । न हि किंचिन्मूर्तमति प्रविशदमूर्तं दृष्टं । व्योम दृष्टमिति चेन्न, तत्र मूर्तमति मूर्तेष्वपि तथा प्रसंगात् । तथा च तत्कथंचित्प्र-

त्यभिज्ञानादेकत्वसिद्धिः । बाधकरहितात्तत्तत्सिद्धौ कथमयस्पिंडेपि प्रत्यभिज्ञानादेकत्वं सिद्ध्येत्? न हि तत्र किंचिद्बाधकमस्ति । स्यान्मतं, तेजोऽयस्पिंडे तदवस्थेनानुप्रविशति मूर्तत्वाल्लोष्ठवदित्येतद्बाधकमिति तदसद्धेतोः संदिग्धविपक्षव्यावृत्तिकत्वात् सर्वज्ञत्वाभावे वक्तृत्वादिवत् । न हि किंचिन्मूर्तमति प्रविशदमूर्तं दृष्टं । व्योम दृष्टमिति चेत्, तत्र मूर्तिमतोनुप्रवेशात्तथा प्रतीतेरबाधत्वादित्यलं प्रसंगेन ॥

ननु कर्मैव कार्मणमित्यस्मिन् पक्षे न तच्छरीरं पुरुषविशेषगुणत्वाद्बुद्ध्यादिवदिति कश्चित्तं प्रत्याह;—

**कर्मैव कार्मणं तत्र शरीरं नृगुणत्वतः । इत्यसद्द्रव्यरूपेण तस्य पौद्गलिकत्वतः ॥ ३ ॥**

न हि कर्म धर्माधर्मरूपमदृष्टसंज्ञकं पुरुषविशेषगुणस्तस्य द्रव्यात्मना पौद्गलिकत्वात्ततो नाशरीरत्वसिद्धिः । भावकर्मैवात्मगुणरूपं न द्रव्यकर्म पुद्गलपर्यायत्वमात्मसात्कुर्वत्प्रसिद्धमिति मन्यमानं प्रत्याह;—

**कर्म पुद्गलपर्यायो जीवस्य प्रतिपद्यते । पारतंत्र्यनिमित्तत्वात्कारागारादिबंधवत् ॥ ४ ॥**

क्रोधादिभिर्व्यभिचार इति चेन्न, तेषामपि जीवस्य पारतंत्र्यनिमित्तत्वे पौद्गलिकत्वोपपत्तेः । चिद्रूपतया संवेद्यमानाः क्रोधादयः कथं पौद्गलिकाः प्रतीतिविरोधादिति चेन्न, निर्हेतोर्व्यभिचारायोगात् तेषां पारतंत्र्यनिमित्तत्वाभावात् । द्रव्यक्रोधादय एव हि जीवस्य पारतंत्र्यनिमित्तं न भावक्रोधादयस्तेषां स्वयं पारतंत्र्यरूपत्वाद्द्रव्यक्रोधादिकर्मोदये हि सति भावक्रोधाद्युत्पत्तिरेव जीवस्य पारतंत्र्यं न पुनस्तत्कृतमन्यत्किंचिदित्यव्यभिचारी हेतुर्गमकः सदा ॥

अत्रापरः स्वप्नांतिकं शरीरं परिकल्पयति तमपसारयन्नाह;—

**स्वप्नोपभोगसिद्ध्यर्थं कायं स्वप्नांतिकं तु ये । प्राहुस्तेषां निवार्यंते भोग्याः स्वप्नांतिकाः कथम् ॥ ५ ॥**

**भोग्यवासनया भोग्याभासं चेत्स्वप्नवेदिनां । शरीरवासनामात्राच्छरीराभासनं न किम् ॥ ६ ॥**

यथैव हि स्वप्नदशायां भोगोपलब्धिः स्वप्नांतिकं शरीरमंतरेण न घटत इति मन्यते तथा भोग्यानर्थानंतरेणापि सा न सुघटेति भवद्भिर्मननीयं, जाग्रद्दशायां शरीर इव भोगेष्वपि सत्सु भोगोपलब्धेः सिद्धत्वात् । यदि पुनर्भोग्यवासनामात्रात्स्वप्नदर्शिनां भोग्याभास इति भवतां मतिस्तदा शरीरवासनामात्राच्छरीराभासनमिति किं न मतं? तथासति स्वप्नप्रतिभासस्य मिथ्यात्वं सिद्ध्येत्, अन्यथा शरीरप्रतीतेरपि भोग्यप्रतीतेः सुखादिभोगोपलब्धेः स्वप्नत्वप्रसंगात् । ततो न सौगतानां स्वप्नांतिकं शरीरं कल्पयितुं युक्तं नापि स्वाभाविकमित्याह—

**स्वाभाविकं पुनर्गात्रं शुद्धं ज्ञानं वदंति ये । कुतस्तेषां विभागः स्यात्तच्छरीरशरीरिणोः ॥ ७ ॥**

तदेव ज्ञानशरीरव्यावृत्त्या शरीरी स्यादशरीरव्यावृत्त्या शरीरमिति सुगतस्य शुद्धज्ञानात्मनः शरीरित्वमशरीरित्वं च विभागेन व्यवतिष्ठते कल्पनासामर्थ्यादिति न मंतव्यं, तद्व्यावृत्तेरेव तत्रासंभवात् । सिद्धे हि तस्य शरीरित्वे वा शरीरिण शरीराच्च व्यावृत्तिः सिद्ध्येत् तत्सिद्धौ च शरीरित्वमशरीरित्वं चेति परस्पराश्रयान्नैकस्यापि सिद्धिः । ततो न स्वाभाविकं शरीरं नाम यत्पुनरातिवाहिकं नैर्माणिकं च तदसदभिमतमेवेत्याह—

**कार्मणांतर्गतं युक्तं शरीरं चातिवाहिकम् । नैर्माणिकं तु यत्तेषां तन्नो वैक्रियिकं मतं ॥ ८ ॥**

सांभोगिकं पुनरौदारिकादिशरीरत्रयमप्रतिषिद्धमेवेति न शरीरांतरमस्ति ॥

नन्वौदारिकादीनि भिन्नानि पार्थिवादिशरीराणि संति ततोन्यत्रोपसंख्यातव्यानीति केचित् तान् प्रत्याह;—

**पार्थिवादिशरीराणि येतो भिन्नानि मेनिरे । प्रतीतेरपलापेन मन्यतां ते खवारिजम् ॥ ९ ॥**

न हि पृथिव्यादीनि द्रव्याणि भिन्नजातीयानि संति तेषां पुद्गलपर्यायत्वेन प्रतीतेः परस्परपरिणा-

मवर्तनादिभिन्नजातीयत्वे तदयोगात् । न ह्याकाशं पृथिवीरूपतया परिणमते कालादिर्वा, परिणमते च जलं मुक्ताफलादि पृथिवीरूपतया । ततो न तज्जात्यंतरं युक्तं येन पार्थिवादिशरीराणि संभाव्यंते सत्यपि तानि चैतेभ्यः शरीरेभ्यो भिन्नानि प्रतीतेर्विषयभावमनुभवंति व्योमारविंदवत् । पार्थिवं हि शरीरं यदिंद्रलोके यच्च तैजसमादित्यलोके यदाप्यं वरुणलोके यच्च वायव्यं वायुलोके वेदितव्यं, तद्वैक्रियिक-मेव देवनारकाणामौपपादिकस्य शरीरस्य वैक्रियिकत्वात् । यच्च चातुर्भूतिकं पांचभौतिकं वा कैश्चिदिष्टं शरीरं मनुष्यतिरश्चां तदौदारिकमेव च, न ततोन्यदिति पंचैव यथोक्तानि शरीराणि व्यवतिष्ठंते सर्व-विशेषाणां तत्रांतर्भावात् ॥

ननु चामूर्तस्यात्मनः कथं मूर्तिमद्भिः शरीरैस्संबंधो मुक्तात्मवदित्याशंकामपनुदन्नाह;—

## अनादिसंबंधे च ॥ ४१ ॥

अनादिसंबंधो ययोरात्मना ते यथा तैजसकार्मणशरीरे, चशब्दात्सादिसंबंधे ते प्रतिपत्तव्ये । ततो नैकांतेनामूर्तत्वमात्मनः परशरीरसंबंधात्पूर्वं येन तदनुपपत्तिः तत्संबंधात् प्रागपि तस्य तैजसकार्मणाभ्यां संबंधसद्भावात् । ततः पूर्वमप्यपराभ्यां ताभ्यामित्यनादितत्संबंधसंतानः प्रतिविशिष्टतैजसकार्मणसं-बंधात् सैव सादिता ॥

ननु कस्यचिन्नानादिसंबंधे तेऽतः परशरीरसंबंधानुपपत्तिरित्याशंकायामिदमाह;—

## सर्वस्य ॥ ४२ ॥

सर्वस्य संसारिणस्तैजसकार्मणशरीरे तथानादिसंबंधे न पुनः कस्यचित्सादिसंबंधे येनात्मनः शरीरसं-बंधानुपपत्तिः । कुत इत्याह;—

**सर्वस्यानादिसंबंधे चोक्ते तैजसकार्मणे । शरीरांतरसंबंधस्यान्यथानुपपत्तितः ॥ १ ॥**

तैजसकार्मणाभ्यामन्यच्छरीरमौदारिकादि तत्संबंधोस्मदादीनां तावत्सुप्रसिद्ध एव स च तैजसकार्म-णाभ्यां संबंधोनादिसंबंधमंतरेण नोपपद्यते मुक्तस्यापि तत्संबंधप्रयोगात् ॥

अथैतानि शरीराणि युगपदेकस्मिन्नात्मनि कियंति संभाव्यंत इत्याह;—

## तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ४३ ॥

तद्ग्रहणं प्रकृतशरीरद्वयप्रतिनिर्देशार्थमादिशब्देन व्यवस्थावाचिनान्यपदार्था वृत्तिः, तेन तैजसकार्मणे आदिर्येषां शरीराणां तानि तदादीनीति संप्रतीयते । भाज्यानि पृथक्कर्तव्यानि । पृथक्त्वादेव तेषां भाज्यग्र-हणमनर्थकमिति चेत्, तद्धि कस्यचिद्द्वित्रिचतुःशरीरसंबंधविभागोपपत्तिः । युगपदिति कालैकत्वं वर्तते, आङभिविध्यर्थः । तेनैतदुक्तं भवति क्वचिदात्मनि विग्रहगत्यापन्ने द्वे एव तैजसकार्मणे शरीरे युगप-त्संभवतः, क्वचित् त्रीणि तैजसकार्मणवैक्रियिकाणि तैजसकार्मणौदारिकाणि वा, क्वचिच्चत्वारि तान्येवा-हारकसहितानि वैक्रियिकसहितानि ॥ पंच त्वेकत्र युगपन्न संभवंतीत्याह;—

**तदादीनि शरीराणि भाज्यान्येकत्र देहिनि । सकृत्संत्याचतुर्भ्यो न पंचानां तत्र संभवः ॥ १ ॥**

न हि वैक्रियिकाहारकयोर्युगपत्संभवो यतः क्वचित्पंचापि स्युः ॥

किं पुनरत्र शरीरं निरुपभोगं किं वा सोपभोगमित्याह;—

## निरुपभोगमंत्यम् ॥ ४४ ॥

प्रागपेक्षया अंत्यं कार्मणं तन्निरुपभोगमिति । सामर्थ्यादन्यत्सोपभोगं गम्यते । कर्मादानसुखानुभव-

नहेतुत्वात्सोपभोगं कार्मणमिति चेन्न, विवक्षितापरिज्ञानात्। इंद्रियनिमित्ता हि शब्दाद्युपलब्धिरुपभोगस्तस्मान्निष्क्रांतं निरुपभोगमिति विवक्षितं। तैजसमप्येवं निरुपभोगमस्त्विति चेन्न, तस्य योगनिमित्तत्वाभावादनधिकारात्। यदेव हि योगनिमित्तमौदारिकादि तदेव सोपभोगं प्रोच्यते निरुपभोगत्वादेव च कार्मणमौदारिकादिभ्यो भिन्नं निश्चीयत इत्याह—

**अंत्यं निरुपभोगत्वाच्छेषेभ्यो भिद्यते वपुः। शब्दाद्यनुभवो ह्यस्मादुपभोगो न जायते ॥ १ ॥**

औदारिकं किंविशिष्टमित्याह;—

## गर्भसंमूर्छनजमाद्यम् ॥ ४५ ॥

गर्भसंमूर्छनजं पाठापेक्षयाद्यमौदारिकं तद्गर्भजं संमूर्छनजं च प्रतिपत्तव्यं। तत एव सोपभोगाभ्यामपि पराभ्यां शरीराभ्यां तद्भिद्यते इत्याह—

**आद्यं तु सोपभोगाभ्यां पराभ्यां भिन्नमुच्यते। गर्भसंमूर्छनाद्धेतोर्जायमानत्वतो भिदा ॥१॥**

यथैव कार्मणं निरुपभोगत्वात्सोपभोगेभ्यो भिन्नं तथौदारिकं सोपभोगमपि कारणभेदात् पराभ्यां भिन्नमभिधीयते ॥

वैक्रियिकं कीदृशमित्याह;—

## औपपादिकं वैक्रियिकम् ॥ ४६ ॥

उपपादो व्याख्यातः तत्र भवमौपपादिकं तद्वैक्रियिकं बोद्धव्यं। कुतः पुनरौदारिकादिदं भिन्नमित्याह;—

**औपपादिकतासिद्धेर्भिन्नमौदारिकादिदं। तावद्वैक्रियिकं देवनारकाणामुदीरितम् ॥ १ ॥**

न ह्यौदारिकमेव वैक्रियिकं ततोन्यस्यौपपादिकस्य देवनारकाणां शरीरस्य वैक्रियिकत्वात्। तच्च कारणभेदादौदारिकाद्भिन्नमुच्यते ॥

किमेतदेव वैक्रियिकमुतान्यदपीत्याह;—

## लब्धिप्रत्ययं च ॥ ४७ ॥

तपोतिशयर्द्धिर्लब्धिः सा प्रत्ययः कारणमस्येति लब्धिप्रत्ययं वैक्रियिकमिति संप्रत्ययः।

नन्विदमौदारिकादि कथं भिन्नमित्याह;—

**किंचिदौदारिकत्वेपि लब्धिप्रत्ययता गतेः। ततः पृथक् कथंचित्स्यादेतत्कर्मसमुद्भवं ॥ १ ॥**

यथौदारिकनामकर्मसमुद्भवमौदारिकं तथा वैक्रियिकनामकर्मसमुद्भवं वैक्रियिकं युक्तं तथा तल्लब्धिप्रत्ययं वैक्रियिकं। न हि लब्धिरेवास्य कारणं वैक्रियिकनामकर्मोदयस्यापि कारणत्वादन्यथा सर्वस्य वैक्रियिकस्य तदकारणत्वप्रसंगात्। तेनेदमौदारिकत्वेपि कथंचिदौदारिकाद्भिन्नं लब्धिप्रत्ययत्वनिश्चयात्। किंचिदेव हि लब्धिप्रत्ययं वैक्रियिकमिष्टं न सर्वम् ॥

तैजसमपि किंचित्तादृशमित्याह;—

## तैजसमपि ॥ ४८ ॥

लब्धिप्रत्ययमित्यनुवर्तते, तेन तैजसमपि लब्धिप्रत्ययमपि निश्चेयं।

तदपि लब्धिप्रत्ययतागतेरेव भिन्नमौदारिकादेरित्याह;—

**तथा तैजसमप्यत्र लब्धिप्रत्ययमीयतां। साधारणं तु सर्वेषां देहिनां कार्यभेदतः ॥ १ ॥**

लब्धिप्रत्ययं तैजसं द्विविधं, निस्सरणात्मकमनिःसरणात्मकं च । द्विविधं निःसरणात्मकं च प्रशस्ताप्रशस्तभेदात् लब्धिप्रत्ययत्वादेव भिन्नं शरीरांतरं गम्यतां, यत्तु सर्वेषां संसारिणां साधारणं तैजसं तत्स्वकार्यभेदाद्भिन्नमीयतां । तैजसवैक्रियिकयोः लब्धिप्रत्ययत्वाविशेषादभेदप्रसंगा इति चेन्न, कर्मभेदकारणकत्वाद्भेदोपपत्तेः । सत्यपि तयोर्लब्धिप्रत्ययत्वे तैजसवैक्रियिकनामकर्मविशेषोदयापेक्षत्वाद्भेदो युज्यत एव ॥

संप्रत्याहारकं शरीरमुपदर्शयति;—

## शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव ॥ ४९ ॥

शुभं मनःप्रीतिकरं विशुद्धं संक्लेशरहितं अव्याघाति सर्वतो व्याघातरहितं चशब्दादुक्तविशेषणसमुच्चयं । एवं विशिष्टमाहारकं शरीरमतिमात्रं प्रमत्तसंयतस्यैव मुनेर्नान्यस्येति प्रतिपत्तव्यं ।

तच्छरीरांतरात्कुतो भिन्नमित्याह;—

**आहारकं शरीरं तु शुभं कार्यकृतत्वतः । विशुद्धिकारणत्वाच्च विशुद्धं भिन्नमन्यतः ॥ १ ॥**
**अव्याघातिस्वरूपत्वात्प्रमत्ताधिपतित्वतः । फलहेतुस्वरूपाधिपतिभेदेन निश्चितम् ॥ २ ॥**

आहारकं वैक्रियिकादिभ्यो भिन्नं शुभफलत्वादित्यत्रानैकांतिकत्वं हेतोः वैक्रियिकादेरपि शुभफलस्योपलंभादिति न मंतव्यं, नियमेन शुभफलत्वस्य हेतुत्वात् । विशुद्धिकारणत्वात् ततो भिन्नमित्यत्रापि लब्धिप्रत्ययेन वैक्रियिकादिना हेतोरनेकात इति नाशंकनीयं, नियमेन विशुद्धिकारणत्वस्य हेतुत्वात् । समुद्भूतलब्धेरपि क्रोधादिसंक्लेशपरिणामवशाद्विक्रियादेर्निवर्तनाद्विशुद्धिकारणत्वनियमाभावात् । अव्याघातिस्वरूपत्वादाहारकं शरीरांतराद्भिन्नमित्यस्मिन्नपि तैजसादिना हेतोर्व्यभिचार इत्यचोद्यं, प्राणिबाधापरिहारलक्षणस्याव्याघातित्वस्य हेतुत्वात् । प्रमत्ताधिपतित्वमपि नाहारकस्य शरीरांतराद्भेदे साध्येनैकांतिकं, विशिष्टप्रमत्ताधिपतित्वस्य हेतुत्वात् । ततः सूक्तं फलहेतुस्वरूपाधिपतिभेदेन भिन्नमाहारकमन्येभ्यः शरीरेभ्यो निश्चितमिति ॥

**चतुर्दशभिरित्येवं सूत्रैरुक्तं प्रपंचतः । शरीरं तीर्थिकोपेतशरीरविनिवृत्तये ॥ ३ ॥**

अथ के संसारिणो नपुंसकानीत्याह;—

## नारकसंमूर्छिनो नपुंसकानि ॥ ५० ॥

नारकाः संमूर्छिनश्च नपुंसकान्येव भवंति ॥

देवेषु तत्प्रतिषेधमाह;—

## न देवाः ॥ ५१ ॥

देवा नपुंसकानि नैव संभवंतीति सामर्थ्यात् पुमांसः स्त्रियश्च देव्यो भवंतीति गम्यते । कुत इत्याह—

**नारका देहिनस्तत्र प्रोक्ताः संमूर्छिनश्च ये । नपुंसकानि ते नित्यं न देवा जातुचित्तथा ॥ १॥**
**स्त्रीपुंससुखसंप्राप्तिहेतुहीनत्वतः पुरा । नपुंसकत्वदुःखाप्तिहेत्वभावाद्यथाक्रमं ॥ २ ॥**

नारकाः संमूर्छिनश्च प्राणिनो नपुंसकान्येव, स्त्रीपुंससुखसंप्राप्तिकारणरहितत्वात् पूर्वस्मिन् भवे नपुंसकत्वसाधनानुष्ठानात् । देवास्तु न कदाचिन्नपुंसकादि जायंते नपुंसकत्वदुःखाप्तिकारणाभावादिति यथाक्रमं साध्यद्वये हेतुद्वयं प्रत्येयं ॥

शेषाः कियद्वेदा इत्याह;—

## शेषास्त्रिवेदाः ॥ ५२ ॥

उक्तेभ्यो ये शेषाः गर्भजास्त्रिवेदाः प्रतिपत्तव्याः । कुत इत्याह—

**त्रिवेदाः प्राणिनः शेषास्तेभ्यस्तादृक् सुहेतुतः । इति सूत्रत्रयेणोक्तं लिंगभेदेन देहिनाम् ॥ १ ॥**

स्त्रीवेदोदयादिः स्त्रीवेदस्य हेतुः पुंवेदोदयादिः पुंवेदस्य, नपुंसकवेदोदयादिः नपुंसकवेदस्येति । तत एव प्राणिनां स्त्रीलिंगादित्रयसिद्धिरिति भेदेन लिंगं सकलदेहिनां सूत्रत्रयेणोक्तं वेदितव्यं ॥

के पुनरत्र शरीरिणोनपवर्त्यायुषः के वापवर्त्यायुष इत्याह;—

## औपपादिकचरमोत्तमदेहा संख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५३ ॥

औपपादिका देवनारकाः चरमोंत्यस्तज्जन्मनिर्वाणार्हस्य देहः उत्तम उत्कृष्टः चरमश्चासौ उत्तमश्च चरमोत्तमश्चरमविशेषणमुत्तमस्याचरमस्य निवृत्त्यर्थं उत्तमग्रहणं चरमस्यानुत्तमत्वव्युदासार्थं । चरमोत्तमो देहो येषां ते चरमोत्तमदेहाः । उपमाप्रमाणगम्यसंख्येयवर्षायुर्येषां ते द्वंद्ववृत्त्या निर्दिष्टाः संसारिणोऽनपवर्त्या येषां भवंति इति वचनसामर्थ्यात्ततोन्ये अपवर्त्यायुषो गम्यंते ॥

कुतः पुनरनपवर्त्यमायुरौपपादिकादीनामित्याह;—

**अत्रौपपादिकादीनां नापवर्त्यं कदाचन । सोमात्तमायुरीदृक्षादृष्टसामर्थ्यसंगतेः ॥ १ ॥**

**सामर्थ्यतस्ततोन्येषामपवर्त्यं विषादिभिः । सिद्धं चिकित्सितादीनामन्यथा निष्फलत्वतः ॥ २ ॥**

बाह्यप्रत्ययानपवर्तनीयमायुःकर्म प्राणिदयादिकारणविशेषोपार्जितं तादृशादृष्टं तस्य सामर्थ्यमुदयस्तस्य संगतिः संप्राप्तिस्ततो भवधारणमौपपादिकादीनामनपवर्त्यमिति सामर्थ्यादन्येषां संसारिणां तद्विपरीतादृष्टविशेषादपवर्त्यं जीवनं विषादिभिः सिद्धं, चिकित्सितादीनामन्यथा निष्फलत्वप्रसंगात् । न ह्यप्राप्तकालस्य मरणाभावः खड्गप्रहारादिभिर्मरणस्य दर्शनात् । प्राप्तकालस्यैव तस्य तथा दर्शनमिति चेत्, कः पुनरसौ कालं प्राप्तोऽपमृत्युकालं वा? प्रथमपक्षे सिद्धसाध्यता, द्वितीयपक्षे खड्गप्रहारादिनिरपेक्षत्वप्रसंगः सकलबहिःकारणविशेषनिरपेक्षस्य मृत्युकारणस्य मृत्युकालव्यवस्थितेः । शस्त्रसंपातादिबहिरंगकारणान्वयव्यतिरेकानुविधायिनस्तस्यापमृत्युकालत्वोपपत्तेः । तदभावे पुनरायुर्वेदप्रामाण्यचिकित्सितादीनां क्व सामर्थ्योपयोगः । दुःखप्रतीकारादाविति चेत्, तथैवापमृत्युप्रतीकारादौ तदुपयोगोस्तु तस्योभयथा दर्शनात् । नन्वायुःक्षयनिमित्तोपमृत्युः कथं केनचित्प्रतिक्रियते, तर्ह्यसद्वेद्योदयनिमित्तं दुःखं कथं केनचित्प्रतिक्रियतां? सत्यप्यसद्वेद्योदयेन्तरंगे हेतौ दुःखं बहिरंगे वातादिविकारे तत्प्रतिपक्षौषधोपयोगोपनीते दुःखस्यानुत्पत्तेः प्रतीकारः स्यादिति चेत्, तर्हि सत्यपि कस्यचिदायुरुदयेंतरंगे हेतौ बहिरंगे पथ्याहारादौ विच्छिन्ने जीवनस्याभावे प्रसक्ते तत्संपादनाय जीवनाधानमेवापमृत्योरस्तु प्रतीकारः । सत्यप्यायुषि जीवनस्याभावप्रसक्तौ कृतप्रणाशः स्यात् इति चेत्, तर्हि सत्यप्यसद्वेद्योदये दुःखस्योपशमने कथं कृतप्रणाशो न भवेत्? कटुकादिभेषजोपयोगजपीडामात्रं स्वफलं दत्वैवासद्वेद्यस्य निवृत्तेर्न कृतप्रणाश इति चेत्, तर्ह्यायुषोपि जीवनमात्रं स्वफलं दत्त्वैव निवृत्तेः कृतप्रणाशो मा भूत् विशिष्टफलदानाभावस्तूभयत्र समानः । ततोस्ति कस्यचिदपमृत्युश्चिकित्सितादीनां सफलान्यथानुपपत्तेः कर्मणामयथाकालविपाकोपपत्तेश्चाम्रफलादिवत् । यश्चाह, विवादापन्नाः प्राणिनः सापवर्त्यायुषः शरीरित्वादिंद्रियवत्त्वाद्वा प्रसिद्धसापवर्त्यायुष्कप्राणिवत् ते वानपवर्त्यायुषस्तत एवौपपादिकवदिति, सोपि न युक्तवादीत्युपदर्शयति;—

**तदन्यतरदृष्टत्वाच्छरीरित्वादिहेतुभिः । सर्वेषामपवर्त्यं तन्नापवर्त्यमितीरयन् ॥ ३ ॥**
**प्रबाध्यते प्रमाणेन स्वेष्टभेदाप्रसिद्धितः । सर्वज्ञादिविरोधाच्च मानमेयाव्यवस्थितेः ॥ ४ ॥**

न ह्यपवर्त्यानपवर्त्ययोरायुषोरन्यतरस्यापि प्रतिक्षेपं कुर्वन् प्रमाणेन न बाध्यते, अनुमानेनागमेन च तस्य बाधनात् स्वेष्टभेदप्रसिध्या चायं प्रबाध्यते । स्वयमिष्टं हि केषांचित्प्राणिनामल्पमायुः केषांचिद्दीर्घं तत्र शक्यं वक्तुं । विवादापन्नाः प्राणिनोल्पायुषः शरीरित्वात् प्रसिद्धाल्पायुष्कवत् ते वा दीर्घायुषस्तत एव प्रसिद्धदीर्घायुष्कवदिति स्वेष्टविभागसिद्धिः प्रबाधका सर्वज्ञादिविरोधाच्चासौ बाध्यते । तथा विवादापन्नः पुरुषः सर्वज्ञो वीतरागो वा न भवति शरीरित्वादन्यपुरुषवत् वेदार्थज्ञो वा न भवति जैमिन्यादिस्तत एव तद्वत् विपर्ययप्रसंगो वेति प्रत्यवस्थानस्य कर्तुं शक्यत्वात् प्रमाणप्रमेयाव्यवस्थानाच्चायं बाध्यते । शक्यं हि वक्तुं विवादाध्यासितः प्रमाता प्रमाणरहितः शरीरित्वात् सन्निपाताद्याकुलवत् प्रमेयस्य वा न परिच्छेत्ता तत एव तद्वदिति । ततः प्रमाणप्रमेयव्यवस्थितिं कुतश्चित्स्वीकुर्वत् सर्वज्ञादिव्यवस्थितिं स्वेष्टविभागसिद्धिं वा नानपवर्त्यस्येतरस्य वायुषः प्रतिक्षेपं कर्तुमर्हति तस्य प्रतीतिसिद्धत्वादिति दर्शयति;—

**इह सति बहिरंगे कारणे केपि मृत्योर्न मृतिमनुभवंति स्वायुषो ह्यन्यभावे ।**
**ज्वलितहुतभुगंतःपातिनां पंचतापि प्रतिनियततनूनां जीवितस्यापि दृष्टेः ॥ ५ ॥**

तदेवं युक्त्यागमाभ्यामविरुद्धोनपवर्त्येतरायुर्विभागः सूक्त एव ॥

**स्वं तत्त्वं लक्षणं भेदः कारणं विषयो गतिः । जन्मयोनिर्वपुर्लिंगमहीनायुरिहोदितम् ॥ १ ॥**

इति श्रीविद्यानंदि आचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालङ्कारे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥





# तृतीयोऽध्यायः ॥ ३ ॥

## रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभा भूमयो घनांबुवाताकाशप्रतिष्ठाः सप्ताधोऽधः ॥ १ ॥

रत्नादीनामितरेतरयोगे द्वंद्वः, प्रभाशब्दस्य प्रत्येकं परिसमाप्तिर्भुजिवत् । साहचर्यात्ताच्छब्द्यसिद्धिर्यष्टिवत् । तमःप्रभेति विरुद्धमिति चेन्न, तत्स्वात्मप्रभोपपत्तेः । अनादिपारिणामिकसंज्ञानिर्देशाद्वेष्टगोपवत् रत्नप्रभादिसंज्ञाः प्रत्येतव्याः । रूढिशब्दानामगमकत्वमवयवार्थाभावादिति चेन्न, सूत्रस्य प्रतिपादनोपायत्वात्तेषामपि गमकत्वोपपत्तेः । भूमिग्रहणमधिकरणविशेषप्रतिपत्त्यर्थं, घनादिग्रहणं तदालंबननिर्ज्ञानार्थं, सप्तग्रहणमियत्तावधारणार्थं । सामीप्याभावादधोध इति द्वित्वानुपपत्तिरिति चेन्न, अंतरस्यापि विवक्षितत्वात् ॥ कुतः पुनरेताः संभाव्यंत इत्याह;—

**घनांबुपवनाकाशप्रतिष्ठाः सप्तभूमयः । रत्नप्रभाद्योऽधोधः संभाव्या बाधकच्युतेः ॥ १ ॥**

नहि यथोदितरत्नप्रभादिभूमिप्रतिपादकवचनस्य किंचिद्बाधकं कदाचित्संभाव्यते इति निरूपितप्रायं ॥

नन्वेता भूमयो घनानिलप्रतिष्ठाः घनानिलस्त्वंबुवातप्रतिष्ठः सोपि तनुवातप्रतिष्ठस्तनुवातः पुनराकाशप्रतिष्ठः स्वात्मप्रतिष्ठमाकाशमित्येतदनुपपन्नं, व्योमवद्भूमीनामपि स्वात्मप्रतिष्ठत्वप्रसंगात् भूम्यादिवद्वाकाशस्याधारांतरकल्पनायामनवस्थाप्रसंगात् । ततो नात्र बाधकच्युतिरिति कश्चित्तं प्रत्याह;—

**स्वात्मप्रतिष्ठमाकाशं विभुद्रव्यत्वतोन्यथा । घटादेरिव नैवोपपद्येत विभुतास्य सा ॥ २ ॥**

परममहदन्यत्प्रतिष्ठं वेति व्याहतमेतत् । ततो व्योम चात्मप्रतिष्ठं विभुद्रव्यत्वाद्यत्तु न स्वात्मप्रतिष्ठं तन्न विभु द्रव्यं यथा घटादि विभु द्रव्यं च व्योमेति न तस्याप्याधारांतरकल्पनयानवस्था स्यात् । नापि भूम्यादीनामपि स्वप्रतिष्ठत्वप्रसंगस्तेषामविभुद्रव्यत्वादिति न प्रकृतबाधकत्वं ॥

ननु कथमिदानीं व्योम तनुवातस्याधिकरणममूर्तत्वात्तत्प्रतिबंधकत्वाभावादित्यपरस्तं प्रत्याह;—

**तनुवातः पुनर्व्योमप्रतिष्ठः प्रतिपद्यते । तनुवातविशेषत्वान्मेघधारणवायुवत् ॥ ३ ॥**

मेघधारणो वातावयवी वायुरंबुप्रतिष्ठ इति चेन्न, अनंतशः पवनपरमाणूनां पवनावयत्वात् तेषां चाकाशप्रतिष्ठत्वादभिन्नस्य कथंचित्पवनावयविनोपि तदाधारत्वोपपत्तेर्न साध्यविकलमुदाहरणं, नापि संदिग्धविपक्षव्यावृत्तिको हेतुः, कस्यचिदप्यनाकाशाधारस्य तनुवातस्यासंभवात् । ततः तस्यामूर्तस्यापि पवनाधारत्वमुपपन्नं आत्मनः शरीराद्याधारत्ववत् तथा प्रतीतेरबाधितत्वात् ॥

तनुवातः कथमंबुवातस्याधिकरणं समीरणस्वभावत्वादिति चेदुच्यते;—

**तद्वत्तथांबुवातः स्याद्घनात्मार्थस्य धारकः । अंबुवातत्वतो वार्द्धेर्वीचीवायुविशेषवत् ॥ ४ ॥**

स च तनुवातप्रतिष्ठोंबुवातो घनवातस्य स्थितिहेतुः सोपि भूमेर्न पुनः कूर्मादिरित्यावेदयति;—

**घनानिलं प्रतिष्ठानहेतुः कूर्मः स एष नः । न कूर्मादिरनाधारो दृष्टकूर्मादिवत्सदा ॥ ५ ॥**

**तथैवास्तु घनाद्यनिलविशेषे वसतो यदि । कूर्मादिराश्रयः किं न वायुदृष्टांतसारतः ॥ ६ ॥**

सोयं कूर्मं वराहं वा स्वयमनाधारं भूमेराश्रयं कल्पयन् दृष्टहान्या निर्धार्यते ॥

कश्चिदाह—न स्थिरा भूमिर्दर्पणाकारा। किं तर्हि? गोलकाकारा सर्वदोर्ध्वाधो भ्राम्यति, स्थिरं तु नक्षत्रचक्रं मेरोः प्रादक्षिण्येनावस्थानात्। तत एव पूर्वादिदिग्देशभेदेन नक्षत्रादीनां संप्रत्ययो न विरुध्यते। तदोदयास्तमनयोश्चंद्रादीनां भूमिसंलग्नतया प्रतीतिश्च घटते नान्यथेति, तं प्रति बाधकमुपदर्शयति;—

**नोर्ध्वाधोभ्रमणं भूमेर्घटते गोलकात्मनः। सदा तथैव तद्भ्रांतिहेतोरनुपपत्तितः ॥ ७ ॥**

वायुरेवोर्ध्वाधो भ्रमन्सर्वदा भूमेस्तथा भ्रमणहेतुरिति न संगतं, प्रमाणाभावात्। आगमः प्रमाणमिति चेन्न, तस्यानुग्राहकप्रमाणांतराभावात्। तस्यानुमानमनुग्राहकमस्तीति चेन्न, अविनाभाविलिंगाभावात्। ननु च यत्पुरुषप्रयत्नाद्यभावेपि भ्राम्यति तद्भ्रमद्वायुहेतुकं भ्रमणं यथाकाशे पर्णादि तथा च भूगोल इत्यविनाभावि लिंगमनुमानं पुरुषप्रयत्नकृतचक्रादिभ्रमणेन पाषाणादिसंघट्टकृतनदीजलादिभ्रमणेन च व्यभिचाराभावात्। न च पुरुषप्रयत्नाद्यभावोऽसिद्धः पृथिवीगोलकभ्रमणे महेश्वरादेः कारणस्य निराकरणात्। पाषाणसंघट्टादिसंभवाभावात् भूगोलभ्रमणमसिद्धं इति न मंतव्यं तदभावे तत्स्थजनानां चंद्रार्कादिबिंबस्योदयास्तमनयोर्भिन्नदेशादितया प्रतीतेरघटनात्। सास्ति च प्रतीतिस्ततो भूगोलभ्रमः प्रमाणसिद्ध इति कश्चित्। सोत्रैव पर्यनुयोक्तव्यः। भ्रमः कस्मान्न भवतीति तदावेदिनः प्रवचनस्य सद्भावात्। प्रतिनियतानेकदेशादितयार्कादीनां प्रतीतेरपि घटनात् भूभ्रमणहेतोर्विरुद्धत्वोपपत्तेः। भूगोलभ्रमणे साधनस्यानुमानादिबाधितपक्षतानुषंगात्। कारणाभावात् भूभ्रमोवतिष्ठत इति चेत्, तथाविधादृष्टवैचित्र्यात्तद्भ्रमणोपपत्तेः ॥ भूगोलभ्रमणे तु वायुभ्रमणं न कारणं भवितुमर्हति सर्वदा तस्य तथा भ्रमणनियमानुपपत्तेरनियतगतित्वात्। ततो नाभिप्रेतदिगभिमुखं भ्रमणं भूगोलस्य स्यात्। प्राण्यदृष्टवशाद्वायोर्नियतं तथा भ्रमणमिति चेन्न, तत्कार्यासिद्धौ तदसिद्धेः। प्रसिद्धे हि सुखादिकार्ये निर्विवादे दृष्टकारणव्यभिचारे चादृष्टतत्कारणमनुमीयते न चाभिप्रेतवायुभ्रमणं निर्विवादं सिद्धं यतो न दृष्टकारणव्यभिचारे तत्कारणमदृष्टमनुमीयेत। भूभ्रमात् प्रवहद्वायुसिद्धिरिति चेन्न, तस्यापि तद्वदसिद्धेः। नानादिग्देशादितयार्कादिप्रतीतिस्तु भूभ्रमेपि घटमाना न भूभ्रमं साधयतीति। कथं? अनुमितानुमानादप्यदृष्टविशेषसिद्धिरिति सूक्तं न भूमेरूर्ध्वाधोभ्रमणं·······वदेकानुभवं संपरिवृत्तिर्वा घटते तद्भ्रमणहेतोः पराभ्युपगतस्य सर्वथानुपपद्यमानत्वात् परेष्टभूभ्रमादिवदिति। तथा दृष्टव्याघाताच्च न सोस्तीत्याह;—

**दृश्यमानसमुद्रादिजलस्थितिविरोधतः। गोले भ्राम्यति पाषाणगोलवत्क विशेषवाक् ॥ ८ ॥**

न हि जलादेः पतनधर्मणो भूयसो भ्राम्यति पाषाणगोले स्थितिर्दृष्टा यतो भूगोलेपि सा संभाव्येत। धारकवायुवशात्तत्र तस्य स्थितिर्न विरुध्यत इति चेत्, स धारको वायुः कथं प्रेरकवायुना न प्रतिहन्यते? प्रवहतो हि सर्वदा भूगोलं च भ्रमयत्समंततोपि तत्स्थसमुद्रादिधारकवायुं विघटयत्येवमेव धारकवायुमिव तत्प्रतिपक्षवात इति विरुद्धैव तदवस्थितिः, सर्वथा विशेषपवनस्यासंभवात्।

अत्र पराकूतमाशंक्य प्रतिषेधयति;—

**गुर्वर्थस्याभिमुख्येन भूमेः सर्वस्य पाततः। तत्स्थितिश्चेत् प्रतीयेत नाधस्तात्पातदृष्टितः ॥ ९॥**

भूगोले भ्राम्यति पतदपि समुद्रजलादि स्थितमिव भाति तस्य तदाभिमुख्येन पतनात्। सर्वस्य गुरोरर्थस्य भूमेरनभिमुखतया पतनादर्शनादिति चेन्नैवं, अधस्तात् गुर्वर्थस्य पातदर्शनात्, तथाभितोभिघाताद्यभावे स्वस्थानात् प्रच्युतोधस्तात्पतति गुरुत्वाल्लोष्ठादिवत्। न हि तत्राभिघातो नोदनं वा पुरुषयत्नादिकृतमस्ति येनान्यथागतिः स्यात्। न चात्र हेतोः कंदुकादिना व्यभिचारः, अभिघाताद्यभावे सतीति

विशेषणात्। नापि साध्यसाधनविकलो दृष्टांतः साधनस्य गुरुत्वस्य यथोक्तविशेषणस्य साध्यस्य चाधस्तात्पतनस्य लोष्टादौ प्रसिद्धत्वात्। तन्न भूभ्रमवादी सत्यवागूर्ध्वाधोभ्रमवादिवत्। किं च—

भूभ्रमागमसत्यत्वेऽभूभ्रमागमसत्यता। किं न स्यात्सर्वथा ज्योतिर्ज्ञानसिद्धेरभेदतः ॥ १० ॥
द्वयोः सत्यत्वमिष्टं चेत्क्वाविरुद्धार्थता तयोः। प्रवक्त्रोराप्तता नैवं सुगतेश्वरयोरिव ॥ ११ ॥

मतांतरमुपदर्श्य निवारयन्नाह;—

सर्वदाधः पतन्त्येताः भूमयो मरुतोऽस्थितेः। ईरणात्मत्वतो दृष्टप्रभंजनवदित्यसत् ॥ १२ ॥
मरुतो धारकस्यापि दर्शनात्तोयदादिषु। सर्वदा धारकत्वस्यानादित्वात्तत्र न क्षतिः ॥ १३ ॥

न हि भूम्याधारो वायुरनवस्थितस्तस्येरणात्मत्वाभावात्। तद्वासंभवत्वायमीरणात्मकत्वरहितो मरुतोयदादिधारणात्मकस्यापि दर्शनात्। सर्वदा धारकत्वं न दृष्टं इति चेत्, सादेरनादेर्वा? सादेश्चेत् सिद्धसाध्यता। यदि पुनरनादेरपि सर्वदाधारकत्वं पवनस्य न स्यात्तदात्माकाशादेरप्यमूर्तत्वविभुत्वादिधर्मधारणविरोधः। अत्राधाराधेययोरनादित्वात्सर्वदा तद्भाव इति चेत्, भूमिमरुभृतोरपि तत एव तथा सोस्तु। तन्न सर्वदाधः पतंति भूमयः प्रमाणाभावात्। एतेन सर्वदोत्पतंत्येव तिर्यगेव गच्छंतीति वा निरस्तं, धारकस्य वायोरबाधितस्य सिद्धेस्तदवस्थानाविरोधात्। कश्चिदाह—विवादापन्ना भूमिर्भूम्यंतराधारा भूमित्वात्तथा प्रसिद्धभूमिवत्। साप्यपरा भूमिर्भूम्यंतराधारा भूमित्वात्तथा प्रसिद्धभूमिवत् साप्यपरा भूमिर्भूम्यंतराधारा तत एव तद्वदिति शश्वदपर्यंता तिर्यगधोपीति तं प्रत्याह;—

नापर्यंता धराधोपि सिद्धा संस्थानभेदतः। धरवत्स्वमपर्यंतं सिद्धं संस्थानवन्न हि ॥ १४ ॥

धरः पर्वतः संस्थानवान् दृष्टो यः पुनरपर्यंतः स न संस्थानवान् यथाकाशादिरिति विपक्षाद्व्यावृत्तो हेतुः पर्यंतवत्तां धरायाः साधयत्येव। यत्पुनरभ्यधायि—विवादापन्ना धरा धराधारा धरात्वात्प्रसिद्धधरावदिति। तदयुक्तं, हेतोरादित्यधरादिनानेकांतात् न हि तस्या धरांतराधारत्वं सिद्धमंतरालाभावप्रसंगात्। ततः पर्यंतवत्यो भूमय इति निरारेकं प्रतिपत्तव्यं। ननु चाधोधः सप्तसु भूमिषु जीवस्य गतिवैचित्र्यं विरुद्धं ततो अमीभ्यः शून्याभिस्ताभिर्भवितव्यं। तथा च तत्कल्पनावैयर्थ्यं जीवाधिकरणविशेषप्ररूपणार्थो हि तत्परिकल्पना श्रेयसी नान्यथेति वदंतं प्रत्याह—

नाधोधो गतिवैचित्र्यं विरुद्धं प्राणिनामिह। तादृक् पापस्य वैचित्र्यात्तन्निमित्तस्य तत्त्वतः ॥ १५

प्रसिद्धं हि तावदशुभफलं कर्म पापं तस्य प्रकर्षतारतम्यं तत्फलस्य प्रकर्षतारतम्यादिति प्राणिनां रत्नप्रभादिनरकभूमिसमुद्भूतिनिमित्तभूतस्य पापविशेषस्य वैचित्र्यात्तद्गतिवैचित्र्यं न विरुध्यते तिर्यगादिगतिवैचित्र्यवत् ॥ यत एवं—

ततः सप्तेति संख्यानं भूमीनां न विरुध्यते। संख्यांतरं च संक्षेपविस्तरादिवशान्मतं ॥१६॥

न हि संक्षेपादेकाधोभूमिरिति विरुध्यते विस्तरतो वा सैकविंशतिभेदा सप्तानां प्रत्येकं जघन्यमध्यमोत्कृष्टविकल्पात् ॥

तद्गतनरकसंख्याविशेषप्रदर्शनार्थमाह;—

## तासु त्रिंशत्पंचविंशतिपंचदशदशत्रिपंचोनैकनरकशतसहस्राणि पंच चैव यथाक्रमम् ॥ २ ॥

त्रिंशच्च पंचविंशतिश्च पंचदश च दश च त्रयश्च पंचोनैकं चेति द्वंद्वः, नरकाणां शतसहस्राणि नर-

कशतसहस्राणि च तानीति स्वपदार्था वृत्तिः, तास्विति रत्नप्रभादिभूमिपरामर्शः, यथाक्रमवचनं यथा-संख्याभिसंबंधार्थं । तेन रत्नप्रभायां त्रिंशन्नरकशतसहस्राणि, शर्कराप्रभायां पंचविंशतिः, वालुकाप्रभायां पंचदश, पंकप्रभायां दश, धूमप्रभायां त्रीणि, तमःप्रभायां पंचोनैकं नरकशतसहस्रं, महातमःप्रभायां पंचनरकाणि भवंतीति विज्ञायते । कुतः पुनस्त्रिंशल्लक्षादिसंख्या रत्नप्रभादिषु सिद्धेत्याह;—

**त्रिंशल्लक्षादिसंख्या च नरकाणां सुसूत्रिता । रत्नप्रभादिषूक्तासु प्राण्यदृष्टविशेषतः ॥ १ ॥**

तादृशाः प्राणिनां तन्निवासिनामदृष्टविशेषाः पूर्वोपात्ताः संभाव्यंते यतस्तासु त्रिंशल्लक्षादिसंख्या नरकाणां रत्नप्रभादिसंख्या च सिध्यतीति शोभनं सूत्रिता सा ॥

**इति सूत्रद्वयेनाधोलोकावासविनिश्चयः । श्रेयान् सर्वविदायातस्याम्नायस्याविलोपतः ॥ २ ॥**

न हि सर्वविदायातत्वमेतदाम्नायस्यासिद्धं बाधकाभावात् स्वर्गाद्याम्नायवत्, प्राक् चिंतितं चागमस्य प्रामाण्यमिति नेह प्रतन्यते ॥

कीदृशलेश्यादयस्तत्र प्राणिनो वसंतीत्याह;—

## नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥

लेश्यादिशब्दा उक्तार्थाः । तिर्यग्व्यपेक्षयातिशयनिर्देशः पूर्वोपेक्षो वाधोगतानां । नित्यग्रहणाल्लेश्या-द्यनिवृत्तिप्रसंग इति चेन्न, आभीक्ष्ण्यवचनत्वान्नित्यशब्दस्य नित्यप्रहसितवत् ॥

के पुनरेवं विशेष्यमाणा नारकाणामित्याह;—

**तिर्यंचोऽशुभलेश्याद्यास्तेभ्योप्यतिशयेन ये । प्राणिनोऽशुभलेश्याद्याः केचित्ते तत्र नारकाः॥१॥**

तिर्यंचस्तावदशुभलेश्याः केचित्प्रसिद्धास्ततोप्यतिशयेनाशुभलेश्याः प्राणिनो नारकाः संभाव्यंते अशुभतरलेश्याः, प्रथमायां भूमौ एवमशुभतरपरिणामादयोपीति प्रसिद्धा एव प्रतिपादितविशेषाधारा नारकाः, ततोप्यतिशयेनाशुभलेश्यादयो द्वितीयायां, ततोपि तृतीयायां, ततोपि चतुर्थ्यां, ततोपि पंचम्यां, ततोपि षष्ठ्यां, ततोपि सप्तम्यामिति ॥

कथं पुनरेतदशुभत्वतारतम्यं सिद्धमित्याह;—

**संक्लेशतारतम्येनाशुभतातारतम्यता । सिध्येदशुभलेश्यादितारतम्यमशेषतः ॥ २ ॥**

संक्लेशो जीवस्याविशुद्धिपरिणामो मिथ्यादर्शनादिस्तस्य तारतम्यादशुभत्वतारतम्यमशेषतोपि लेश्यादीनां सिध्येदिति न तदहेतुकं यतोतिप्रसज्येत ॥

ननु चैकांतिकदुःखयोगिनो नारकाः सुखदुःखयोगिनां तिर्यङ्मनुष्यवचनात्, ऐकांतिकशरीरसुखयोगिनां देवत्वाभिधानात् । तत्र किमुदीरितदुःखास्ते नारका इत्याह;—

## परस्परोदीरितदुःखाः ॥ ४ ॥

ननु च कोपोत्पत्तौ सत्यां परस्परं दुःखोदीरणं दृष्टं नान्यथा न च तेषां तदुत्पत्तौ कारणमस्ति न चाकारणिका सातिप्रसंगादिति चेन्न, निर्दयत्वात्तेषां परस्परदर्शने सति कोपोत्पत्तेः श्ववत् । सत्यंतरंगे क्रोधकर्मोदये बहिरंगे च परस्परदर्शने तेषां कोपोत्पत्तिर्नाहेतुका यतोतिप्रसंगः स्यादिति ॥

**तथा तैर्नारकैर्दुःखं परस्परमुदीर्यते । रौद्रध्यानात्समुद्भूतेः क्रुधेर्मेषादिभिर्यथा ॥ १ ॥**

**निमित्तहेतवस्त्वेतेऽन्योन्यं दुःखसमुद्भवे । बहिरंगास्तथाभूते सति स्वकृतकर्मणि ॥ २ ॥**

ततो नैवं परस्परोदीरितदुःखत्वं नारकाणामसंभाव्यं युक्तिमत्त्वात् ॥

अन्योदीरितदुःखाश्च ते इत्याह;—

## संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥ ५ ॥

पूर्वभवसंक्लेशपरिणामोपात्ताशुभकर्मोदयात् सततं क्लिष्टाः संक्लिष्टा असुरनामकर्मोदयादसुराः संक्लिष्टाश्च तेऽसुराश्चेति । संक्लिष्टविशेषणमन्यासुरनिवृत्त्यर्थं, असुराणां गतिविषयनियमप्रदर्शनार्थं प्राक् चतुर्थ्या इति वचनं । आङो ग्रहणं लघ्वर्थमिति चेन्न, संदेहात् । चशब्दः पूर्वहेतुसमुच्चयार्थः । अनंतरत्वादुदीरितग्रहणस्येहानर्थक्यमिति चेन्न, तस्य वृत्तौ परार्थत्वात् । वाक्येऽवचनमिति चेन्न, उदीरणहेतुप्रकारप्रदर्शनार्थत्वात् पुनरुदीरितग्रहणस्य । तेन कुंभीपाकाद्युदीरितदुःखाश्चेति प्रतिपादितं भवति ॥

कथं पुनः—

**संक्लिष्टैरसुरैर्दुःखं नारकाणामुदीर्यते । मेषादीनां यथा तादृक्रूपैस्तिसृषु भूमिषु ॥ १ ॥**
**परासु गमनाभावात्तेषां तद्वासिदेहिनां । दुःखोत्पत्तौ निमित्तत्वमसुराणां न विद्यते ॥ २ ॥**
**एवं सूत्रत्रयोभीतस्वभावा नारकांगिनः । स्वकर्मवशतः संति प्रमाणनयगोचराः ॥ ३ ॥**

प्रमाणं परमागमः स्याद्वादस्तद्विषयास्तावद्यथोक्तीता नारका जीवाः साकल्येन तेषां ततः प्रतिपत्तेः नयविषयाश्च विप्रतिपत्तिसमाक्रांतैकदेशप्रतिपत्तेरन्यथानुपपत्तेरिति प्रमाणनयैरधिगमो नानानारकाणामूह्यः ॥

अथ रत्नप्रभादिनरकेषु त्रिंशल्लक्षादिसंख्येषु यथाक्रमं स्थितिविशेषप्रतिपत्त्यर्थमाह;—

## तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिः ॥ ६ ॥

सागर उपमा येषां तानि सागरोपमाणि, सागरस्योपमात्वं द्रव्यभूयस्त्वात् । एकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमाणि यस्या सा तथेत्येकादीनां कृतद्वन्द्वानां सागरोपमविशेषणत्वं । रत्नप्रभादिभिरानुपूर्व्येण संबंधो यथाक्रमानुवृत्तेः । नरकप्रसंगस्तेष्विति वचनादिति चेन्न, रत्नप्रभाद्युपलक्षितानि हि नरकाणि त्रिंशच्छतसहस्रादिसंख्यानि तेष्वित्यनेन परामृश्यते, साहचर्याद्वा ताच्छब्द्यसिद्धिः । ततो यथोक्तसंख्यनरकसाहचर्याद्रत्नप्रभादयो नरकशब्दवाच्याः प्रतीयंते । यद्येवं रत्नप्रभादिष्वधिकरणभूतासु नरकाणां स्थितिः प्रसक्तेति चेत्, सत्त्वानामिति वचनात् । परोत्कृष्टा न पुनरिष्टा परशब्दस्येष्टवाचकस्येहाग्रहणात् ॥ कुतः सोत्कृष्टा स्थितिः सत्त्वानां प्रसिद्धेत्याह;—

**नरकेषूदितैकादिसागरोपमसम्मितः । स्थितिरस्त्यत्र सत्त्वानां सद्भावात्तादृगायुषः ॥ १ ॥**
**संक्षेपादिपरा त्वग्रे वक्ष्यमाणा तु मध्यमा । सामर्थ्याद्बहुधा प्रोक्ता निर्णेतव्या यथाक्रमं ॥ २ ॥**

परा स्थितिरस्ति प्राणिनां परमायुष्कत्वान्यथानुपपत्तेः । परमायुष्कत्वं पुनः केषांचित्सद्धेतुपरिणामविशेषात्स्वोपात्ताद्बलवत् वाच्यते मनुष्यतिरश्चामायुःप्रकर्षप्रसिद्धेः । तत्र रत्नप्रभायां नरकेषु सत्त्वानां परा स्थितिरेकसागरोपमप्रमिताः, शर्कराप्रभायां त्रिसागरोपमप्रमिताः, वालुकाप्रभायां सप्तसागरोपमप्रमिताः, पंकप्रभायां दशसागरोपमप्रमिताः, धूमप्रभायां सप्तदशसागरोपमप्रमिताः, तमःप्रभायां द्वाविंशतिसागरोपमप्रमिताः, महातमःप्रभायां त्रयस्त्रिंशत्सागरोपमप्रमिता इति वचनसामर्थ्यान्मध्यमा स्थितिरनेकधा यथागमं निर्णीयते । जघन्यायाः स्थितेस्त्वत्र संक्षेपाद्वक्ष्यमाणत्वादित्यलं प्रपंचेन ॥

**इह प्रपंचेन विचिंतनीयं शरीरिणोधोगतिभाजनस्य ।**
**स्वतत्त्वमध्यात्मविशेषविष्टं बुधैः ससंवेगविरक्तिसिद्ध्यै ॥ २ ॥**

इति तृतीयस्याध्यायस्य प्रथममाह्निकं समाप्तं ।

## जंबूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥

प्रतिविशिष्टजंबूवृक्षासाधारणाधिकरणाज्जंबूद्वीपः, लवणोदकानुयोगाल्लवणोदः । आदिशब्दः प्रत्येकमभिसंबध्यते तेन जंबूद्वीपादयो द्वीपा लवणोदादयः समुद्रा इति संप्रत्ययः । शुभनामान इति वचनादशुभनामत्वनिरासः ॥

किंविष्कंभाः किंपरिक्षेपिणः किमाकृतयश्च ते इत्याह;—

## द्विर्द्विर्विष्कंभाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥

द्विर्द्विरिति वीप्साभ्यावृत्तेर्वचनं विष्कंभद्विगुणत्वव्याप्त्यर्थं, पूर्वपूर्वपरिक्षेपिण इति वचनादनिष्टनिवेशनिवृत्तिः, वलयाकृतय इतिवचनाच्चतुरस्रादिसंस्थाननिवृत्तिः । जंबूद्वीपस्य द्विर्विष्कंभत्वपूर्वपरिक्षेपित्ववलयाकृतित्वाभावादव्यापीनि विशेषणानीति चेत् न, जंबूद्वीपस्यैतदपवादलक्षणस्य वक्ष्यमाणत्वात् 'तन्मध्ये' इत्यादि सूत्रस्यानंतरस्य सद्भावात् ॥

क पुनरिमे द्वीपसमुद्रा इत्याह;—

सप्ताधो भूमयो यस्मान्मध्यलोको बलाद्गतः । तत्र द्वीपसमुद्राः स्युः सूत्रद्वितयवर्णिता ॥१॥

ऊर्ध्वाधोलोकवचनसामर्थ्यान्मध्यलोकस्तावद्गत एव यस्मादधोरत्नप्रभायाः सप्तभूमयः प्रतिपादितास्तस्मिन् मध्यलोके द्वीपसमुद्राः संक्षेपादभिहिताः सूत्रद्वयेन प्रपंचतोसंख्येयास्ते यथागमं प्रतिपत्तव्याः ॥

क पुनरयं जंबूद्वीपः कीदृशश्चेत्याह;—

## तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कंभो जंबूद्वीपः ॥ ९ ॥

तच्छब्दः पूर्वद्वीपसमुद्रनिर्देशार्थः । जंबूद्वीपस्य निर्देशप्रसंगः पूर्वोक्तत्वाद्विशेषादितिचेत्, तस्य प्रतिनियतदेशादितया प्रतिपाद्यत्वात् तत्परिक्षेपिणामेव परामर्शोपपत्तेः । तर्हि पूर्वोक्तसमुद्रद्वीपनिर्देशार्थस्तच्छब्द इति वक्तव्यं जंबूद्वीपपरिक्षेपिणां समुद्रादित्वादिति चेन्न, स्थितिक्रमस्याविवक्षायां पूर्वोक्तद्वीपसमुद्रनिर्देशार्थ इति वचनाविरोधात्, यत्र कुत्रचिदवस्थितानां द्वीपानां समुद्राणां च विवक्षितत्वात् । द्वीपशब्दस्यात्माकरत्वाच्च द्वंद्वे पूर्ववचनेपि समुद्रादय एवार्थान्न्यायात् परामृश्यंते । तत इदमुक्तं भवति तेषां समुद्रादीनां मध्यं तन्मध्यं तस्मिन् जंबूद्वीपः । स च मेरुनाभिरुपचरितमध्यदेशस्य मेरुत्वात् । वृत्तो न चतुरस्रादिसंस्थानः । तत्परिक्षेपिणां वलयाकृतिवचनादेव तस्य वृत्तत्वं सिद्धमिति चेन्न, चतुरस्रादिपरिक्षेपिणामपि वलयाकृतित्वाविरोधात् । योजनशतसहस्रविष्कंभ इति वचनात् तद्द्विगुणद्विगुणविष्कंभादिनिर्णयः शेषसमुद्रादीनां कृतो भवति । एवं च—

तन्मध्ये मेरुनाभिः स्याज्जंबूद्वीपो यथोदितः । सूत्रेणैकेन निःशेषकुमतानां व्यपोहनात् ॥१॥

सकलसर्वथैकांतनिराकरणे हि न्यायबलाद्विहिते स्याद्वाद एव व्यवतिष्ठते परमागमः, स च यथोदितजंबूद्वीपप्रकाशक इति भवेदेवं सूत्रितो जंबूद्वीपः सर्वथा बाधकाभावात् अत्र ॥

तत्र कानि क्षेत्राणीत्याह;—

## भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ १० ॥

भरतक्षत्रिययोगाद्भरतो वर्षः अनादिसंज्ञासंबंधत्वाद्वा आदिमदनादिरूपतोपपत्तेः । स च हिमवत्समुद्रत्रयमध्ये ज्ञेयः । तत्र पंचाशद्योजनविस्तारस्तदर्धोत्सेधः षड्योजनावगाहो रजताद्रिर्विजयार्धोन्वर्थः सक-

कच्छकवरविजयस्यार्धसीमात्मकत्वात् । हिमवतोऽदूरभवः सोस्मिन्नस्तीति वा हैमवतः स च क्षुद्रहिमवन्महाहिमवतोर्मध्ये, तन्मध्ये शब्दवान् वृत्तवेदाढ्यः । हरिवर्णमनुष्ययोगाद्धरिवर्षः स निषधमहाहिमवतोर्मध्ये विकृतवान् वेदाढ्यः । विदेहयोगाज्जनपदेपि विदेहव्यपदेशः निषधनीलवतोरंतरे तत्संनिवेशः । स चतुर्विधः पूर्वविदेहादिभेदात् । रमणीयदेशयोगाद्रम्यकाभिधानं नीलरुक्मिणोरंतराले तत्संनिवेशः तन्मध्ये गंधवान् वृत्तवेदाढ्यः । हिरण्यवतोऽदूरभवत्वाद्धैरण्यवतव्यपदेशः रुक्मिशिखरिणोरंतरे तद्विस्तारः तन्मध्ये माल्यवान् वृत्तवेदाढ्यः । ऐरावतक्षत्रिययोगादैरावताभिधानं शिखरिसमुद्रत्रयांते तद्विन्यासः, तन्मध्ये पूर्ववद्विजयार्धः ॥

किमर्थं पुनर्भरतादीनि क्षेत्राणि सप्तोक्तानीत्याह;—

**क्षेत्राणि भरतादीनि सप्त तत्रापरेण तु । सूत्रेणोक्तानि तत्संख्यां हंतुं तीर्थककल्पिताम् ॥ १॥**

कुतः पुनस्तीर्थककल्पिता क्षेत्रसंख्यानेन प्रतिहन्यते वचनस्याविशेषात् स्याद्वादाश्रयत्वादेतद्वचनस्य प्रमाणत्वोपपत्तेः संवादकत्वात्सर्वथा बाधवैधुर्यात्सर्वथैकांतवादिवचनस्य तेन प्रतिघातसिद्धेरिति निरूपितप्रायं ॥

## तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥

हिमाभिसंबंधतो हिमवद्व्यपदेशः भरतहैमवतयोः सीमनि स्थितः, महाहिमवन्निति चोक्तं हैमवतहरिवर्षयोर्भागकरः, निषीदंति तस्मिन्निति निषधो हरिविदेहयोर्मर्यादाहेतुः, नीलवर्णयोगान्नीलव्यपदेशः विदेहरम्यकविनिवेशविभाजी, रुक्मसद्भावतो रुक्मीत्यभिधानं रम्यकहैरण्यवतविवेककरः, शिखरिसद्भावाच्छिखरीति संज्ञा हैरण्यवतैरावतसेतुबंधः शिखरी । हिमवदादीनामितरेतरयोगे द्वंद्वो अवयवप्रधानत्वात्, वर्षधरपर्वता इति वचनं वर्षधराणां पर्वतानामपर्वतानां च निरासार्थं । तद्विभाजिन इति वचनात् भरतादिवर्षविभागहेतुत्वसिद्धिः, पूर्वापरायता इति विशेषणादन्यथायतत्वमनायतत्वं व्युदस्तम् ॥

किं परिणामास्ते इत्याह;—

## हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ॥ १२ ॥

हेममयो हिमवान्, अर्जुनमयो महाहिमवान्, तपनीयमयो निषधः, वैडूर्यमयो नीलः, रजतमयो रुक्मी, हेममयः शिखरीति । हेमादिपरिणामा हिमवदादयः तथानादिसिद्धत्वादन्यथोपदेशस्य परमागमप्रतिहतत्वात् ॥

पुनरपि किं विशिष्टास्त इत्याह;—

## मणिविचित्रपार्श्वाः ॥ १३ ॥

मणिभिर्विचित्राणि पार्श्वाणि येषां ते तथा । अनेन तेषामनादिपरिणाममणिविचित्रपार्श्वत्वं प्रतिपादितं ॥

तद्विस्तरविशेषप्रतिपादनार्थमाह;—

## उपरि मूले च तुल्यविस्ताराः ॥ १४ ॥

च शब्दान्मध्ये च, तथा चानिष्टविस्तारसंस्थाननिवृत्तिः प्रतीयते ॥

तदेवं सूत्रचतुष्टयेन पर्वताः प्रोक्ताः इत्युपसंहरति;—

**पूर्वापरायतास्तत्र पर्वतास्तद्विभाजिनः । षट्प्रधानाः परेणैते प्रोक्ता हिमवदादयः ॥ १ ॥**

सूत्रेणेति पूर्वश्लोकादनुवृत्तिः परेणेति सूत्रविशेषणं तेन क्षेत्राभिधायिसूत्रात्परेण सूत्रेण हिमवदादयः षट् प्रधानाः पर्वताः प्रोक्ताः इति संबंधः कर्तव्यः । पूर्वपरायतास्तद्विभाजिन इति विशेषणद्वयवचनं हेमादिमयत्वमणिविचित्रपार्श्वत्वोपरि मूले च तुल्यविस्तारत्वविशेषणानामुपलक्षणार्थं । हेमादिमयाः मणिभिर्विचित्रपार्श्वाः तथोपरि मूले च तुल्यविस्ताराः प्रोक्ताः सूत्रत्रयेण ॥

तेषां हिमवदादीनामुपरि पद्मादिह्रदसद्भावनिवेदनार्थमाह;—

## पद्ममहापद्मतिगिंछकेशरिमहापुंडरीकपुंडरीका ह्रदास्तेषामुपरि ॥ १५ ॥

हिमवत उपरि पद्मो ह्रदः, महाहिमवतो महापद्मः, निषधस्य तिगिंछः, नीलस्य केशरी, रुक्मिणः महापुंडरीकः, शिखरिणः पुंडरीक इति संबंधो यथाक्रमं वेदितव्यः । पद्मादिजलकुसुमविशेषसहचरितत्वात् पद्मादयो ह्रदा व्यपदिश्यंते, तथा रूढिसद्भावाद्वा हिमवदादिव्यपदेशवत् ॥

**पद्मादयो ह्रदास्तेषामुपरि प्रतिपादिताः । सूत्रेणैकेन विज्ञेया यथागममसंशयम् ॥ १ ॥**

तत्र प्रथमो ह्रदः किमायामविष्कंभ इत्याह;—

## प्रथमो योजनसहस्रायामस्तदर्धविष्कंभो ह्रदः ॥ १६ ॥

सूत्रपाठापेक्षया प्रथमः पद्मो ह्रदः योजनसहस्रायाम इति वचनादन्यथा तद्दैर्घ्यव्यवच्छेदः, तदर्धविष्कंभ इति वचनात् पंचयोजनशतविष्कंभत्वप्रतिपत्तिरन्यथा तद्विस्तारनिरासः प्रतिपत्तव्यः ॥

किमवगाहोसावित्याह;—

## दशयोजनावगाहः ॥ १७ ॥

पृथग्योगकरणं सर्वह्रदासाधारणावगाहप्रतिपत्त्यर्थं ॥

**संख्ययायामविष्कंभावगाहगतया ह्रदः । सूत्रद्वयेन निर्दिष्टः प्रथमः सर्ववेदिभिः ॥ १ ॥**

सामर्थ्यादेकेन सूत्रेण हिमवदादीनामुपरि षट् पद्मादयो ह्रदा निर्दिष्टा इति गम्यते, तत्पाठापेक्षया पद्मस्य ह्रदस्य प्रथमत्ववचनात् ॥

अथ तन्मध्ये विशिष्टपरिणामं पुष्करं प्रतिपादयति;—

## तन्मध्ये योजनं पुष्करम् ॥ १८ ॥

द्विक्रोशकर्णिकत्वादेकक्रोशबहलपत्रत्वाच्च योजनपरिमाणं योजनं पुष्करं जलकुसुमं तथानादिपरिणामाद्वेदितव्यम् । क तत्? तस्य पद्मह्रदस्य मध्ये ॥

शेषह्रदपुष्करपरिणामप्रतिपादनार्थमाह;—

## तद्द्विगुणद्विगुणा ह्रदाः पुष्कराणि च ॥ १९ ॥

ततः पद्मह्रदात् पुंडरीकह्रदाच्च द्विगुणद्विगुणा ह्रदा महापद्ममहापुंडरीकादयः, योजनपरिमाणाच्च पुष्कराद्दक्षिणादुत्तरस्माच्च द्विगुणद्विगुणानि पुष्कराणि विष्कंभायामानीति वीप्सानिर्देशात् संप्रतीयंते 'उत्तरा दक्षिणतुल्याः' इति वक्ष्यमाणसूत्रसंबंधत्वात् । तत्संबंधः पुनर्बहुवचनसामर्थ्यादन्यथा द्विवचनप्रसंगात् तद्द्विगुणौ द्विगुणाविति । तदेवं—

**तन्मध्ये योजनं प्रोक्तं पुष्करं द्विगुणास्ततः । ह्रदाश्च पुष्कराणीति प्रत्येतव्यमंजसा ॥ १ ॥**

तन्निवासिन्यो देव्यः काः किं स्थितयः परिवाराश्च श्रूयन्त इत्याह;—

## तन्निवासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिकपरिषत्काः ॥ २० ॥

तेषु पुष्करेषु निवसनशीलास्तन्निवासिन्यः, देवगतिनामकर्मविशेषादुपजाता इति देव्यः श्रीप्रभृतयः तत्र पद्महृदपुष्करप्रासादेषु । शेषहृदपुष्करप्रासादेषु ह्रीप्रभृतयो यथाक्रमं निवसंतीति यथागमं वेदितव्यं । ताः पल्योपमस्थितयस्तावदापुष्करत्वेनोत्पत्तेः । सामानिकाः परिषदश्च वक्ष्यमाणलक्षणाः सह ताभिर्वर्तंत इति ससामानिकपरिषत्काः । एतेन तासां परिवारविभूतिं कथितवान् । एतदेवाह;—

**देव्यः श्रीमुखाः ख्याताः सूत्रेणैकेन सूचनात् । षडेव तन्निवासिन्यस्ता ससामानिकादयः १**

## गंगासिंधूरोहिद्रोहितास्या हरिद्धरिकांतासीतासीतोदानारीनरकांतासुवर्णरूप्यकूलारक्तारक्तोदाः सरितस्तन्मध्यगाः ॥ २१ ॥

सरितो न वाप्यः, तेषां भरतादिक्षेत्राणां मध्यं तन्मध्यं तद्गच्छंतीति तन्मध्यगा इत्यनेनान्यथागतिं गंगासिंध्वादीनां निवारयति । तत्र भरतक्षेत्रमध्ये गंगासिंध्वौ, हैमवतमध्यगे रोहिद्रोहितास्ये, हरिमध्यगे हरिद्धरिकांते, विदेहमध्यगे सीतासीतोदे, रम्यकमध्यगे नारीनरकांते, हैरण्यवतमध्यगे सुवर्णरूप्यकूले, ऐरावतमध्यगे रक्तारक्तोदे इति ॥

अथैतयोर्द्वयोः का पूर्वसमुद्रं गच्छतीत्याह;—

## द्वयोर्द्वयोः पूर्वाः पूर्वगाः ॥ २२ ॥

द्वयोर्द्वयोरेकक्षेत्रविषयगत्यभिसंबंधादेकत्र सर्वासां प्रसंगनिवृत्तिः, पूर्वाः पूर्वगा इति वचनं दिग्विशेषप्रतिपत्त्यर्थं ॥

अथापरं समुद्रं का गच्छंतीत्याह;—

## शेषास्त्वपरगाः ॥ २३ ॥

द्वयोर्द्वयोरेकैकक्षेत्रे वर्तमानयोर्नद्योर्याः पूर्वास्ताभ्योन्याः शेषाः सरितोऽपरं समुद्रं गच्छंतीति । तत्र पद्महृदप्रभवा पूर्वतोरणद्वारनिर्गता गंगा, अपरतोरणद्वारनिर्गता सिंधुः, उदीच्यतोरणद्वारनिर्गता रोहितास्या । महापद्महृदप्रभवापाच्यतोरणद्वारनिर्गता रोहित्, उदीच्यतोरणद्वारनिर्गता हरिकांता । तिगिंछहृदसमुद्भवा दक्षिणद्वारनिर्गता हरित्, उदीच्यतोरणद्वारनिर्गता सीतोदा । केसरिहृदप्रभवा अपाच्यद्वारनिर्गता सीता, उदीच्यद्वारनिर्गता नारी । महापुंडरीकहृदप्रभवा दक्षिणद्वारनिर्गता नरकांता, उदीच्यद्वारनिर्गता रूप्यकूला । पुंडरीकहृदप्रभवा अपाच्यद्वारनिर्गता सुवर्णकूला, पूर्वतोरणद्वारनिर्गता रक्ता, प्रतीच्यद्वारनिर्गमा रक्तोदा ॥

अथ कियन्नदीपरिवृता एता नद्य इत्याह;—

## चतुर्दशनदीसहस्रपरिवृता गंगासिंध्वादयो नद्यः ॥ २४ ॥

गंगासिंध्वाद्यग्रहणं प्रकरणादिति चेन्न, अनंतरग्रहणप्रसंगात् । गंगादिग्रहणमिति चेन्न, पूर्वगाणां ग्रहणप्रसंगात् । नदीग्रहणात्सिद्धिरिति चेन्न, तस्योत्तरत्र द्विगुणाभिसंबंधनार्थत्वात् ॥ सर्वथैवासंभाव्या गैयावन्तो नद्यः सूचिता इति कस्यचिदारेकां निराकर्तुं प्रक्रमते—

## सानत्कुमारमाहेंद्रयोः सप्त ॥ ३० ॥

अधिकारात् सागरोपमाधिकानि चेति संप्रत्ययः ॥

## त्रिसप्तनवैकादशत्रयोदशपंचदशभिरधिकानि तु ॥ ३१ ॥

सप्तेत्यनुवर्तते, तेन सानत्कुमारमाहेंद्रयोरुपरि द्वयोः कल्पयोः सप्तसागरोपमाणि त्रिभिरधिकानि इति दश साधिकानि स्थितिः, तयोरुपरि द्वयोः कल्पयोः सप्त सप्ताधिकानीति चतुर्दशाधिकानीति, तयोरुपरि द्वयोः सप्त नवभिरधिकानीति षोडशाधिकानि, तयोरुपरि द्वयोः सप्तैकादशभिरधिकानीत्यष्टदशाधिकानि, तयोरुपरि द्वयोरानतप्राणतयोः सप्तत्रयोदशभिरधिकानीति विंशतिरेव, तयोरुपरि द्वयोरारणाच्युतयोः सप्तपंचदशभिरधिकानीति द्वाविंशतिरेव । तुशब्दस्य विशेषणार्थत्वात् । आसहस्रादधिकारात् परत्राधिकानीत्यभिसंबंधाभावः ॥

## आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धौ च ॥ ३२ ॥

अधिकारादधिकसंबंधः । ग्रैवेयकेभ्यो विजयादीनां पृथग्ग्रहणमनुदिशसंग्रहार्थं । प्रत्येकमेकैकवृद्ध्यभिसंबंधार्थं नवग्रहणं । सर्वार्थसिद्धस्य पृथग्ग्रहणं विकल्पनिवृत्त्यर्थं ॥

का पुनरियं भवनवास्यादीनां स्थितिरुक्तेत्याह;—

**स्थितिरित्यादिसूत्रेण योक्ता भवनवासिनां । विशेषेण स्थितिर्या च तदनंतरकीर्तिता ॥ १ ॥**
**सूत्रैश्चतुर्भिरभ्यासाद्यथागमविशेषतः । परा वैमानिकानां च सोत्तरत्रावरोक्तितः ॥ २ ॥**

अवरायाः स्थितेरुत्तरत्र वचनादिह भवनवासिनामेकेन सूत्रेण वैमानिकानां च चतुर्भिः सूत्रैर्विशेषेण या स्थितिः परोक्ता सा परोत्कृष्टेति गम्यते ॥

का पुनरवरेत्याह;—

## अपरा पल्योपममधिकम् ॥ ३३ ॥

परिशेषात्सौधर्मैशानयोर्देवानामवरा स्थितिरियं विज्ञायते, ततोन्येषामुत्तरत्र जघन्यस्थितेर्वक्ष्यमाणत्वात् ॥

**पल्योपममतिरिक्तमवरास्थितिमब्रवीत् । सौधर्मैशानयोः सेह सूत्रेर्थात्संप्रतीयते ॥ १ ॥**

तत्र पूर्वानंतरसूत्रेण सानत्कुमारादिषु जघन्या स्थितिरुच्यते;—

## परतः परतः पूर्वा पूर्वानंतरा ॥ ३४ ॥

अपरेत्यनुवर्तते, तेन परतः परतो या च परा स्थितिः सा पूर्वा पूर्वानंतरा परस्मिन्नवरा स्थितिरिति संप्रत्ययः । अधिकग्रहणानुवृत्तेः सातिरेकसंप्रत्ययः । आ विजयादिभ्योधिकारः । अनंतरेति वचनं व्यवहितनिवृत्त्यर्थं । सर्वेत्येतावत्युच्यमाने व्यवहितग्रहणप्रसंगस्तत्रापि पूर्वशब्दप्रवृत्तेः ॥

## नारकाणां च द्वितीयादिषु ॥ ३५ ॥

किमर्थं नारकाणां जघन्या स्थितिरिह निवेदितेत्याह;—

**सानत्कुमारमाहेंद्रप्रभृतीनामनंतरे । यथा तथा द्वितीयादिपृथिवीषु निवेदिता ॥ १ ॥**

नारकाणां च संक्षेपादत्रैव तदनंतरे देवस्थितिप्रकरणेपि नारकस्थितिवचनं संक्षेपार्थं ॥

## दशवर्षसहस्राणि प्रथमायाम् ॥ ३६ ॥

पृथिव्यां नरकाणामवरस्थितिरिति घटनीयं ॥

## भवनेषु च ॥ ३७ ॥

दशवर्षसहस्राणि देवानामवरा स्थितिरिति संप्रत्ययः ॥

## व्यंतराणां च ॥ ३८ ॥

अपरा स्थितिर्दशवर्षसहस्राणीति चशब्देन समुच्चीयते ॥

**दशवर्षसहस्राणि प्रथमायामुदीरिता । भवनेषु च सा प्रोक्ता व्यंतराणां च तावती ॥ १ ॥**

अथ व्यंतराणां परा का स्थितिरित्याह;—

## परापल्योपममधिकम् ॥ ३९ ॥

स्थितिरिति संबंधः ॥

## ज्योतिष्काणां च ॥ ४० ॥

पल्योपममधिकं परा स्थितिघटना ॥

## तदष्टभागोऽपरा ॥ ४१ ॥

स्थितिर्ज्योतिष्काणामिति संप्रत्ययस्तेषामनंतरत्वात् ॥

**परेषामधिकं ज्ञेयं पल्योपममवस्थितिः । ज्योतिष्काणां च तद्वत्तदष्टभागोऽपरोदिता ॥ १ ॥**

यथा व्यंतराणां पल्योपममधिकं परा स्थितिः तद्वत् ज्योतिष्काणामपि तद् ज्ञेयं तदष्टभागः । पुनरवरा स्थितिर्ज्योतिष्काणां प्रतीता । अथ मध्यमा स्थितिः कुतोवगम्यत इत्याह;—

**सामर्थ्यान्मध्यमा बोध्या सर्वेषां स्थितिरायुषः । प्राणिनां सा च संभाव्या कर्मवैचित्र्यसिद्धितः ॥ २**
**ननु यद्वद्घटादीनां विचित्रा स्थितिरिष्यते । कर्मानपेक्षिणां तद्वद्देहिनामिति ये विदुः ॥ ३ ॥**
**तेऽनभिज्ञा घटादीनामपि तद्भोक्तृकर्मभिः । स्थितेर्निष्पादनाद्दृष्टकारणव्यभिचारतः ॥ ४ ॥**
**सूक्ष्मो भूतविशेषश्चेद्व्यभिचारेण वर्जितः । तद्धेतुर्विविधं कर्म तन्न सिद्धं तथाख्यया ॥ ५ ॥**

परापरस्थितिवचनसामर्थ्यात् मध्यमानेकविधा स्थितिर्देवनारकाणां तिर्यङ्मनुष्याणामिव संभाव्या । सा च कर्मवैचित्र्यसिद्धिं प्राप्य व्यवतिष्ठते ततः कर्मवैचित्र्यमनुमीयते । स्थितिवैचित्र्यसिद्धेरन्यथानुपपत्तेः । कर्मवैचित्र्याभावेपि घटादीनां स्थितिवैचित्र्यदर्शनादसिद्धान्यथानुपपत्तिरिति येऽभ्यमन्यंत तेऽनभिज्ञा एव, घटादीनामपि विचित्रायाः स्थितेस्तदुपभोक्तृप्राणिकर्मभिर्विचित्रैर्निवर्तनात्, कुंभकारादिदृष्टतत्कारणानां व्यभिचारात् । अदृष्टकारणानपेक्षित्वे तदघटनात् । समानकुंभकारादिकारणानां समानकालजन्मनां सदृशक्षेत्राणां समानकारणानां च घटादीनां समानकालस्थितिप्रसंगात् । मुद्गरादिविनाशकरणसंपातवैचित्र्याद् दृष्टादेव घटस्थितिवैचित्र्यमिति चेत्, तदेव कुतः? समानकारणादित्वेपि तेषामिति चिंत्यं । स्वकारणविशेषाद् दृष्टादेवेति चेन्न, मुद्गरादिविनाशकारणसंपातहेतोः पुरुषप्रयत्नादेः परिदृष्टस्य व्यभिचारात् । समानेपि तस्मिन् कचित्तत्संपातादर्शनात् । समानेपि च तत्संपाते तद्विनाशाप्रतीतेः कारणांतरस्य सिद्धेः । सूक्ष्मो भूतविशेषः सर्वथा व्यभिचारवर्जितो विविधः कारणांतरमिति चेत्, तदेव कर्मास्माकं सिद्धं तस्य सूक्ष्मभूतविशेषसंज्ञामात्रं तु भिद्यते परिदृष्टस्य सूक्ष्मभूतविशेषस्य

व्यभिचारवर्जितत्वासंभवात् । अथ किमेते संसारिणो जीवाः कर्मवैचित्र्यात् स्थितिवैचित्र्यमनुभवंतो नानात्मानः प्रत्येकायवैकात्मानः इति ? यदि नानात्मानस्तदा नु संबंधानाद्यभावः स्यादेकसंतानेपि नानासंतानवत् । अथैकात्मानस्तदानुभवस्मरणादिसंक्रमानुपपत्तिः पौर्वापर्यायोगादिति वदंतं प्रत्याह—

**ततः संसारिणो जीवाः स्वतत्त्वादिभिरीरिताः । नानैकात्मतया संतो नान्यथार्थक्रियाक्षतेः ६**

यस्माद्द्वितीयाध्याये स्वतत्त्वलक्षणादिभिः स्वभावैः संसारिणो जीवाः प्रत्येकं निश्चितास्तृतीयचतुर्थाध्याययोश्चाधारादिविशेषैर्नानाविधैरध्यवसितास्ततो नानैकात्मतया व्यवस्थिताः । न पुनर्नानात्मान एवैकात्मान एव वा सर्वार्थक्रियाविरहात्तेषामसत्त्वप्रसंगात् । संश्च सर्वसंसारी जीव इति निश्चितप्रायं, अभावविलक्षणत्वं हि सत्त्वं तच्च नास्तीत्येकस्वभावाद्धि भावाद्वैलक्षण्यं ॥ नानास्वभावत्वं जीवस्य कुत इत्याह;—

**जन्मास्तित्वं निवृत्तिं च क्रमाद्वृद्धिमपक्षयं । विनाशं च प्रपद्यंते विकारं षड्विधं हि ते ॥ ७ ॥**

सर्वो हि भावो जन्म प्रतिपद्यते निमित्तद्वयवशादात्मलाभमापद्यमानस्य जायत इत्यस्य विषयत्वात् । यथा सुवर्णं कटकादित्वेन अस्तित्वं च प्रतिपद्यते स्वनिमित्तवशादवस्थामाविभ्रतोर्थस्यास्तीति प्रत्ययाभिधानगोचरत्वात् । निवृत्तिं च प्रपद्यते तत एवावस्थांतरावाप्तिदर्शनात् परिणमते इत्यस्य विषयत्वात् । वृद्धिं च प्रतिपद्यते अनिवृत्तपूर्वस्वभावस्य भावांतरेणाधिक्यं लभमानस्य वर्द्धते इत्यस्य विषयत्वात् । अपक्षयं च प्रपद्यते क्रमेण पूर्वभावैकदेशविनिवृत्तिं प्राप्नुवतो वस्तुनोपक्षीयत इत्यस्य विषयत्वात् । विनाशं च प्रतिपद्यते, तत्पर्यायसामान्यनिवृत्तिं समासादयतोर्थस्य नश्यतीत्यस्य गोचरत्वात् । तथा जीवा अपि भावाः संतः षड्विधं विकारं प्रपद्यंते अभावविलक्षणत्वादित्येके, तेषां यद्यवस्तुविलक्षणत्वं सत्त्वं धर्मस्तदा न सम्यगिदं साधनं । प्रतिक्षणपरिणामेनैकेन अभावविलक्षणत्वं वस्तुत्वं तदा युक्तं । ततो जीवस्य षड्विकारप्राप्तिसाधनं वस्तुत्वस्य तदविनाभावसिद्धेः । अथासत्त्वधर्मविलक्षणत्वं सत्त्वं धर्मस्तदा न सम्यगिदं साधनं प्रतिक्षणपरिणामैकेन ऋजुसूत्रविषयेण व्यवहारनयगोचरेण द्रव्येण च व्यभिचारात् तस्य षड्विधविकाराभावेपि सत्त्वधर्माश्रयत्वेनाभावविलक्षणत्वसिद्धेरन्यथा सिद्धांतविरोधात् ॥ ननु च वस्तुत्वमप्यभावविलक्षणत्वं न जीवानां षड्विधविकारप्राप्तिं साधयति तस्यास्तित्वमात्रेण व्याप्तत्वादिति मन्यमानं प्रत्याह;—

**बिभ्रतेस्तित्वमेवैते शश्वदेकात्मकत्वतः । नान्यं विकारमित्येके तन्न जन्मादिदृष्टितः ॥ ८ ॥**

एतेष्वस्तित्वादिषु मध्ये अस्तित्वमेवात्मानो बिभ्रति नान्यं पंचविधं जन्मादिविकारं तेषां नित्यैकरूपत्वात् स्वरूपेण शश्वदस्तित्वोपपत्तेरित्येके । तन्न सम्यक्, तेषां जन्मादिदर्शनात् । मनुष्यादीनां हि देहिनां बाल्यादिभावेन जन्मादयः प्रतीयंते मुक्तात्मनामपि मुक्तत्वादिना ते संभाव्यंत इति प्रतीतिविरुद्धं जीवानां जन्मादिविकारविकलत्ववचनम् ॥

**जन्मादयः प्रधानस्य विकाराः परिणामिनः । तत्संसर्गात्प्रतीयंते भ्रांते पुंसीति चेन्न वै ॥ ९॥**
**तेषां भावविकारत्वादात्मन्यप्यविरोधतः । जन्मादिरहितस्यास्याप्रतीते भ्रांत्यसिद्धितः ॥ १०॥**
**विकारी पुरुषः सत्त्वाद्बहुधानकवत्सव । सर्वथार्थक्रियाहानेरन्यथा सत्त्वहानितः ॥ ११ ॥**

यथा हि प्रधानं भावस्तथात्मापि सन्नभ्युपगंतव्यः । सत्त्वं चार्थक्रियया व्याप्तं तदभावे खपुष्पवत्सत्त्वानुपपत्तेः । सा चार्थक्रिया क्रमयौगपद्याभ्यां व्याप्ता, तद्विरहेर्थक्रियाविरहात्तद्वत् । ते च क्रमयौगपद्ये विकारत्वेन व्याप्ते जन्मादिविकाराभावे क्रमानुपलब्धेरात्मनोऽसत्त्वप्रसक्तेरित्युक्तप्रायं ॥

**जायंते ते विनश्यंति संति च क्षणमात्रकं । पुमांसो न विवर्तंते वृद्ध्यपक्षयगाश्च न ॥ १२ ॥**
**इति केचित्प्रध्वस्तास्तेप्येतेनैवाविगानतः । विवर्ताद्यात्मतापाये सत्त्वस्यानुपपत्तितः ॥ १३ ॥**

यथैव हि जन्मविनाशास्तित्वापेक्षणमपि न परमार्थसत्त्वं तथा विवर्तनपरिवर्धनपरिक्षयणात्मकत्वापायेपि तथा प्रतीयते, अन्यथा कूटस्थात्मनीव खे पुष्पवद्वा चेतनस्य सत्त्वानुपपत्तेः । स्वभावांतरेणोपपत्तिरेव परिणामो वृद्धिश्चाधिक्येनोत्पत्तिरपक्षयस्तु विनाश एवेति न षड्विकारो जीव इति चेन्न, अन्वितस्वभावापरित्यागेन सजातीयेतरस्वभावांतरमात्रप्राप्तेः परिणामत्वादाधिक्येनोत्पत्तेश्च वृद्धित्वाद्देशतो विनाशस्यापक्षयत्वात्परिणामादीनां विनाशोत्पादास्तित्वेभ्यः कथंचिद्भेदवचनात् । जीवस्यान्वितस्वभावासिद्धेर्यथोक्तपरिणामादनुपपत्तिरिति चेन्न, तस्य पुरस्तादन्वितस्य भावस्य प्रमाणतः साधनात् । ततो न जीवस्यैकानेकात्मकत्वे साध्ये सत्त्वादित्ययं हेतुरसिद्धोऽनैकांतिको विरुद्धो वा, जन्माद्यनेकविकारात्मकत्वापायेन्वितैकत्वभावाभावे च सर्वथा सत्त्वानुपपत्तेः । एतेनानेकवाग्विज्ञानविषयत्वमात्मनो निवेदितं । तथानेकशक्तिप्रचितत्वं वस्त्वंतरसंबंधाविर्भूतानेकसंबंधिरूपत्वं अन्यापेक्षानेकरूपोत्कर्षापकर्षपरिणतगुणसंबंधित्वं अतीतानागतवर्तमानकालसंबंधित्वं उत्पादव्ययध्रौव्ययुक्तत्वं अन्वयव्यतिरेकात्मकत्वं च समर्थितं । तस्य जन्मादिविकारषट्कप्रपंचात्मकत्वात्सत्त्वव्यापकत्वोपपत्तेः । सत्त्वान्यथानुपपत्त्या प्रसिद्धं च तत्सर्वमेकात्मकत्वमनेकात्मकत्वं च जीवस्य साधयति तदन्यतरापाये अनेकवाग्विज्ञानविषयत्वाद्यनुपपत्तेः । तदनुपपत्तौ सत्त्वानुपपत्तेश्च जीवतत्त्वाव्यवस्थितिप्रसंगात् । तत्र जन्मादिविकारप्रपंचस्याविद्योपकल्पितत्वे क्रमाक्रमयोरप्यविद्योपकल्पितत्वप्रसक्तिः । ततश्चार्थक्रियाप्यविद्याविजृंभितैवेति न सत्त्वं परमार्थतः प्रसिद्ध्येत् । तत एव संचिन्मात्रं तत्त्वमित्ययुक्तं, तस्य ब्रह्माद्यद्वैतवदप्रतीतेरिति प्रपंचेन समर्थितत्वात् । नानैकात्मतया प्रतीतेरंतर्बहिश्च सुनिश्चितासंभवद्बाधकत्वसिद्धेश्च सिद्धो नानैकात्मको जीवः ॥

**ततः स्वतत्त्वादिविशेषचिंतनं घटेत जीवस्य नयप्रमाणतः ।**
**क्रमाद्यनेकांततया व्यवस्थितेरिहोदितन्यायबलेन तत्त्वतः ॥ १४ ॥**

इति चतुर्थाध्यायस्य **द्वितीयमाह्निकम्** ।

इति श्री**विद्यानंदि**आचार्यविरचिते तत्त्वार्थ**श्लोकवार्तिकालंकारे** चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥





## अथ पञ्चमोऽध्यायः ॥ ५ ॥

---

## अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥

किमर्थोस्य सूत्रस्य प्रवृत्तिरत्रेत्याह;—

**अथाजीवविभागादिविवादविनिवृत्तये । अजीवेत्यादिसूत्रस्य प्रवृत्तिरुपपद्यते ॥ १ ॥**

सम्यग्दर्शनविषयभावेन जीवोद्दिष्टे दृष्टेष्टजीवतत्त्वव्याख्यानमर्हत्येव, तत्र च लक्षणविभागविशेषलक्षणविप्रतिपत्तौ तद्विनिवृत्त्यर्थोस्य सूत्रस्य प्रवृत्तिर्घटत एवान्यथा निःशंकमजीवतत्त्वाव्यवस्थानात् ॥

**अजीवनादजीवाः स्युरिति सामान्यलक्षणं । कायाः प्रदेशबाहुल्यादिति कालाद्विशिष्टता ॥ २**

**धर्मादिशब्दतो बोध्यो विभागो भेदलक्षणः । तेन नैकं प्रधानादिरूपता नाप्यनंशता ॥ ३ ॥**

**निःशेषाणामजीवानामिति सिद्धं प्रतीतितः । विपक्षे बाधसद्भावाद् दृष्टेनेष्टेन च स्वयम् ॥ ४ ॥**

जीवस्योपयोगो लक्षणं जीवनमिति प्रतिपादितं ततोन्यदजीवनं गतिस्थित्यवगाहहेतुत्वरूपादिस्वरूपमन्वयिसाधारणमजीवानां लक्षणं । त्रिकालविषयाजीवनानुभवनादजीव इति निरुक्तेरव्यभिचारान्न पुनर्जीवनाभावमात्रं तस्य प्रमाणागोचरत्वात् पदार्थलक्षणत्वायोगात् भावांतरस्वभावस्यैवाभावस्य व्यवस्थापनात् । काया इव कायाः प्रदेशबाहुल्यात् कालाणुवदणुमात्रत्वाभावात् । ततो विशिष्टाः पंचैवास्तिकाया इति वचनात् । अजीवाश्च ते कायाश्चेति समानाधिकरणावृत्तिः सामर्थ्यादवसीयते, भिन्नाधिकरणायां वृत्तौ कथंचिद्भेदविवक्षायामपि कायानामेव संप्रत्ययप्रसंगात् । जीवानां विशेषणभावात् सामानाधिकरण्यायामपि वृत्तौ दोषोयमिति चेन्न, अभेदप्रतीतेः । अजीवा एव काया इति धर्मादीनामजीवत्वकायत्वाभ्यां तादात्म्यप्राधान्ये तयोः सामानाधिकरण्योपपत्तेः । काया इत्येवास्तु इति चेन्न, जीवस्यापि कायत्वात् तद्व्यवच्छेदार्थत्वादजीवग्रहणस्य । धर्मादीनामजीवत्वविधानार्थत्वाच्च सूत्रस्य युक्तमजीवग्रहणं । तर्ह्यजीवा इत्येवास्तु इति चेन्न, कालाणुवत्प्रदेशमात्रत्वनिराकरणार्थत्वात् कायग्रहणस्य । अन्यथा तेऽस्तिकाया इति सूत्रांतरारंभप्रसगात् । जीवानां कायत्वविधानार्थमारंभणीयमेव सूत्रांतरमिति चेत्; नारंभणीयं, असंख्येयाः प्रदेशा धर्माधर्मैकजीवानामित्यत एव जीवानां प्रदेशबाहुल्यसिद्धेः कायत्वविधानात् । तर्हि धर्माधर्मयोस्तत एव, आकाशस्यानंता इति वचनादाकाशस्य, संख्येयासंख्येयानंताश्च पुद्गलानामिति वचनात् पुद्गलस्य कायत्वविधानसिद्धेरपार्थकं कायग्रहणमिति चेन्न, ततो धर्मादिप्रदेशानामियत्ताविधानात् । तर्हि जीवस्यापि ततोऽसंख्येयप्रदेशत्वविधानान्न कायत्वविधिरिति चेन्न, ततो जीवस्य कायत्वानुमानात् । न चात्र धर्मादीनां कायत्वविधाने तत्र जीवस्य कायत्वमनुमातुं शक्यमिति युक्तमिह कायग्रहणं । अस्तिकायो जीवः प्रदेशेयत्ताश्रयत्वाद्धर्मादिवदित्यनुमानप्रवृत्तेः, अन्यथा दृष्टांतासिद्धेः । किमर्थं धर्मादिशब्दानां वचनं? विभागविशेषलक्षणप्रसिद्ध्यर्थं । अस्तु नाम धर्माधर्माकाशपुद्गला इति शब्दोपादानात् विभागस्य प्रसिद्धिः, विशेषलक्षणस्य तु कथं? तन्निर्वचनस्य लक्षणाव्यभिचारात् तद्विशेषलक्षणसिद्धिः । सकृत्सकलगतिपरिणामिनां सांनिध्यधानाद्धर्मः, सकृत्सकलस्थितिपरिणामिनामसांनिध्यधानाद्धलिपर्यायादधर्मः, आकाशंतेऽस्मिन् द्रव्याणि स्वयं वाकाशते इत्याकाशं, त्रिकाल-

पूरणगलनात् पुद्गला इति निर्वचनं न प्रतिपक्षमुपयातीत्यव्यभिचारं सिद्धं । कालस्याजीवत्वेनोपसंख्यानमिह कर्तव्यमिति चेन्न, तस्याग्रे वक्ष्यमाणत्वात् । ततो धर्माधर्माकाशपुद्गलाः कालश्चेति पंचैवाजीवपदार्थाः प्रतिपादिता भवंति । तेन प्रधानमेवाजीवपदार्थो धर्मादीनामशेषाणामजीवानां प्रधानरूपत्वादिति नः सिद्धं तेषां पृथगुपलब्धेः । प्रधानाद्वैते दृष्टेन स्वयमिष्टेन च बाधसद्भावात् । न हि प्रधानमेकमुपलभामहे अंतर्बहिश्च भेदानामुपलब्धेः । न चैषा भ्रांता भेदोपलब्धिर्बाधकाभावात् । प्रधानाद्वैतग्राहकमनुमानं बाधकमिति चेन्न, तस्य तदभेदे तद्वदसिद्धत्वतत्साधकत्वाभावाद्भेदोपलब्धिबाधकत्वायोगात् । ततो भेदे द्वैतसिद्धिप्रसंगात् । पराभ्युपगमादनुमानं तत्साधकं भेदोपलब्धेश्च बाधकमिति चेन्न, पराभ्युपगमस्याप्रमाणत्वात् । तत्प्रमाणत्वे भेदसिद्धेरवश्यंभावात् । ततः प्रधानाद्वैते निर्बाधं दृष्टविरोधः । तथेष्टेन च महदादिविकारप्रतिपादकागमेन तद्बाधोस्ति, तस्याविद्योपकल्पितत्वे प्रधानाद्वैतसिद्धिरपि ततो न स्यात् । न च प्रत्यक्षानुमानागमागोचरस्यापि प्रधानस्य स्वतः प्रकाशमचेतनत्वादिति न तद्रूपता धर्मादीनां । एतेन शब्दाद्वैतरूपता प्रतिषिद्धा, पुरुषाद्वैतरूपतायां तु तेषामजीवत्वविरोधः । न च पुरुष एवेदं सर्वमिति शक्यव्यवस्थं, पुरस्तादजीवसिद्धिविधानात् । पृथिव्यप्तेजोवायुमनोदिक्कालाकाशभेदरूपताप्यजीवपदार्थस्यायुक्तैव, पृथिव्यप्तेजोवायुमनसां पुद्गलद्रव्यपर्यायत्वाज्जात्यंतरत्वासिद्धेः । पृथिव्यादयः पुद्गलपर्याया एव भेदसंघाताभ्यामुत्पद्यमानत्वात् । ये तु न पुद्गलपर्यायास्ते न तथा दृष्टाः यथाकाशादयः भेदसंघाताभ्यामुत्पद्यमानाश्च पृथिव्यादय इति न ततो जात्यंतरं । विभागसंयोगाभ्यामुत्पद्यमानेन शब्देन व्यभिचार इति चेन्न, तस्यापि पुद्गलपर्यायत्वात् । तदपर्यायत्वे तस्य बहिःकरणवेद्यत्वविरोधात् । न च भेदो विभागमात्रं, स्कंधविदारणस्य भेदशब्देनाभिधानात् । नापि संघातः संयोगमात्रं, मृत्पिंडादीनां स्कंधपरिणामस्य संघातशब्दवाच्यत्वात् । न च ताभ्यामुत्पद्यमानत्वमपुद्गलपर्यायस्य ज्ञानादेरस्ति येनानैकांतिको हेतुः स्यात् । भेदात् पृथिव्यादीनामुत्पत्त्यसंभवादसिद्धो हेतुरिति चेन्न, घटादिभेदात्कपालाद्युत्पत्तिदर्शनात् द्व्यणुभेदादपि परमाणूत्पत्तिसिद्धेः । यथैव हि तंत्वादिसंघातान्वयव्यतिरेकानुविधानात् पटादीनां तत्संघातादुत्पत्तिरुररीक्रियते तथा पटादिभेदान्वयव्यतिरेकानुविधानात्तंत्वादीनामात्मलाभात्तद्भेदादुत्पत्तिः सुशकाभ्युपगंतुं । पटादिभेदाभावेपि तंत्वादिदर्शनान्न ततस्तदुपपत्तिरिति चेन्न, तस्यापि तंत्वादेः कर्पासप्रवेणीभेदादेवोत्पत्तिसिद्धेः । यथाविधानां च तंत्वादीनां पटादिभेदादुत्पत्तिरुपलब्धा तथाविधानां न तदभावे प्रतीयते इति नोपालंभः सममिष्यते च भेदात्परमाण्वादीनामुत्पत्तिः संघाताच्चेति नासिद्धो हेतुः, यतः पुद्गलपर्यायाः पृथिव्यादयो न सिध्येयुः । दिशोपि नात्रोपसंख्यानं कार्यमाकाशेऽन्तर्भावात् ततो द्रव्यांतरत्वाप्रसिद्धेः । स्यान्मतं, पूर्वापरादिप्रत्ययविशेषः पदार्थविशेषहेतुको विशिष्टप्रत्ययत्वात् दंडादिप्रत्ययवत्, योसौ विशिष्टः पदार्थस्तद्धेतुः सा दिग्द्रव्यं परिशेषादन्यस्य प्रसक्तस्य प्रतिषेधात् ततो द्रव्यांतरमाकाशादिति । तदसत्, तद्धेतुत्वे नाशस्य प्रतिषेद्धुमशक्तेस्तत्प्रदेशश्रेणिष्वेवादित्योदयादिवशात् प्राच्यादिदिग्व्यवहारप्रसिद्धेः । प्राच्यादिदिक्संबंधाच्च मूर्तद्रव्येषु पूर्वापरादिप्रत्ययविशेषोत्पत्तेर्न परस्परापेक्षया मूर्तद्रव्याण्येव तद्धेतवः । एकतरस्य पूर्वत्वासिद्धावन्यतरस्यापरत्वासिद्धेस्तदसिद्धौ चैकतरस्य पूर्वत्वायोगादितरेतराश्रयत्वात् उभयासत्त्वप्रसंगात् । नन्वेवमाकाशप्रदेशश्रेणिष्वपि कुतः पूर्वापरादिप्रत्ययः सिध्येत्? स्वरूपत एव तत्सिद्धौ तस्य परावृत्त्यभावप्रसंगात् । परस्परापेक्षया तत्सिद्धावितरेतराश्रयणादुभयासत्त्वप्रसक्तेरिति चेत्, दिक्प्रदेशेष्वपि पूर्वापरादिप्रत्ययोत्पत्तौ समः पर्यनुयोगः । द्रव्यांतरपरिकल्पनायामनवस्थाप्रसंगश्च । यथैव हि मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेवेदमस्मात्पश्चिमेनेत्यादिप्रत्यया दिग्द्रव्यहेतुकास्ततो दिग्भेदमवधिं कृत्वा दिग्भेदेष्वेवेदमेतः पूर्वा पश्चि-

भेदमित्यादिप्रत्यया द्रव्यांतरहेतुकाः संतु विशिष्टप्रत्ययत्वाविशेषात् तद्भेदेष्वपि पूर्वापरादिप्रत्ययाः परद्रव्यहेतुका इत्यनवस्था । दिक्षु भेदेषु द्रव्यांतरमंतरेण पूर्वापरादिप्रत्ययस्योत्पत्तौ तेनैव हेतोरनेकांतिकत्वात्कुतो दिक्सिद्धिः? विषुवति दिने यत्र सवितोदेति स पूर्वो दिग्भागो, यत्रास्तमेति सोऽपर इति दिग्भेदेषु पूर्वापरादिप्रत्ययसिद्धौ गगनप्रदेशपंक्तिष्वपि तथैव तत्सिद्धिरस्तु किमत्र दिग्द्रव्यांतरकल्पनया तद्देशद्रव्यकल्पनाप्रसंगात् । अयमतः पूर्वो देश इत्यादिप्रत्ययस्य देशद्रव्यमंतरेणानुपपत्तेः । पृथिव्यादिरेव देशं द्रव्यमित्ययुक्तं, तत्र पृथिव्यादिप्रत्ययोत्पत्तेः । पूर्वादिदिक्कृतः पृथिव्यादिषु पूर्वदेशादिप्रत्यय इति चेत्, पूर्वाद्याकाशकृतस्तत्रैव पूर्वादिदिक्प्रत्ययोस्त्विति व्यर्था दिक्कल्पना । नन्वेवमादित्योदयादिवशादेवाकाशप्रदेशश्रेणिष्विव पृथिव्यादिष्वेव पूर्वापरादिप्रत्ययसिद्धेराकाशश्रेणिकल्पनाप्यनर्थिका भवत्विति चेत् न, पूर्वस्यां दिशि पृथिव्यादय इत्याद्याधाराधेयव्यवहारदर्शनात् । पृथिव्याद्यधिकरणभूताया गगनप्रदेशपंक्तेः परिकल्पनस्य सार्थकत्वात् गगनस्य प्रमाणांतरत्वतः साधयिष्यमाणत्वाच्च । ततो न धर्मादीनामजीवादीनां दिग्द्रव्यरूपतोपसंख्यातव्या । पृथिव्यादिरूपतावत्स्कंधस्वरूप एवाजीवपदार्थ इत्यप्ययुक्तं, धर्माधर्मादीनामपि ततो भिन्नस्वभावानामजीवद्रव्याणामग्रे समर्थयिष्यमाणत्वात् । पुद्गलद्रव्यव्यतिरेकेण रूपस्कंधस्यासंभवाच्च सूक्तं धर्मादय एवाजीवपदार्था इति ॥

## द्रव्याणि ॥ २ ॥

स्वपरप्रत्ययोत्पादविगमपर्यायैर्द्रूयंते द्रवंति वा तानीति द्रव्याणि, कर्मकर्तृसाधनत्वोपपत्तेः द्रव्यशब्दस्य स्याद्वादिनां विरोधानवतारात् । सर्वथैकांतवादिनां तु तदनुपपत्तिर्विरोधात् । द्रव्यपर्यायाणां हि भेदैकांतेन द्रव्याणां पर्यायैर्द्रवणं तथा स्वयमसिद्धत्वात् । सिद्धरूपैरेव हि देवदत्तादिभिः प्रसिद्धसत्ताका ग्रामाद्यो द्रूयमाणा दृष्टाः न पुनरसिद्धसत्ताकैरसिद्धसत्ताका वंध्यापुत्रादिभिः कूर्मरोमादय इति । न च द्रव्येभ्यः पर्यायाः पृथक् सिद्धसत्त्वाः पर्यायत्वविरोधात् द्रव्यांतरवत्, द्रव्यपरतंत्राणामेव स्वभावानां पर्यायत्वोपपत्तेः । पृथग्भूता अपि द्रव्यतो द्रव्यपरतंत्राः पर्यायास्तत्समवायादिति चेन्न, कथंचित्तादात्म्यव्यतिरेकेण समवायस्य निरस्तपूर्वत्वात् । पर्यायेभ्यो भिन्नानां द्रव्याणां च सत्त्वसिद्धौ पर्यायपरिकल्पनावैयर्थ्यात् । कार्यनानात्वपरिकल्पनायां त्वभिन्नपर्यायसंबंधनानात्वसिद्धितस्तन्निबंधनपर्यायांतरपरिकल्पनाप्रसंगात् । सुदूरमपि गत्वा पर्यायांतरतादात्म्योपगमे प्रथमत एव पर्यायतादात्म्योपगमे च न पर्यायैर्द्रव्याणि द्रूयंते कथंचिद्भिन्नानामेव प्राप्यप्रापकभावोपपत्तेः । स्याद्वादिनां तु भेदनयार्पणात् पर्यायाणां द्रव्येभ्यः कथंचिद्भेदे सति यथोदितपर्यायैर्द्रूयंते प्राप्यंते इति द्रव्याणि 'कर्मणि यस्त्ये युज्यते' द्रवंति प्राप्नुवंति पर्यायानिति द्रव्याणीति च कर्तरि बहुलवचनादुपपद्यते द्रव्या इव भवंतीति द्रव्याणीति चेवार्थे द्रव्यशब्दस्य निपातनात् । द्रव्यत्वयोगाद्द्रव्याणीत्यपरे, तेषां द्रव्यत्ववंतीति स्याद्दंडीत्यभिधानवत् । अथाभेदोपचारः क्रियते यष्टियोगात् पुरुषो यष्टिरिति यथा तदपि द्रव्यत्वानीति स्यान्न तु द्रव्याणि, द्रव्यत्वाभावलक्षणाभावात् । तच्च द्रव्यत्वं द्रवणं द्रव्यमिति द्रव्यशब्दाभिधेयमपि सामान्यं । यदि सर्वगतामूर्तानां स्वस्वभावं द्रव्येभ्यः सर्वथा भिन्नं तदा न प्रमाणसिद्धं, द्रव्येषु सदृशपरिणामस्यैव द्रव्यत्वाख्यस्यानुवृत्त्यप्रत्ययहेतुत्वोपपत्तेरित्यन्यत्र निरूपणात् । अथ तदेव सादृश्यं सामान्यं तदाभिमतमेव पर्यायैर्द्रूयंत इति द्रव्याणीति वचनात् सादृश्यव्यंजनपर्यायत्वात् धर्मादयोनुवर्तते इति सामानाधिकरण्यात् द्रव्याणीति वचनात् । पुल्लिंगत्वप्रसंग इति चेन्न, आविष्टलिंगत्वाद्द्रव्यशब्दस्य वनादिशब्दवत् ॥ किं पुनरत्रानेन सूत्रेण कृतमित्याह;—

**तद्गुणादिस्वभावत्वं द्रव्याणीतीह सूत्रतः । द्रव्यलक्षणसद्भावात्प्रत्याख्यातमवेयते ॥ १ ॥**

धर्माधर्मयोरात्मगुणत्वादाकाशस्य च मूर्तद्रव्याभावस्वभावत्वान्न द्रव्यत्वमित्येके मन्यंते, तान् प्रति धर्मादीनां गुणाभावस्वभावत्वमनेनात्र प्रत्याख्यातं निश्चीयते । न हि पुण्यपापे धर्माधर्मौ ब्रूमो नाप्याकाशं मूर्तद्रव्याभावमात्रं द्रव्यलक्षणयोगात् तेषां द्रव्यव्यपदेशसिद्धेः । कथमित्याह;—

**धर्माधर्मौ मतौ द्रव्ये गुणित्वात्पुद्गलादिवत् । तथाकाशमतो नैषां गुणाभावस्वभावता ॥ २ ॥**
**न हेतोराश्रयासिद्धिस्तेषामग्रे प्रसाधनात् । नापि स्वरूपतोसिद्धिर्महत्त्वादिगुणस्थितेः ॥ ३ ॥**

द्रव्यत्वे साध्ये धर्मादीनां धर्मिणामप्रसिद्धत्वाद्गुणित्वादित्यस्य हेतोराश्रयासिद्धत्वात्तत एव गुणित्वस्यासंभवात् स्वरूपासिद्धत्वं चेत्येके । तन्न सम्यक्, तेषामग्रे प्रमाणतः साधनात् तत्र महत्त्वादिगुणस्थितत्वाच्च । ततः सूक्तं धर्मादयो द्रव्याणीति ॥

## जीवाश्च ॥ ३ ॥

द्रव्याणीत्यभिसंबंधः । तत्र बहुत्ववचनं जीवानां वैविध्यख्यापनार्थं । द्रव्याणि जीवा इत्येकयोगकरणं युक्तमिति चेन्न, जीवानामेव द्रव्यत्वप्रसंगात् । धर्मादीनामप्यधिकारात् द्रव्यत्वसंप्रत्यय इति चेन्न, द्रव्यशब्दस्य जीवशब्दावबद्धत्वाद्धर्मादिभिः संबंधयितुमशक्तेः । सत्यप्यधिकारे अभिप्रेतसंबंधस्य यत्नमंतरेणाप्रसिद्धेः । चशब्दकरणाचत्सिद्धिरिति चेत्, को विशेषः स्यादेकयोगकरणे? योगविभागे तु स्पष्टा प्रतिपत्तिरिति स एवास्तु ॥ किं पुनरनेन वा व्यवच्छिद्यते इत्याह;—

**कल्पिताश्चित्तसंताना जीवा इति निरस्यते । जीवाश्चेतीह सूत्रेण द्रव्याणीत्यनुवृत्तितः ॥ १ ॥**

न ह्यपरामृष्टभेदा निरन्वयविनश्वरचित्तलक्षणा एव पूर्वपूर्वापरीभूताः संताना जीवाख्यां प्रतिपद्यंत इति युक्तं, यतस्तेषां संवृत्त्या द्रव्यव्यवहारानुरोधतः प्रमाणतः प्रसिद्धान्वयत्वात् । प्रमाणं पुनस्तदन्वयप्रसाधकमेकत्वप्रत्यभिज्ञानं पुरस्तात्समर्थितमिति परमार्थसदेव द्रव्यत्वमनेन जीवानां सूत्रितं । ततः कल्पिताश्चित्तसंताना एव जीवा इत्येतन्निराकृतं वेदितव्यं । पृथिव्यादीन्येव द्रव्याणि न जीवास्तेषां तत्समुदायोऽथजीवत्कायात्मकत्वात्, चैतन्यविशिष्टः कायः पुरुष इति वचनात् द्रव्यांतरत्वानुपपत्तेरित्यपरः, सोपि तेनैव पराकृत इत्यावेदयति;—

**क्ष्मादिभूतचतुष्काच्च द्रव्यांतरतया गतिः । ननु देहगुणत्वादिरिति देहात् परे नराः ॥ २ ॥**

पृथिव्यादिभ्यो द्रव्यांतरं जीव इति प्रागुक्तात्साधनाद्भिन्नलक्षणत्वादेर्विनिश्चयः । तथा देहस्य गुणः कार्यं वा चेतनेत्यपि न, विग्रहगुणो बोधः तत्रानध्यवसीयते इत्यादेर्वा निरस्तत्वान्न देहगुणत्वादिर्जीवानामतो भेदात् द्रव्यांतराण्येव जीवाः । एवं च पंचास्तिकायद्रव्याणि धर्माधर्माकाशपुद्गलजीवाख्यानि प्रसिद्धानि भवंति ॥ तानि पुनः—

## नित्यावस्थितान्यरूपाणि ॥ ४ ॥

तद्भावाव्ययानि नित्यानि, नित्यशब्दस्य ध्रौव्यवचनत्वात् सर्वदेयत्तानिवृत्तेरवस्थितानि, न विद्यते रूपमेतेष्वित्यरूपाणि ॥ कुतस्तान्येवमित्याह;—

**द्रव्यार्थिकनयात्तानि नित्यान्येवान्वितत्वतः । अवस्थितानि सांकर्यस्यान्योन्यं शश्वदस्थितेः ॥ १**
**ततो द्रव्यांतरस्यापि द्रव्यषट्कादभावतः । तत्पर्यायानवस्थानानित्यत्वे पुनरर्थतः ॥ २ ॥**

धर्मादीनि व्याख्यातानि पंच वक्ष्यमाणेन कालेन सह षडेव द्रव्याणि । तानि द्रव्यार्थिकनयादेशादेव

नित्यानि, निर्बाधान्वितविज्ञानविषयत्वान्यथानुपपत्तेः । तत एवावस्थितानि तेषामन्योन्यसांकर्यस्याव्यव-स्थानात् सर्वदा सप्तमद्रव्यस्याभावाच्चेति सूत्रकारवचनात् पर्यायार्थादेशादनित्यानि तान्यनवस्थितानि चेति सामर्थ्यादवगम्यते । एतेन क्षणिकान्येव स्वलक्षणानि द्रव्याणीति दर्शनं प्रत्याख्यातं, प्रमाणतः प्रकृतद्रव्याणां नित्यत्वसिद्धेरन्यत्र प्रतीत्यभावात् । तथैकमेव द्रव्यं सन्मात्रं प्रधानाद्यद्वैतमेव वा नाना द्रव्याणां तत्रानुप्रवेशात् । परमार्थतोनवस्थितानि तानीत्यपि मतमपास्तं, प्रतिनियतलक्षणभेदात्सर्वदा तेषामवस्थितत्वसिद्धेः ॥ अथारूपाणीति किं सामान्यतो विशेषतो वाभिधीयत इत्याशंकमानं प्रत्याह;—

**अरूपाणीति सामान्यादाह न त्वपवादतः । रूपित्ववचनादग्रे पुद्गलानां विशेषतः ॥ ३ ॥**

न विद्यते रूपं मूर्तिर्येषां तान्यरूपाणीत्युत्सर्गतः षडपि द्रव्याणि विशेष्यंते न पुनर्विशेषतस्तथोत्तरत्र पुद्गलानां रूपित्वविधानात् । कश्चिदाह—धर्माधर्मकालाणवो जीवाश्च नामूर्तयो असर्वगतद्रव्यत्वात् पुद्ग-लवत् । स्याद्वादिभिस्तेषामसर्वगतद्रव्यत्वाभ्युपगमान्नात्रासिद्धो हेतुः, नाप्यनैकांतिकः साध्यविपक्षे गगने सुखादौ वा पर्याये तदसंभवादिति । सोत्र प्रष्टव्यः । का पुनरियं मूर्तिरिति? असर्वगतद्रव्यपरिणामो मूर्तिरिति चेत्, तर्हि सर्वगतद्रव्यपरिणामवंतो धर्मादय इति साध्यमायातं तथा वा सिद्धसाधनं । अथ स्पर्शादिसंस्थानपरिणामो मूर्तिस्तद्वावान्नामूर्तयो धर्मादय इति साध्यं तदानुमानबाधितः पक्षः कालात्य-यापदिष्टश्च हेतुः । तथाहि—धर्मादयो न मूर्तिमंतः पुद्गलादन्यत्वे सति द्रव्यत्वादाकाशवदित्यनुमानं विवादाध्यासितद्रव्याणाममूर्तित्वं साधयत्येव । सुखादिपर्यायेष्वभावाद्भागासिद्धत्वं हेतोरिति चेन्न, तेषा-मपि पक्षीकृतत्वात् । कुतस्तेषाममूर्तित्वसिद्धिः? साधनांतरादित्यभिधीयते । सुखादयोप्यमूर्तद्रव्यपर्याया न मूर्तिमंतः अमूर्तिद्रव्यपर्यायत्वादाकाशपर्यायवत् । मूर्तिमद्द्रव्यपर्यायाणां रूपादीनां कथममूर्तित्वसिद्धि-रिति चेन्न, कथमपि तेषां स्वयं मूर्तिमत्त्वात् । मूर्त्यंतराभावात् तेषाममूर्तित्वं गुणत्वादेव सिध्यति गुणानां निर्गुणत्वसाधनात् । एतेन सामान्यविशेषसमवायानां सदृशेतरपरिणामाविष्वग्भावलक्षणान, मूर्तिमद्द्रव्याश्रयाणां कर्मणां च मूर्तित्वममूर्तित्वं चिंतितं बोद्धव्यं । तेषाममूर्तित्वमेवेत्यपि व्याख्यातं तेन यदुक्तं गुणकर्मसामान्यविशेषसमवाया अमूर्तय एवेति तदयुक्तं, प्रतीतिविरोधात् ॥

अथोत्सर्गतः पुद्गलानामप्यरूपित्वप्रसक्तौ तदपवादार्थमिदमाह;—

## रूपिणः पुद्गलाः ॥ ५ ॥

रूपशब्दस्यानेकार्थत्वेपि मूर्तिमत्पर्यायग्रहणं, शास्त्रसामर्थ्यात् । ततो रूपं मूर्तिरिति गृह्यते रूपादि-संस्थानपरिणामो मूर्तिरितिवचनात् । गुणविशेषवचनं ग्रहणं वासदादीनां तदविनाभावात्तदंतर्भूत-त्वादग्रहणाभावात् । रूपमेतेष्वस्तीति रूपिण इति नित्ययोगे कथंचिद्व्यतिरेकिणां रूपतद्वतामिति । पुद्गला इति बहुवचनं भेदप्रतिपादनार्थं । तदेवं—

**अरूपित्वापवादोऽयं रूपिणः पुद्गला इति । रूपं मूर्तिरिह ज्ञेया न स्वभावेखिलार्थभाक् ॥ १ ॥**
**रूपादिपरिणामस्य मूर्तित्वेनाभिधानतः । स्पर्शादिमत्त्वमेतेषामुपलक्ष्येत तत्त्वतः ॥ २ ॥**

अथ षण्णामपि द्रव्याणां नानाद्रव्यत्वमाहोस्विदेकैकद्रव्यत्वमुत केषांचिन्नानाद्रव्यत्वमित्याशंकाया-मिदमाह;—

## आ आकाशादेकद्रव्याणि ॥ ६ ॥

अभिविधावाङ्प्रयोगः । एकशब्दः संख्यावचनस्तत्संबंधाद्द्रव्यस्यैकवचनप्रसंग इति चेन्न, धर्माद्यपेक्षया बहुत्वसिद्धेः । एकं च द्रव्यं च तदेकद्रव्यं एकद्रव्यं चैकद्रव्यं च एकद्रव्याणीति धर्माद्यपेक्षया बहुत्वं न

विरुध्यते । एकैकमस्तु बहुत्वात् प्रसिद्धत्वाद्द्रव्यगतेरिति चेन्न वा, द्रव्यापेक्षयैकत्वख्यापनार्थत्वादेक-द्रव्याणीतिवचनस्य पर्यायार्थादेशाद्बहुत्वप्रतिपत्तेः ॥

**एकसंख्याविशिष्टानीत्येकद्रव्याणि सूचयन् । अनेकद्रव्यतां हंति धर्मादीनामसंशयम् ॥ १ ॥**
**आ आकाशादितिख्यातिः पुद्गलानां नृणामपि । कालाणूनामनेकत्वविशिष्टद्रव्यतां विदुः ॥ २**

आ आकाशादेकत्वसंख्याविशिष्टान्येकद्रव्याणीति सूत्रयन् केवलं द्रव्यापेक्षयानेकद्रव्यतामेषामपास्यति । किं तर्हि? जीवपुद्गलकालद्रव्याणामेकत्वं च ततोनेकत्वविशिष्टद्रव्यतामेषां वार्तिककारादयो विदुः । कथमिति चेत्, उच्यते—

**एकद्रव्यमयं धर्मः स्यादधर्मश्च तत्त्वतः । महत्त्वे सत्यमूर्तत्वात्खवत्तत्सिद्धिवादिनाम् ॥ ३ ॥**

महत्त्वादित्युच्यमाने पुद्गलस्कंधैर्व्यभिचारो मा भूदित्यमूर्तत्ववचनं, अमूर्तत्वादित्युक्ते कालाणुभिर्वादिनः सुखादिभिः प्रतिवादिनोऽनेकांतो मा भूदिति महत्त्वविशेषणं । न चामूर्तत्वमसिद्धं धर्माधर्मयोः पुद्गलादन्यत्वे सति द्रव्यत्वादाकाशवदिति तत्साधनात् । नापि महत्त्वं त्रिजगद्व्यापित्वेन साधयिष्यमाणत्वात् । ततो निरवद्यो हेतुः । खमुदाहरणमपि न साध्यसाधनधर्मविकलं तत्सिद्धिवादिनां, तदेकद्रव्यत्वस्य साध्यधर्मस्य साधनधर्मस्य च महत्त्वामूर्तत्वस्य तत्त्वस्य तत्र प्रसिद्धत्वात् । गगनासत्त्ववादिनां प्रति तस्य तथात्वेनाग्रे साधनाद्धर्माधर्मद्रव्यवत् । तत एव नाश्रयासिद्धो हेतुस्तदाश्रयस्य धर्मस्याधर्मस्य च प्रमाणत्वे सिद्धत्वात् ॥

**नानाद्रव्यमसौ नानाप्रदेशत्वाद्धरादिवत् । इत्ययुक्तमनेकांतादाकाशेनैकता हृता ॥ ४ ॥**
**तस्य नानाप्रदेशत्वसाधनादग्रतो नयात् । निरंशस्य स तत्सर्वमूर्तद्रव्यैरसंगतः ॥ ५ ॥**

ततो न पक्षस्यास्यानुमाने बाधा तस्याप्रयोजकत्वात् । नापि हेतोः कालात्ययापदिष्टतेति धर्माधर्मयोरेकद्रव्यत्वसिद्धिः ॥ यथा च तानि धर्माधर्माकाशान्येकद्रव्याणि तथा—

## निष्क्रियाणि च ॥ ७ ॥

उभयनिमित्तापेक्षः पर्यायविशेषो द्रव्यस्य देशांतरप्राप्तिहेतुः क्रिया, न पुनः पदार्थांतरं तथा प्रतीयमानत्वात् गुणसामान्यविशेषसमवायवत् । ननु क्रिया द्रव्यात्पदार्थांतरं तद्भिन्नलक्षणत्वाद्गुणादिवदिति । पदार्थांतरत्वेनाप्रतीयमानत्वमसिद्धमिति चेत्, कथंचिद्भिन्नलक्षणत्वस्य द्रव्यव्यक्तिभिरनेकांतात् । कालादिद्रव्यव्यक्तीनां न द्रव्याद्भिन्नलक्षणत्वं क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणस्य तत्र भावादिति चेन्न, कालादिषु क्रियावत्त्ववर्जितस्य द्रव्यलक्षणस्योपगमात् । पृथिव्यादिषु तदवर्जितस्य तस्य व्याख्यानात् कथंचित्तेषां द्रव्यलक्षणभेदसिद्धेः । पदार्थांतरत्वे तु द्रव्यव्यक्तीनां गुणादिव्यक्तीनामपि पदार्थांतरत्वप्रसक्तेः कुतः षट्पदार्थनियमः? द्रव्यत्वप्रतीतिमात्रं द्रव्यलक्षणं सकलद्रव्यव्यक्तीनामभिन्नं नास्य कर्मण्यपि मनागप्यभावात् । सर्वथा तद्भिन्नलक्षणत्वं हेतुरिति चेत्, प्रतिवाद्यसिद्धः सद्द्रव्यलक्षणमिति कर्मण्यपि द्रव्यप्रत्ययमात्रस्य द्रव्यलक्षणस्य भावादन्यथा तदसत्त्वप्रसंगात् । न हि सत्तामहासामान्यमेव द्रव्यमिति स्याद्वादिनां दर्शनं तस्याः शुद्धद्रव्यत्वोपगमात् । गुणपर्ययवद्द्रव्यमित्यशुद्धद्रव्यलक्षणस्य कर्मण्यभावेपि कथंचिदेकद्रव्याभिन्नलक्षणत्वं तस्य सिध्येन्न सर्वथा । तच्च कथंचित्पदार्थांतरत्वं साधयेदिति विरुद्धसाधनाद्विरुद्धं परैः सर्वथा पदार्थांतरत्वस्य तत्र साध्यत्वात् । कर्म सर्वथा न द्रव्यपदार्थांतरं कथंचित्तद्भिन्नलक्षणत्वाद्गुणादिवदिति परमतसिद्धेः । न चात्र कर्माप्रतिपत्तं येनाश्रयासिद्धिः साधनस्य । नापि सर्वथा पदार्थांतरत्वेन द्रव्यात्प्रतिपन्नं कुतश्चित्प्रमाणात् स्याद्वादिभिः, येन धर्मिग्राहकप्रमाणबाध-

स्यैव कथंचित्पदार्थांतरत्वेनैव प्रतिपन्नत्वात् । न चैवं सिद्धांतविरोधः, कर्मणः पर्यायत्वेन द्रव्यात्कथंचित्पदार्थांतरत्वव्यवस्थितेरुत्पादविनाशत्वलक्षणस्य ध्रौव्याद्द्रव्यलक्षणाद्भेदसिद्धेः कर्मगुणसामान्यविशेषसमवायानां पर्यायलक्षणसद्भावात् पर्यायपदार्थत्ववचनादन्यथातिप्रसक्तेः । प्रागभावादीनां विशेषणविशेष्यभावादीनां च पदार्थांतरत्वप्रसंगात् । पदार्थशेषत्वकल्पनायामेकेनैव पदार्थेन पर्याप्तत्वादन्येषां पदार्थशेषावस्थिते सूत्रेवधारणादित्युक्तप्रायं । सामान्यसमवायौ कथं पर्यायौ? नित्यत्वादिति चेन्न, तयोरपि गुणकर्मविशेषवदनित्यत्वोपगमात् । सदृशपरिणामो हि सामान्यं स्याद्वादिनां अविष्वग्भावश्च द्रव्यपर्याययोः समवायः, स चोत्पादविनाशवानेव सदृशव्यक्त्युत्पादे सादृश्योत्पादप्रतीतेस्तद्विनाशे च तद्विनाशमात्रभावात् । सादृश्यस्य व्यक्त्यंतरेषु दर्शनान्नित्यत्वमिति चेन्न च, सादृश्यस्य विशेषस्य गुणस्य कर्मणश्चैवं नित्यत्वप्रसंगात् । नष्टोत्पन्नव्यक्तिभ्यो व्यक्त्यंतरेषु न तदेव वैसादृश्यादि दृश्यते । ततोन्यस्यैव दर्शनादिति चेत्, सादृश्यादि परमेव किन्न भवेत् तथाप्रतीतेरविशेषात् । ततो द्रव्यपर्याय एव । क्रियागुणादीनां क्रियात्वप्रसंग इति चेन्न, ततो विशेषलक्षणसद्भावात् । द्रव्यस्य हि देशांतरप्राप्तिहेतुः पर्यायः क्रिया न सर्वः । सर्वत्र सर्वदा कस्मान्न स्यादिति चेन्न, उभयनिमित्तापेक्षत्वात् क्रियायास्तद्भाव एव भावात् पर्यायांतरवत् । निष्क्रांतानि क्रियायाः निष्क्रियाणि धर्माधर्माकाशानि । कुत इत्याह;—

**निष्क्रियाणि च तानीति परिस्पंदविमुक्तितः । सूत्रितं त्रिजगद्व्यापिरूपाणां स्पंदहानितः ॥१॥**

धर्माधर्मौ परिस्पंदलक्षणया क्रियया निष्क्रियौ सकलजगद्व्यापित्वादाकाशवत् । परिणामलक्षणया तु क्रियया सक्रियावेव, अन्यथा वस्तुत्वविरोधात् । स्वरूपासिद्धो हेतुरिति चेन्न, धर्माधर्मयोः सकललोकव्यापित्वस्याग्रे समर्थनात् ॥

**सामर्थ्यात्सक्रियौ जीवपुद्गलाविति निश्चयः । जीवस्य निष्क्रियत्वे हि न क्रियाहेतुता तनौ ॥२**

प्रकृतेषु पंचसु द्रव्येष्वाकाशांतानां त्रयाणां निष्क्रियत्ववचने सामर्थ्याज्जीवपुद्गलौ सक्रियौ सूत्रितौ वेदितव्यौ । ननु पुद्गलाः क्रियावत्तयोपलभ्यमानाः क्रियावंत इति युक्त, जीवस्तु न सक्रियस्तस्य तथानुपलभ्यमानत्वादिति न चोद्यं; तस्य निष्क्रियत्वे शरीरे क्रियाहेतुत्वविरोधात् । ततः क्रियावानात्मान्यत्र द्रव्ये क्रियाहेतुत्वात् पुद्गलद्रव्यवदित्यनुमानाज्जीवस्य क्रियावत्तोपलंभान्न तस्य सक्रियत्वमयुक्तं । कालेन व्यभिचारान्न हेतुर्गमको वेति चेन्न, कालस्य क्रियाहेतुत्वाभावात् । क्रियानिर्वर्तकत्वं क्रियाहेतुत्वमिह साधनं न पुनः क्रियानिमित्तमात्रत्वं तस्य कालादौ सद्भावाभावान्न व्यभिचारः । कालो हि क्रियापरिणामिनां स्वयं निमित्तमात्रं स्थविरगतौ यष्टिवत्, न पुनः क्रियानिर्वर्तकः पर्णादौ पवनवत् ॥

**प्रयत्नादिगुणस्तद्वान् हेतुरितिचेन्न वै । गुणोस्ति तद्वतो भिन्नः सर्वथेति निवेदितम् ॥ ३ ॥**

नात्मा शरीरादौ क्रियाहेतुर्निर्गुणस्यापि मुक्तस्य तद्धेतुत्वप्रसंगात् । ततोऽसिद्धो हेतुः । प्रयत्नो धर्मोऽधर्मश्चात्मनो गुणो हि तन्वामन्यत्र वा द्रव्ये क्रियाहेतुरिति परेषामाशयो न युक्तः, प्रयत्नस्य गुणत्वासिद्धेः । वीर्यांतरायक्षयोपशमादिकारणापादितो ह्यात्मप्रदेशपरिस्पंदः प्रयत्नो नः क्रियैवेति स्याद्वादिभिर्निवेदनात् । तथा धर्माधर्मयोरपि पुद्गलपरिणामत्वसमर्थनान्नात्मगुणत्वं । सन्नप्यसौ प्रयत्नादिरात्मगुणः सर्वथात्मनो भिन्नो न प्रमाणसिद्धोस्तीतिनिवेदनात् कथंचित्तदभिन्नस्तु स तत्र क्रियाहेतुरित्यात्मैव तद्धेतुकः स्यात् । तथा च कथमसिद्धो हेतुः? ॥

**क्रियाहेतुगुणत्वाद्वा लोष्ठवत्सक्रियः पुमान् । धर्मद्रव्येण चेदस्य व्यभिचारः परश्रुतौ ॥ ४ ॥**

**न तस्य प्रेरणाहेतुगुणयोगित्वहानितः । निमित्तमात्रहेतुत्वात्स्वयं गतिविवर्तिनाम् ॥ ५ ॥**

क्रियाहेतुगुणत्वस्य हेतोः क्रियावत्त्वे साध्ये गगनेनानेकांत इत्ययुक्तं, तस्य क्रियाहेतुगुणाभावात् । वायुसंयोगः क्रियाहेतुरिति चेन्न, तस्य क्रियावति तृणादौ क्रियाहेतुत्वेन दर्शनात् । निष्क्रिये व्योमादौ तथात्वेनाप्रतीतेः । न च य एव तृणादौ वायुसंयोगः स एवाकाशेस्ति, प्रतियोगिसंयोगस्य भेदात् । वायुसंयोगसामान्यं तु न क्वचिदपि क्रियाकारणं, मंदतमवेगवायुसंयोगे सत्यपि पादपादौ क्रियानुपलब्धेः । स्यान्मतं, क्रियावानात्मा सर्वगतत्वादाकाशवदित्यनुमानबाधितः क्रियावान् पुरुष इति पक्षः कालात्ययापदिष्टश्च हेतुरिति । तदसत्, पुरुषस्य सर्वगतत्वासिद्धेः । सर्वगतः पुरुषो द्रव्यत्वे सत्यमूर्तत्वाद्गगनवदिति चेन्न, परेषां कालद्रव्येण व्यभिचारात् साधनस्य । कालस्य पक्षीकरणाददोष इति चेन्न, पक्षस्यानुमानागमबाधानुषंगात् । तथाहि—कालोऽसर्वगतो नानाद्रव्यत्वात् पुद्गलवदित्यनुमानं पक्षस्य बाधकं । न चात्रासिद्धो हेतुः तस्य नानाद्रव्यत्वेन स्याद्वादिनां सिद्धत्वात् । नानाद्रव्यं कालः प्रत्याकाशप्रदेशं युगपद्व्यवहारकालभेदान्यथानुपपत्तेः । प्रत्याकाशप्रदेशभिन्नो व्यवहारकालः सकृत्कुरुक्षेत्राकाशलंकाकाशदेशयोर्दिवसादिभेदान्यथानुपपत्तेः । तत्र दिवसादिभेदतः पुनः क्रियाविशेषभेदात् नैमित्तिकानां लौकिकानां च सुप्रसिद्ध एव । स च व्यवहारकालभेदो गौणः परैरभ्युपगम्यमानो मुख्यकालद्रव्यमंतरेण नोपपद्यते । यथा मुख्यसत्त्वमंतरेण क्वचिदुपचरितं सत्त्वमिति प्रतिलोकाकाशप्रदेशं कालद्रव्यभेदसिद्धिस्तत्साधनस्यानवद्यत्वात् अन्यथानुपपन्नत्वसिद्धेः ॥ कालस्यासर्वगतत्वेऽनिष्टानुषंगपरिजिहीर्षया प्राह;—

**कालोऽसर्वगतत्वेन क्रियावन्नानुषज्यते । सर्वदा जगदेकैकदेशस्थत्वात् पृथक् पृथक् ॥ ६ ॥**

क्रियावान् कालोऽसर्वगतद्रव्यत्वात् पुद्गलवदित्यनिष्टानुषंजनमयुक्तं, सर्वदा लोकाकाशैकैकप्रदेशस्थत्वेन पृथक् पृथक् कालाणूनां प्रसाधनात् । ते हि प्रत्याकाशप्रदेशं प्रतिनियतस्वभावस्थितयोऽभ्युपगंतव्याः परीक्षकैरन्यथा व्यवहारकालभेदप्रतिनियतस्वभावस्थित्यनुपपत्तेः कदाचित्तत्परावृत्तिप्रसंगात् । अणुपरिमाणानि च तानि कालद्रव्याणि स्कंधाकारत्वेन कार्यानुमितिप्रतीयमानस्य कार्यस्य प्रत्याकाशप्रदेशं सकृद्व्यवहारकालभेदलक्षणस्याणुनापि कालद्रव्येण कर्तुं शक्यत्वात् । एतेन सर्वगतः काल इति पक्षस्यागमबाधोपदर्शिता । कथं? "लोयायासपएसे एक्केक्के जे ठिया हु एक्केक्का । रयणाणं रासी इव ते कालाणू मुणेयव्वा ॥" इत्यागमस्याबाधितस्य सिद्धेः । अत एव द्रव्यत्वे सत्यमूर्तत्वादिति हेतुः कालात्ययापदिष्टः । कालोऽसर्वगत एव व्यवतिष्ठते । तथा चात्मनः परममहत्त्वे साध्येस्यैव हेतोः कालेन व्यभिचारः सिध्यतीति नातस्तत्सिद्धिर्येन क्रियावानात्मा क्रियाहेतुगुणत्वाल्लोष्ठवदित्यनुमानमनवद्यं न भवेत् । पक्षस्यानुमानबाधनानवताराद्धेतोश्च कालात्ययापदिष्टत्वाभावादिति सूक्ष्माकाशांतानां निष्क्रियत्वं तद्वचनेन सामर्थ्याज्जीवपुद्गलानां सक्रियत्वप्रतिपादनं च कालस्य वक्ष्यमाणस्य निष्क्रियत्वात् ॥

**नन्वेवं न क्रियत्वेपि धर्मादीनां व्यवस्थितेः । न स्युः स्वयमभिप्रेता जन्मस्थानव्ययक्रियाः ॥७**
**तथोत्पादव्ययध्रौव्ययुक्तं सदिति लक्षणं । तत्र न स्यात्ततो नैषां द्रव्यत्वं वस्तुतापि च ॥ ८ ॥**
**इत्यपास्तं परिस्पंदक्रियायाः प्रतिषेधनात् । उत्पादादिक्रियासिद्धेरन्यथा सत्त्वहानितः ॥ ९ ॥**
**परिस्पंदक्रियामूला नचोत्पादादयः क्रियाः । सर्वत्र गुणभेदानामुत्पादादिविरोधतः ॥ १० ॥**
**स्वपरप्रत्ययौ जन्मव्ययौ यदि गुणादिषु । स्थितिश्च किं न धर्मादिद्रव्येष्वेवमुपेयते ॥ ११ ॥**
**गतिस्थित्यवगाहानां परत्र न निबंधनं । धर्मादीनि क्रियाशून्यस्वभावत्वात्खपुष्पवत् ॥ १२ ॥**
**क्रियावत्त्वप्रसंगो वा तेषां वायुघरांबुवत् । इत्यचोद्यं बलाधानमात्रत्वाद्गमनादिषु ॥ १३ ॥**
**धर्मादीनां स्वशक्त्यैव गत्यादिपरिणामिनां । यथेंद्रियं बलाधानमात्रं विषयदर्शने ॥ १४ ॥**

पुंसः स्वयं समर्थस्य तत्र सिद्धेर्न चान्यथा । तत्रैव द्रव्यसामर्थ्यान्निष्क्रियाणामपि स्वयं ॥ १५ ॥
धर्मादीनां परत्रास्तु क्रियाकारणमासता । नचैवमात्मनः कायक्रियाहेतुत्वमापतेत् ॥ १६ ॥
सर्वथा निष्क्रियस्यापि स्वयं मानविरोधतः । आत्मा हि प्रेरको हेतुरिष्टः कायादिकर्मणि ॥ १७ ॥
तृणादिकर्मणीवास्तु पवनादिश्च सक्रियः । वीर्यांतरायविज्ञानावरणच्छेदभेदतः ॥ १८ ॥
सक्रियस्यैव जीवस्य ततोंगे कर्महेतुता । हस्ते कर्मात्मसंयोगप्रयत्नाभ्यामुपेयते ॥ १९ ॥
यैस्तेपि च प्रतिक्षिप्तास्तयोस्तच्छक्त्ययोगतः । निष्क्रियो हि यथात्मैषां क्रियावद्वैसदृश्यतः ॥ २०
कालादिवत्तथैवात्मसंयोगः सप्रयत्नकः । गुणः स्यात्तस्य तद्वच्च निष्क्रियत्वादिदेशतः ॥ २१ ॥
गुणाः कर्माणि चैतेन व्याख्यातानीति सूचनात् । न तावदात्मसंयोगः केवलः कर्मकारणं ॥ २२
निःप्रयत्नस्य हस्तादौ क्रियाहेतुत्वहानितः । नैकस्य तत्प्रयत्नस्य क्रियाहेतुत्वमीक्ष्यते ॥ २३ ॥
शरीरायोगिनोन्यस्य ततः कर्मप्रसंगतः । सहितावात्मसंयोगप्रयत्नौ कुरुतः क्रियाः ॥ २४ ॥
हस्तादावित्यसंभाव्यमनयोः सहदृष्टिवत् । अदृष्टापेक्षिणौ तौ चेदकुर्वाणौ क्रियां नरि ॥ २५ ॥
हस्तादौ कुरुतः कर्म नैवं क्वचिददृष्टतः । उष्णापेक्षो यथा वन्हिसंयोगः कलशादिषु ॥ २६ ॥
रूपादीन् पाकजान् वर्तते वह्नौ स्वाश्रये तथा । नृसंयोगादिरन्यत्र क्रियामारभते न तु ॥ २७ ॥
स्वाधारे नरि तस्येत्थं सामर्थ्यादितिचेन्न वै । वैषम्यादसदिष्टस्य सिद्धेः साध्यसमत्वतः ॥ २८
प्रतीतिबाधनाच्चैतद्विपरीतप्रसिद्धितः । साध्ये क्रियानिमित्तत्वे दृष्टांतो ह्यक्रियाश्रयः ॥ २९ ॥
स्यादेव विषमस्तावदग्निसंयोग उष्णभृत् । यथा च स्वाश्रये कुर्वन् विकारं कलशादिषु ॥ ३० ॥
करोति वन्हिसंयोगः पुंसो योगस्तथा तनौ । इत्यसदिष्टसंसिद्धिः क्रियापरिणतस्य तुः ॥ ३१
काये क्रियानिमित्तत्वसिद्धेः संयोगिनि स्फुटं । संयोगार्थांतरं वन्हेः कुटादेश्च तदाश्रितः ॥ ३२
समवायात्ततो भिन्नप्रतीत्या बाध्यते न किं । घटादिष्वामरूपादीन् विनाशयति स स्वयं ॥ ३३
पाकजान् जनयत्येतत्प्रतिपद्येत कः सुधीः । न चैषा पाकजोत्पत्तिप्रक्रिया व्यवतिष्ठते ॥ ३४ ॥
वन्हेः पाकजरूपादिपरिणामाः कुटादिषु । स्वहेतुभेदतः सर्वः परिणामः प्रतीयते ॥ ३५ ॥
पूर्वाकारपरित्यागादुत्तराकारलब्धितः । कुटे पाकजरूपादिपरित्यागेन जायते ॥ ३६ ॥
वन्हेः पाकजरूपादिस्तथा दृष्टेरबाधनात् । नौष्ण्यापेक्षस्ततो वन्हिसंयोगोत्र निदर्शनं ॥ ३७ ॥
नुः क्रियाहेतुतासिद्धौ विपरीतप्रसिद्धितः । अनुष्णाशीतरूपश्चाप्रेरकोनुपघातकः ॥ ३८ ॥
कुटेः प्राप्तः कथं रूपाद्युच्छेदोत्पादकारणं । गुरुत्वं निष्क्रियं लोष्ठे वर्तमानं तृणादिषु ॥ ३९ ॥
क्रियाहेतुर्यथा तद्वत्प्रयत्नादिस्तथेक्षणात् । ये त्वाहुस्तेपि विध्वस्ताः प्रत्येतव्या दिशानया ॥ ४०
स्वाश्रये विक्रियाहेतौ ततोन्यत्र हि विक्रिया । द्रव्यस्यैव क्रियाहेतुपरिणामात्पुनः पुनः ॥ ४१ ॥
क्रियाकारित्वमन्यत्र प्रतीत्या नैव बाध्यते । पुरुषस्तद्गुणो वापि न क्रियाकारणं तनौ ॥ ४२ ॥
निष्क्रियत्वाद्यथा व्योमेत्युक्तिर्यात्मनि बाधकं । नानैकांतिकता धर्मद्रव्येणास्य कथंचन ॥ ४३
तस्याः प्रेरकतासिद्धेः क्रियाया विग्रहादिषु । एवं सक्रियतासिद्धावात्मनो निर्वृतावपि ॥ ४४ ॥
सक्रियत्वं प्रसक्तं चेदिष्टमूर्ध्वगतित्वतः । यादृशी सशरीरस्य क्रिया मुक्तस्य तादृशी ॥ ४५ ॥
न युक्ता तस्य मुक्तत्वविरोधात् कर्मसंगतेः । क्रियानेकप्रकारा हि पुद्गलानामिवात्मनां ॥ ४६ ॥
स्वपरप्रत्ययायत्तभेदा न व्यतिकीर्यते । सान्यैव तद्वतो येषां तेषां तद्व्यंशून्यता ॥ ४७ ॥
क्रियाक्रियावतोर्भेदेनाप्रतीतेः कदाचन । क्रियाक्रियाश्रयौ भिन्नौ विभिन्नप्रत्ययत्वतः ॥ ४८
सह्यविंध्यवदित्येतद्भिभेदैकांतसाधनं । धर्मिग्राहिप्रमाणेन हेतोर्बाधननिर्णयात् ॥ ४९ ॥

कथंचिद्भिन्नयोस्तेन तयोर्ग्रहणतः स्फुटं । विभिन्नप्रत्ययत्वं च सर्वथा यदि गद्यते ॥ ५० ॥
तत एव तदा तस्य सिद्धत्वं प्रतिवादिनः । कथंचित्तु न तत्सिद्धं वादिनामित्यसाधनं ॥ ५१ ॥
विरुद्धं वा भवेदिष्टविपरीतप्रसाधनात् । साध्यसाधनवैकल्यं दृष्टांतस्यापि दृश्यताम् ॥ ५२ ॥
सत्त्वेनाभिन्नयोरेव प्रतीतेः सह्यविंध्ययोः । विरुद्धधर्मताध्यासादित्यादेरप्यहेतुता ॥ ५३ ॥
प्रोक्तैतेन प्रपत्तव्या सर्वथाप्यविशेषतः । क्रियाक्रियावतोनन्यानन्यदेशत्वतः क्रिया ॥ ५४ ॥
तत्स्वरूपवदित्येके तदप्यज्ञानचेष्टितं । लौकिकानन्यदेशत्वं हेतुश्चेद्व्यभिचारता ॥ ५५ ॥
वातातपादिभिस्तस्यानन्यदेशैर्विभेदिभिः । शास्त्रीयानन्यदेशत्वं मन्यते साधनं यदि ॥५६॥
न सिद्धमन्यदेशत्वप्रतीते रूपयोस्तयोः । तद्वद्देशा क्रिया तद्वत्स्वकीयाश्रयदेशकः ॥ ५७ ॥
प्रतीयते यदानन्यदेशत्वं कथमेतयोः । सर्वथानन्यदेशत्वमसिद्धं प्रतिवादिनः ॥ ५८ ॥
कथंचिद्वादिनस्तत्स्याद्विरुद्धं चेष्टहानिकृत् । धर्मिग्राहिप्रमाणेन बाधा पक्षस्य पूर्ववत् ॥ ५९ ॥
साधनस्य च विज्ञेया तैरेवातीतकालता । निष्क्रियाः सर्वथा सर्वे भावाः स्युः क्षणिकत्वतः ६०
पर्यायार्थतया लब्धिं प्रतिक्षणविवर्तवत् । इत्याहुर्ये न ते स्वस्थाः साधनस्याप्रसिद्धितः ॥६१॥
न हि प्रत्यक्षतः सिद्धं क्षणिकत्वं निरन्वयं । साधर्म्यस्य ततः सिद्धेर्बहिरंतश्च वस्तुनः ॥ ६२ ॥
इदानींतनता दृष्टिर्न क्षणक्षयिणः क्वचित् । कालांतरस्थितेरेव तथात्वप्रतिपत्तितः ॥ ६३ ॥
नानुमानाच्च तत्सिद्धं तद्धेतोरनभीक्षणात् । सत्त्वादि सत्त्वहेतुश्चेन्न तत्रागमकत्वतः ॥ ६४ ॥
विरुद्धादितया तस्य पुरस्तादुपवर्णनात् । प्रपंचेन पुनर्नेह तद्विचारः प्रतन्यते ॥ ६५ ॥
कथंचिन्निष्क्रियत्वे न साध्ये स्यात्सिद्धसाधनं । तन्निश्चयनयादेशात्प्रसिद्धं सर्ववस्तुषु ॥ ६६ ॥
व्यवहारनयात्तेषां सक्रियत्वप्रसिद्धितः । भूतिर्येषां क्रिया सैवेत्ययुक्तं सान्वयत्वतः ॥ ६७ ॥
नित्यत्वात्सर्वभावानां निष्क्रियत्वं तु सर्वथा । यैरुक्तं तेप्यनेनैव हेतुना दूषिता हृताः ॥६८॥
सर्वथा तन्मतध्वंसात्प्रमाणाभावतः क्वचित् । कथंचिन्नित्यताहेतुर्यदि तस्य विरुद्धता ॥ ६९ ॥
कथंचिन्निष्क्रियत्वस्य साधनात् क्षणिकादिवत् । ततः स्युर्निष्क्रियाः सर्वे भावाः स्यात्सक्रियासह
विरोधादिप्रसंगश्चेन्न दृष्टे तदयोगतः । चैत्रैकज्ञानवत्स्वेष्टतत्त्ववद्वा प्रवादिनाम् ॥ ७१ ॥
स्वेष्टं तत्त्वमनिष्टात्मशून्यं सदिति ये विदुः । सदसद्रूपमेकं ते निराकुर्युः कथं पुनः ॥ ७२ ॥
निष्क्रियेतरताभावे बहिरंतः कथंचन । प्रतीतेर्बाधशून्यायाः सर्वथाप्यविशेषतः ॥ ७३ ॥

## असंख्येयाः प्रदेशा धर्माधर्मैकजीवानाम् ॥ ८ ॥

प्रदेशेयत्तावधारणार्थमिदं । धर्माधर्मयोरेकजीवस्य च । कुतः पुनरसंख्येयप्रदेशता धर्मादीनां प्रसिध्यतीत्यावेदयति;—

प्रतिदेशं जगद्व्योमव्याप्तयोग्यत्वसिद्धितः । धर्माधर्मैकजीवानामसंख्येयप्रदेशता ॥ १ ॥
लोकाकाशवदेव स्याचासंख्येयप्रदेशभृत् । तदाध्येयस्य लोकस्य सावधित्वप्रसाधनात् ॥ २ ॥
अनंतदेशतापायात् प्रसंख्यातुमशक्तितः । न तत्रानंतसंख्यातप्रदेशत्वविभावना ॥ ३ ॥

न ह्ययं लोको निरवधिः प्रतीतिविरोधात् । पृथिव्या उपरि सावधित्वदर्शनात् पार्श्वतोधस्ताच्च सावधित्वसंभवनात् तद्वदुपरि लोकस्य सावधित्वसिद्धेः । सर्वतः अपर्यंता मेदिनीति साधने सर्वस्य हेतोरप्रबोधकत्वापत्तेः । प्रसिद्धे च सावधौ लोके तदधिकरणस्याकाशस्य लोकाकाशसंज्ञकस्य सावधित्वसिद्धेः परिशेषादसंख्येयप्रदेशत्वसिद्धिः । तथाहि—न तावल्लोकाकाशमनंतप्रदेशं शश्वत्संहरणधर्मत्वे सति

सावयवित्वात् पंचाणुकाकाशवत् । असंहरणधर्मत्वादित्युच्यमाने लोकाकाशेन व्यभिचार इति सावयवित्ववचनं, सावयवित्वादित्युक्तेपि पुद्गलस्कंधेनानंतपरमाणुकेनानेकांतो मा भूदिति शश्वदसंहरणधर्मकत्वे सतीति विशेषणं । न चैतदसिद्धं साधनसद्भावात् । शश्वदसंहरणधर्मकं लोकाकाशमजीवत्वे सत्यमूर्तद्रव्यत्वादलोकाकाशवत् । न ह्यलोकाकाशं कदाचित्संहरणधर्म सर्वदा परममहत्त्वाभावप्रसंगात् । तथा न संख्यातप्रदेशं लोकाकाशं गणनया प्रसंख्यातुमशक्यत्वादलोकाकाशवदेवेति नानंतसंख्यातप्रदेशत्वं तस्य विभावयितुं शक्यं । परिशेषादसंख्येयप्रदेशं लोकाकाशं सिद्धं । ततो धर्माधर्मैकजीवास्त्वसंख्येयप्रदेशाः प्रतिप्रदेशं तावदसंख्येयप्रदेशलोकाकाशव्याप्तियोग्यत्वात् यन्न तथा तन्न तथा यथैकपरमाणुरिति निरवद्यो हेतुः, अन्यथानुपपत्तिसद्भावात् ॥ नन्वत्र जीवस्यैकविशेषणं किमर्थमित्यारेकायामिदमाह;—

**एकजीववचःशक्तेर्नासंख्येयप्रदेशता । नानात्मनामनंतादिप्रदेशत्वस्य संभवात् ॥ ४ ॥**

एकजीववचनसामर्थ्यान्न नानाजीवानामसंख्येयप्रदेशत्वं तेषां अनंतप्रदेशत्वस्यानंतानंतप्रदेशत्वस्य च संभवात् ॥ कुतः पुनर्धर्मादीनां सप्रदेशत्वं सिद्धं यतोऽसंख्येयप्रदेशता साध्यत इत्याशंकां निराचिकीर्षुराह;—

**सप्रदेशा इमे सर्वे मूर्तिमद्द्रव्यसंगमात् । सकृदेवान्यथा तस्यायोगादेकाणुवत्ततः ॥ ५ ॥ ॥**

न हि सकृत्सर्वमूर्तिमद्द्रव्यसंगमः सप्रदेशत्वमंतरेण घटते धर्मादीनामेकपरमाणुवत् । ततोमी धर्माधर्मैकजीवास्ते सप्रदेशा एव । मुख्यप्रदेशाभावादुपचरिताः प्रदेशास्तेषामिति चेत्, कुतस्तत्र तदुपचारः? सकृन्नानादेशद्रव्यसंबंधादेव तस्य सप्रदेशे कांडपटादौ दर्शनादिति चेत् तद्वन्मुख्यप्रदेशसद्भावे को दोषो? अनित्यत्वप्रसंगः सावयवस्यानित्यत्वप्रसिद्धेर्घटादिवदिति चेत्, कथंचिदनित्यत्वस्येष्टत्वाददोषोयं । सर्वथानित्यत्वेर्थक्रियाविरोधात् । सर्वस्य कथंचिदनित्यत्वस्य व्यवस्थापनात् ॥

**जीवस्य सर्वतद्द्रव्यसंगमो न विरुध्यते । लोकपूरणसंसिद्धेः सदा तद्योग्यतास्थितेः ॥ ६ ॥**

जीवो हि लोकपूरणावस्थायां सकृत्सर्वमूर्तिमद्द्रव्यैः संबध्यते इति सिद्धांतसद्भावान्न स्याद्वादिनां तस्य सकृत्सर्वमूर्तिमद्द्रव्यसंगमो विरुध्यते, शेषावस्थास्वपि तद्योग्यताव्यवस्थापनात् । एतेन धर्माधर्मयोः सर्वथा प्रतिदेशं लोकाकाशव्याप्तिवदेकजीवस्यापि तद्व्याप्तियोग्यत्वस्थितेरसंख्येयप्रदेशत्वसाधने हेतोरसिद्धिः परिहृता वेदितव्या । तथा योग्यतामंतरेण धर्मादीनां शश्वत्तद्व्याप्तिविरोधात् । परमाणुवत् कालाणुवद्वा तद्व्याप्तिः साधयिष्यते चाग्रतः ॥

अथाकाशस्य कियंतः प्रदेशा इत्याह;—

## आकाशस्यानंताः ॥ ९ ॥

प्रदेशा इत्यनुवर्तते । पूर्वसूत्रे वृत्त्यकरणं तत एवासंख्येयप्रदेशा इति वृत्तिनिर्देशे लाघवेपि वाक्यनिर्देशोऽसंख्येयाः इति कृत इहोत्तरसूत्रेषु च प्रदेशग्रहणं मा भूद्योगैरेवमिति । अंतोऽवसानमिह गृह्यते, अविद्यमानोंतो येषां त इमेऽनंताः प्रदेशा इत्यन्यपदार्थनिर्देशोयं । ते चाकाशस्येति भेदनिर्देशः कथंचित्प्रदेशप्रदेशिनोर्भेदोपपत्तेः । सर्वथा तयोरभेदे प्रदेशिनः स्वप्रदेशादेकस्मादर्थांतरत्वाभावात् प्रदेशमात्रत्वप्रसंग इति प्रदेशिनोऽसत्त्वं । तदसत्त्वे प्रदेशस्याप्यसत्त्वमित्युभयासत्त्वप्रसक्तिः । सर्वथा तद्भेदे पुनराकाशस्य च द्रव्यप्रदेशा द्रव्याणि वा स्युर्गुणादयो वा? यदि द्रव्याणि तदाकाशस्यानेकद्रव्यत्वप्रसंगो घटादिवत् । तथा च सादिपर्यवसानत्वं तद्वदेव । न ह्यनेकद्रव्यारब्धं द्रव्यं किंचिदनाद्यनंतं

दृष्टमिदं वा परस्य । गुणाः प्रदेशा इति चेन्न, गुणांतराश्रयत्वविरोधात् । साधारणगुणा हि संयोगविभागसंख्यादयस्तत्रेष्यंते घटसंयोगोन्यस्याकाशप्रदेशस्य कुड्यसंयोगोन्यस्य द्वाविभागोऽन्यस्य दंडविभागोन्यस्येति संयोगविभागयोः प्रतीतेः । एकः खस्य प्रदेशो द्वौ चेति संख्यायाः संप्रत्ययात् परो गगनप्रदेशोऽपरो वेति परत्वापरत्वयोरवबोधात् पृथगेतस्मात् पाटलिपुत्राकाशप्रदेशाच्चित्रकूटाकाशप्रदेश इति पृथक्त्वस्योपलंभात् । तथा घटाकाशप्रदेशान्महान् मंदराकाशप्रदेश इति परिमाणस्य सन्निर्णयात् । प्रदेशिन्येवाकाशे संयोगादयो गुणा न प्रदेशेष्विति चेन्न, अवयवसंयोगपूर्वकावयविसंयोगोपगमाद्वि तंतुकवीरणसंयोगवत् । घटादीनामाकाशप्रदेशसंयोगमंतरेणाकाशप्रदेशे संयोगोपरः एकवीरणस्य सिद्धिः । सिद्धे तंतुकसंयोगे द्वितंतुकसंयोगप्रसंगात् संयोगजसंयोगाभावः । एतेन विभागजविभागाभावः प्रतिपादितः । संख्या पुनर्द्वित्वादिकाकाशे प्रदेशिन्यनुपपन्नैव तस्यैकत्वात् । एतेन परत्वापरत्वपृथक्त्वपरिमाणभेदाभावः प्रतिनिवेदितः तत्रैकत्र तदनुपपत्तेः । ततः खप्रदेशेष्वेवैते गुणाः सिद्धा इति न गुणाः प्रदेशा गुणित्वात् पृथिव्यादिवत् । नापि कर्माणि तत एव परिस्पंदात्मकत्वाभावाच्च । नापि सामान्यादयोनुवृत्तिप्रत्ययादिहेतुत्वाभावात् । पदार्थांतराणि खप्रदेशा इत्ययुक्तं । षट्पदार्थनियमविरोधात् । अत एव न मुख्याः खस्य प्रदेशा इति चेन्न, मुख्यकार्यकारणदर्शनात् । तेषामुपचरितत्वे तद्वयोगात् । न ह्युपचरितोग्निः पाकादावुपयुज्यमानो दृष्टस्तस्य मुख्यत्वप्रसंगात् । प्रतीयते च मुख्यं कार्यमनेकपुद्गलद्रव्याद्यवगाहकलक्षणं । निरंशस्यापि विभुत्वात्तद्युक्तमिति चेत्, कथं विभुर्निरंशो वेति न विरुध्यते । ननु प्रमाणसिद्धत्वाद्वादिप्रतिवादिनोराकाशे विभुत्वभावं न विप्रतिपिद्धं । तत एव निरंशत्वसिद्धिः । तथाहि–निरंशमाकाशादि सर्वजगद्व्यापित्वात् यन्न निरंशं न तत्तथा दृष्टं यथा घटादि सर्वजगद्व्यापि चाकाशादि तस्मान्निरंशमिति कश्चित् । तदसमीचीनं, हेतोः पक्षाव्यापकत्वात् परमाणौ निरंशे तदभावात् । तस्या विवादगोचरत्वादपक्षीकरणाददोष इति चेन्न, सांशपरमाणुवादिनस्तत्रापि विप्रतिपत्तेः पक्षीकरणोपपत्तेः । साधनांतराच्चत्र निरंशत्वसिद्धेरिहापक्षीकरणमिति चेत्, एवं तर्हि न कश्चित्पक्षाव्यापको हेतुः स्यात् चेतनास्तरवः स्वापात् मनुष्यवदित्यत्रापि तथा परिहारस्य संभवात् । शक्यं हि वक्तुं येषु तरुषु स्वापादयोऽसिद्धास्त एव पक्षीक्रियंते, तेनेतरे तत्र हेत्वंतराच्चेतनत्वप्रसाधनात् । ततो न पक्षाव्यापको हेतुरिति किल कालात्ययापदिष्टो हेतुर्निरंशत्वसाधने; सर्वजगद्व्यापित्वादिति पक्षस्यानुमानागमबाधितत्वात् अत्र हेतोः सामान्यादिभिर्व्यभिचारासंभवात्, तेषां सकृद्भिन्नदेशद्रव्यसंबंधस्य प्रमाणसिद्धस्याभावात् । तथा धर्माधर्मैकजीवलोकाकाशानां तुल्यासंख्येयप्रदेशत्वात् प्रदेशसमवाय इत्याद्यागमस्यापि तत्सांशत्वप्रतिपादकस्य सुनिश्चितासंभवद्बाधकस्य सद्भावाच्च । यदप्युच्यते निरंशमाकाशादि सदावयवानारभ्यत्वात् परमाणुवदिति तदप्यनेन निरस्तं, हेतोः कालात्ययापदिष्टत्वविशेषात् । किं च यदि सर्वथा सदावयवानारभ्यत्वं हेतुस्तदा प्रतिवादिसिद्धः पर्यायार्थादेशात् पूर्वपूर्वाकाशादिप्रदेशोत्पत्तेरारभ्यारंभकभावोपपत्तेः । अथ कथंचित्सदावयवानारभ्यत्वं हेतुस्तदा विरुद्धः, कथंचिन्निरंशत्वस्य सर्वथा निरंशत्वविरुद्धस्य साधनात् । कथंचिन्निरंशत्वस्य साधने सिद्धसाधनमेव पुद्गलस्कंधवत्सर्वदावयवविभागाभावात् सावयवत्वाभावोपगमात् । स्यान्मतं, नाकाशादीनां प्रदेशा मुख्याः संति स्वतोऽप्रदिश्यमानत्वात् परमाणुवत् । परमाण्वादीनां हि मुख्याः प्रदेशाः स्वतोवधार्यमाणाः सिद्धा इति । तदयुक्तं, परमाणोरेकप्रदेशाभावप्रसंगात् छद्मस्थैः स्वतोऽप्रदिश्यमानत्वाविशेषात् । परमाणुरेकप्रदेशोत्यन्तपरोक्षत्वादस्मदादीनां स्वतोप्रदिश्यमान इति चेत्, त एवाकाशादिप्रदेशाः स्वतोप्रदिश्यमानाः संत्वस्मदादिभिः । अतींद्रियार्थदर्शिनां तु यथा परमाणुरेकप्रदेशः स्वतः प्रदेश्यस्तथाकाशादिप्र-

देशोपीति स्वतोऽप्रदिश्यमानत्वादित्यसिद्धो हेतुः। पटादिद्व्यणुकाद्यवयवैरनेकांतिकश्च, तेषामस्मदादिभिः स्वतोऽप्रदिश्यमानानामपि भावात्। किं च कथंचित्सांशमाकाशादि परमाणुभिरेकदेशेन युज्यमानत्वात् स्कंधवत्। तस्य तैः सर्वात्मना संयुज्यमानत्वे परमाणुमात्रत्वप्रसंगात्। तथा चाकाशादिबहुत्वापत्तिः। स्यान्मतं, नैकदेशेन सर्वात्मना वा परमाणुभिराकाशादिर्युज्यते। किं तर्हि? युज्यते एव यथावयवी स्वावयवैः सामान्यं वा स्वाश्रयैरिति। तदसत्, साध्यसमत्वान्निदर्शनस्य। तस्याप्यवयव्यादेः सर्वथा निरंशत्वे स्वावयवादिभिरेकांततो भिन्नैः संबंधो यथोक्तदोषानुषंगात् कार्त्स्न्यैकदेशव्यतिरिक्तस्य प्रकारांतरस्य तत्संबंधनिबंधनस्यासिद्धेः। कथंचित्तादात्म्यस्य तत्संबंधत्वे स्याद्वादिमतसिद्धिः, सामान्यतद्वतोरवयवावयविनोश्च कथंचित्तादात्म्योपगमात्। न चैवमाकाशादेः परमाणुभिः कथंचित्तादात्म्यमित्येकदेशेन संयोगोभ्युपगंतव्यः। तथा च सांशत्वसिद्धिः। किं च सांशमाकाशादि श्येनमेषाद्यन्यतोभयकर्मजसंयोगविभागान्यथानुपपत्तेः। श्येनेन हि स्थाणोः संयोगो विभागश्चान्यतरकर्मजस्तत्रोत्पन्नं कर्म स्वाश्रयं श्येनं तदाकाशप्रदेशाद्वियोज्य स्थाण्वाकाशदेशेन संयोजयति ततो वा विभिद्याकाशदेशांतरेण संयोजयतीति प्रतीयते न चाकाशस्यैकदेशाभावे तद्घटनात् कर्मणः स्वाश्रयान्याश्रययोरेकदेशत्वात्। एतेन शेषयोरुभयकर्मजः संयोगो विभागश्चाकाशस्याप्रदेशत्वेन घटत इति निवेदितं, क्रियानुपपत्तिश्च तस्याः देशांतरप्राप्तिहेतुत्वेन व्यवस्थितत्वात् देशांतरस्य वा संभवात्। तत एव परत्वापरत्वपृथक्त्वाद्यनुपपत्तिः पदार्थानां विज्ञेया। तत्सकलमभ्युपगच्छतांजसा सांशमाकाशादि प्रमाणयितव्यं॥ कुतः पुनराकाशस्यानंताः प्रदेशा इत्यावेदयति;—

**अनंतास्तु प्रदेशाः स्युराकाशस्य समंततः। लोकत्रयाद्बहिः प्रांताभावात्तस्यान्यथागतेः॥ १॥**

अनंतप्रदेशमाकाशं लोकत्रयाद्बहिः समंततः प्रांताभावात् यन्नानंतप्रदेशं न तस्य ततो बहिःसमंततः प्रांताभावो यथा परमाण्वादेः। इत्यन्यथानुपपत्तिलक्षणो हेतुः स्वसाध्यं साधयत्येव। ततो बहिःसमंततः प्रांताभावस्याभावे पुनराकाशस्य गत्यभावप्रसंगात्। भावेपि कथमाकाशस्य गतिरित्याह;—

**जगतः सावधेस्तावद्भावो बहिरवस्थितिः। संतानात्मा न युज्येत सर्वथार्थक्रियाक्षमः॥ २॥**

**न गुणः कस्यचित्तत्र द्रव्यस्यानभ्युपायतः। तदाश्रयस्य कर्मादेरपि नैवं विभाव्यते॥ ३॥**

**द्रव्यं तु परिशेषात्स्यात्तन्नभो नः प्रतिष्ठितं। प्रसक्तप्रतिषेधे हि परिशिष्टव्यवस्थितिः॥ ४॥**

अनंता लोकधातवः इत्याकाशत्ववादिनां दर्शनमयुक्तं प्रमाणाभावात्। स्वभावविप्रकृष्टानां भावाभावनिश्चयासंभवात् संभवे वा स्वतः क्षतिप्रसंगात् तदागमस्य प्रमाणभूतस्यानभ्युपगमात्। ततः सावधिरेव लोको व्यवतिष्ठते। तस्य च स्वतो बहिः समंतादभावस्तावत्सिद्धः स च नीरूपो न युज्यते प्रमाणाभावात्। भावधर्मस्वभावो न गुणः कर्मसामान्यं विशेषो वा कस्यचिद्द्रव्यस्य तदाश्रयस्यानभ्युपगमात् परिशेषाद्द्रव्यमिति विभाव्यते। प्रसक्तप्रतिषेधे परिशिष्टव्यवस्थितेः तदस्माकमाकाशं सर्वतोऽवधिरहितमित्यनंतप्रदेशसिद्धिः। परेषां पुनरनंता लोकधातवः संतोपि यदि निरंतरास्तदा अंतरालप्रतीतिर्न स्यात् सर्वथा तेषां निरन्वये वैकं लोकधातुमात्रं स्यात्। परेषां लोकधातूनां तत्रानुप्रवेशात्। एकदेशेन नैरंतर्ये सावयवत्वं तदवयवेनापि तदवयवांतरैः सर्वात्मना नैरंतर्ये तदेकावयवमात्रं स्यात्, तदेकदेशेन नैरंतर्ये तदेव सावयवत्वमेवं अनंतपरमाणूनां। सर्वात्मना नैरंतर्ये परमाणुमात्रं जगद्भवेत् तदेकदेशेन नैरंतर्ये सावयवत्वं परमाणूनां। तन्नानिष्टं, इति सांतरा एव लोकधातवः प्रतिपरमाणु वक्तव्याः। तदंतर एवाकाशमेवोक्तव्यापादनादनंतप्रदेशमायातं। आलोकतमःपरमाणुमात्रमंतरमिति चेन्न, आलोकत-

मःपरमाणुभिरपि सांतरैर्भवितव्यं । तथैरंतर्ये प्रतिपादितदोषानुषंगात् । तदंतराण्याकाशप्रदेशा एवेत्यवश्यं-भावि नभोऽनंतप्रदेशं ॥

**आगमज्ञानसंवेद्यमनुमानं विनिश्चितं । सर्वज्ञैर्वा परिच्छेद्यमप्यनंतप्रमाणभाक् ॥ ४ ॥**

**यद्विज्ञानपरिच्छेद्यं तत्सांतमिति योऽब्रवीत् । तस्य वेदो भवादिर्वा नानंत्यं प्रतिपद्यते ॥ ६ ॥**

स्वयं वेदस्येश्वरस्य पुरुषादेर्वा अनाद्यनंतत्वं कुतश्चित्प्रमाणात् परिच्छिंदन्नपि तत्सादिपर्यंतत्वमिति छिन्नाकाशस्यानुमानागमयोगिप्रत्यक्षैः परिच्छिद्यमानस्यानंतत्वं प्रतिक्षिपतीति कथं स्वस्थः? प्रमाणस्य यथावस्थितवस्तुपरिच्छेदनस्वभावत्वादनंतस्यानंतत्वेनैवपरिच्छेदने को विरोधः स्यादसंख्यातादसंख्याता-देस्तथा परिच्छेदनवत् । ततः सूक्ष्ममाकाशस्यानंताः प्रदेशा इति ॥

## संख्येयासंख्येयाश्च पुद्गलानाम् ॥ १० ॥

प्रदेशा इत्यनुवर्तते । चशब्दादनंताश्च समुच्चीयंते । कुतस्ते पुद्गलानां तथेत्याह;—

**संख्येयाः स्युरसंख्येयास्तथानंताश्च तत्त्वतः । प्रदेशाः स्कंधसंसिद्धेः पुद्गलानामनेकधा ॥१॥**

संख्येयपरमाण्वारब्धानामनेकधा स्कंधानामसंख्यातानंतानंतपरमाण्वारब्धानां च संसिद्धेः पुद्गलानां स्युरेवं संख्येयाश्चासंख्येयाश्चानंताश्च प्रदेशास्तत्त्वतः सकलबाधवैधुर्यात् । ननु च स्कंधस्य ग्रहणं तदारं-भकावयवग्रहणपूर्वकं तदग्रहणपूर्वकं वा? प्रथमपक्षेऽनंतशः परमाणूनां तदवयवानामतींद्रियत्वादग्रहणे स्कंधाग्रहणमिति सर्वाग्रहणमवयव्यसिद्धेः, द्वितीयपक्षेत्र सकलावयवशून्येपि देशेऽवयविग्रहणप्रसंगः । कतिपयावयविग्रहणपूर्वकेपि स्कंधग्रहणे सर्वाग्रहणमेव कतिपयावयवानामप्यनंतशः परमाणूनां व्यवस्था-नात्तेषां च ग्रहणसंभवात् । ततो न परमार्थतः स्कंधसंसिद्धिः । अनाद्यविद्यावशादत्यासन्नेष्वसंसृष्टेषु बहिरंतश्च परमाणुषु तदाकारप्रतीतेः तादृशकेशादिष्वप्यनाकारप्रतीतिवदिति कश्चित्, तस्यापि सर्वा-ग्रहणमवयव्यसिद्धेः । परमाणवो हि बहिरंतर्वाबुद्धिगोचरा एवातींद्रियत्वात् न चावयवी तदारब्धोभ्यु-पगतः इति सर्वस्य बहिरंगस्यांतरंगस्य चार्थस्याग्रहणं कथं विनिवार्यते? । अथ केचित्संचिताः परमा-णव एव स्वप्रत्ययविशेषादिंद्रियज्ञानपरिच्छेद्यस्वभावा जायंते तेषां ग्रहणसिद्धेर्न सर्वाग्रहणमिति मतं; तदपि न समीचीनं, कदाचित्कचित्कस्यचित्परमाणुप्रतीत्यभावात् । एको हि ज्ञानसन्निवेशी स्वधिया-नाकारः परिस्फुटमवभासते । परमाणव एव चेतनात्मन्यविद्यमानमप्याकारं स्वधीयांसं कुतश्चिद्विभ्रमा-द्दर्शयंतीति चेत्, कथंचित्प्रतिभातास्ते तमुपदर्शयेयुरप्रतिभाता? न तावदप्रतिभाताः सर्वत्र सर्वदा, सर्वथा सर्वस्य तदुपदर्शनप्रसंगात्; प्रतिभाता एव ते तमुपदर्शयंति सत्त्वादिनातिकेशादिवदिति चेन्न । परमाणुत्वादिनापि तेषां प्रतिभातत्वप्रसंगात् । सत्यं, तेनाप्रतिभाता एव परमाणवः "एकस्यार्थस्वभावस्य प्रत्यक्षस्य स्वतः स्वयं । कोन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते॥" इति वचनात् केवलं तथा निश्च-यास्तथानुत्पत्तेस्तेषामप्रतिभातत्वमुच्यते । "तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः । भ्रांतेर्निश्चीयते नेति साधनं संप्रवर्तते ॥" इति वचनात् सत्त्वादिनैव स्वभावेन तत्र निश्चयोत्पत्तेरभ्यासप्रकरबुद्धिपाट-वार्थित्वलक्षणस्य तत्कारणस्य भावाद्वस्तुस्वभावात् । वस्तुस्वभावो ह्येष परं प्रतीतिकानुभवपटीयान् कश्चिदेव स्मृतिबीजमाधत्ते प्रबोधयति चांतरं संसारमिति चेत्, कथमेवं सत्त्वादेरणुत्वादिस्वभावः पर-माणुषु भिन्नो न भवेद्विरुद्धधर्माध्यासात् सह्यविंध्यवत् । यदि पुनर्निश्चयस्यावस्तुविषयत्वान्न तद्भावाभा-वानां वस्तुस्वभावभेद इति मतं, तदा कथं दर्शनस्य प्रमाणेतरभावव्यवस्था निश्चयोत्पत्त्यनुत्पत्तिभ्यां विपर्ययोपजननानुपजननाभ्यामिति तद्व्यवस्थानुषंगात् । दर्शनप्रामाण्यहेतुर्यथार्थनिश्चय एव दृष्टार्था-

व्यवसायित्वान्न विपर्ययः संशयो वा तद्विपरीतत्वादितिचेद्व्याहतमेतत् । स्वलक्षणानालंबनश्च निश्चयो दृष्टार्थाव्यवसायी चेति, ततः स्वलक्षणाव्यवसायी स्वलक्षणालंबन एवेति वस्तुविषयो निश्चयोन्यथानुपपत्तेः सिद्धः । एवं च तद्भावाभावाभ्यां वस्तुस्वभावभेदोवश्यंभावीति सत्त्वे द्रव्यत्वादिस्वभावेन निश्चीयमानाः परमाणवो अणुत्वादिस्वभावेन वा निश्चीयमाना नानास्वभावाः सिद्धा एव । केशादित्वेन निश्चीयमानाः प्रविरलत्वादिना वा निश्चीयमानाः प्रतिपत्तव्याः सर्वथा तदनिश्चये तत्र विभ्रमाभावप्रसंगात् तद्भावे अतिशक्तेः । सत्त्वादिना च निश्चीयमानोवयवी बहिर्न परमाणव इत्ययुक्तं, सर्वानिश्चयेऽवयवसिद्धेः । तदेवमूलदानक्रियिणः परमाणवः प्रत्यक्षबुद्धावात्मानं च न समर्पयंति प्रत्यक्षतां च स्वीकुर्वतीति ततः परमार्थसंतः पुद्गलानां स्कंधा द्व्यणुकादयोऽनेकविधा इति तेषां संख्येयादिप्रदेशाः प्रातीतिका एव ॥

# नाणोः ॥ ११ ॥

संख्येयासंख्येयाश्च प्रदेशा इत्यनुवर्तनात्त एवाणोः प्रतिषिध्यंते । तथा च—

**नाणोरितिनिषेधस्य वचनान्नाप्रदेशता । प्रसिद्धैवैकदेशत्वात्तस्याणुत्वं नचान्यथा ॥ १ ॥**

न ह्येकप्रदेशोप्यणुर्न भवतीति युक्तं तस्यावस्तुत्वप्रसंगात् । ननु चाणोः प्रदेशत्वे प्रदेशी कः स्यात्? स एव स्पर्शादिगुणाश्रयत्वाद्गुणीति ब्रूमः । कथं स एव प्रदेशः प्रदेशी च? विरोधादिति चेत्, तदुभयस्वभावत्वोपपत्तेः । प्रदेशत्वस्वभावत्वस्यास्ति स्कंधावस्थायां तद्भावान्यथानुपपत्तेः प्रदेशित्वस्वभावः पुद्गलद्रव्यत्वात् । एकेन प्रदेशेन पुद्गलद्रव्यस्याप्रदेशित्वे द्व्यादिप्रदेशैरप्यप्रदेशित्वप्रसंगात् विरुद्धं चेदं परमाणुरेकप्रदेशोऽप्रदेशी चेति प्रदेशप्रदेशिनोरन्योन्याविनाभावात् प्रदेशिनमंतरेण प्रदेशस्यासंभवात् खपुष्पवत् प्रदेशमंतरेण च प्रदेशिनोनुपपत्तेस्तद्वदेव । तत एव न प्रदेशो नापि प्रदेशी परमाणुरिति चेन्न, द्रव्यत्वविरोधात् गुणादिवत् । न चाद्रव्यं परमाणुर्गुणवत्त्वात् स्कंधवत् । न चाप्रदेशि प्रदेशिस्वभावं किंचिद्द्रव्यं सिद्धं गगनाद्यसिद्धमिति चेन्न, तस्यानंतादिप्रदेशत्वसाधनेन प्रदेशित्वव्यवस्थापनात् । स्यादाकूतं ते अनेकप्रदेशः परमाणुर्द्रव्यत्वाद् घटाकाशादिवदिति । तदसत्, धर्मिग्राहकप्रमाणबाधितत्वात् पक्षस्य कालात्ययापदिष्टत्वात् हेतोः कालेन व्यभिचाराच्च । स्याद्वादिनां मीमांसकानां च शब्दद्रव्येणानेकांतात् । तथाहि—घटादिर्भिद्यमानपर्यंतो भेद्यत्वान्यथानुपपत्तेः योसौ तस्य पर्यंतः स परमाणुरिति परमाणुग्राहिणा प्रमाणेनानेकप्रदेशित्वं बाध्यते तस्यानेकप्रदेशत्वे परमाणुत्वविरोधात् ॥

**अष्टप्रदेशरूपाणुवादोऽनेन निवारितः । तत्रापि परमस्कंधविद्भावप्रसंगतः ॥ २ ॥**

परमाणूनामनेकप्रदेशत्वाभावे सर्वात्मनैकदेशेन च संयोगेणुमात्रेपि अणुप्रसक्तेः । सावयवत्वेनवस्थाप्रसंगाच्च परमस्कंधस्य प्रतीतिविरोधादष्टप्रदेशरूपाणुर्भिद्यमानपर्यंतः सर्वदा स्वयमभेद्यः सिध्यति न पुनरनंशः परमाणुस्तस्य बुद्ध्या परिकल्पनादिति केषांचिदष्टप्रदेशरूपाणुवादः सोप्यनेनैव प्रदेशपरमाणुस्कंधस्य वचनेन विचारितो द्रष्टव्यः, रूपाणोरप्रदेशस्य सर्वदाप्यस्य भेद्यत्वायोगात् । तथाहि—भेद्यो रूपाणुः मूर्तत्वे सत्यनेकावयवत्वात् घटवत् । नात्र हेतोराकाशादिभिरनेकांतो मूर्तिमत्त्वे सतीति विशेषणात्तेषाममूर्तत्वात् । ततः परमाणुरेकप्रदेश एव भिद्यमानपर्यंतः सिद्धः । नन्वेवं परमस्कंधप्रतीत्यभावप्रसंग इति चेन्न, तस्याप्रदेशाणुवादेपि समानत्वात् । तथाहि;—

**यथाणुरणुभिर्नानादिक्कैः संबंधमादधत् । देशतोवयवी तद्वत्प्रदेशोन्यैः प्रदेशतः ॥ ३ ॥**
**सर्वात्मना च तैस्तस्यापि संबंधेणुमात्रकः । पिंडः स्यादन्यथोपात्तदोषाभावः समो न किम् ॥४॥**

अप्रदेशोपि हि रूपाणुः पूर्वादिदिग्गतरूपाण्वंतरप्रदेशैरेकशः संबंधमधितिष्ठन्नेकदेशेन कार्त्स्न्येन वाधितिष्ठेत्? एकदेशेन चेदवयवी प्रदेशः स्यात्परमाणुवत् तथा चानवस्था परापरप्रदेशपरिकल्पनात् पिंडमात्रः स्यात् रूपाणुप्रदेशेष्वष्टासु रूपाण्वंतरप्रदेशानां प्रवेशात्तेषां च परस्परानुप्रवेशात् । तथा च परमस्कंधत्वप्रतीत्यभावः । अथ महतः स्कंधस्य प्रतीत्यन्यथानुपपत्त्या प्रकारांतरेण रूपाणुप्रदेशाना-मन्यरूपदेशैः संबंधसिद्धेः कार्त्स्न्यैकदेशपक्षोपात्तदोषाभावो विभाव्यते परमाणूनामपि प्रकारांतरेण संबंध-स्तत एवेति समानस्तत्पक्षोपात्तदोषाभावः । वक्ष्यते च परमाणूनां बंधपरिणामहेतुः स्निग्धरूक्षत्वादिति परिणामविशेषः प्रकारांतरमिति नेहोच्यते—

**विद्यादजीवकायानां द्रव्यत्वादिस्वभावतां । एवं प्राधान्यतः प्रोक्तां समासात् सुनयान्विताम् ।।५**

धर्मादीनामजीवकायानामादिसूत्रोक्तानां द्रव्यत्वस्वभावो जीवानां च प्राधान्येन वेदितव्यो गुणभावेन पर्यायत्वस्य भावस्यापि भावात् । शुद्धद्रव्यस्य हि सन्मात्रदेहस्य पर्याया एवाजीवकाया जीवाश्च तस्यैक-स्यानंतपर्यायस्यातिसंक्षेपतोभिमतत्वात् । एकं द्रव्यमनंतपर्यायमिति वचनात् । तथा नित्यत्वावस्थिता-रूपत्वैकद्रव्यत्वनिष्क्रियत्वस्वभावोऽपि प्राधान्येनैव तेषां गुणभावेनानित्यत्वानवस्थितत्वसरूपत्वानेकद्र-व्यत्वस्वभावानामपि भावात् तेषामनुक्तानामपि गम्यमानत्वात् समासतोभिधानात् । तथैव सुनयान्वित-त्वोपपत्तेरन्यथा दुर्नयान्विततत्वप्रसंगात् । द्रव्यार्थान्नित्यत्वेपि पर्यायार्थादेशादनित्यत्वोपगमादन्यथार्थक्रिया-विरोधाद्वस्तुत्वायोगात् । तथा द्रव्यतोवस्थितत्वेपि पर्यायतोनवस्थितत्वसिद्धेरित्यवयवावस्थानाभावात् । तथा स्वरूपतो अरूपत्वेपि मूर्तिमद्द्रव्यसंबंधात्तेषां स्वरूपत्वव्यवहारात् । तथैकद्रव्यत्वेपि विभागापेक्षया तद्विभागविवक्षायामनेकद्रव्यत्वोपपत्तेः । परिस्पंदक्रियया निष्क्रियत्वेपि तेषामवस्थितत्वादिक्रियया सक्रियत्वात् । एवमसंख्येयप्रदेशत्वादयोपि प्रधानभावेनैव धर्मादीनां गुणभावेन संख्येयप्रदेशत्वादिस्व-भावानामप्यविरोधात् परिमिततद्भावापेक्षया संख्योपपत्तेरिति सर्वत्र स्यात्कारः सत्यलांछनो द्रष्टव्यस्तस्या-नुक्तस्यापि सामर्थ्यात् सर्वत्र प्रतीयमानत्वादिति प्रकरणार्थोपसंहृतिः ॥

## लोकाकाशेऽवगाहः ॥ १२ ॥

धर्मादीनामित्यभिसंबंधः प्रकृतत्वादर्थवशाद्विभक्तिपरिणामात् । लोको न युक्तमाकाशं तत्रावगाहः । कुत इत्याह;—

**लोकाकाशेवगाहः स्यात्सर्वेषामवगाहिनां । बाह्यतोसंभवात्तस्माल्लोकत्वस्यानुषंगतः ॥ १ ॥**

न हि लोकाकाशाद्बाह्यतो धर्मादयोऽवगाहिनः संभवंत्यलोकाकाशस्यापि लोकाकाशत्वप्रसंगात् ॥ ननु च यथा धर्मादीनां लोकाकाशेवगाहस्तथा लोकाकाशस्यान्यस्मिन्नधिकरणावगाहेन भवितव्यं तस्याप्यन्य-स्मिन्नित्यनवस्था स्यात्, तस्य स्वरूपेवगाहे सर्वेषां स्वात्मन्येवावगाहोस्त्वित्याशंकायामिदमुच्यते;—

**लोकाकाशस्य नान्यस्मिन्नवगाहः कश्चिन्मतः । आकाशस्य विभुत्वेन स्वप्रतिष्ठत्वसिद्धितः ॥२॥**

ततो नानवस्था नापि सर्वेषां स्वात्मन्येवावगाहस्तेषामविभुत्वात्, परस्मिन्नधिकरणेवगाहोपपत्तेरन्य-थाधाराधेयव्यवहाराभावात् ॥

## धर्माधर्मयोः कृत्स्ने ॥ १३ ॥

लोकाकाशेवगाह इत्यनुवर्तनीयं । कृत्स्न इति वचनात्तदेकदेश एव धर्माधर्मयोरवगाहो व्युदस्तः । कृत्स्नौ कृत्स्नलोकाकाशावगाहिनौ सिद्धावित्याह;—

**धर्माधर्मौ मतौ कृत्स्नलोकाकाशावगाहिनौ । गच्छत्तिष्ठत्पदार्थानां सर्वेषामुपकारतः ॥ १ ॥**

न हि लोकत्रयवर्तिनां पदार्थानां सर्वेषां गतिपरिणामिनां स्थितिपरिणामिनां च गतिस्थित्युपग्रहौ युगपदुपकारो धर्माधर्मयोरेकदेशवर्तिनोः संभवत्यलोकाकाशेपि तद्गतिस्थितिप्रसंगात् । ततो लोकाकाशे गच्छत्तिष्ठत्पदार्थानां सर्वेषां गतिस्थित्युपकारमिच्छता धर्माधर्मयोः कृत्स्ने लोकाकाशेऽवगाहोभ्युपगंतव्यः ॥

## एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ १४ ॥

अवगाह इत्यनुवर्तते लोकाकाशस्येत्यर्थवशाद्विभक्तिपरिणामः । तेन लोकाकाशस्यैकप्रदेशेष्वसंख्येयेषु च पुद्गलानामवगाह इति वाक्यार्थः सिद्धः ॥ कथमित्याह;—

**तस्यैवैकप्रदेशेस्ति यथैकस्यावगाहनं । परमाणोस्तथानेकाणुस्कंधानां च सौक्ष्म्यतः ॥ १ ॥**
**तथा चैकप्रदेशादिस्तेषां प्रतिविभिद्यतां । सोवगाहो यथायोग्यं पुद्गलानामशेषतः ॥ २ ॥**

तस्यैव लोकाकाशस्यैकस्य प्रदेशे यथैकस्य परमाणोरवगाहनमस्ति निर्बाध तथा द्व्यादिसंख्येयानां स्कंधानामपि परमसौक्ष्म्यपरिणामानां तद्द्व्यादिप्रदेशेषु च । यथैकत्वपरिणामनिरुत्सुकानां द्व्यादिपरमाणूनामवगाहस्तथा त्र्यादिसंख्येयासंख्येयानंतपरमाणुमयस्कंधानामपि तादृशात् सौक्ष्म्यपरिणामादित्यशेषतो यथायोगं प्रविभज्यतां न च पुद्गलस्कंधानां तादृशसौक्ष्म्यपरिणामोऽसिद्धः स्थूलानामपि शिथिलावयवकर्पासपिंडादीनां निबिडावयवदशायां सौक्ष्म्यदर्शनात्, कूष्मांडमातुलिंगबिल्वामलकबदरसौक्ष्म्यात्तारतम्यदर्शनाच्च क्वचित्कार्मणस्कंधादिषु परमसौक्ष्म्यानुमानात् महत्त्वतारतम्यदर्शनात् क्वचित्परममहत्त्वानुमानवत् ॥

## असंख्येयभागादिषु जीवानाम् ॥ १५ ॥

लोकाकाशस्येति संबंधनीयं अवगाहो भाज्य इति चानुवर्तते । तेनासंख्येयभागे असंख्येयप्रदेशे कस्यचिज्जीवस्य सर्वजघन्यशरीरस्य नित्यनिगोतस्यावगाहः, कस्यचिद्द्वयोस्तदसंख्येयभागयोः कस्यचित्त्र्यादिषु सर्वस्मिंश्च लोके स्यादित्युक्तं भवति । नाना जीवानां केषांचित्साधारणशरीराणामेकस्मिन्नसंख्येयभागेवगाहः, केषांचिद्द्वयोरसंख्येयभागयोस्त्र्यादिषु चासंख्येयभागेष्विति भाज्योवगाहो न चैकस्य तदसंख्येयभागस्य द्व्याद्यसंख्येयभागानां चासंख्येयप्रदेशत्वाविशेषात् सर्वजीवानां समानोवगाहः शंकनीयः असंख्येयस्यासंख्येयविकल्पत्वात् च सिद्धं लोकाकाशैकासंख्येयप्रदेशपरिणमनत्वाद्द्व्याद्यसंख्येयभागानामिति नानारूपावगाहसिद्धिः । धर्मादीनां सकललोकाकाशादिव्यवहारवचनात्सामर्थ्याल्लोकाकाशस्यैकस्मिन्नेकस्मिन् प्रदेशे चैकस्य कालपरमाणोरवगाहः प्रतीयते । तथा च सूत्रकारस्य नासंग्रहदोषः ॥

ननु च लोकाकाशप्रमाणत्वे जीवस्य व्यवस्थापिते कथं तदसंख्येयभागावगाहनं न विरुध्यत इत्याशंक्याह;—

## प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् ॥ १६ ॥

असंख्येयभागादिषु जीवानामवगाहो भाज्य इति साध्यत इत्याह;—

**न जीवानामसंख्येयभागादिष्ववगाहनं । विरुद्धं तत्प्रदेशानां संहारात्प्रविसर्पतः ॥ १ ॥**
**प्रदीपवदिति ज्ञेया व्यवहारनयाश्रया । आधाराधेयतार्थानां निश्चयात्तदयोगतः ॥ २ ॥**

अमूर्तस्वभावस्याप्यात्मनोऽनादिसंबंधं प्रत्येकत्वात् कथंचिन्मूर्ततां बिभ्रतो लोकाकाशतुल्यप्रदेशस्यापि कार्मणशरीरवशादुपात्तं सूक्ष्मशरीरमधितिष्ठतः शुष्कचर्मवत्संकोचनं प्रदेशानां संहारस्तस्यैव बादरशरीरमधितिष्ठतो जले तैलवद्विसर्पणं विसर्पः प्रसर्पस्ततोऽसंख्येयभागादिषु वृत्तिः प्रदीपवन्न विरुध्यते । न

हि प्रदीपस्य निरावरणप्रदेशावधृतप्रकाशपरिमाणस्यापि प्रभापवरकाद्यावरणवशात् प्रकाशप्रदेशसंहारविसर्पौ कस्यचिदसिद्धौ यतो न दृष्टांतता स्यात् । स्यादाकूतं, नात्मा प्रदेशसंहारविसर्पवान् अमूर्तद्रव्यत्वादाकाशवदिति । तदयुक्तं, पक्षस्य बाधितप्रमाणत्वात् । तथाहि—आत्मा प्रदेशसंहारविसर्पवानस्ति महापरिमाणदेशव्यापित्वात् प्रदीपप्रकाशवदित्यनुमानेन तावत्पक्षो बाध्यते । न चात्र हेतुरसिद्धः शिशुशरीरव्यापिनः पुनः कुमारशरीरव्यापित्वप्रतीतेः । स्थूलशरीरव्यापिनश्च सतो जीवस्य कृशशरीरव्यापित्वसंवेदनात् । न च पूर्वापरशरीरविशेषव्यापिनो जीवस्य भेद एव प्रत्यभिज्ञानाभावप्रसंगात् । न चेह तदेकत्वप्रत्यभिज्ञानं भ्रांतं बाधकाभावादित्युक्तत्वात् । तथागमबाधितश्च पक्षः स्याद्वादागमे जीवस्य संसारिणः प्रदेशसंहारविसर्पवत्कथनात् । न च तदप्रमाणत्वं सुनिर्णीतासंभवद्बाधकत्वात् प्रत्यक्षार्थप्रतिपादकागमवत् । सर्वगतत्वादात्मनो न प्रदेशे संहारविसर्पवत्त्वमाकाशवदिति चेन्न, तस्यासर्वगतत्वसाधनात् । येषां पुनर्घटकणिकामात्रः सहस्रधा भिन्नो वा केशाग्रमात्रोंगुष्ठपर्वप्रमाणो वात्मा तेषां सर्वशरीरे स्वसंवेदनविरोधः, तस्याशु संचारित्वात्तथा संवेदने सकलशरीरेषु तथा संवेदनापत्तेरेकात्मवादावतरणात् । शक्यं हि वक्तुं सकलशरीरेष्वेक एवात्माणुप्रमाणोप्याशु संचारित्वात् संवेद्यत इति तत्राश्रेवाचेतनत्वप्रसंगोऽन्यत्र संचारणादिति चेत्, शरीरावयवेष्वपि तन्मुक्तेष्वचेतनत्वमुपसज्येत तद्युक्तस्यैव चोपशरीरैकदेशस्य सचेतनत्वोपपत्तेरिति यत्किंचिदेतत् यथाप्रतीतेः शरीरपरमाणानुविधायिनो जीवस्याभ्युपगमनीयत्वात् । तथासति तस्यानित्यत्वप्रसंगः प्रदीपवदिति चेन्न किंचिंदनिष्टं, पर्यायार्थादेशादात्मनोऽनित्यत्वसाधनात् । द्रव्यार्थादेशात्तन्नित्यत्ववचनात् प्रदीपवदेव । सोपि हि पुद्गलद्रव्यार्थादेशान्नित्य एवान्यथा वस्तुत्वविरोधात् । जीवस्य सावयवत्वे भंगुरत्वे वावयवविशरणप्रसंगो घटवदिति चेन्न, आकाशादिनानेकांतात् । न ह्याकाशादि कथंचिदनित्योपि सावयवोपि प्रमाणसिद्धो न भवति । न चावयवविशरणं तस्येति प्रतीतं किंचिदात्मनोवयवा विशीर्यंते कारणपूर्वकत्वादाकाशादिप्रदेशवत् परमाण्वेकप्रदेशवद्वा । कारणपूर्वका एव हि पटादिस्कंधावयवा विशीर्यमाणा दृष्टास्तथाश्रयत्वेनावयवव्यपदेशात् । अवयूयंते विश्लिष्यंते इत्यवयवा इति व्युत्पत्तेः । नचैवमात्मनः प्रदेशाः, परमाणुपरिमाणेन प्रदिश्यमानतया तेषां प्रदेशव्यपदेशादाकाशादिप्रदेशवत् । ततो न विशरणं जीवस्याविभागद्रव्यत्वादाकाशादिवत् नावयवविशरणमविभागद्रव्यमात्मा अमूर्तत्वानुभवात् । प्रसाधितं चास्यामूर्तद्रव्यत्वमिति न पुनरत्रोच्यते । तदेवं लोकाकाशमाधारः कात्स्न्र्येनैकदेशेन वा धर्मादीनां यथासंभवं । धर्मादयः पुनराधेयास्तथाप्रतीते व्यवहारनयाश्रयादिति विज्ञेयार्थानामाकाशधर्मादीनामाधाराधेयता घटोदकादीनामिव बाधकाभावात् । न तेषामाधाराधेयता सहभावित्वात् सव्येतरगोविषाणवदित्येतद्बाधकमिति चेन्न, नित्यगुणिगुणाभ्यां व्यभिचारात् । न लोकाकाशद्रव्ये धर्मादीनि द्रव्याण्याधेयानि युतसिद्धत्वादनेककालद्रव्यवदिति चेन्न, कुंडबदरादिभिरनेकांतात् । साधारणशरीराणामात्मनामपि परस्परमाधाराधेयत्वोपगमादश्वमनुष्यादीनां च दर्शनात् साध्यशून्यमुदाहरणं । न तानि तत्राधेयानि शश्वदसमवेतत्वे सति सहभावादिति चेन्न, हेतोरन्यथानुपपन्ननियमासिद्धेः । न हि यत्र यदाधेयं तत्र शश्वत्समवेतं तदसहभावि च सर्वं दृष्टं व्योमादौ नित्यमहत्त्वादिगुणस्याधेयस्य शश्वत्समवेतस्य सिद्धावपि तदसहभावाप्रतीतेः, कुंडादौ बदरादेराधेयस्य सहभावसिद्धावपि शश्वत्समवेतत्वाप्रसिद्धिरिति समुदितस्य हेतोः साध्यव्यावृत्तौ व्यावृत्त्यभावादप्रयोजको हेतुः । नभःपुद्गलद्रव्याभ्यां व्यभिचाराच्च । न हि नभसि पुद्गलद्रव्यमाधेयं न भवति तस्य तदवगाहित्वेन प्रतीतेस्तदाधेयत्वसिद्धेः पयसि मकरादिवत्, तत्र तस्य शश्वदसमवेतत्वे सति सहभावश्च हेतुः प्रसिद्धः । खपुद्गलद्रव्यस्य सदा समवायासंभवान्नित्यत्वेन सहभावत्वेपि विपक्षेपि भावात्

तस्य व्यभिचारस्त एव तयोः पक्षीकरणेत्र पक्षस्य प्रमाणबाधः कालात्ययापदिष्टश्च हेतुः स्वपुद्गलद्रव्ययोराधाराधेयताप्रतीतेः । पुद्गलपर्याया एव घटादयः स्वस्याधेयाः प्रतीयंते न च द्रव्यमिति चेन्न, पर्यायेभ्यो द्रव्यस्य कथंचिदव्यतिरेकात् तदाधेयत्वे तस्याप्याधेयत्वसिद्धेः । ततः सूक्तं लोकाकाशधर्मादिद्रव्याणामाधाराधेयता व्यवहारनयाश्रया प्रतिपत्तव्या बाधकाभावादिति निश्चयनयान्न तेषामाधाराधेयता युक्ता । व्योमवद्धर्मादीनामपि स्वरूपेवस्थानादन्यस्यान्यत्र स्थितौ स्वरूपसंकरप्रसंगात् । स्वयं स्थास्नोरन्येन स्थितिकरणमनर्थकं स्वयमस्थास्नोः स्थितिकरणमसंभाव्यं शशविषाणवत् । शक्तिरूपेण स्वयं स्थानशीलस्यान्येन व्यक्तिरूपतया स्थितिः क्रियत इति चेत्तस्यापि व्यक्तिरूपा स्थितिस्तत्स्वभावस्य वा क्रियेत । न च तावत्तत्स्वभावस्य वैयर्थ्यात् करणव्यापारस्य, नाप्यतत्स्वभावस्य खपुष्पवत्करणानुपपत्तेः । कथमेवमुत्पत्तिविनाशयोः कारणं कस्यचित्तत्स्वभावस्यातत्स्वभावस्य वा केनचित्तत्कारणे स्थितिपक्षोक्तदोषानुषंगादिति चेन्न कथमपि तन्निश्चयनयात्सर्वस्य विस्रसोत्पादव्ययध्रौव्यव्यवस्थितेः । व्यवहारनयादेवोत्पादादीनां सहेतुकत्वप्रतीतेः । क्षणक्षयैकांते तु सर्वथा तदभावः शाश्वतैकांतवत् । संवृत्त्या तु जन्मैव सहेतुकं न पुनर्विनाशः स्थितिश्चेति स्वरुचिविरचितदर्शनोपदर्शनमात्रं नियमहेत्वभावात् । ततो नास्ति निश्चयनयाद्भावानामाधाराधेयभावः सर्वथा विचार्यमाणस्यायोगात्कार्यकारणभावादिति स्याल्लोकाकाशे धर्मादीनामवगाहः स्यादनवगाह इति स्याद्वादप्रसिद्धिः ॥

# गतिस्थित्युपग्रहौ धर्माधर्मयोरुपकारः ॥ १७ ॥

द्रव्यस्य देशांतरप्राप्तिहेतुः परिणामो गतिः, तद्विपरीता स्थितिः । उपग्रहोऽनुग्रहः गतिस्थिती एवोपग्रहौ स्वपदार्थो वृत्तिर्न पुनरन्यपदार्थो धर्माधर्मावित्यवचनात् । नाप्यन्यतरपदार्थो गतिस्थित्युपग्रहाविति द्विवचननिर्देशात् । तस्यां हि सत्यामुपग्रहस्यैकत्वादेकवचनमेव स्यात् । गतिस्थित्योरुपग्रहो गतिस्थित्युपग्रह इति भावसाधनस्योपग्रहशब्दस्य षष्ठीवृत्तेर्घटनात् । तस्य कर्मसाधनत्वे स्वपदार्थवृत्तेरेवोपपत्तेः गतिस्थिती एवोपगृह्येते इत्युपग्रहौ । न च कर्मसाधनत्वेप्युपग्रहशब्दस्योपकारशब्देन सह सामानाधिकरण्यानुपपत्तिः गतिस्थित्युपग्रहौ उपकार इति उपकारशब्दस्यापि कर्मसाधनत्वात् । न चैवमुपकारशब्दस्य द्विवचनप्रसंगः सामान्योपक्रमादेकवचनोपपत्तेः । पुनर्विशेषोपक्रमेपि तदपरित्यागात् साधोः कार्यं तपःश्रुतिरित्यादिवत् । ननु स्वपदार्थायां वृत्तावुपग्रहवचनमनर्थकं गतिस्थिती धर्माधर्मयोरुपकार इतीयता पर्याप्तत्वात् । धर्माधर्मयोरनुग्रहमात्रवृत्तित्वख्यापनार्थं गतिस्थित्योर्निर्वर्तककारणत्वप्रतिपत्त्यर्थं चोपग्रहग्रहणमित्यप्ययुक्तं, गतिस्थिती धर्माधर्मकृते इत्यवचनादेव तत्सिद्धेः । उपकारवचनाज्जीवपुद्गलानां गतिस्थिती स्वयमारभमाणानां धर्माधर्मौ तदनुग्रहमात्रवृत्तित्वादुपकारकाविति प्रतिपत्तेः । यथासंख्यनिवृत्त्यर्थमुपग्रहवचनमित्यप्यसारं, तद्भावे तदनिवृत्तेः । शक्यं हि वक्तुं जीवस्य गत्युपग्रहो धर्मस्योपकारः पुद्गलस्य स्थित्युपग्रहोऽधर्मस्योपकार इति यथासंख्यमुपग्रहवचनसद्भावेपि जीवपुद्गलानां बहुत्वाच्च द्वाभ्यां समत्वाभावादेव यथासंख्यनिवृत्तिसिद्धिर्न तदर्थं तद्वचनं युक्तं । धर्माधर्माभ्यां यथासंख्यप्रतिपत्त्यर्थं गतिस्थित्युपग्रहाविति वचनं व्यवतिष्ठते न गत्युपग्रहो धर्मस्य स्थित्युपग्रहः पुनरधर्मस्येति प्रतीयते । ननु गतिस्थित्युपग्रहौ धर्मस्याधर्मस्य च प्रत्येकमिति कश्चित्; सोपि न स्थितवादी, उपकाराविति वचनादपि तत्सिद्धेः गतिरुपकारो धर्मस्य स्थितिरधर्मस्येत्यभिसंबंधत्वात् । तत्किमिदानीमुपग्रहवचनं न कर्तव्यं । कर्तव्यमेवोपकारशब्देन कार्यसामान्यस्याभिधानात् गतिस्थित्युपग्रहाविति कार्यविशेषकथनात् । तेन धर्माधर्मयोर्न किंचित्कार्यमस्तीति वदन्निवार्यते धर्माधर्मयोरुपकारोस्तीति वचनात् ।

किं पुनस्तत्कार्यमित्यारेकायां गतिस्थित्युपग्रहावित्युच्यते गतिस्थिती इति तयोस्तदनिर्वर्त्यत्वात् धर्माधर्मौ हि न जीवपुद्गलानां गतिस्थिती निर्वर्तयतः । किं तर्हि ? तदनुग्रहावेव । कुत इत्येवं—

सकृत्सर्वपदार्थानां गच्छतां गत्युपग्रहः । धर्मस्य चोपकारः स्यात्तिष्ठतां स्थित्युपग्रहः ॥ १ ॥
तथैव स्यादधर्मस्यानुमेयाविति तौ ततः । तादृक्कार्यविशेषस्य कारणाव्यभिचारतः ॥ २ ॥

क्रमेण सर्वपदार्थानां गतिपरिणामिनां गत्युपग्रहस्य स्थितिपरिणामिनां स्थित्युपग्रहस्य च क्षित्यादिहेतुकस्य दर्शनस्य धर्माधर्मनिबंधनमिति चेन्न सकृद्ग्रहणात् । सकृदपि केषांचित्पदार्थानां तस्य क्षित्यादिकृतत्वसिद्धेश्च तन्निमित्तत्वमित्यपि न मंतव्यं, सर्वग्रहात् । ततः सकृत्सर्वपदार्थगतिस्थित्युपग्रहौ सर्वलोकव्यापिद्रव्योपकृतौ सकृत्सर्वपदार्थगतिस्थित्युपग्रहत्वान्यथानुपपत्तेरिति कार्यविशेषानुमेयौ धर्माधर्मौ । न हि धर्माधर्माभ्यां विना सकृत्सर्वार्थानां गतिस्थित्युपग्रहौ संभाव्येते, यतो न तदव्यभिचारिणौ स्यातां । ताभ्यां विनैव परस्परतः संभाव्येते ताविति चेत्, किमिदानीं युगपद्गच्छतां सर्वेषां तिष्ठंतो हेतवः सर्वे, तिष्ठतां च सकृत्सर्वेषां गच्छंतः सर्वेषां आहोस्वित् केचिदेव केषांचित् ? । न तावत्प्रथमः पक्षः परस्पराश्रयप्रसंगात् । नापि द्वितीयः श्रेयान् सर्वार्थगतिस्थित्युपग्रहयोः सर्वलोकव्यापिद्रव्योपकृतत्वेन साध्यत्वात् । प्रतिनियतार्थगतिस्थित्यनुग्रहयोः कादाचित्कयोः प्रतिविशिष्टयोः क्षित्यादिद्रव्योपकृतत्वाभ्युपगमात् । गगनोपकृतत्वात् सिद्धसाधनमिति चेन्न, लोकालोकविभागाभावसंगताल्लोकस्य सावधित्वसाधनात् । निरवधित्वे संस्थानत्वविरोधात् प्रमाणाभावाच्च । यदि पुनर्लोकैकदेशवर्तिद्रव्योपकृतौ सकलार्थगतिस्थित्युपग्रहौ स्यातां तदापि लोकालोकविभागासिद्धिः, क्वचिद्वर्तमानयोर्धर्माधर्मास्तिकाययोः सर्वलोकाकाशे इवालोकाकाशेपि सर्वार्थगतिस्थित्युपग्रहोपकारित्वप्रसक्तेस्तस्य लोकत्वापत्तेः । ततः सर्वगताभ्यामेव द्रव्याभ्यां सकलार्थगतिस्थित्यनुग्रहोपकारिभ्यां भवितव्यं । तौ नो धर्माधर्मौ ॥

## आकाशस्यावगाहः ॥ १८ ॥

उपकार इत्यनुवर्तते । कः पुनरवगाहः ? अवगाहनमवगाहः स च न कर्मस्थस्तस्यासिद्धत्वाल्लिंगत्वायोगात् । किं तर्हि ? कर्तृस्थ इत्याह—

उपकारोवगाहः स्यात् सर्वेषामवगाहिनां । आकाशस्य सकृन्नान्यस्येत्येतदनुमीयते ॥ १ ॥

जीवादयो ह्यवगाहकास्तत्र प्रतीतिसिद्धत्वाल्लिंगमवगाह्यस्य कस्यचित् यत्तदवगाह्यं सकृत्सर्वार्थानां तदाकाशमिति कर्तृस्थादवगाहादनुमीयते । गगनादन्यस्य तथाभावानुपपत्तेः । आलोकतमसोरवगाहः सर्वेषामवगाहकानां जलादेर्भस्मादिवदिति चेन्न, तयोरप्यवगाहकत्वादवगाह्यांतरसिद्धेः । नन्वेवमाकाशस्याप्यवगाहकत्वादन्यदवगाह्यं कल्प्यतां तस्याप्यवगाहकत्वे अपरमवगाह्यमित्यनवस्था स्यादिति चेन्न, आकाशस्यानंतस्यामूर्तस्य व्यापिनः स्वावगाहित्वसिद्धेरवगाह्यांतरासंभवात् । न चैवमालोकतमसोः सर्वार्थानां वा स्वावगाहित्वप्रसक्तिरसर्वगतत्वात् । न च किंचिदसर्वगतं स्वावगाहि दृष्टं, मत्स्यादेर्जलाद्यवगाहित्वदर्शनात् । सर्वार्थानां क्षणिकपरमाणुस्वभावत्वात् अवगाह्यावगाहकभावाभाव इति चेन्न, स्थूलस्थिरसाधारणार्थप्रतीतेः । न चेयं भ्रांतिर्बाधकाभावात् एकस्यानेकदेशकालव्यापिनोर्थस्याभावे सर्वशून्यतापत्तेः । भावे पुनरवगाह्यावगाहकभावाविरोध एवाधाराधेयभावादिवत् शीतवातातपादीनामभिन्नदेशकालतया प्रतीतेः स्वावगाह्यावगाहकभावसिद्धिः परस्परमवगाहानुपपत्तौ भिन्नदेशत्वप्रसंगाल्लोष्ठद्वयवत् । ततो यथाप्रतीतिनियतानामवगाहकानां प्रतिनियतमवगाह्यमसिद्धं तथा सकृत्सर्वावगाहिनामवगाह्यमाकाशमनुमंतव्यम् ॥

## शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥ १९ ॥

उपकार इत्यनुवर्तनीयं, तत्र शरीरमौदारिकं व्याख्यातं । वाक् द्विधा—द्रव्यवाक् भाववाक् च । तत्रेह द्रव्यवाक् पौद्गलिकी गृह्यते । मनोपि द्विविधं, द्रव्यभावविकल्पात् । तत्रेह द्रव्यमनः पौद्गलिकं ग्राह्यं, प्राणापानौ श्वासोच्छ्वासौ । त एते पुद्गलानां शरीरवर्गणादीनामतींद्रियाणामुपकारः कार्यमनुमापकमित्यावेदयति;—

**शरीरवर्गणादीनां पुद्गलानां स संमतः । शरीरावयव इत्येतैस्तेषामनुमितिर्भवेत् ॥ १ ॥**

संति शरीरवाङ्मनोवर्गणाः प्राणापानारंभकाश्च सूक्ष्माः पुद्गलाः शरीरादिकार्यान्यथानुपपत्तेः । न प्रधानं कारणं शरीरादीनां मूर्तिमत्त्वाभावादात्मवत् । न ह्यमूर्तिमतः परिणामः कारणं दृष्टं । पृथिव्यादिपरमाणवः कारणमिति केचित्, तेषां सर्वेप्यविशेषेण पृथिव्यादिपरमाणवः शरीराद्यारंभकाः स्युः प्रतिनियतस्वभावाः? न तावदादिविकल्पोऽनिष्टप्रसंगात् । द्वितीयकल्पनायां तु शरीरादिवर्गणा एव नामांतरेणोक्ता भवेयुरिति सिद्धोऽस्मत्सिद्धांतः ॥

## सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥

पुद्गलानामुपकार इत्यभिसंबंधः । केषां पुनः पुद्गलानामिमे कार्यमित्याह;—

**सुखाद्युपग्रहाश्चोपकारो जीवविपाकिनाम् । सातवेद्यादिकर्मात्मपुद्गलानामितोनुमा ॥ १ ॥**

सुखं तावत्सद्वेद्यस्य कर्मणः कार्यं दुःखमसद्वेद्यस्य, जीवितमायुषः, मरणमसद्वेद्यस्यैवायुःक्षये सति तदुदयात्परमदुःखात्मना तस्यानुभवात् । ततः सातवेद्यादिकर्मात्मानः पुद्गलाः सुखाद्युपग्रहेभ्योऽनुमीयंते । अत्रोपग्रहवचनं सद्वेद्यादिकर्मणां सुखाद्युत्पत्तौ निमित्तमात्रत्वेनानुग्राहकत्वप्रतिपत्त्यर्थं परिणामकारणं जीवः सुखादीनां तस्यैव तथ्यपरिणामात् । अत एव जीवविपाकित्वं सद्वेद्यादिकर्मणां जीवे तद्विपाकोपलब्धेः । नन्वायुः भवविपाकि श्रूयते तत्कथं जीवविपाकि स्यात्? भवस्य जीवपरिणामत्वविवक्षायां तथा विधानाददोषः । तस्य कथंचिदजीवपरिणामविशेषत्वे वा जीवपरिणाममात्राद्भेदविवक्षायामायुर्भवविपाकि प्रोक्तमिति न विरोधः । नन्वाभरणादिपुद्गलानां सुखाद्युपग्रहे वृत्तिदर्शनात्तेषां सुखाद्युपग्रह उपकारोस्त्विति चेन्न, तेषामनुमेयत्वात् नियमाभावाच्च कस्यचित्कदाचित्सुखोपग्रहे वर्तमानस्यापि बंधनादेरपरस्य दुःखाद्युपग्रहेपि वृत्त्यविरोधान्न नियमः । सद्वेद्यादिकर्माणि सुखाद्युपग्रहे प्रतिनियतस्वभावान्येवान्यथा तत्संभावनानुपपत्तेरिति तेभ्यस्तदनुमानम् ॥

## परस्परोपग्रहो जीवानाम् ॥ २१ ॥

उपकार इत्यनुवर्तते, ततः परस्परं जीवानामनुमानमित्याह;—

**जीवानामुपकारः स्यात्परस्परमुपग्रहः । संतानांतरवद्भाजां व्यापारादिरतोनुमा ॥ १ ॥**

संतानांतरभाजो हि जीवाः परस्परमसंविदात्मानः कार्यतोनुमेयाः स्युर्न पुनरैक्यभाजः । तच्च कार्यं परस्परमुपग्रहः । स च व्यापारादिरालिंगनादिवाहनादिभिर्व्यापारः । अनुनयनं हितप्रतिपादनादिर्व्याहारः । स च परस्परमुपलभ्यमानः संतानांतरत्वं साधयतीति तदनुमेयाः संतानांतरभाजो जीवाः परस्परं संवृत्त्या संतानांतरव्यवहार इत्ययुक्तं, पुरुषाद्वैतवादस्य पूर्वमेव निरस्तत्वात्संवेदनाद्वैतवादवत् ॥

## वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥ २२ ॥

वर्तते वर्तनमात्रं वा वर्तना, वृतेर्ण्यन्तात्कर्मणि भावे वा युक् तस्यानुदात्तत्वाद्वा ताच्छीलिको वा युच्

वर्तनाशीला वर्तनेति । का पुनरियं? प्रतिद्रव्यपर्यायमंतर्नीतैकसमया स्वसत्तानुभूतिर्वर्तना । द्रव्यं वक्ष्यमाणं तस्य पर्यायो द्रव्यपर्यायः द्रव्यपर्यायं द्रव्यपर्यायं प्रति प्रतिद्रव्यपर्यायं अंतर्नीत एकः समयो-नयेत्यंतर्नीतैकसमया । का पुनरसौ? स्वसत्तानुभूतिः स्वस्यैव सत्ता स्वसत्ता अन्यासाधारणी जन्मव्यय-ध्रौव्यैक्यवृत्तिरित्यर्थः । 'उत्पादव्ययध्रौव्ययुक्तं सत्' इति वचनात् । न हि सत्तात्यंतं भिन्ना स्वाश्रयादु-पपद्यते । द्रव्याभिधानानुप्रवृत्तिलिंगेनानुमीयमाना सैकैवेत्ययुक्तं, सादृश्योपचारात्तदेकत्वप्रत्ययप्रवृत्तिः । जीवाजीवतद्भेदप्रभेदैः संबध्यमाना विशिष्टा शक्तिरनेकत्वमास्कंदतीति स्वसत्ताया अनुभूतिः सा वर्तना वर्त्यमानत्वात् वर्तमानमात्रत्वाद्वा तदुच्यते;—

अंतर्नीतैकसमयः स्वसत्तानुभवो भिदा । यः प्रतिद्रव्यपर्यायं वर्तना सेह कीर्त्यते ॥ १ ॥
यस्मात्कर्मणि भावे च ण्यंताद्वर्तेः स्त्रियां युचि । वर्तनेत्यनुदात्ते ताच्छील्यादौ वा युचीष्यते॥२॥
धर्मादीनां हि वस्तूनामेकस्मिन्नविभागिनि । समये वर्तमानानां स्वपर्यायैः कथंचन ॥ ३ ॥
उत्पादव्ययध्रौव्यविकल्पैर्बहुधा स्वयं । प्रयुज्यमानतान्येन वर्तना कर्म भाव्यते ॥ ४ ॥
प्रयोजनं तु भावः स्यात्स चासौ तत्प्रयोजकः । काल इत्येष निर्णीतो वर्तनालक्षणोंजसा ॥ ५ ॥
प्रत्यक्षतोऽप्रसिद्धापि वर्तनास्मादृशां तथा । व्यावहारिककार्यस्य दर्शनादनुमीयते ॥ ६ ॥
तथा तंदुलविक्लेदलक्षणस्य प्रसिद्धितः । पाकस्योदनपर्यायनामभाजः प्रतिक्षणं ॥ ७ ॥
सूक्ष्मतंदुलपाकोस्तीत्यनुमानं प्रवर्तते । पाकस्यैवान्यथेष्टस्य सर्वथानुपपत्तितः ॥ ८ ॥
तथैव स्वात्मसद्भावानुभूतौ सर्ववस्तुनः । प्रतिक्षणं बहिर्हेतुः साधारण इति ध्रुवम् ॥ ९ ॥
प्रसिद्धद्रव्यपर्यायवृत्तौ बाह्यस्य दर्शनात् । निमित्तस्यान्यथाभावाभावान्निश्चीयते बुधैः ॥ १० ॥
आदित्यादिगतिस्तावन्न तद्धेतुर्विभाव्यते । तस्यापि स्वात्मसत्तानुभूतौ हेतुव्यपेक्षणात् ॥ ११ ॥
नचैवमनवस्था स्यात्कालस्यान्याव्यपेक्षणात् । स्ववृत्तौ तत्स्वभावत्वात्स्वयं वृत्तेः प्रसिद्धितः ॥१२
तथैव सर्वभावानां स्वयं वृत्तिर्न युज्यते । दृष्टेष्टबाधनात्सर्वादीनामिति विचिंतितं ॥ १३ ॥
न दृश्यमानतैवात्र युज्यते वर्तमानता । वर्तमानस्य कालस्याभावे तस्याः स्वतः स्थितेः ॥ १४ ॥
प्रत्यक्षासंभवाशक्तेरनुमानाद्ययोगतः । सर्वप्रमाणनिन्हुत्या सर्वशून्यत्वशक्तितः ॥ १५ ॥
स्वसंविदद्वयं तत्त्वमिच्छतः सांप्रतं कथं । सिद्ध्येन्न वर्तमानोस्य कालः सूक्ष्मः स्वयंप्रभुः ॥१६॥
ततो न भाविता द्रक्ष्यमाणता नाप्यतीतता । दृष्टता भाव्यतीतस्य कालस्यान्यप्रसिद्धितः॥१७॥
गतं न गम्यते तावदागतं नैव गम्यते । गतागतविनिर्मुक्तं गम्यमानं न गम्यते ॥ १८ ॥
इत्येवं वर्तमानस्य कालस्याभावभाषणं । स्ववाग्विरुद्धमाभाति तन्निषेधे समत्वतः ॥ १९ ॥
निषिद्धमनिषिद्धं वा तद्द्वयोन्मुक्तमेव वा । निषिध्यते न हि कैवं निषेधो विधिरेव वा ॥२०॥
क वाभ्युपगमः सिद्ध्येत् प्रतिज्ञाहानिसंगतः । तस्य स्वयं प्रतिज्ञानाद्वर्तमानस्य तत्त्वतः ॥ २१ ॥
तथैव च स्वयं किंचित्परैरभ्युपगम्यते । तथैव गम्यते किं न क्रियते वेद्यतेपि च ॥ २२ ॥
संवेदनाद्वयं तावद्विदितं नैव वेद्यते । न चाविदितमात्मादितत्त्वं वा नापि तद्द्वयं ॥ २३ ॥
इति स्वसंविदादीनामभावः केन वार्यते । वर्तमानस्य कालस्यापन्हवे स्वात्मविद्विषां ॥ २४ ॥
न संवित्संविदेवेति स्वतः समवतिष्ठते । भ्रम भ्रमैव वेत्यादि यथा भेदाप्रसिद्धितः ॥ २५ ॥
तत्स्वसंवेदनस्यापि संतानमनुगच्छतः । परेण हेतुना भाव्यं स्वयं वृत्त्यात्मना न सः ॥ २६ ॥
वर्तनैवं प्रसिद्धा स्यात्परिणामादिवत् स्वयं । ततः सिद्धांतसूत्रोक्ताः सर्वेमी वर्तनादयः ॥२७॥

अत्र सूत्रकारः—

कालस्योपग्रहाः प्रोक्ता ये पुनर्वर्तनादयः । स्यात्त एवोपकारोतस्तस्यानुमितिरिष्यते ॥ २८ ॥

वर्तना हि जीवपुद्गलधर्माधर्माकाशानां तत्सत्तायाश्च साधारण्याः सूर्यगत्यादीनां च स्वकार्यविशेषानुमितस्वभावानां बहिरंगकारणापेक्षाकार्यत्वात्तंदुलपाकवत् । यत्तावद्बहिरंगकारणं स कालः । ननु कालवर्तनया व्यभिचारः स्वयं वर्तमानेषु कालाणुषु तदभावात् । न हि कालाणवः स्वसत्तानुभूतौ प्रयोजकमपरमपेक्षंते सर्वप्रयोजकस्वभावत्वात्स्वसर्वप्रयोजकस्वभावत्वविरोधात् । खस्य स्वावगाहहेतुत्वाभावे सर्वावगाहहेतुत्वस्वभावत्वविरोधात् । सर्वज्ञविज्ञानस्य स्वरूपपरिच्छेदकत्वाभावत्वविरोधवद्वा दिशः स्वस्मिन् पूर्वापरादिप्रत्ययहेतुत्वाभावे सर्वत्र पूर्वापरादिप्रत्ययहेतुत्वविरोधवद्वेति केचित् । कालवर्तनाया अनुपचरितरूपेणासद्भावात् यस्यासावन्येन वर्तते तस्य सा मुख्यवर्तना कर्मसाधनत्वात्तस्याः । कालस्य तु नान्येन वर्तते तस्य स्वयं स्वसत्तावृत्तिहेतुत्वादन्यथानवस्थाप्रसंगात् । ततः कालस्य स्वतो वृत्तिरेवोपचारतो वर्तना । वृत्तिवर्तकयोर्विभागाभावान्मुख्यवर्तनानुपपत्तेः । शक्तिभेदात्तयोर्विभागे तु सा कालस्य यथा मुख्या तथा च बहिरंगनिमित्तापेक्षात्वं वर्तकशक्तेर्बहिरंगकारणत्वात् । ततो न तया व्यभिचारः । अकालवृत्तित्वे सति कार्यत्वादिति सविशेषणो वा हेतुः सामर्थ्यादवसीयते । यथा पृथिव्यादयः स्वतोऽन्तरभूतज्ञानवेद्याः प्रमेयत्वादित्युक्तेप्यज्ञानत्वे सतीति गम्यते, अन्यथा ज्ञानेन स्वयं वेद्यमानेन व्यभिचारप्रसंगात् । नन्वत्र प्रमेयत्वादेवेत्यवधारणात्तदप्रमाणत्वे सतीति विशेषणमनुक्तमपि शक्यमवगंतुमन्यत्र तु कथमिति चेत्, कार्यत्वादेवेत्यवधारणाश्रयणादन्यत्राप्यकारणत्वे सतीति विशेषणं लभ्यत एव सामर्थ्यात् ततो न प्रकृतौ हेतुविशेषमिच्छंतौ हेत्वंतरं । नन्वेवं कालवृत्तेः कार्यत्वे तया व्यभिचाराभावादनर्थकं विशेषणोपादानमिति चेन्न, पर्यायार्थादेशात्कार्यत्वस्य तत्र भावात्तया व्यभिचारप्रसंगात् । तत्परिहारार्थं विशेषणोपादानस्यानर्थकत्वायोगात् । ततो वर्तनोपकारः कालसत्तां साधयत्येव ॥ कः पुनः परिणामः? द्रव्यस्य स्वजात्यपरित्यागेन प्रयोगविस्रसालक्षणो विकारः परिणामः । तत्र विस्रसापरिणामोनादिरादिमांश्च । चेतनद्रव्यस्य तावत्स्वजातेश्चेतनद्रव्यत्वाख्याया अपरित्यागेन जीवत्वभव्यत्वाभव्यत्वादिरनादिरौपशमिकादिः पूर्वाकारपरित्यागाजहद्वृत्तिरादिमान् स तु कर्मोपशमाद्यपेक्षत्वादपौरुषेयत्वाद्वैस्रसिकः । अचेतनद्रव्यस्य तु लोकसंस्थानमंदराकारादिरनादिरिति । द्रव्यतयादिमानपुरुषप्रयत्नानपेक्षत्वादेव वैस्रसिकः । प्रयोगजः पुनर्दानशीलभावनादिश्चेतनस्याचार्योपदेशलक्षणपुरुषप्रयत्नापेक्षत्वात्, घटसंस्थानादिरचेतनस्य कुलालादिपुरुषप्रयोगापेक्षत्वात् । धर्मास्तिकायादिद्रव्यस्य तु वैस्रसिकोऽसंख्येयप्रदेशित्वादिरनादिः परिणामः प्रतिनियतगत्युपग्रहहेतुत्वादिः । आदिमान् प्रयोगजो यंत्रादिगत्युपग्रहहेतुत्वादिः पुरुषप्रयोगापेक्षत्वात् । समर्थौ हि बहिरंगकारणापेक्षो कालपरिणामत्वे सति कार्यत्वात् व्रीह्यादिवदिति । यत्तत्कारणं बाह्यं स कालः । परिणामोऽसिद्ध इति चेन्न, बाधकाभावात् । परिणामस्याभावः सत्त्वासत्त्वयोर्दोषोपपत्तेरिति चेन्न, पक्षांतरत्वात् । न हि सन्नेव बीजादावंकुरादिः परिणामस्तत्परिणामत्वविरोधाद्बीजस्वात्मवत् । नाप्यसन्नेव तत एव खरविषाणवत् । किं तर्हि? द्रव्यार्थादेशात् सन् पर्यायार्थादेशादसन् । न चोभयपक्षभावी दोषोत्रावतरति सदसदेकांतपक्षाभ्यामनेकांतपक्षस्यान्यत्वात् हिंसकत्वपारदारिकत्वाभ्यामहिंसकापारदारिकत्ववत् वियुक्तगुडशुंठीभ्यां तत्संयोगवद्वा जात्यंतरत्वाच्च रसांतरसंभवात् । एतेन विरोधादयः परिहृता द्रष्टव्याः । किं च परिणामस्य प्रतिषेधो न तावत्सतः सत्त्वादेव परिणामप्रतिषेधवत् सतोपि प्रतिषेधस्यापि प्रतिषेधप्रसंगात् प्रतिषेधाभावः अप्रतिषेधः सत्त्वान्न प्रतिषिध्यते । तत एव परिणामोपि न प्रतिषेद्धव्य इति स एव प्रतिषेधाभावः । नाप्यसतः

प्रतिषेधमिथ्यानिर्विषयत्वप्रसंगात् । खरविषाणप्रतिषेधः कथमिति चेत्, न कथमपि सत्त्वाद्येकांतवादिनामिति ब्रूमः । तदनेकांतवादिनां तु कचित्कथंचित्कथंचित् सत एवान्यत्रान्यदान्यथा प्रतिषेध इति सर्वमनवद्यम् । सर्वथैकांतस्य प्रतिषेधः कथमिति चेत्, कोऽयं सर्वथैकांतः । इदमेवेत्थमेवेति वा धर्मिणो धर्मस्य वाभिमननमिति चेत्, तर्हि तस्य सत एव निर्विषयसाधनमेव प्रतिषेधः । स्वरूपप्रतिषेधे तु सर्वथा प्रतीतिविरोधः स्यात् । दर्शनमोहोदये सति सदाद्येकांताभिनिवेशस्य मिथ्यादर्शनविशेषस्य प्रत्यात्मवेद्यत्वात् । निर्विषयत्वसाधने तु तस्य न प्रतीतिबाधा प्रतीयमानस्य वस्तुनि सत्त्वाद्यंशस्य धर्मित्वात् । नायं सर्वथा सत्त्वाद्येकांताभिनिवेशस्य विषयो वस्त्वंशः सर्वथा विरोधात् । एतेन प्रधानादिप्रतिषेधो व्याख्यातः प्रधानाद्यभिनिवेशस्य निर्विषयत्वसाधनात् । ततो नैकांतेनासतः प्रतिषेध इति सत एव परिणामस्य कथंचित्प्रतिषेधोपपत्तेः । सर्वथा नाभावः । स्यान्मतं, नास्ति परिणामोन्यानन्यत्वयोर्दोषादिति नोक्तत्वात् । उक्तमत्रोत्तरं, न वयं बीजादंकुरमन्यमेव मन्यामहे तदपरिणामत्वप्रसंगात् पदार्थांतरवत् । नाप्यनन्यमेवांकुरभावानुषंगात् । किं तर्हि? पर्यायार्थादेशाद्बीजादंकुरमन्यमनुमन्यामहे द्रव्यार्थादेशादनन्यमिति पक्षांतरानुसरणाद्दोषाभावान्न परिणामाभावः । व्यवस्थिताव्यवस्थितदोषात्परिणामाभाव इति चेन्नानेकांतात् । न हि वयमंकुरे बीजं व्यवस्थितमेव ब्रूमहे विरोधादंकुरभावप्रसंगात् । नाप्यव्यवस्थितमेवांकुरस्य बीजपरिणामत्वाभावप्रसंगात् पदार्थांतरपरिणामत्वाभाववत् । किं तर्हि? स्याद्बीजं व्यवस्थितं स्यादवस्थितमंकुरे व्याकुर्महे । न चैकांतपक्षभावी दोषोऽनेकांतेप्यस्तीत्युक्तप्रायं । स्याद्वादिनां हि बीजशरीरादेरेव वनस्पतिकायिको बीजोंकुरादिः स्वशरीरपरिणामभागभिमतो यथा कललशरीरे मनुष्यजीवोर्बुदादिस्वशरीरपरिणामभृदिति न पुनरन्यथा सः । तथा सति—

मनुष्यनामकर्मायुषोरुदयात्प्रतिपद्यते । कललादिशरीरांगोपांगपर्यायरूपताम् ॥ २९ ॥
स जीवत्वमनुष्यत्वप्रमुखैरन्वयैर्यथा । व्यवस्थितः स्वकीयेषु परिणामेष्वशेषतः ॥ ३० ॥
कललादिभिः पुनः पूर्वैर्भावैः क्रमविवर्तिभिः । व्यतिरिक्तैः परत्रासौ न व्यवस्थित ईक्ष्यते ॥
तथा वनस्पतिर्जीवः स्वनामायुर्विशेषतः । वनस्पतित्वजीवत्वप्रमुखैरन्वयैः स्थितः ॥ ३२ ॥
स्वशरीरविवर्तेषु बीजादिषु परं न तु । पूर्वपूर्वेण भावेन तु स्थितः क्रमभाविनः ॥ ३३ ॥

स्यान्मतं, न बीजमंकुरादित्वेन परिणमते वृद्ध्यभावप्रसंगात् यो हि यत्परिणामः स न ततो वृद्धिमान् दृष्टो यथा पयःपरिणामो दध्यादिः बीजपरिणामश्चांकुरादिस्तस्मान्न ततो वृद्धिमान् इति बीजमात्रमंकुरादिः स्यादतत्परिणामो वेति । उक्तं च—"किं नान्यथादि तद्बीजं गच्छेदंकुरतामिह । विवृद्धिरंकुरस्य स्यात्कथं बीजादपुष्कलात् ॥" "यथेष्टं ते रसैः सोमैरौदकैश्च विवर्धते । तस्यैव सति बीजस्य परिणामो न युज्यते ॥" "आलिप्तं जतुना काष्ठं यथा स्थूलत्वमृच्छति । न तु काष्ठं तथैवास्ते जतुमात्र विवर्धते ॥" "तथैव यत्र तद्बीजमास्ते येनात्मना स्थितं । रसाश्च वृद्धिं कुर्वंति बीजं तत्र करोति किम् ॥" इति । तदेतदनालोचिततत्त्ववचनं, तद्वृद्धेरहेतुकत्वात् ॥

यथा मनुष्यनामायुःकर्मोदयविशेषतः । जातो बालो मनुष्यात्मा स्तन्याद्याहारमाहरन् ॥ ३४ ॥
सूर्यातपादिसापेक्षः कायाग्निबलमादधत् । वीर्यांतरायविच्छेदविशेषविहितोद्भवं ॥ ३५ ॥
विवर्धते निजाहाररसादिपरिणामतः । निर्माणनामकर्मोपष्टंभाद्भ्यंतरादपि ॥ ३६ ॥
तथा वनस्पतिर्जीवः स्वायुर्नामोदये सति । बीजाश्रयोंकुरो जातो भौमादिरसमाहरन् ॥ ३७ ॥
तदात्मसिंडवपोषं स्वीकुर्वन्नेव वर्धते । आत्मानुरूपनिर्माणनामकर्मोदयादिव ॥ ३८ ॥

ततो न वृद्ध्यभावोंकुरादेः । यदप्युक्तं, यो यत्परिणामश्च ततो न वृद्धिमान् दृष्टो यथा क्षीरपरिणामो दध्यादिर्न क्षीरादिति । तत्र हेतुः कालात्ययापदिष्टो धर्मिदृष्टांतग्राहकप्रमाणबाधितत्वात् । धर्मी तावद्बीजपरिणामोंकुरादिस्ततो वृद्धिमानेव प्रतिभासमानः कथं वावृद्धिमाननुमातुं शक्यः । दृष्टांतश्च शीतक्षीरस्य तप्यमानोन्यो न क्षीरपरिणामो धर्मोद्भूर्तिर्तदधिपरिणामो वा क्षीराद्वृद्धिमनुपलभ्यमानः कथं तद्वृद्ध्यभावसाध्ये निदर्शनं तत्परिणामत्वादित्यसिद्धं च साधनं च परिणामाभाववादिनः पराभ्युपगमात् । तत्सिद्धौ वृद्धिसिद्धिरपि तत एव स्यात् सर्वथा विशेषाभावात् । तत्र वृद्ध्यभावात् परिणामाभावः स्याद्वादिनां प्रति साधयितुं शक्यः परिणामाभावात् वृद्ध्यभावः सर्वथैकांतवादिनः प्रसिद्ध्यत्येव जन्माद्यभाववदिति निवेदितमायं । न हि नित्यैकांते परिणामोस्ति, पूर्वाकारविनाशाजहद्वृत्तोत्तराकारोत्पादानभ्युपगमात् स्थितिमात्रावस्थानात् । न च स्थितिमात्रं परिणामः तस्य पूर्वोत्तराकारपरित्यागोपादानभावस्थितिलक्षणत्वात् सदा स्थास्नोरात्मादेरर्थांतरभूतोतिशयः कुतश्चिदुपजायमानः परिणाम इति चेत्, स तस्येति कुतः? तदाश्रयत्वादिति चेत्, कथमेकस्वभावमात्मादि वस्तु कदाचित्कस्यचिदतिशयस्याश्रयः कदाचित्त्वे सति संभाव्यते? स्वभावविशेषादिति चेत्, तर्हि येन स्वभावविशेषेणाश्रयः कस्यचिद्भावो येन वानाश्रयः स ततोनर्थांतरभूतश्चेत्तन्नित्यत्वैकांतविरोधः । स ततोर्थांतरभूतश्चेत्तस्येति कुतः? तदाश्रयत्वादिति चेत्, स एव पर्यनुयोगोनवस्था च । सुदूरमपि गत्वा तस्य कथंचिदनर्थांतरभूतस्वभावविशेषाभ्युपगमे कथं ततोर्थांतरभूतोतिशयः परिणामस्तदाश्रयः स्यात् । यो यथा यत्र यदा यातोतिशयस्तस्य तथा तत्र तदाश्रयो भाव इत्येवंरूपैकस्वभावत्वादात्मादिभावस्यादोष एवेति चेन्नानात्मादिभावपरिकल्पनात् विरोधः पृथिव्याद्यतिशयानामेकात्मातिशयत्वप्रसंगात् । शक्यं हि वक्तुमेक एवात्मैवंभूतं स्वभावं बिभर्ति येन यथा यत्र यदा पृथिव्याद्यतिशयाः प्रभवंति तेषां तथा तत्र तदाश्रयो न भवतीति । तदतिशया एव ते पुनरन्यद्रव्यातिशय इति । द्रव्यांतराभावे कुतोतिशयाः स्युरात्मनीति चेत्, अतिशयांतरेभ्यः । एते चान्येपि परेभ्योतिशयेभ्य इत्यनाद्यतिशयपरंपराभ्युपगमादनुपालंभः । अस्त्येक एवात्मा पुरुषाद्वैताभ्युपगमादित्यपरः तस्यापि नात्मातिशयः परिणामो द्वैतप्रसंगात् । अनाद्यविद्योपदर्शिनः पुरुषस्यातिशयः परिणाम इति चेत्, तर्हि न वास्तवः परिणामः पुरुषाद्वैतवादिनोस्ति । योप्याह, प्रधानादर्थांतरभूत एव महदादेः परिणाम इति, सोप्ययुक्तवादी; सर्वथा प्रधानादभिन्नस्य महदादेः परिणामत्वविरोधात्स्वात्मप्रधानवत् तस्य वा परिणामित्वप्रसंगात् महदादिवत् । ततो न प्रधानं परिणामि घटते नित्यैकस्वभावत्वादात्मवत् । यदि पुनः प्रधानस्य महदादिरूपेणाविर्भावतिरोभावाभ्युपगमात् परिणामित्वमभिधीयते तदा स एव स्याद्वादिभिरभिधीयमानः परिणामो नान्यथेति नित्यत्वैकांतपक्षे परिणामाभावः । क्षणिकैकांतेपि क्षणादूर्ध्वस्थितेरभावात् परिणामाभावः । पूर्वक्षणे निरन्वयविनाशादुत्तरक्षणोत्पादः परिणाम इति चेत्, कस्य परिणामिन इति वक्तव्यं? पूर्वक्षणस्यैवेति चेन्न, तस्यात्यंतविनाशात्तदपरिणामित्वाच्चिरंतनविशिष्टक्षणवत् । कार्यकारणभाव एव परिणामिभाव इति चेन्न, क्षणिकैकांते कार्यकारणभावस्य निरस्तत्वात् । क्रमयौगपद्यविरोधान्नित्यत्वैकांतवत् । संवृत्या कार्यकारणभावे तु न वास्तवः परिणामिभावः कयोश्चिदिति क्षणिकैकांतपक्षे परिणामाभावः सिद्धः । संवेदनाद्यद्वैते तु दूरोत्सारित एव परिणाम इति सकलसर्वथैकांतवादिनां परिणामाभावाद्वृद्ध्यभावो अपक्षयाद्यभाववदवतिष्ठते । स्याद्वादिनां पुनः परिणामप्रसिद्धेर्युक्ता कस्यचिद्वृद्धिः । स्वकारणसन्निपातादपक्षयादिवत्तथा प्रतीतेर्वा बाधकाभावात् । परिणामो हि कश्चित् पूर्वपरिणामेन सदृशो यथा प्रदीपादेर्ज्वालादिः, कश्चिद्विसदृशो यथा तस्यैव कज्जलादिः, कश्चित्सदृशासदृशो यथा सुवर्णस्य कटकादिः । तत्र पूर्वसंस्थानाद्यपरित्यागे

सति परिणामाविरुद्धं वृद्धिः । सदृशेतरपरिणामो यथा बालकस्य कुमारादिभावः । स एवायमित्युक्ते, विसदृशप्रत्ययोत्पत्तेः । सर्वथा सादृश्ये बालकुमाराद्यवस्थयोः कुमाराद्यवस्थायामपि बालप्रत्ययोत्पत्तिप्रसंगात्, बालकावस्थायां वा कुमारादिप्रत्ययोत्पत्तिप्रसक्तेः । सर्वथा विसदृश एव बालकपरिणामात्कुमारादिपरिणाम इत्यपि न प्रातीतिकं, स एवायमिति प्रत्ययस्याभावात् । भ्रांतोसौ प्रत्यय इति चेन्न, बाधकाभावादात्मनि स एवाहं प्रत्ययवत् । सर्वत्र तस्य भ्रांतत्वोपगमे नैरात्म्यवादावलंबनप्रसंगः । न चासौ श्रेयान् बंधसदृशेतरपरिणामात्मनो वस्तुनः साधनात्, प्रतीतिज्ञानस्याभेदप्रत्ययस्य वा प्रामाण्यव्यवस्थापनात्। ततो युक्तः सदृशेतरपरिणामात्मको वृद्धिपरिणामः। एतेनापक्षयपरिणामो व्याख्यातः । यथा स्थूलस्य कायादेः सदृशेतरप्रत्ययसद्भावात् सदृशेतरात्मक इति विसदृशपरिणामो जन्म तस्यापूर्वप्रादुर्भावलक्षणत्वात्, तथा विनाशः पूर्वविनाशस्यापूर्वप्रादुर्भावरूपत्वात् । तद्व्यतिरिक्तस्य विनाशस्याप्रतीतेः । नाभावोस्तीति प्रत्ययविषयत्वादिति चेत्, ततश्च भावस्वभावत्वे नीरूपत्वप्रसंगात् । नास्तीति प्रत्ययविषयरूपसद्भावान्न नीरूपत्वमिति चेत्, तर्हि भावस्वभावविनाशः स्वभावत्वादुत्पादवत् । प्रागभावेतरेतराभावात्यंताभावानामप्यनेनैव भावस्वभावता व्याख्याता । ननु च यथा स्वभाववत्त्वाविशेषेपि घटपटयोर्नानात्वं विशिष्टप्रत्ययविषयत्वात्तथा भावाभावयोरपि स्यादिति चेन्न; घटत्वेन वा स्वभाववत्त्वस्याव्याप्तत्वाद् घटस्य पटात्मकत्वासिद्धेः, पटस्य वा घटात्मकत्वानुपपत्तेः कथंचिन्नानात्वव्यवस्थितेः । भावात्मकत्वेन तु स्वभावत्वस्य व्याप्तिसिद्धेः सर्वत्र भावात्ममंतरेण स्वभावत्वाप्रसिद्धेरभावस्य । ततो भावात्मकत्वसिद्धेरप्रतिबंधनात् । तत्र विशिष्टप्रत्ययस्तु पर्यायविशेषादुपपद्यते एव घटे नवपुराणादिप्रत्ययवत् । यथैव घटो नवः पुराण इति विशिष्टप्रत्ययतामात्मसात्कुर्वन्नपि घटात्मतां जहाति तथा भावोस्ति नास्तीति विशिष्टप्रत्ययं विषयतां स्वीकुर्वन्नपि न भावत्वमविशेषात् । न चाभावो भावपर्याय एव न भवति सर्वदा भावपरतंत्रत्वादभावप्रसंगात् । न च सर्वदाभावपरतंत्रो नीलत्वादिर्भावधर्मो नामसिद्धो येनाभावोपि तद्वद्भावधर्मो न स्यात् । न च सर्वदा भावपरतंत्रत्वमभावस्यासिद्धं, घटस्याभावः पटस्य चेत्येवं प्रतीतेः स्वतंत्रस्याभावस्य जातुचिदप्रतीतेः । अत एव भाववैलक्षण्यमभावस्येति चेन्न, नीलादिना व्यभिचारात् । नीलमिदमित्येवं नीलादेः स्वतंत्रस्य संप्रत्ययात्सर्वदा भावपरतंत्रे नीलत्वासिद्धेर्न तेन व्यभिचार इति चेत्, तर्हि तथाप्यसदिदमित्येवमभावस्य स्वतंत्रस्य निश्चयात् सर्वदा भावपारतंत्र्यं न सिद्ध्येत् इदमिति प्रतीयमानभावविशेषणतयात्रासतः प्रतीतेरस्वतंत्रत्वे नीलादेरपि स्वतंत्रत्वं मा भूत्तत एव व्यवस्थापितप्रायं वा भावस्य भावस्वभावत्वमिति न प्रपंच्यते । यत्पुनरस्तित्वं विपरिणमनं च जातस्य सतस्तत्सदृशपरिणामात्मकं तत्र वैसादृश्यप्रत्ययानुत्पत्तेः । ननु च सर्वस्य वस्तुनः सदृशेतरपरिणामात्मकत्वे स्याद्वादिनां कथं कश्चित्सदृशपरिणामात्मक एव कश्चिद्विसदृशपरिणामात्मकः पर्यायो युज्यते इति चेत्, तथा पर्यायार्थिकप्राधान्यात् सादृश्यार्थप्राधान्याद्वैसादृश्यगुणभावात् सादृश्यात्मकोयं परिणाम इति मन्यामहे न पुनर्वैसादृश्यनिराकरणात् । तथा वैसादृश्यार्थप्राधान्यात्सादृश्यस्य सतोपि गुणभावाद्विसदृशात्मकोयं परिणाम इति व्यवहरामहे । तदुभयार्थप्राधान्यात्तु सदृशेतरपरिणामात्मक इति संगिरामहे तथा प्रतीतेः । ततोपि न कश्चिदुपालंभः, संकरव्यतिकरव्यतिरेकेणाविरुद्धस्वभावानां निःसंशयं तदतत्परिणामानां विनियतात्मना जीवादिपदार्थेषु प्रसिद्धेः । सुखादिपर्यायेषु सत्त्वाद्यन्वयविवर्तसंदर्भोपलक्षितजन्मादिविकारविशेषवत् जीवादयो द्रव्यपदार्थाः सुखादयः पर्याया विनियतास्तदतत्परिणामायत्तत्वविवर्तोपि तु विकारा' इत्यकलंकदेवैरप्यभिधानात् । ततो [illegible]तस्यैव द्रव्यस्य परिणामः, पूर्वापर[illegible]विरोधात् । तद्[illegible]स्यैव सर्व[illegible] परिण[illegible]नादिति [illegible]

वस्थितस्य द्रव्यार्थादेशात्, स्यादनवस्थितस्य पर्यायार्थादेशादित्यादि सप्तभंगीभाक् परिणामो वेदितव्यः । सोयं परिणामः कालस्योपकारः, सकृत्सर्वपदार्थगस्य परिणामस्य बाह्यकारणमंतरेणानुपपत्तेर्वर्तनावत् यत्तद्बाह्यं निमित्तं स कालः । ननु च कालस्य परिणामो यद्यस्ति तदासौ बाह्यान्यनिमित्तापेक्षं सन्निमित्तं परिणाममात्मसात्कुर्वदपरनिमित्तापेक्षमित्यनवस्था स्यात् । कालपरिणामस्य बाह्यनिमित्तानपेक्षत्वे पुद्गलादिपरिणामस्यापि बाह्यनिमित्तापेक्षा मा भूत् । अथ कालस्य परिणामो नास्ति पूर्वं परिणामिसत्त्वादिति साधनमप्रयोजकं स्यात्तेन व्यभिचारात् । ततो न कालस्य परिणामोऽनुमापक इति कश्चित् । सोपि न विपश्चित्; कालस्य सकलपरिणामनिमित्तत्वेन स्वपरिणामनिमित्तत्वसिद्धेः । सकलावगाहहेतुत्वेनाकाशस्य स्वावगाहहेतुवत् सर्वविदः सकलार्थसाक्षात्कारित्वेन स्वात्मसाक्षात्कारित्ववद्वान्यथा तदनुपपत्तेः । न चैवं पुद्गलादयः सकलपरिणामहेतवः, स्वपरिणामहेतुत्वेपि सकलपरिणामहेतुत्वाभावात् प्रतिनियतस्वपरिणामहेतुत्वात् । ये त्वाहुः, नान्योन्यं परिणामयति भावान् नासौ स्वयं च परिणमते विविधपरिणामभाजां निमित्तमात्रं भवति काल इति । तेपि न कालस्यापरिणामित्वं प्रतिपन्नाः, सर्वस्य वस्तुनः परिणामित्वात् । न च स्वयं परिणमते इत्यनेन पुद्गलादिवत् महत्त्वादिपरिणामप्रतिषेधात् । न चासौ भावानन्योन्यं परिणमयतीत्यनेनापि तेषां स्वयं परिणममानानां कालस्य प्रधानकर्तृत्वप्रतिषेधात् । तस्यापि परिणामहेतुत्वं निमित्तमात्रं भवति काल इति वचनात् । ततः सर्वो वस्तुपरिणामो निमित्तद्रव्यहेतुक एवान्यथा तदनुपपत्तेरिति प्रतिपत्तव्यं । का पुनः **क्रिया**? ॥

**परिस्पंदात्मको द्रव्यपर्यायः संप्रतीयते । क्रिया देशांतरप्राप्तिहेतुर्गत्यादिभेदभृत् ॥ ३९ ॥**

**प्रयोगविस्रसोत्पादाद्द्वेधा संक्षेपतस्तु सा । प्रयोगजा पुनर्नानोत्क्षेपणादिप्रभेदतः ॥ ४० ॥**

**विस्रसोत्पत्तिका तेजोवातांभःप्रभृतिष्वियं । सर्वाप्यदृष्टवैचित्र्यात् प्राणिनां फलभागिनां ॥४१**

**क्रिया क्षणक्षयैकांते पदार्थानां न युज्यते । भूतिरूपापि वस्तुत्वहानेरेकांतनित्यवत् ॥ ४२ ॥**

**क्रमाक्रमप्रसिद्धेस्तु परिणामिनि वस्तुनि । प्रतीतिपदमापन्ना प्रमाणेन न बाध्यते ॥ ४३ ॥**

कथं पुनरेवं विधा क्रिया कालस्योपकारोस्तु यतस्तं गमयेत् कालमंतरेणानुपपद्यमानत्वात् परिणामवत् । तथाहि—सकृत्सर्वद्रव्यक्रिया बहिरंगसाधारणकारणा, कारणापेक्षकार्यत्वात् परिणामवत् सकृत्सर्वपदार्थगतिस्थित्यवगाहवद्वा यत्तद्बहिरंगसाधारणकारणं स कालोन्यासंभवात् । के पुनः **परत्वापरत्वे**? विप्रकृष्टेतरदेशापेक्षाभ्यां प्रशस्तेतरापेक्षाभ्यां च परत्वापरत्वाभ्यामनेकांतप्रकरणात् अपरदिक्संबंधिनि निवेशे वृद्धलुब्धके परत्वप्रत्ययकारणं परत्वं, परदिक्संबंधिनि च प्रशस्ते कुमारतपस्विन्यपरत्वप्रत्ययहेतुरपरत्वं न तद्धि गुणकृतं न वाहेतुकमिति तद्धेतुना विशिष्टेन भवितव्यं । स नः काल इति । काले तर्हि दिग्भेदगुणदोषानपेक्षे परत्वापरत्वे परः कालोऽपरः काल इति प्रत्ययविशेषनिमित्ते किं कृते स्यातामिति चेत्, अध्यारोपकृते गौणे इति केचित् । स्वहेतुके मुख्ये एवास्त्वन्यप्रत्ययसमधिगमत्वादित्यन्ये । न चैवं सर्वद्रव्येषु स्वहेतुके परत्वापरत्वे प्रसज्येते, निंबादौ स्वहेतुकस्य तिक्तत्वादेर्दर्शनादोदनादावपि तस्य स्वहेतुकत्वप्रसंगात् निंबादिसंस्कारानपेक्षत्वापत्तेः । व्यवहारकालस्य परिणामक्रियापरत्वापरत्वैरनुमेयत्वाच्च न मुख्यकालापेक्षया चोद्यमनवद्यं । द्विविधो ह्यत्र कालो मुख्यो व्यवहाररूपश्च । तत्र मुख्यो वर्तनानुमेयः, परस्तु परिणामाद्यनुमेयः प्रतिपादितः सूत्रेऽन्यथा परिणामादिग्रहणानर्थक्यप्रसंगात् वर्तनाग्रहणेनैव पर्याप्तत्वात् । कः पुनरसौ मुख्यः कालो नाम? ॥

**लोकाकाशप्रभेदेषु कृत्स्नेष्वेकैकवृत्तयः । प्रतिप्रदेशमन्योन्यमबद्धाः परमाणवः ॥ ४४ ॥**

मुख्योपचारभेदैस्तेऽवयवैः परिवर्जिताः । निरंशा निष्क्रिया यस्मादवस्थावात्स्वदेशवत् ॥ ४५
अमूर्तास्तद्वदेवेष्टाः स्पर्शादिरहितत्वतः । कालाख्या मुख्यतो येस्तिकायेभ्योन्ये प्रकाशिताः ४६
व्यवहारात्मकः कालः परिणामादिलक्षणः । कालवर्तनया लब्धकालाख्यस्तु ततोऽपरः ४७
कुतश्चित् परिच्छिन्नोऽन्यपरिच्छेदनकारणं । प्रस्थादिवत्प्रपत्तव्योन्योन्यापेक्षप्रभेदभृत् ॥४८॥
ततस्त्रैविध्यसिद्धिश्च तस्य भूतादिभेदतः । कथंचिन्नाविरुद्धा स्यात् व्यवहारानुरोधतः ॥ ४९ ॥
यथा प्रतितरु प्राप्तप्राप्नुवत्प्राप्स्यदुच्यते । तरुपंक्तिं क्रमादश्वप्रसृत्यनुसरन् मतं ॥ ५० ॥
तथावस्थितकालाणुश्च जीवाद्यनुसंगमात् । भूतं स्याद्वर्तमानं च भविष्यच्चाप्यपेक्षया ॥ ५१ ॥
भूतादिव्यवहारोतः कालः स्यादुपचारतः । परमार्थात्मनि मुख्यस्तु स स्यात् सांव्यवहारिके ५२
एवं प्रतिक्षणादिस्यगतिप्रचयभेदतः । समयावलिकोच्छ्वासप्राणस्तोकलवात्मकः ॥ ५३ ॥
नालिकादेश्च विख्याते कालोनेकविधः सतां । मुख्यकालाविनाभूतां कालाख्यां प्रतिपद्यते ५४
परापरचिरक्षिप्रक्रमाक्रमधियामपि । हेतुः स एव सर्वत्र वस्तुतो मुणतः स्मृतः ॥ ५५ ॥
क्रियैव काल इत्येतदनेनैवापसारितं । वर्तनानुमितः कालः सिद्धो हि परमार्थतः ॥ ५६ ॥
धर्मादिवर्गवत्कार्यविशेषव्यवसायतः । बाधकाभावतश्चापि सर्वथा तत्र तत्त्वतः ॥ ५७ ॥

सांप्रतं सर्वेषां धर्मादीनामनुमेयार्थानामानुमानिकी प्रतिपत्तिः सूत्रसामर्थ्यादुपजाता प्रत्यक्षार्थप्रतीतिवन्न बाध्यत इत्युपसंहरन्नाह;—

एवं सर्वानुमेयार्था प्रतिपत्तिर्न बाध्यते । सूत्रसामर्थ्यतो जाता प्रत्यक्षार्थप्रतीतिवत् ॥ ५८ ॥

न हि धर्मास्तिकायाद्यनुमेयार्थप्रतिपत्तिरस्मदादिप्रत्यक्षेण बाध्यते तस्य तदविषयत्वात् । न संति धर्मादयोऽनुपलब्धेः खरशृंगवदित्याद्यनुमानेन बाध्यते इति चेन्न, तस्याप्रयोजकत्वात् । परचेतोवृत्त्यादिना व्यभिचारात् । दृश्यानुपलब्धिः पुनरत्रासिद्धैव सर्वथा धर्मादीनामस्मदादिभिः प्रत्यक्षतोनुपलभ्यत्वात् । कालात्ययापदिष्टश्च हेतुः प्रमाणभूतागमाबाधितपक्षनिर्देशानंतरं प्रयुक्तत्वात् । एवमबाधितप्रतीतिगोचरार्थप्रकाशिनः सूत्रकारादयः प्रेक्षावतां स्तोत्रार्हा इति स्तुवंति;—

निरस्तनिःशेषविपक्षसाधनैरजीवभावा निखिलाः प्रसाधिताः ।
प्रपंचतो यैरिह नीतिशालिभिर्जयंति ते विश्वविपश्चितंमताः ॥ ५९ ॥

इति पंचमस्याध्यायस्य प्रथममाह्निकम् ।

---

## स्पर्शरसगंधवर्णवंतः पुद्गलाः ॥ २३ ॥

स्पर्शग्रहणमादौ विषयबलदर्शनात् । सर्वेषु हि विषयेषु रसादिषु स्पर्शस्य बलं दृश्यते स्पष्टग्राहिष्विन्द्रियेषु स्पर्शस्यादौ ग्रहणव्यक्तेः, सर्वसंसारिजीवग्रहणयोग्यत्वाच्चादौ स्पर्शस्य ग्रहणं । रसग्रहणमादौ प्रसज्यते विषयबलदर्शनात् स्पर्शसुखनिरुत्सुकेष्वपि रसव्यापारदर्शनादिति चेन्न, स्पर्शे सति तद्व्यापारात् । तत एवानंतरं रसवचनं, स्पर्शग्रहणानंतरभावि हि रसग्रहणं । रूपात्प्राग्गंधवचनमचाक्षुषत्वात् अंते वर्णग्रहणं स्थौल्ये सति तदुपलब्धेः । नित्ययोगे मतोर्विधानात् क्षीरिणो न्यग्रोधा इत्यादिवत् स्पर्शादिसामान्यस्य नित्ययोगात्पुद्गलेषु ॥

अथ स्पर्शादिमंतः स्युः पुद्गला इति सूचनात् । क्षित्यादिजातिभेदानां प्रकल्पननिराकृतिः ॥ १

पृथिव्यप्तेजोवायवो हि पुद्गलद्रव्यस्य पर्यायाः स्पर्शादिमत्त्वात् ये न तत्पर्यायास्ते न स्पर्शादिमंतो दृष्टा यथाकाशादयः स्पर्शादिमंतश्च पृथिव्यादय इति तज्जातिभेदानां निराकरणं सिद्धं । नन्वयं पक्षाव्यापको हेतुः स्पर्शादिजले गंधस्याभावात्तेजसि गंधरसयोः वायौ गंधरसरूपाणामनुपलब्धेरिति ब्रुवाणं प्रत्याह;—

नाभावोऽन्यतमस्यापि स्पर्शादीनामदृष्टितः । तस्यानुमानसिद्धत्वात्स्वाभिप्रेतार्थतत्त्ववत् ॥ २ ॥

किमियं प्रत्यक्षनिवृत्तिरनुपलब्धिराहोस्वित्सकलप्रमाणनिवृत्तिः? प्रथमा च चेत्ततः सलिलादिषु स्पर्शादीनामन्यतमस्याप्यभावः सिध्येत् । स्वाभिप्रेतत्त्वेनातींद्रियेण धर्मादिनानेकांतात् । तस्यानुमानसिद्धत्वेप्सु गंधस्य, तेजसि गंधरसयोः, पवने गंधरसरूपाणामनुमानसिद्धत्वमस्तु । तथाहि—आपो गंधवत्यस्तेजो गंधरसवद्वायुः गंधरसरूपवान् स्पर्शवत्त्वात् पृथिवीवत् । कालात्ययापदिष्टो हेतुः प्रत्यक्षागमविरुद्धपक्षनिर्देशानंतरं प्रयुक्तत्वात् तेजसस्नुष्णत्वे साध्ये द्रव्यत्ववदिति चेत्, न नाम रसादिष्वनुभूतरूपस्पर्शविशेषे साध्ये तैजसत्वहेतोः कालात्ययापदिष्टत्वप्रसंगात् । तत्रागमेन विरोधाभावात्तदभावप्रतिपादनान्न दोष इति चेत्, तत एवान्यत्र दोषो मा भूत् । स्याद्वादागमस्य प्रमाणत्वमसिद्धमिति चेन्न, तस्यैव प्रामाण्यसाधनात् । यौगागमस्यैव सर्वत्र दृष्टेष्टविरुद्धत्वेन प्रामाण्यानुपपत्तेः । युक्त्यनुगृहीतत्वेन चागमस्य प्रामाण्यमनुमन्यमानः कथमितरेतराश्रयदोषं परिहरेत्? सिद्धे ह्यागमस्य तत्प्रतिपादकस्य प्रामाण्ये तत्र हेतोरतीतकालत्वाभावसिद्धिः तत्सिद्धौ च तदनुमानेनानुगृहीतस्य तदागमस्य प्रामाण्यसिद्धिरिति । स्याद्वादिनां तु सुनिश्चितासंभवद्बाधकप्रमाणत्वेनागमस्य प्रामाण्यसिद्धौ नायं दोषः । अत एव जलादिषु गंधाद्यभावसाधने सर्वस्य हेतोरतीतकालत्वं प्रत्येतव्यं, तस्य प्रमाणभूतजैनागमविरुद्धत्वात् । ततो न कालात्ययापदिष्टो हेतुः । नाप्यनैकांतिको विपक्षवृत्त्यभावात् । अन्वयाभावादगमक इति चेन्न, सर्वस्य केवलव्यतिरेकिणोऽप्रयोजकत्वप्रसंगात् साध्याविनाभावनियमनिश्चयात् । कस्यचित्प्रयोजकत्वे प्रकृतहेतोस्तत एव प्रयोजकत्वमस्तु । पुद्गलद्रव्यपर्यायत्वाभावे क्षित्यादीनां स्पर्शतत्त्वाभावनियमनिश्चयात् । एतेन सर्वप्रमाणानिवृत्तिरनुपलब्धिरसिद्धा न तोयादिषु गंधाद्यभावसाधनीत्युक्तं वेदितव्यं, प्रवचनस्यानुमानस्य च तद्भावावेदिनः प्रवृत्तेः ॥

## शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च ॥ २४ ॥

पुद्गला इत्यनुवर्तते । तत्र शब्दादीनामभिहितनिर्वचनानां परिप्राप्तद्वंद्वानामेवाभिसंबंधः । शब्दो द्वेधा भाषालक्षणो विपरीतश्च । भाषात्मको द्वेधा अक्षरात्मको अनक्षरात्मकश्च । प्रथमः शास्त्राभिव्यंजकः संस्कृतादिभेदादार्यम्लेच्छव्यवहारहेतुः, अनक्षरात्मको द्वींद्रियादीनामतिशयज्ञानस्वरूपप्रतिपादनहेतुश्च । स एष प्रायोगिक एव । अभाषात्मको द्वेधा प्रयोगविस्रसानिमित्तत्वात् । तत्र प्रयोगनिमित्तश्चतुर्धा, ततादिभेदात् । चर्मतननात्ततः पुष्करादिप्रभवः, तंत्रीकृतो विततो वीणादिसमुद्भवः, कांस्यतालादिजो घनः, वंशादिनिमित्तः शौषिरः, विस्रसानिमित्तः शब्दो मेघादिप्रभवः । बंधो द्विविधो विस्रसाप्रयोगभेदात् । विस्रसा बंधोऽनादिरादिमांश्च, प्रयोगबंधः पुनरादिमानेव पर्यायतः । सौक्ष्म्यं द्विविधमत्यक्षमापेक्षिकं च । तथा स्थौल्यं संस्थानमित्थंलक्षणं चतुरस्रादिकमनित्थंलक्षणं च अनियताकारं । भेदः षोढा उत्करश्चूर्णः खंडस्तूर्णिका प्रतरोणुचटनमिति । तमो दृष्टिप्रतिबंधकारणं केषांचित् । छाया प्रकाशावरणं । आतप उष्णप्रकाशलक्षणः । उद्योतश्चंद्रादिप्रकाशोनुष्णः । त एते शब्दादयः स्वरूपतो भेदतश्च सुप्रसिद्धा एव । कुतः पुनः पुद्गलाः शब्दादिमंतः सिद्धा इत्याह;—

प्रोक्ता शब्दादिमंतस्तु पुद्गलाः स्कंधभेदतः । तथा प्रमाणसद्भावादन्यथातदभावतः ॥ १ ॥

न हि परमाणवः शब्दादिमंतः संति विरोधात् स्कंधस्यैव शब्दादिमत्तया प्रतीतेः । शब्दस्याकाशगुणत्वान्न तद्वान् पुद्गलस्कंध इत्येके, तस्यामूर्तद्रव्यत्वादित्यन्ये । तान् प्रत्याह;—

न शब्दः खगुणो बाह्यकरणज्ञानगोचरः । सिद्धो गंधादिवन्नैव सोमूर्तद्रव्यमप्यतः ॥ २ ॥
न स्फोटात्मापि तस्यैव स्वभावस्याप्रतीतितः । शब्दात्मनस्सदा नानास्वभावस्यावभासनात् ३
अंतःप्रकाशरूपस्तु शब्दे स्फोटोपरे ध्वनेः । यथार्थगतिहेतुः स्यात्तथा गंधादितोपरः ॥ ४ ॥
गंधरूपरसस्पर्शः स्फोटः किं नोपगम्यते । तत्राक्षेपसमाधानसमत्वात्सर्वथार्थतः ॥ ५ ॥

नाकाशगुणः शब्दो बाह्येंद्रियविषयत्वाद्गंधादिवदित्यत्र न हेतुर्व्यभिचारी विपक्षावृत्तित्वात् । पटाकाशसंयोगेन व्यभिचार इतिचेन्न, तस्याकाशगुणत्वैकांताभावात् तदुभयगुणत्वात् । तत्र बाह्येंद्रियविषयत्वासिद्धेः संयोगिनो गगनस्यातींद्रियत्वात् । पटस्येंद्रियविषयत्वेपि तत्संयोगस्य तदयोगात् । तदुक्तमन्यैः । "द्वयसंबंधसंवित्तिर्नैकरूपप्रवेदनात् । द्वयस्वरूपग्रहणे सति संबंधवेदनं ॥" इति । एतेनैतदपि प्रत्युक्तं । यदुक्तं यौगैः—न स्पर्शवद्द्रव्यगुणः शब्दोऽस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वादकारणगुणपूर्वकत्वाद्वा सुखादिवदिति, पक्षस्य प्रकृतानुमानबाधितत्वात् । शब्दस्य द्रव्यार्थादेशादयावद्द्रव्यभावित्वासिद्धिः स्वरूपादिवत् । पर्यायार्थादेशादकारणगुणपूर्वत्वस्याप्यसिद्धिः शब्दपरिणतानां पुद्गलानामपरापरसदृशशब्दारंभकत्वात् । अन्यथा वक्तृदेशादन्यत्र शब्दस्याश्रवणप्रसंगात् । ननु च वक्तृव्यापारात्पुद्गलस्कंधः शब्दतया परिणमन्नेकोनेको वा परिणमेत्? न तावदेकस्तस्य सकृत्सर्वदिक्षु गमनासंभवात् । यदि पुनर्यावद्भिः सर्वदिक्कैः श्रोतृभिः श्रूयते शब्दस्तावानेव वक्तृव्यापारनिष्पन्नः तच्छ्रोत्राभिमुखं गच्छतीति तैर्मतं, तदा सदृशशब्दकोलाहलश्रवणं श्रोतृजनस्य कुतो न भवेत्? सर्वेषां शब्दानामेकैकश्रोतृग्राह्यत्वपरिणामाभावादिति चेत्, तर्ह्येकैकः शब्द एकैकश्रोतृग्राह्यत्वपरिणतः सर्वदिक्कं गच्छन्नेकैकेनैव श्रोत्रा श्रूयते इत्यायातं । तच्चायुक्तं, एकदिक्केषु सप्रणिधिषु श्रोतृषु स्थितेष्वत्यासन्नश्रोतृश्रोत्रस्य परापरश्रोतृश्रवणविरोधात् । परापर एव शब्दः परापरश्रोतृभिः श्रूयते न पुनः स एवेति चेत्, स तर्हि परापरशब्दः किं वक्तृव्यापारादेव प्रादुर्भवदाहोस्वित्पूर्वश्रोतृशब्दात्? प्रथमपक्षे कथमसौ परापरैः श्रोतृभिः श्रूयमाणः पूर्वपूर्वैः सममाकाशश्रेणिस्थैरपि न श्रूयते इति महदाश्चर्यं । न चैवं कारणगुणपूर्वकः शब्दः सिध्येत् । द्वितीयविकल्पे पर्यंतस्थितश्रोतृश्रुतशब्दादपि शब्दांतरोत्पत्तिः कथं न भवेत्? पुद्गलस्कंधस्य तदुपादानस्य सद्भावात् । वक्तृव्यापारजनितवायुविशेषस्य तत्सहकारिणस्तत्राभावादिति चेत्, तर्हि वायवीयः शब्दोस्तु किमपरेण पुद्गलविशेषेण तदुपादानेन कल्पितेनादृष्टकल्पनामात्रहेतुना किं कर्तव्यं, तथोपगमे स्वमतविरोधात् । ततः स्याद्वादिनो दुर्निवार इति कश्चित् । सोप्यनालोचितवचनः, शब्दस्य गगनगुणत्वेपि प्रतिपादितदोषस्य समानत्वात् । तथाहि—शंखमुखसंयोगादाकाशे शब्दः प्रादुर्भवन्नेक एव प्रादुर्भवेदनेको वा? प्रथमपक्षे कुतस्तस्य नानादिक्कैः श्रोतृभिः श्रवणं? सकृत्सर्वदिक्कगमनासंभवात् । अथानेकस्तदा शब्दकोलाहलश्रुतिप्रसंगः समानः शब्दस्यानेकस्य सकृदुत्पत्तेः, सर्वदिक्काशेषश्रोतृश्रूयमाणस्य तावद्धा भेदसिद्धेः । यदि पुनरेकैकस्यैव शब्दस्यैकैकश्रोतृग्राह्यस्वभावस्योत्पत्तेर्न समानशब्दकलकलश्रुतिरिति मतं, तदैकदिक्केषु समानप्रणिधिषु श्रोतृषु प्रत्यासन्नतमश्रोतृश्रुतस्य शब्दस्यांत्यत्वाच्छब्दांतरारंभकत्वविरोधाच्छेषश्रोतॄणां तच्छ्रवणं न स्यात् । तस्यापरशब्दारंभकत्वे चांत्यत्वाव्यवस्थितिः । प्रत्यासन्नतमश्रोतृश्रवणमपि न भवेत् तद्भावे वाद्य एव शब्दः श्रूयते नांत्य इति सिद्धांतव्याघातः । अथ प्रत्या-

समस्तश्रोतारं प्रत्यसौ शब्दोंत्यस्तेन श्रूयमाणत्वाच्च प्रत्यासन्नतरं तेन तस्याश्रवणात् तेन च श्रूयमाणस्तमेव प्रत्यंतो न तु प्रत्यासन्नं प्रति । तत एव सोपि तमेव प्रत्यंत्यो न दूरश्रोतारं प्रतीति मतिः; सापि न श्रेयसी, शब्दस्यैकस्यांत्यत्वानंत्यत्वविरोधात्तस्य निरंशत्वोपगमात् । अथ तस्यापि धर्मभेदोपगमाददोषः स तर्हि धर्मशब्दस्य जातिरेव भवितुमर्हति न गुणादिः शब्दस्य स्वयं गुणत्वात् तदाश्रयत्वासंभवात् । न च तदंत्यत्वं तदनंत्यत्वं वा जातिरेकव्यक्तिनिष्ठत्वात् जातेस्त्वनेकव्यक्तिवृत्तित्वात् । अथैकश्रोतृश्रवणयोग्योनेकः शब्दोंत्योऽनंतश्चापरश्रोतृश्रवणयोग्योस्तीति मतं, तर्ह्याद्योपि शब्दोंत्यः स्यात् कस्यचिच्छ्रवणयोग्यत्वात् कर्णशः कुड्यांतःप्रविष्टमाकाशशब्दवत् कर्णघोषवद्वा । तथा चाद्यः शब्दो न श्रूयते इति सिद्धांतविरोधः । अथ न श्रवणयोग्यत्वादंत्यत्वं किं तर्हि? आद्यापेक्षया शब्दांतरानारंभकत्वापेक्षया चेत्यभिमतिस्तदाद्यस्यांत्यत्वं तदंत्यस्यानंत्यत्वं कथमुपपद्यते? येनैकस्यांत्यत्वमनंत्यत्वं च स्यात् । ततः सूक्तं प्रत्यासन्नतमश्रोतृश्रुतशब्दाच्छब्दांतरस्याप्रादुर्भावादेकदिक्कसप्रणिधिश्रोतृपंक्त्या शब्दश्रवणभावप्रसंग इति । स्यान्मतं, शंखमुखसंयोगादाकाशे बहवः शब्दाः समानाः प्रत्याकाशप्रदेशकदंबके शंखादुपजायंते ते च पवनप्रेरिततरंगात्मवच्छब्दांतरानारभंते; ततो भिन्नदिक्कसप्रणिधिश्रोतृपंक्तेरिवैकदिक्कसप्रणिधिश्रोतृपंक्तेरपि प्रतिनियतसंततिपतितस्यैव शब्दस्य श्रवणमेकस्यैव च श्रोतुर्न पुनरन्यस्य यतो निगदितदोषः स्यादिति । तदप्यनालोचिताभिधानं शब्दसंततेः सर्वतोपर्यंततापत्तेः । समवायिकारणस्य गगनस्यासमवायिकारणस्य च शब्दस्य शब्दांतरोत्पत्तिहेतोः सद्भावात् शंखमुखसंयोगजपवनाकाशसंयोगस्य शब्दकारणस्याभावान्नांत्याभिमतः शब्दः शब्दांतरमारभते यतः शब्दसंततिपर्यंतता स्यादिति चेत्, तर्हि वायवीयः शब्दोस्तु किमाकाशेन समवायिना कल्पितेनेति मतांतरं स्यात् । शब्दाच्छब्दोत्पत्तिर्न स्यात्तस्यापि पवनसंयोगजत्वात् । सत्येवाकाशे शब्दस्योत्पत्तिस्तत्समवायिकारणं न तत्प्रतिषेधहेतवो गमकाः स्युर्बाधितविषयत्वादिति मतं, तदा शब्दः स्पर्शवद्द्रव्यपर्यायो बाह्येंद्रियप्रत्यक्षत्वात्स्पर्शादिवदित्यनुमानात्तस्य पुद्गलपर्यायत्वे सिद्धे तत्प्रतिषेधहेतवोनुमानबाधितविषयत्वादेव गमकाः कथमुपपद्येरन्? । एतेन यदुक्तं सौगतैः—एकद्रव्याश्रितः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेंद्रियप्रत्यक्षत्वाद्रूपवदिति । तदपि प्रत्याख्यातं, पुद्गलस्कंधस्यैकद्रव्यस्य शब्दाश्रयत्वोपपत्तेः सिद्धसाधनत्वात् । गगनाश्रयत्वे साध्ये साध्यविकलो दृष्टांत, स्याद्धेतुश्च विरुद्धः । तथाहि—स्पर्शवदेकद्रव्याश्रितः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेंद्रियप्रत्यक्षत्वात् रूपादिवत् । न च हेतोरात्मना व्यभिचारस्तस्यांतःकरणप्रत्यक्षत्वात् । नापि घटादिना तस्य बाह्येंद्रियप्रत्यक्षत्वात् अंगुलसंयोगस्यानेकद्रव्याश्रितस्य स्पर्शनेन च साक्षात्करणात् । ततः सूक्तं—न शब्दः खगुणो बाह्येंद्रियप्रत्यक्षत्वात् गंधादिवदिति तस्य पुद्गलपर्यायत्वव्यवस्थितेः । तथा नामूर्तिद्रव्यं शब्दः बाह्येंद्रियप्रत्यक्षात् घटादिवत् । न नभसा व्यभिचारः साधनस्य, नभसो बाह्येंद्रियाप्रत्यक्षत्वात् । ननु च शुषिरस्य चक्षुषा स्पर्शनेन च साक्षात्करणाद्यच्छुषिरं तदाकाशमिति वचनाद्बाह्येंद्रियप्रत्यक्षमेवाकाशं तस्येदंतया प्ररूपणादिति चेत्; नैतत्सत्यं, शुषिरस्य घनद्रव्याभावरूपत्वादुपचारतस्तत्राकाशव्यपदेशाद् घनद्रव्याभावस्य च द्रव्यांतरसद्भावरूपत्वात् । तत्र चक्षुषः स्पर्शनस्य च व्यापारात् । परमार्थतस्तत्प्रत्यक्षत्वाभावान्नभसः । तथाहि—नभो न बाह्येंद्रियप्रत्यक्षममूर्तद्रव्यत्वादात्मादिवत् यत्तु बाह्येंद्रियप्रत्यक्षं तन्नामूर्तद्रव्यं यथा घटादिद्रव्यं इति न नभसा व्यभिचारी हेतुः । स्यादाकूतं ते, अमूर्तद्रव्यं शब्दः परममहत्त्वाश्रयत्वादाकाशवदित्यनुमानबाधितः पक्ष इति । तदसम्यक्; परममहत्त्वाश्रयत्वस्यासिद्धत्वात् । तथाहि—न परममहान् शब्दः अस्मदादिप्रत्यक्षत्वात् पटादिवत् । नापि मानसप्रत्यक्षेण नभसा, तस्यास्मदादिमनःप्रत्यक्षत्वासिद्धेः । संव्यवहारतोनिंद्रियप्रत्यक्षस्य स्वसंवेदनस्य सुखादिप्रतिभासिनश्चक्षुरादिपरिच्छि-

सार्वज्ञस्य च विशदस्याभ्युपगमात् । गगनादिष्वतींद्रियेषु मानसप्रत्यक्षानवगमात् । न चैवं मतिज्ञानस्य सर्वद्रव्यविषयत्ववचनं विरुध्यते, गगनादीनामतींद्रियद्रव्याणां स्वार्थानुमानमतिविषयत्वाभ्युपगमात् । अस्मदादिप्रत्यक्षया सत्तयानेकांत इत्यपि न स्याद्वादिना क्षम्यते, सत्तायाः सर्वथा परममहत्त्वाभावात् । परममहतो द्रव्यस्य नभसः सत्ता हि परममहती नासर्वगतद्रव्यादिसत्ता । न च नभसः सत्तास्मदादिप्रत्यक्षा ततो न तया व्यभिचारः । न च सकलद्रव्यपर्यायव्यापिन्येकैव सत्ता प्रसिद्धा, तस्यास्तथोपचारतः प्रतिपादनात् । परमार्थतस्तदेकत्वे विश्वरूपत्वविरोधात् । सत्प्रत्ययाविशेषादेकैव सत्तेति चेन्न, सर्वथा सत्प्रत्ययाविशेषस्यासिद्धत्वात् संयुक्तप्रत्ययाविशेषवत् । अत्रान्ये प्राहुः—न द्रव्यं शब्दः किं तर्हि? गुणः प्रतिषिद्धमानद्रव्यकर्मत्वे सति सत्त्वाद्रूपवत् । शब्दो न द्रव्यमनित्यत्वे सत्यस्मदाद्यचाक्षुषप्रत्यक्षत्वात् । शब्दो न कर्माचाक्षुषप्रत्यक्षत्वाद्रसवदिति । तदयुक्तं; (मीमांसकान् प्रति) तेषां वायुनास्मदाद्यचाक्षुषप्रत्यक्षत्वस्य व्यभिचाराद्वायोरस्मदादिप्रत्यक्षत्वात् । अनित्यत्वविशेषणस्य चाप्रसिद्धत्वात् द्रव्यत्वप्रतिषेधानुपपत्तेः । कर्मत्वप्रतिषेधनस्य चाक्षुषप्रत्यक्षत्वस्य वायुकर्मणानैकांतिकत्वात् । द्रव्यं शब्दः क्रियावत्त्वाद्घ्राणादिवदित्यपरे । ते यदि स्याद्वादमनासृत्याचक्षते तदापसिद्धांतः शब्दस्य पर्यायतया प्रवचने निरूपणादन्यथा पुद्गलानां शब्दवत्त्वविरोधात् । द्रव्यार्थादेशाद्द्रव्यं शब्दः पुद्गलद्रव्याभेदादिति चेत्, किमेवं गंधादिरपि द्रव्यं न स्यात्? गंधादयो गुणा एव द्रव्याश्रितत्वात् निर्गुणत्वाच्च 'द्रव्याश्रया निर्गुणा गुणा' इति वचनान्निष्क्रियत्वाच्चेति चेत्, शब्दस्तत एव गुणोऽस्तु । सहभावित्वाभावान्न गुण इति चेत्, कथं रूपादिविशेषास्तत एव गुणा भवेयुः । सामान्यार्पणात्तेषां सहभावित्वात् पुद्गलद्रव्येण तद्गुणास्ते इति चेत्, शब्द·········समवायिकारणमस्तु भवत एव पृथिवीद्रव्याभावे सत्यप्याकाशे गंधस्यानुत्पत्तेः पृथिवी द्रव्यमेव तत्समवायिकारणमाकाशं तु निमित्तमिति चेत्, तर्हि वायुद्रव्यस्याभावे शब्दस्यानुत्पत्तेः तदेव तस्य समवायिकारणमस्तु गगनं तु निमित्तमात्रं तस्य सर्वोत्पत्तिमतामुत्पत्तौ निमित्तकारणत्वोपगमात् । पवनद्रव्याभावेपि भेरीदंडसंयोगाच्छब्दस्योत्पत्तेर्न पवनद्रव्यं तत्समवायि पृथिव्यप्तेजोद्रव्यवदिति चेत्, तर्हि शब्दपरिणामयोग्यं पुद्गलद्रव्यं शब्दस्योपादानकारणमस्तु वाय्वादेरनियततया तत्सहकारित्वसिद्धेः । कुतस्तत्सिद्धिरिति चेत्, पृथिव्यादेः कुतः? प्रतिविशिष्टस्पर्शरूपरसगंधानामुपलंभात्पृथिव्याः सिद्धिः, स्पर्शरूपरसविशेषाणामुपलब्धेरपां, स्पर्शरूपविशेषयोरुपलब्धेस्तेजसः, स्पर्शविशेषस्योपलंभाद्वायोः । स्वाश्रयद्रव्याभावे तदनुपपत्तेरिति चेत्, तर्हि शब्दस्य पृथिव्यादिष्वसंभविनः स्फुटमुपलंभात्तदाश्रयद्रव्यस्य भाषावर्गणापुद्गलस्य प्रसिद्धिरन्यथा तदनुपपत्तेः । न च परमाणुरूपः पुद्गलः शब्दस्याश्रयोऽस्मदादिबाह्येंद्रियग्राह्यत्वात् छायातपादिवत् । स्कंधरूपस्तु स्यादिति सूक्ष्मशब्दगुणात्मकेभ्यः सूक्ष्मभाषावर्गणापुद्गलेभ्योऽस्मदादिबाह्येंद्रियग्राह्यपुद्गलस्कंधात्मा शब्दः प्रादुर्भवन् कारणगुणपूर्वक एव पटरूपादिवत् । ततोऽकारणपूर्वकत्वादित्यसिद्धो हेतुरयावद्द्रव्यभावित्वादिवत् । कश्चिदाह—अकारणगुणपूर्वकः शब्दोऽस्पर्शद्रव्यगुणत्वात् सुखादिवदिति; तस्यापि परस्पराश्रयः । सिद्धे ह्यकारणगुणपूर्वकत्वे शब्दस्यास्पर्शवद्द्रव्यगुणत्वं सिध्येत् तत्सिद्धौ चाकारणगुणपूर्वकत्वमिति । तथा नाकारणगुणपूर्वकः शब्दोऽस्मदादिबाह्येंद्रियज्ञानपरिच्छेद्यत्वे सति गुणत्वात् पटरूपादिवदित्यनुमानविरुद्धश्च पक्षः स्यात् । न चात्र हेतोः परमाणुरूपादिना व्यभिचारः सुखादिना वा, बाह्येंद्रियज्ञानपरिच्छेद्यत्वे सतीति विशेषणात् । तथापि योगिबाह्येंद्रियप्रत्यक्षेण परमाणुरूपादिनानेकांत इति न शंकनीयमस्मदादिग्रहणात् । पृथिवीत्वादिसामान्येनानित्यद्रव्यविशेषेण समवायेन कर्मणा वा व्यभिचार इत्यपि न मंतव्यं, गुणत्वादिति वचनात् । न चैवं स्याद्वादिनामपसिद्धांतः शब्दस्य पर्यायत्ववचनात् पर्या-

यत्न च गुणत्वात् । तथा चाहुरकलंकदेवाः, 'शब्दः पुद्गलपर्यायः स्कंधः छायातपादिवदिति । स्यान्मतं, न शब्दः न पुद्गलस्कंधपर्यायोऽसदाद्यनुपलभ्यमानस्पर्शरूपरसगंधाश्रयत्वात्सुखादिवदिति । तदसत्, व्यणुकादिरूपादिना हेतोर्व्यभिचारात् । शब्दाश्रयत्वेसदाद्यनुपलभ्यमानानामप्यनुद्भूततया स्पर्शादीनां सद्भावसाधनात् । गंधाश्रयत्वे स्पर्शरूपरसवत् । गंधो हि कस्तूरिकादेर्गंधद्रव्याद्दूरे गंधं समुपलभ्यमाने घ्राणेंद्रिये संप्राप्तः स्वाश्रयद्रव्यरहितः न संभवति, गुणत्वाभावप्रसंगात् । नापि तदाश्रयद्रव्यमसदादिभिरुपलभ्यमानस्पर्शरूपरसं । न च तत्रानुभूतवृत्तयः स्पर्शरूपरसा न संति पार्थिवेप्यविरोधात् । यथा वायोरनुपलभ्यमानरूपरसगंधस्य तेजसश्चानुपलभ्यमानरसगंधस्य सलिलस्य चानुपलभ्यमानगंधस्य पर्या-……गयं स्पर्शरूपरसगंधाः प्रसिद्धास्तथानुपलभ्यमानस्पर्शरूपरसगंधस्यापि भाषावर्गणापुद्गलस्य पर्यायः शब्दो निस्संदेहं प्रसिध्यत्येव । कथमन्यथैवमाचक्षाणः प्रतिक्षिप्यते परैः । न वायुगुणोनुष्णाशीतस्पर्शोपाकजः उपलभ्यत्वे सत्यसदाद्यनुपलभ्यमानरूपरसगंधाश्रयत्वात्सुखादिवत् । तथा न भासुररूपोष्णस्पर्शस्तेजोद्रव्यगुण उपलभ्यत्वे सत्यसदाद्यनुपलभ्यमानगंधाश्रयत्वात् तद्वत् । तथा न शीतस्पर्शनीलरूपमधुररसाः सलिलगुणाः उपलभ्यत्वे सत्यसदाद्यनुपलभ्यमानगंधाश्रयत्वात्तद्वदेवेति । यदि पुनः स्पर्शादयो द्रव्याश्रया एव गुणत्वात्सुखादिवत् यत्तद्द्रव्यं तदाश्रयः स वायुरनलः सलिलं क्षितिरित्यनुमानसिद्धत्वात्स्पर्शविशेषादीनां वाय्वादिगुणत्वस्य सामान्यार्पणया किं न भाषावर्गणपुद्गलद्रव्येण सहभावीष्टो येन तद्गुणो न स्यात् । विशेषार्पणात् यथा रूपादयः पर्यायास्तथा शब्दोपि पुद्गलपर्याय इति कथमसौ द्रव्यं स्यात्? षड्द्रव्यप्रतिज्ञानविरोधाच्च । शब्दद्रव्यस्य पृथिव्यादिवत्पुद्गलद्रव्येंतर्भावान्न तद्विरोध इति चेत्, गंधद्रव्यादीनामपि तद्वत्तत्रांतर्भावात्तद्विरोधासिद्धेर्गुणत्वं किमभिधीयते ज्ञानादीनां च द्रव्यत्वमस्तु जीवद्रव्येंतर्भावत्वाप्रसक्तेः द्रव्यसंख्यानियमाविघातात् । तथा च न कश्चिद्गुण इति द्रव्यस्याप्यभावः तस्य गुणवत्त्वलक्षणत्वात् । ततो द्रव्यगुणपर्यायव्यवस्थामिच्छता ज्ञानादिरूपादीनामिव शब्दस्य सहभाविनो गुणत्वं क्रमभुवस्तु पर्यायत्वमभ्युपगंतव्यं । क्रियावत्त्वं च शब्दस्यासिद्धं गंधादिवत् तदाश्रयस्य पुद्गलद्रव्यस्य क्रियावत्त्वोपचारात् । स्यान्मतं, न शब्दपर्यायः श्रोत्रग्राह्यो द्रव्यं साध्यते किं तु तदाश्रयः पुद्गलविशेष इति, तर्हि क्रियावद्द्रव्यपर्यायः शब्दः परमार्थतः साध्यः । स्यादाकूतं ते; न द्रव्यं शब्दः साध्यते, नापि सर्वथा पर्यायं । किं तर्हि? द्रव्यपर्यायात्मा, ततो न कश्चिद्दोषः क्रियावत्त्वस्य हेतोरपि परमार्थतस्तत्र सिद्धेः अनुवातप्रतिवाततिर्यग्वातेषु शब्दस्य प्रतिपत्त्यप्रतिपत्तीषत्प्रतिपत्तिदर्शनात् क्रियाक्रियावत्त्वसाधनादिति । किमेवं गंधादिर्द्रव्यपर्यायात्मा न साध्यते? 'द्रव्यपर्यायात्मार्थं' इत्यकलंकदेवैरभिधानात् स्पर्शादीनां चेंद्रियार्थत्वकथनात्, स्पर्शरसरूपगंधशब्दास्तदर्था इति सूत्रसद्भावात् । अथ पर्यायार्थप्राधान्यात् पर्याय एव गंधादयः शब्दस्तथा किमपर्यायः शब्दो? द्रव्यार्थादेशात् द्रव्यमिति चेत्, तर्हि तथा विशेषणं कर्तव्यं । स्याद्द्रव्यं शब्द इति तदप्रयुक्तमपि वा तत्रैषितव्यं । ततो नैकांतेन द्रव्यं शब्दः स्याद्वादिनां सिद्धो यतस्तस्य द्रव्यत्वप्रतिषेधेपसिद्धांतः तस्यामूर्तद्रव्यत्वप्रतिषेधाद्वा न दोषः कश्चिदवतरति । कश्चिदाह—स्फोटोऽर्थप्रतिपत्तिहेतुर्न ध्वनयस्तेषां प्रत्येकं समुदितानां वार्थप्रतिपत्तिनिमित्ततानुपपत्तेः । देवदत्तादिवाक्ये दकारोच्चारणादेव तदर्थप्रतिपत्तौ शेषशब्दोच्चारणवैयर्थ्यान्न प्रत्येकं तन्निमित्तत्वं युक्तं, दकारस्य वाक्यांतरेपि दर्शनात् । संशयनिरासार्थं शब्दांतरोच्चारणमुचितमेवेति चेन्न, आवृत्त्या वाक्यार्थप्रतिपत्तिप्रसंगात् । वर्णांतरेपि तस्यैवार्थस्य प्रतिपादनात् । न च समुदितानामेव वाक्यार्थप्रतिपत्तिहेतुत्वं प्रतिक्षणं विनाशित्वे समुदायासंभवात् । कल्पितस्य तत्समुदायस्य तद्धेतुत्वेतिप्रसंगात् । नित्यत्वाद्वर्णानां समुदायः संभवतीति चेत् न, अभिव्यक्तानां तेषां क्रमवृत्तित्वात्तदभिव्यंजकध्वनीनामपि-

त्यत्वात् क्रमभावित्वात् क्रमशस्तदभिव्यक्तिसिद्धेः । तेषामनभिव्यक्तानामर्थप्रतिपत्तिहेतुत्वे तदभिव्यंजकव्यापारवैयर्थ्यादतिप्रसंगाच्च । तत एवाभिव्यक्तानभिव्यक्तशब्दसमूहादर्थप्रतिपत्तिरिति प्रतिव्यूढं । पूर्वपूर्ववर्णज्ञानाहितसंस्कारापेक्षादंत्यवर्णश्रवणाद्वाक्यार्थप्रतिपत्तिरिति चेन्न, तत्संस्काराणामनित्यत्वेंत्यवर्णश्रवणकाले सत्त्वविरोधादसतोपेक्षानुपपत्तेः । कल्पनारोपितसंस्कारापेक्षायां कल्पनारोपितादेव वाक्यार्थप्रतिपत्तिप्रसंगात् तत्संस्काराणां कालांतरस्थायित्वेंत्यवर्णश्रवणाहितसंस्कारस्य पूर्ववर्णश्रवणाहितसंस्कारैः सहार्थप्रतिपत्तिहेतुत्वमिति तत्संस्कारसमूहोऽर्थप्रतिपत्तिहेतुर्न शब्द इत्यायातं । न चैतद्युक्तं, वर्णश्रवणाहितसंस्कारेभ्यो वर्णस्मरणमात्रस्यैवोपपत्तेः पदश्रवणाहितसंस्कारेभ्यः पदस्मरणमात्रवत् । अथ संकेतबलोपजातपदाभिधेयज्ञानाहितसंस्कारेभ्योर्थप्रतिपत्तिरिष्यते तथा हि पदार्थप्रतिपत्तिरेव स्यान्न वाक्यार्थप्रतिपत्तिः । न च पदार्थसमुदायप्रतिपत्तिरेव वाक्यार्थप्रतिपत्तिरिति युक्तं, वर्णार्थसमुदायप्रतिपत्तेरेव पदार्थप्रतिपत्तिरूपत्वप्रसंगात् । न च वर्णानामर्थवत्त्वाभावे पदस्यार्थवत्त्वं घटते, तस्य प्रकृतिप्रत्ययादिसमुदायात्मकत्वात् प्रकृत्यादीनां च अर्थवत्त्वोपगमात् । यदि पुनः प्रकृत्यादयः स्वार्थापेक्षयार्थवंतोपि पदार्थापेक्षया निरर्थका एवेति मतं तदा पदान्यपि स्वाभिधेयापेक्षयार्थवंत्यपि वाक्यार्थापेक्षया निरर्थकानि किं न भवेयुः? तदुक्तं–"ब्राह्मण्यार्थो यदा नास्ति कश्चिद्ब्राह्मण्यकंबले । देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥" इति । तथा च न पदार्थसमुदाय एव वाक्यस्यार्थस्तस्य ततोन्यत्वादेकत्वे प्रतीयमानत्वादभ्यंजनक्रियादेर्देवदत्तादिवाक्यार्थत्वात् । न च तस्य वर्णेभ्य इव पदेभ्योपि विप्रतिपत्तिः संभवतीति तत्प्रतिपत्तिहेतुर्वर्णपदव्यतिरिक्तः कश्चिद्वस्त्वात्माभ्युपगंतव्यः । स च स्फोट एव, स्फुटत्यर्थोऽस्मादिति स्फोट इति तस्यैकरूपता पुनरेकाकारप्रतिभासादवसीयते नानाकारेभ्यो हेतुभ्यस्तदयोगादहेतुकत्वप्रसंगादिति । सोप्ययं स्फोटवादी प्रष्टव्यः, किमयं स्फोटः शब्दात्मकोऽशब्दात्मको वा? इति । न तावदाद्यः पक्षः श्रेयान्; तस्य स्फोटस्य शब्दात्मनः सदैकस्वभावस्याप्रतीतेः वर्णपदात्मनो नानास्वभावस्यावभासनात्, वर्णपदेभ्यो भिन्नस्यैकस्वभावस्यैव शब्दस्य श्रोत्रबुद्धौ प्रतिभासनादसिद्धा स्वभावानुपलब्धिः । स्वभावविरुद्धोपलब्धिर्वा न स्फोटाभावसाधनीति चेत् न, तस्य वर्णपदश्रवणकाले पश्चाद्वा प्रतिभासाभावात् । स हि यदि तावदाख्यातशब्दः प्रतिभासन एव वाक्यात्मा तदा नैकस्वभावोऽनेकवर्णात्मकत्वात् । भिन्न एवाख्यातशब्दोऽभ्याजेत्यादिवर्णेभ्य इत्ययुक्तं, तथा प्रतीत्यभावात् । वर्णव्यंग्योंत्यवर्णश्रवणानंतरमेकः प्रतीयत एवेति चेन्न, वर्णानां प्रत्येकं समुदितानां वा स्फोटाभिव्यक्तौ हेतुत्वाघटनादर्थप्रतिपत्ताविव सर्वथा विशेषाभावात् । यदि पुनः कथंचिद्वर्णाः स्फोटाभिव्यक्तिहेतवः स्युस्तदा तथैवार्थप्रतिपत्तिहेतवः संतु किमनया परंपरया? वर्णेभ्यः स्फोटस्याभिव्यक्तिस्ततोभिव्यक्तादर्थप्रतिपत्तिरिति कथंचिदव्यतिरिक्तः स्फोटो वर्णेभ्य इति तस्य श्रोत्रबुद्धौ प्रतिभासनोपगमे कथमेकानेकस्वभावोसौ न स्यात्? सुखदुःखादिपर्यायात्मकात्मवत् । नवपुराणादिविशेषात्मकत्वसंबंधात् । भाषावर्गणापुद्गलद्रव्यं हि स्वसहकारिविशेषवशादकाररूपतामासाद्य भकारादिरूपतामासादयत् क्रमशः प्रतिनियतवक्तृविशेषादिरभ्याजेत्यादिराख्यातशब्दः प्रतिभासते न चासौ वाक्यं देवदत्तादिपदनिरपेक्षस्तदुच्चारवैयर्थ्यापत्तेः । सत्रापेक्षस्य तु वाक्यत्वे देवदत्तो गामभ्याज शुक्लां दंडेनेत्यादि कथंचित्पदात्मकं वाक्यमेकानेकस्वभावमाख्यातशब्दवदभिधातव्यं, तन्निराकृतौ क्षणक्षयैकतावकंबनप्रसंगात् । क्रमभुवां केषांचिद्वर्णानां वास्तवैकपदत्वाभावे क्षणिकवर्णभागानामपि पारमार्थिकैकवर्णत्वासिद्धेस्तथोपगमे वांतर्बहिरात्मनो घटादेश्च क्रमभाव्यनेकपर्यायात्मकस्याभावानुषंगात् । ततस्तद्भावमभ्युपगच्छता क्षणिकानेकक्रमवृत्तिवर्णभागात्मकमेकं वर्णमभ्युपेयं, तद्वदनेकक्रमवत्तवर्णात्मकमेकं पदं तादृशानेकपदात्मकं च वाक्यमेषितव्यं । ततो नाख्यातशब्दो

वाक्यात्मैकस्वभाव एव कथंचिदनेकस्वभावस्य तस्य प्रतीतेः। एतेन पदमाद्यमंत्यं चान्यद्वा पदांतरापेक्षं वाक्यमेकस्वभावमिति निरस्तं, तस्याप्याख्यातशब्दवत्कथंचिदनेकस्वभावस्य प्रतिभासनात्। एकोनवयवः शब्दो वाक्यमित्ययुक्तं, तस्य सावयवस्य प्रतिभासनात्। तस्य चावयवेभ्योनर्थांतरत्वेऽनेकत्वमेव स्यात्, तदर्थांतरत्वे संबंधासिद्धिः उपकारकल्पनायां वाक्यस्यावयवकार्यत्वप्रसंगस्तैरुपकार्यत्वादवयवानां वा वाक्यकार्यता तेनोपक्रियमाणत्वात् उपकारस्य ततोर्थांतरत्वे संबंधासिद्धिरनुपकारात् तदुपकारांतरकल्पनायामनवस्थाप्रसंग इति वाक्यतदवयवाभेदभेदैकांतवादिनामुपालंभः। स्याद्वादिनां यथाप्रतीति कथंचित्सदभेदोपगमात् एकानेकाकारप्रतीतेरेकानेकात्मकस्य जात्यंतरस्य व्यवस्थितेः। न हि वाक्यश्रवणानंतरमनेकाकारप्रतीतिवत्सर्वदा सर्वत्र सद्भावप्रसंगात्। नापि वर्णपदमात्रहेतुका तदाकारत्वप्रसंगाद्वर्णपदप्रतीतिवत्। ततो वाक्याकारपरिणतशब्दद्रव्यहेतुका वाक्यप्रतीतिवच्च तथा परिणतशब्दद्रव्यमेकानेकाकारं परमार्थतः सिद्धं बाधकाभावात्। कथं नानाभाषावर्गणापुद्गलपरिणामवर्णानामेकद्रव्यत्वमिति चेत्, तत्रोपचारान्नानाद्रव्यादिसंतानवत्। किं पुनस्तदनेकत्वोपचारनिमित्तमिति चेत्, तथा सदृशपरिणाम एव तद्वत् वर्णक्रमो वाक्यमित्यपरः। सोपि वर्णेभ्यो भिन्नमेकस्वभावं क्रमं यदि ब्रूयात्तदा प्रतीतिविरोधः तस्य श्रोत्रबुद्धावप्रतिभासनात्। तत्संबंधानुपपत्तेश्चानवयववाक्यवत्। वर्णेभ्योनर्थांतरत्ववत् क्रमस्य वर्णा एव न कश्चित्क्रमः स्यात्। सत्यमेतदेवं, यावंतो यादृशा ये च पदार्थप्रतिपादने वर्णा विज्ञातसामर्थ्यास्ते तथैव बोधका इति वचनात् ततोन्यस्य वाक्यस्य निराकरणादितीतरः। सोपि यदि वर्णानां क्रमं प्रत्याचक्षीत तदाग्निष्टोमेन यजेत स्वर्गकाम इत्याकारादयो ये यावंतश्च वर्णाः स्वेष्टवाक्यार्थप्रतिपादने विज्ञातसामर्थ्यास्ते तावंत एव वेत्युद्रमेनापि समुच्चार्यमाणास्तथा स्युर्विशेषाभावात्। अथ येन क्रमेण विशिष्टास्ते तथा दृष्टास्तादृशा एव तदर्थस्यावबोधका इति मतं, तर्हीष्टः क्रमो वर्णानामन्यथा तेन विशेषणाघटनात् वर्णाभिव्यक्तेः क्रमो वर्णानां तेषामक्रमत्वात्। उपचारात्तु तस्य तत्र भावात्तद्विशेषणत्वमुपपद्यत एवेति चेन्न, एकांतनित्यत्वे वर्णानामभिव्यक्तेः सर्वथानुपपत्तेः उत्पत्तिसमर्थनात्तत्र मुख्यक्रमस्य प्रसिद्धेः। कः पुनरयं क्रमो नाम वर्णानामिति चेत्, कालकृता व्यवस्थेति ब्रूमः। कथमसौ वर्णानामिति चेत्, वर्णोपादानादुदात्ताद्यवस्थावत्। तत्रौपाधिकः क्रमो वर्णानामिति चेन्न, उदात्ताद्यवस्थानामप्यौपाधिकत्वप्रसंगात्। औपाधिक्युदात्ताद्यवस्था एव वाचो वर्णत्वात् ककारादिवदिति चेन्न, तेषां स्वयमनंशत्वासिद्धेः। स्वभावतस्तथात्वोपपत्तेरन्यथा ध्वनीनामपि स्वाभाविकोदात्तत्वाद्ययोगात्। ततः स्वकारणविशेषवशात् क्रमविशेषविशिष्टानामकारादिवर्णानामुत्पत्तेः कथंचिदनर्थांतरक्रमः। स च सादृश्यसामान्यादुपचारादेकः, प्रतिनियतविशेषाकारतया त्वनेक इति स्याद्वादिनामेकानेकात्मकः क्रमोपि वाक्यं न विरुध्यते। वर्णसंघातो वाक्यार्थप्रतिपत्तिहेतुर्वाक्यमित्यन्ये; तेषामपि न वर्णेभ्यो भिन्नः संघातोनंशः प्रतीतिमार्गावतारी, संघातत्वविरोधादवर्णांतरवत्। नापि ततोऽनर्थांतरमेव संघातः प्रतिवर्णसंघातप्रसंगात्। न चैको वर्णः संघातो भवेत्। कथंचिदन्योन्यस्ववर्णेभ्यः संघात इति चेत्, कथमेकानेकस्वभावो न स्यात्? कथंचिदनेकवर्णादभिन्नत्वादनेकस्तत्स्वात्मवत्। संघातत्वपरिणामादेशात्ततो भिन्नत्वादेकः स्यादिति प्रतीतिसिद्धेः। एतेन संघातवर्तिनी जातिर्वाक्यमिति चिंतितं, तस्याः संघातेभ्यो भिन्नायाः सर्वथानुपपत्तेः। कथंचिदभिन्नायास्तु संघातवदेकानेकस्वभावत्वसिद्धेर्नानंशः शब्दात्मा कश्चिदेको वाक्यस्फोटोस्ति श्रोत्रबुद्धौ जात्यंतरस्यार्थप्रतिपत्तिहेतोः प्रतिभासनात् एकानेकात्मन एव सर्वात्मना वाक्यस्य सिद्धेः। यदि पुनरंतःप्रकाशरूपः शब्दस्फोटः पूर्ववर्णज्ञानाहितसंस्कारस्यात्मनोंत्यवर्णश्रवणानंतरं वाक्यार्थनिश्चयहेतुर्बुद्ध्यात्मा ध्वनिभ्योऽन्योभ्युपगम्यते, स्फुटत्यर्थोस्मिन् प्रकाशस

इति स्फोट इत्यभिप्रायात्; तदाप्येतस्यैकानेकात्मकत्वे स्याद्वादसिद्धिरात्मन एव वाक्यार्थग्राहकत्वपरिणतस्य भाववाक्यस्य संप्रत्ययात्, तस्य स्फोट इति नामकरणे विरोधाभावात् । तस्य निरंशत्वे तु प्रतीतिविरोधः, सर्वदा तस्यैकानेकस्वभावस्य त्रिधांशकस्य प्रतिभासनात् । न चायमभिनिवेशः शब्दस्फोट इति श्रेयान् गंधादिस्फोटस्य तथाभ्युपगमार्हत्वात् । यथैव शब्दः वक्तृसंकेतस्य कचिदर्थप्रतिपत्तिहेतुस्तथा गंधादिरपि, विशेषाभावात् । एवंविधमेव गंधं समाघ्रायेत्थमेवंविधोर्थः प्रतिपत्तव्यः स्पर्शं स्पृष्ट्वा रसं वास्वाद्य रूपं वालोक्येत्थंभूतमीदृशो भावः प्रत्येतव्य इति समयग्राहिणां पुनः कचित्तादृशगंधाद्युपलंभात्तथाविधार्थनिर्णयप्रसिद्धेर्गंधादिज्ञानाहितसंस्कारस्यात्मनस्तद्वाक्यार्थप्रतिपत्तिहेतोर्गंधादिपदस्फोटतोपपत्तेः । पूर्वपूर्वगंधादिविशेषज्ञानाहितसंस्कारस्यात्मनोंत्यगंधादिविशेषोपलंभानंतरं गंधादिविशेषसमुदायगम्यार्थप्रतिपत्तिहेतोर्गंधादिवाक्यस्फोटत्वघटनात् । तथा लोकव्यवहारस्यापि कर्तुं सुशकत्वात् कायप्रज्ञप्तिवत् । हस्तपादकरणमात्रिकांगहारादिस्फोटवद्वा हस्तादिपदादिस्फोट एव घटते न पुनः स्वावयवक्रियाविशेषाभिव्यंग्यो हंसपक्ष्मादिर्हस्तस्फोटः स्वाभिधेयार्थप्रतिपत्तेर्हेतुरिति स्वल्पमतिसंदर्शनमात्रं । एतेन *वित्कुटितादिः पादस्फोटो हस्तपादसमायोगलक्षणः करणस्फोटः करणद्वयरूपमात्रिका सहस्तलक्षणोंग*हारादिस्फोटश्च न घटत इति वदन्ननवधेयवचनः प्रतिपादितो बोद्धव्यः, तस्यापि स्वस्वावयवाभिव्यंग्यस्य स्वाभिधेयार्थप्रतिपत्तिहेतोरशक्यनिराकरणात् । न चैवं स्याद्वादसिद्धांतविरोधः श्रोत्रमतिपूर्वस्येव घ्राणादिमतिपूर्वस्यापि श्रुतज्ञानस्येष्टत्वात् तत्परिणतात्मनस्तद्धेतोः स्फोट इति संज्ञाकरणात् गंधादिभिः कस्यचिदसंबंधाभावात् तत्र तदुपलंभनिमित्तकप्रत्ययानुपपत्तेर्न तथा परिणतो बुद्ध्यात्मा स्फोटः संभवतीति चेत्, तत एव शब्दस्फोटोपि मास्म भूत् शब्दस्यार्थेन सह योग्यतालक्षणसंबंधसद्भावात् तत्संभवे तत एवेतरसंभवः । गंधादीनामर्थेन सह योग्यताख्यसंबंधाभावे संकेतसहस्रेपि ततस्तत्प्रतीत्ययोगाच्छब्दतः शब्दार्थवत्प्रतिपत्तुरगृहीतसंकेतस्य शब्दस्य श्रवणात् किमयमाहेति विशिष्टार्थे संदेहेन प्रश्नदर्शनादर्थसामान्यप्रतिपत्तिसिद्धेः । शब्दसामान्यस्यार्थसामान्येन योग्यतासंबंधसिद्धिरिति चेत्, तत एव रूपादिसामान्यस्य स्वदर्श्यार्थसामान्येन योग्यतासिद्धिरस्तु स्वयमप्रतिपन्नसंकेतस्यांगुल्यादिरूपदर्शने केनचित्कृते किमयमाहेति विशिष्टार्थे संशयेन प्रश्नोपलंभादर्थसामान्यप्रतिपत्तिसिद्धेरविशेषात् । तदेवं शब्दस्येवार्थे गंधादीनां प्रतिपत्तिं कुर्वतामाक्षेपसमाधानानां समानत्वादंतःप्रकाशरूपे बुद्ध्यात्मनि स्फोटे शब्दादन्यस्मिन्नुपगम्यमाने गंधादिभ्यः परं स्फोटोर्थप्रतिपत्तिहेतुर्घ्राणादींद्रियमतिपूर्वश्रुतज्ञानरूपोभ्युपगंतव्योऽन्यथा शब्दस्फोटाव्यवस्थितिप्रसंगात् । स च नैकस्वभावो नानास्वभावतया सदावभासनात् । एतेनानुसंहृतिर्वाक्यमित्यपि चिंतितं, पदानामनुसंहतेर्बुद्धिरूपतया प्रतीतेरनुसंधेयमाणानामेकपदाकारायाः सर्वथैकस्वभावत्वाप्रतीतेः । अत्रापरे प्राहुः—न पदेभ्योऽर्थांतरमेकस्वभावमेकानेकस्वभावं वा वाक्यमाख्यातशब्दरूपं पदांतरापेक्षं, नापि पदसंघातवर्तिजातिरूपं वा, न चैकानवयवशब्दरूपं क्रमरूपं वा, नापि बुद्धिरूपमनुसंहृतिरूपं वा, न चाद्यपदरूपमंत्यपदरूपं वा, पदमात्रं वा पदांतरापेक्षं यथा व्यावर्ण्यतेऽन्यैः । "आख्यातशब्दसंघातो जातिः संघातवर्तिनी । एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृति । पदमाद्यपदं चांत्यं पदसापेक्षमित्यपि । वाक्यं प्रतिमितिर्भिन्ना बहुधा न्यायवेदिना"मिति । किं तर्हि? पदान्येव पदार्थप्रतिपादनपूर्वकं वाक्यार्थावबोधं विदधानानि वाक्यव्यपदेशं प्रतिपद्यंते तथा प्रतीतेरिति तेषामपि यदि पदांतरार्थैरन्वितानामेवार्थानां पदैरभिधानात् पदार्थप्रतिपत्तिर्वाक्यार्थावबोधः स्यात्तदा देवदत्तपदाद्देवदत्तार्थस्य गामभ्याजेत्यादिपदवाच्यैरर्थैरन्वितस्याभिधानात् तदुच्चारणवैयर्थ्यमेव वाक्यार्थावबोधसिद्धेः । स्वयमविवक्षितपदार्थान्वयव्युदासार्थत्वान्न गामित्यादिपदोच्चारणवैयर्थ्यमिति चेत्, किमेवं स्फोटवादिनः प्रथम-

पदेनानवबद्धस्य वाक्यस्फोटस्याव्यक्तावपि व्यवधानांतराहितव्यंजकपदव्यवच्छेदार्थस्य पदांतरोच्चारणमनर्थकमुच्यते ? यतस्तदेव पदैरभिव्यक्तं ततोऽन्यदेवार्थप्रतिपत्तिनिमित्तं न भवेत् । तथा सत्यावृत्त्या तस्या वाक्याभिव्यक्तिप्रसंगः पदांतरैस्तस्याः पुनः प्रकाशनादिति चेत्, तवाप्यावृत्त्या वाक्यार्थावबोधः स्यात् । प्रथमपदेनाभिहितस्यार्थस्य द्वितीयादिपदार्थाभिधेयैरन्वितस्य द्वितीयादिपदैः पुनः पुनः प्रतिपादनात् । अथ द्वितीयपदेन स्वार्थस्य प्रधानभावेन पूर्वोत्तरपदवाच्यैरर्थैरन्वितस्याभिधानात् प्रथमपदाभिधेयस्य तथानभिधानात् नावृत्त्या तस्यैव प्रतिपत्तिरिति मतं, तर्हि यावंति पदानि तावंतस्तदर्थाः पदांतराभिधेयान्विताः प्राधान्येन प्रतिपत्तव्या इति तावंत्यो वाक्यार्थप्रतिपत्तयः कथं न स्युः ? न ह्यंतपदोच्चारणात्तदर्थस्याशेषपूर्वपदाभिधेयैरन्वितस्य प्रतिपत्तिर्वाक्यार्थावबोधो भवति न पुनः प्रथमपदोच्चारणात्तदर्थस्योत्तरपदाभिधेयैरन्वितस्य प्रतिपत्तिर्द्वितीयादिपदोच्चारणाच्च शेषपदाभिधेयैरन्वितस्य तदर्थस्य प्रतिपत्तिरित्यत्र किंचित्कारणमुपलभामहे । एतेनावृत्त्या पदार्थप्रतिपत्तिप्रसंग उक्तः । द्वितीयादिपदेन स्वार्थस्य च पूर्वोत्तरपदार्थानामपि प्रतिपादनादन्यथा तैस्तस्यान्वितत्वायोगात् गम्यमानैस्तैस्तस्यान्वितत्वं न पुनरभिधीयमानैरिति चेत्, स किमिदानीमभिधीयमान एव पदस्यार्थो गम्यमानः ? तथोपगमे कथमन्विताभिधानं ? विवक्षितपदस्य पदांतराभिधेयानां गम्यमानानां विषयत्वात्तैरन्वितस्य स्वार्थस्य प्रतिपादने सामर्थ्याभावात् । यदि पुनः पदानां द्वौ व्यापारौ स्वार्थाभिधाने व्यापारः पदार्थांतरे गमकत्वव्यापारश्च तदा कथं न पदार्थप्रतिपत्तिरावृत्त्या प्रसज्यते ? पदव्यापारात्, प्रतीयमानस्य गम्यमानस्यापि पदार्थत्वादभिधीयमानार्थवत् । न च पदव्यापारात् प्रतीयमानोर्थो गम्यमानो युक्तः कश्चिदेवाविशेषात् । स्यान्मतं, पदप्रयोगः प्रेक्षावता पदार्थप्रतिपत्त्यर्थो वाक्यार्थप्रतिपत्त्यर्थो वा क्रियेत ? न तावत्पदार्थप्रतिपत्त्यर्थस्तस्य प्रवृत्तिहेतुत्वाभावात् । कः पिकः ? कोकिल इत्यादि केवलपदप्रयोगस्यापि वाक्यार्थप्रतीतिनिमित्तत्वात् कः पिक उच्यते ? कोकिल उच्यते इति प्रतीतेः । यदि तु वाक्यार्थप्रतिपत्त्यर्थः पदप्रयोगस्तदा पदप्रयोगानंतरं पदार्थे प्रतिपत्तिः साक्षाद्भवतीति तत्र पदस्याभिधा व्यापारः पदांतरार्थस्यापि प्रतिपत्तये तस्याप्रयोगात् तत्र गमकत्वव्यापार इति; तदप्यसत्, पादप इति पदस्य प्रयोगे शाखादिमदर्थस्यैव प्रतिपत्तिस्तदर्थाच्च प्रतिपन्नात्तिष्ठत्यादिपदवाच्यस्य स्थानाद्यर्थस्य सामर्थ्यतः प्रतीतेस्तत्र पदस्य साक्षाद्व्यापाराभावाद्गमकत्वायोगात् तदर्थस्यैव तद्गमकत्वात् । परंपरया तस्य तत्र व्यापारे लिंगवचनस्य लिंगप्रतिपत्तौ व्यापारोस्तु । तथा सति शाब्दमेवानुमानज्ञानं भवेत् लिंगवाचकाच्छब्दाल्लिंगस्य प्रतिपत्तेः । सैव शाब्दी न पुनस्तत्प्रतिपत्तिषु लिंगादनुमेयप्रतिपत्तिरतिप्रसंगादिति चेत्, तत एव पादपस्थानाद्यर्थप्रतिपत्तिर्भवंती शाब्दी मा भूत्, तस्याः स्वार्थप्रतिपत्तावेव पर्यवसितत्वाल्लिंगशब्दवत् । कथमेवं गम्यमानः शब्दस्यार्थः स्यादिति चेत्, न कथमपीति कश्चित्; तस्यापि वाक्यार्थावसायो न शाब्दः स्यात् गम्यमानस्याशब्दार्थत्वात् वाच्यस्यैव शब्दार्थत्वज्ञानात् द्योत्यविषयभूतयोरपि वाच्यत्वात् शब्दमूलत्वात् वाक्यार्थावबोधः शाब्द इति चेत्, तत एवागम्यमानोर्थः शब्दस्यास्तु । पादपशब्दोच्चारणानंतरं शाखादिमदर्थप्रतिपत्तिवत्तत्स्थानाद्यर्थस्यापि गतेरिति स एवावृत्त्या पदार्थप्रतिपत्तिप्रसंगोन्विताभिधानवादिनः पदस्फोटवादिवत् । किं च, विशेष्यपदं विशेष्यविशेषणसामान्येनान्वितं विशेषणविशेषेण वाभिधत्ते तदुभयेन वा ? प्रथमपक्षे विशिष्टवाक्यार्थप्रतिपत्तिविरोधः । परापरविशेषणविशेष्यपदप्रयोगाद्विरोध इति चेत्, तर्ह्यभिहितान्वयप्रसंगः । द्वितीयपक्षे पुनः निश्चयासंभवः प्रतिनियतविशेषणस्य शब्देनानिर्दिष्टस्य स्वोक्तविशेषेन्वयसंप्रतीतेर्विशेषणांतराणामपि संभवात् । वक्तुरभिप्रायात् प्रतिनियतविशेषणस्य तत्रान्वयनिर्णय इति चेन्न, यं प्रति शब्दोच्चारणं तस्य तदनिर्णयादात्मानमेव प्रति-

वक्तुः शब्दोच्चारणार्थवत्वात् । तृतीयपक्षे तु उभयदोषानुषंगः । एतेन क्रियासामान्येन क्रियाविशेषेण तदुभयेन चान्वितस्य साधनसामान्यस्याभिधानं निरस्तं, क्रियायाश्च साधनसामान्येन साधनविशेषेण तदुभयेन चान्वितयोः प्रतिपादनमाख्यातं, ततो न प्रतिपाद्यबुद्धावन्वितानां पदार्थानामभिधानं प्रतीतिविरोधात् । प्रतिपादकबुद्धौ तु तेषामन्वितत्वप्रतिपत्तावपि नान्विताभिधानसिद्धिस्तत्र तेषां परेणाभिहितानामन्वयात् । अत एवाभिहितान्वयः श्रेयानित्यन्ये, तेषामप्यभिहिताः पदार्थाः शब्दांतरेणान्वीयंते बुद्ध्या वा? न तावदाद्यः पक्षः, शब्दांतरस्याशेषपदार्थविषयस्य कस्यचिदनिष्टेः । द्वितीयपक्षे तु बुद्धिरेव वाक्यं स्यान्न पुनः पदान्येव, ततो वाक्यार्थप्रतिपत्तेः पदार्थेभ्योपेक्षाबुद्धिसंनिधात् परस्परमन्वितेभ्यो वाक्यार्थप्रतिपत्तिः । परंपरया पदेभ्य एव भावान्न ततो व्यतिरिक्तं वाक्यमस्तीति चेत्, तर्हि प्रकृतिप्रत्ययेभ्यः प्रकृतिप्रत्ययार्थाः प्रतीयंते तेभ्योपेक्षाबुद्धिसंनिधानादन्योन्यमन्वितेभ्यः पदार्थप्रतिपत्तिरिति प्रकृत्यादिव्यतिरिक्तं पदमपि मा भूत्, प्रकृत्यादीनामन्वितानामभिधानमभिहितानामन्वये पदार्थप्रतिपत्तिसिद्धेः । स्यान्मतं, पदमेव लोके वेदे वार्थप्रतिपत्तये प्रयोगार्हं न तु केवला प्रकृतिः प्रत्ययो वा पदावयवो वांत्यतदुत्पादनार्थं यथाकथंचित्तदभिधानात्तत्त्वतस्तदभावः । तदुक्तं । अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवान् पवर्ष इति । यथैव हि वर्णोनंशः प्रकल्पितमात्राभेदस्तथा गौरिति पदमप्यनंशमपोद्धृत्य गकारादिभेदं स्वार्थप्रतिपत्तिमवसीयते इति । तदप्यनालोचितवचनं, वाक्यस्यैवं तात्त्विकत्वसिद्धेस्तद्व्युत्पादनार्थं ततोपोद्धृत्य पदानामुपदेशाद्वाक्यस्यैव लोके शास्त्रे वार्थप्रतिपत्तये प्रयोगार्हत्वात् । तदुक्तं । "द्विधा कैश्चित्पदं भिन्नं चतुर्धा पंचधापि वा । अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिति ॥" ततः प्रकृत्यादिभ्योवयवेभ्यः कथंचिद्भिन्नमभिन्नं च पदं प्रातीतिकमभ्युपगंतव्यं न पुनः सर्वथानंशवर्णवत्तद्ग्राहकाभावात् । तद्वत्पदेभ्यः कथंचिद्भिन्नं च वाक्यं प्रतीतिपदमास्कंददुपगम्यतां न च द्रव्यरूपं भावरूपं वा । एकानेकस्वभावं चिंतितप्रायमिति स्थितमेतच्छब्दवतः पुद्गला इति । शब्दस्य वर्णपदवाक्यरूपस्यान्यस्य च पुद्गलस्कंधपर्यायत्वसिद्धेराकाशगुणत्वेनामूर्तद्रव्यत्वेन स्फोटात्मतया वा विचार्यमाणस्यायोगात् ॥ कः पुनर्बंधः? पुद्गलपर्याय एव प्रसिद्धो येन बंधवंतः पुद्गला एव स्युरित्यारेकायामिदमाह;—

**बंधो विशिष्टसंयोगो व्योमात्मादिष्वसंभवी । पुद्गलस्कंधपर्यायः सक्तुतोयादिबंधवत् ॥ ६ ॥**

द्रव्ययोरप्राप्तिपूर्विका प्राप्तिः संयोगः स चाबाधितसंयुक्तप्रत्ययात्प्रसिद्धः, संयोगमंतरेण तस्यानुपपत्तेः । प्रत्यक्षतः कचित्संयुक्तप्रत्ययोऽसिद्धस्तस्य तत्पृष्ठभाविविकल्परूपत्वादिति चेत् न, अगृहीतसंकेतस्यापि प्रतिपत्तुः शब्दयोजनामंतरेण स्वार्थव्यवसायात्मनि प्रत्यक्षे संयुक्तप्रत्ययप्रसिद्धेर्निर्विकल्पकप्रत्यक्षस्य सर्वथा निराकृतत्वात् । तथा दृष्टे कचित्संयोगे संयुक्तविकल्पो युक्तो नीलप्रत्ययवत् तस्यासत्यत्वप्रसंगात् । न चासावसत्यो बाधकाभावात् । ननु च संयुक्तप्रत्ययः सत्यस्तद्विषयस्य वृत्तिविकल्पानवस्थादिदोषदूषितत्वादवयविप्रत्ययवदित्येतदस्ति तद्बाधकं । तथाहि—संयोगः स्वाश्रये वर्तमानो यद्येकदेशेन वर्तते तदा सावयवः स्यात्, स्वावयवेषु च स्वतो भिन्नेषु तस्यैकदेशांतरेण वृत्तौ परापरदेशकल्पनेऽनवस्था । सर्वात्मना प्रत्येकं तत्र तस्य वृत्तौ संयोगानेकत्वप्रसंगात्तथा सत्येकैकस्मिन् संयोगे संयोगप्रत्ययप्रसंगः । सकृदनेकसंयुक्तप्रत्ययप्रसंगाश्च । नैकदेशेन वर्तते नापि सर्वात्मना । किं तर्हि? वर्तत एवेति चायुक्तं, प्रकारांतरेण कचित्कस्यचिद्वर्तमानस्यादृष्टेः स्वाश्रयाभिन्नरूपस्तत्संयोगिभ्यो नैव प्रत्यासत्त्योत्पत्तौ न ततोऽर्थांतरं किंचिदित्येकांतवादिनामुपालंभो न पुनः स्याद्वादिनां, तेषां स्वाश्रयात्कथंचिद्भिन्नस्य संयोगस्याभिमतत्वात् संयोगव्यतिरेकेणानुपलब्धेः संयोगस्य तद्भिन्नत्वसिद्धेः, प्राक् प्रत्यास

तदाश्रयद्रव्यसद्भावेपि संयोगस्याभावात्ततो भेदस्यापि प्रतीतिविरोधाभावात् । नन्वसंयुक्तद्रव्यलक्षणाभ्यामुपसर्पणप्रत्ययवशात्संयुक्तयोस्तयोरुत्पत्तेर्नापरः संयोगोवभासत इति चेन्न, तयोरसंयुक्तपरिणामत्यागेन संयुक्तपरिणामस्य प्रतीतेः । संयुक्तयोः पुनर्विभागपरिणामवत् । यावेव संयुक्तौ तत्तूभयोपलब्धौ तावेव च संप्रति भक्तौ दृश्येते इति प्रत्यभिज्ञानात् संयोगविभागाश्रयद्रव्ययोरवस्थितत्वसिद्धेः । न च प्रत्यभिज्ञानमप्रमाणं तस्य प्रत्यक्षवत्स्वविषये प्रमाणत्वेन पूर्वं समर्थनात् । नन्वेवं प्रसिद्धोपि संयोगः कथं व्योमात्मादिष्वसंभवी विशेषः पुद्गलेषु सिध्येद्यतो बंधः पुद्गलानामेव पर्यायः स्यादिति चेत्, तदेकत्वपरिणामहेतुत्वात्तस्य विशिष्टत्वसिद्धिः सक्तुतोयादिबंधवत् । तर्हि यथा सक्तुतोयादीनां संयोगः पिंडैकत्वपरिणामहेतुस्तथा व्योमात्मादीनां तेषामेकद्रव्यत्वप्रसंगात् । संयोगमात्रे तु सत्यपि न तत्प्रसंगः । पुरुषसदासरणवत् । ततोस्ति पुद्गलानां बंधस्तदेकत्वपरिणामान्यथानुपपत्तेः कस्यचिदवयवद्रव्यस्यैकस्मादनेकपुद्गलपरिणामस्यासंभवादसिद्धस्तदेकत्वपरिणाम इति चेन्न, तस्य प्राक् साधितत्वात् । जीवकर्मणोर्बंधः कथमिति चेत्, परस्परं प्रदेशानुप्रवेशान्न त्वेकत्वपरिणामात्तयोरेकद्रव्यानुपपत्तेः 'चेतनाचेतनावेतौ बंधं प्रत्येकतां गतौ' इति वचनात्तयोरेकत्वपरिणामहेतुर्बंधोस्तीति चेन्न, उपसरतस्तदेकत्ववचनात् । भिन्नौ लक्षणतोत्यंतमिति द्रव्यभेदाभिधानात् । ततः पुद्गलानामेवैकत्वपरिणामहेतुर्बंध इति प्रतिपत्तव्यं बाधकाभावात् । स च स्कंधधर्म एव ॥

**तथैवावांतरं सौक्ष्म्यं परमाणुष्वसंभवि । स्थौल्यादिवत्प्रपत्तव्यमन्यथानुपपत्तितः ॥ ७ ॥**

परमसौक्ष्म्यस्याणुधर्मत्वमणूनां तत एव व्यवस्थानात् सामर्थ्यादपरसौक्ष्म्यं बिल्वाद्यपेक्षया बदरादिषु स्कंधपरिणामः बाह्येंद्रियग्राह्यत्वात् । स्थौल्यसंस्थानभेदतमश्छायातपोद्योतवत् शब्दबंधवच्च द्व्यणुकादिष्वबाह्येंद्रियग्राह्यमपि सौक्ष्म्यं स्कंधपर्याय एवापेक्षिकसूक्ष्मात्मत्वाद्बदरादिसौक्ष्म्यवत् । एतेन कार्मणशरीरादौ सौक्ष्म्यस्य स्कंधपर्यायत्वं साधितं । तथासदादिबाह्येंद्रियग्राह्याः स्थौल्यादयः सूक्ष्मपर्यायस्थौल्यत्वादस्मदादिबाह्येंद्रियग्राह्यस्थौल्यादिवत् ॥

## अणवः स्कंधाश्च ॥ २५ ॥

प्रदेशमात्रभाविस्पर्शादिपर्यायप्रसवसामर्थ्येनाण्यंते शब्द्यन्ते इत्यणवः सौक्ष्म्यादात्मादय आत्ममध्या आत्मांताश्च । तथा चोक्तं । "आत्मादिमात्ममध्यं च तथात्मांतमतींद्रियं । अविभागं विजानीयात् परमाणुमनंशकं" इति । स्थौल्यात् ग्रहणनिक्षेपणादिव्यापारास्कंदनात् स्कंधा, उभयत्र जात्यपेक्षा बहुवचनं । अणुजात्याधाराणां स्कंधजात्याधाराणां तावंतरतज्जातिभेदानामनंतत्वात् । अणुस्कंधा इत्यस्तु लघुत्वादिति चेन्नोभयत्रसंबंधार्थत्वाद्भेदकरणस्य । स्पर्शरसगंधवर्णवंतोणवः, शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च स्कंधा इति । वृत्तौ पुनः समुदायस्यार्थवत्त्वादवयवार्थाभावात् भेदेनाभिसंबंधः कर्तुमशक्यः ॥ किं पुनरनेन सूत्रेण कृतमित्याह;—

**अणवः पुद्गलाः केचित्स्कंधाश्चेति निवेदनात् । अण्वेकांतः प्रतिक्षिप्तः स्कंधैकांतश्च तत्त्वतः १**

न ह्यणव एवेत्येकांतः श्रेयान्, स्कंधानामक्षबुद्धौ प्रतिभासनात् । तत्र तत्प्रतिभासस्य भ्रांतत्वे बहिरंतश्च परमाणूनामप्रतिभासनान्न प्रत्यक्षमभ्रांतं स्यात् । स्वसंवेदनेपि संवित्परमाणोरप्रतिभासनात् । तथोपगमे सर्वशून्यतापत्तिरनुमानस्यापि परमाणुग्राहिणोसद्भावात् भ्रांतात्प्रत्यक्षतः कस्यचिन्न लिंगस्याव्यवस्थितेः कुतः परमाण्वेकांतवादः पारमार्थिकः स्यात्? स्कंधैकांतस्तत्त्वतोस्त्वित्यपि न सम्यक्, पर-

माणूनामपि प्रमाणसिद्धत्वात् । तथाहि—व्द्यणुकादिस्कंधो भेद्यो मूर्तत्वे सति सावयवत्वात् कलशवत् । योसौ तद्भेदाज्जातोनंशोवयवः स परमाणुरिति प्रमाणसिद्धाः परमाणवः स्कंधवत् ॥

## भेदसंघातेभ्य उत्पद्यंते ॥ २६ ॥

संहतानां द्वितयनिमित्तवशाद्विदारणं भेदः, विविक्तानामेकीभावः संघातः । द्वित्वाद्द्विवचनप्रसंग इति चेन्न, बहुवचनस्यार्थविशेषज्ञापनार्थत्वात्ततो भेदेन संघात इत्यस्याप्यविरोधः । उत्पूर्वः पदिर्जात्यर्थस्तेनोत्पद्यंते जायंत इत्युक्तं भवति । तदपेक्षो हेतुनिर्देशो भेदसंघातेभ्य इति निमित्तकारणहेतुषु सर्वासां प्रदर्शनाद्भेदसंघातेभ्य उत्पद्यंत इति । ननु च नोत्पद्यंतेणवोऽकार्यत्वाद्गगनादिवदिति कश्चित्, स्कंधाश्च नोत्पद्यंते सत्त्वमेव तेषामाविर्भावादित्यपरः । तं प्रत्यभिधीयते;—

**उत्पद्यंतेणवः स्कंधाः पर्यायत्वाविशेषतः । भेदात्संघाततो भेदसंघाभ्यां वापि केचन ॥ १ ॥**
**इति सूत्रे बहुत्वस्य निर्देशाद्वाक्यभिद्गतेः । निश्चीयतेन्यथा दृष्टविरोधस्यानुषंगतः ॥ २ ॥**
**स्कंधस्यारंभका यद्वदणवस्तद्वदेव हि । स्कंधोणूनां भिदारंभनियमस्यानभीक्षणात् ॥ ३ ॥**

उत्पद्यंतेऽणवः पुद्गलपर्यायत्वात् स्कंधवत् । न हि पार्थिवादिपरमाणवोपि पृथिव्यादिद्रव्याण्येव, पृथिव्यादिपरमाणुस्कंधद्रव्यगतिषु पृथिवीत्वादिप्रत्ययहेतोरूर्ध्वतासामान्याख्यस्य पृथिव्यादिद्रव्यस्य व्यवस्थापनात् । ततो न तेषां पर्यायत्वमसिद्धं । परमाणूनां कारणद्रव्यत्वनियमादसिद्धमेवेति चेन्न, तेषां कार्यत्वस्यापि सिद्धेः । यथैव भेदात् संघाताभ्यां च स्कंधानामुत्पत्तेः कार्यत्वं तथाणूनामपि भेदादुत्पत्तेः कार्यत्वसिद्धेरन्यथा दृष्टविरोधस्यानुषंगात् । न हि स्कंधस्यारंभकाः परमाणवो न पुनः परमाणोः स्कंध इति नियमो दृश्यते, तस्यापि भिद्यमानस्य सूक्ष्मद्रव्यजनकत्वदर्शनात् भिद्यमानपर्यंतस्य परमाणुजनकत्वसिद्धेः ॥

## भेदादणुः ॥ २७ ॥

सामर्थ्यादवधारणप्रतीतेरेवकारावचनं अब्भक्षवत् । यस्मात्—

**भेदादणुरिति प्रोक्तं नियमस्योपपत्तये । पूर्वसूत्रात्ततोणूनामुत्पादे विदितेपि च ॥ १ ॥**

अणवः स्कंधाश्च भेदसंघातेभ्य उत्पद्यंते इति वचनात्स्कंधानामिवाणूनामपि तेभ्य उत्पत्तिविधानान्नियमोपपत्त्यर्थमिदं सूत्रं भेदादणुरिति प्रोच्यते । तस्माद्भेदादेवाणुरुत्पद्यते न संघाताद्भेदसंघाताभ्यां वा स्कंधवत् । भेदादणुरेवेत्यवधारणानिष्टेश्च न स्कंधस्य भेदादुत्पत्तिर्निवृत्तिर्भेदादेवेत्यवधारणस्येष्टत्वात् ॥

**विभागः परमाणूनां स्कंधभेदान्न वाणवः । नित्यत्वादुपजायंते मरुत्पथवदित्यसत् ॥ २ ॥**
**संयोगः परमाणूनां संघातादुपजायते । न स्कंधस्तद्वदेवेति वक्तुं शक्तेः परैरपि ॥ ३ ॥**

ननु च संघाततः संयोगविशेष एव ततः कथं परमाणूनां परस्परं संयोगः समुपजायेत तस्यासंयोगजत्वात् । सर्वत्रावयवसंयोगपूर्वस्यावयविसंयोगस्य प्रसिद्धेर्वीरणादौ द्वितंतुकसंयोगवत् परस्परमवयवानां तु संयोगस्यान्यतरकर्मजस्योभयकर्मजस्य वा प्रतीतेस्तल्लक्षणत्वात् । ततः संघातादवयविन एव स्कंधापरनाम्न उत्पत्तिर्न संयोगस्येति चेत्, तर्हि विभागो भेद एव प्रतिपाद्यते ततः कथं व्द्यणुकादेः स्कंधस्य विभागः समुपजायेत तस्याविभागजत्वात्सर्वत्रावयवविभागपूर्वस्यावयविविभागस्य विभागजविभागस्य वा प्रसिद्धेराकाशस्कंधदलविभागवत् । परस्परमवयवानां तु विभागस्यान्यतरकर्मजस्योभयकर्मजस्य वा प्रतीतेरबाध्यत्वात् कथं व्द्यणुकादिस्कंधभेदाद्विभागस्यैवोत्पत्तिरभ्युपगम्यते भवद्भिः? तस्मादवयवभेदादवयविभि-

भागो विभागज एवेति चेत्, तर्हि परमाणुसंघातादाकाशदेशादिना संयोगोपि संयोगजोस्तु । अथ परमाणुसंघातादुत्पन्नेनावयविना व्योमादेः संयोगः संयोगजो न पुनः परमाणुभिस्तस्य संयोग इति मतं, तर्हि स्कंधभेदादुत्पन्नस्य परमाणोरेकदेशादिभ्यो विभागो न विभागजः किं तु स्कंधभेद इति सर्वं समानं पश्यामः । यदि पुनरवयवानां संयोगादवयविनः प्रादुर्भावस्तद्भावे भावात्तदभावे चाभावाद्विभाव्यते, तदा तत एव परमाणूनां स्कंधभेदात्प्रादुर्भावोस्तु । नित्यत्वात् तेषां न प्रादुर्भाव इति चेन्न, तन्नित्यत्वस्य सर्वथा अनवसायात् । नित्याः परमाणवः सदकारणवत्त्वादाकाशादिवदित्यपि न सम्यक्, तेषामकारणवत्त्वासिद्धेः । पुद्गलद्रव्यस्य तदुपादानकारणस्य भावात् । स्कंधभेदस्य च सहकारिणः प्रसिद्धेस्तद्भावे वा भावात् । सूक्ष्मपूर्वकः स्कंधो न स्कंधपूर्वकः सूक्ष्मोस्ति यतः स्कंधादणुरुत्पद्यत इति चेन्न, प्रमाणाभावात् ॥

**विवादाध्यासितः स्कंधो जायते सूक्ष्मतोन्यतः । स्कंधत्वात्पटवत्प्रोक्तं यैरेवं ते वदंत्विदं ॥४**
**विवादगोचराः सूक्ष्मा जायंते स्कंधभेदतः । सूक्ष्मत्वाद् दृष्टवस्त्रादिखंडवद्भ्रांत्यभावतः ॥ ५ ॥**
**घनकर्पासपिंडेन सूक्ष्मेण व्यभिचारिता । हेतोरिति न वक्तव्यमन्यस्यापि समत्वतः ॥ ६ ॥**
**श्लिथावयवकर्पासपिंडसंघाततो यथा । घनावयवकर्पासपिंडः समुपजायते ॥ ७ ॥**
**तथा स्वविष्टपिंडेभ्योऽनिष्टो निबिडपिंडकः । प्रतीतिगोचरोस्तु स यथासूत्रोपपादितः ॥ ८ ॥**

विवादापन्नोवयवी स्वपरिमाणान्महापरिमाणकारणारब्धोवयवित्वात् पटवदिति यैरुक्तमनुमानं ते वदंत्विदमपि विवादगोचराः सूक्ष्माः स्थूलभेदपूर्वकाः सूक्ष्मत्वात् पटखंडादिवदिति । घनकर्पासपिंडेन सूक्ष्मेण शिथिलावयवकर्पासपिंडसंघातारब्धेनावयवित्वस्य हेतोर्व्यभिचारान्नैव वदंतीति चेत्, समानमन्यत्र तेनैव स्वपरिमाणान्महापरिमाणकारणारब्धेनावयवित्वस्य हेतोर्व्यभिचारात् । यथैव हि श्लिथावयवकर्पासपिंडानां सतां समुपजायमानो घनावयवकर्पासपिंडः सूक्ष्मो न स्थूलभेदपूर्वकस्तथा स एव तेषां स्वविष्टानां संयोगविशेषादुपजायमानो घनावयवः स्वपरिमाणादणुपरिमाणकारणारब्धः प्रतीतिविषयः । ततो नासोपज्ञमिदं नियमकल्पनमिति यथा सूत्रोपपादितं तथैवास्तु । तथाहि—द्वयोः परमाण्वोः संघातादुत्पद्यमानो द्विप्रदेशः स्कंधः कश्चिदाकाशप्रदेशद्वयावगाही परमाणुपरिमाण एव स्यात् । द्व्यणुकाभ्यां च स्वकारणादधिकपरिमाणाभ्यामुत्पद्यमानः कश्चिदाकाशप्रदेशचतुष्टयावगाही महान् । कश्चित्पुनरेकाकाशप्रदेशावगाही । ततोणुरेवावगाहविशेषस्य नियमाभावात् । तथा शताणुकावयविभेदादुत्पद्यमानोवयवी कश्चित्सूक्ष्मः स्तोकाकाशप्रदेशावगाहित्वात् । कश्चित्तत एवाल्पाकाशप्रदेशावगाहभाजोल्पाद्बह्वाकाशप्रदेशावगाहित्वान्महान् । एवमेकैकसमयिकाभ्यां भेदसघाताभ्यामुत्पद्यमानोपि स्कंधः कश्चित्स्वकारणपरिमाणादधिकपरिमाणः कश्चिन्न्यूनपरिमाण इति सूक्तमुत्पश्यामो दृष्टविरोधाभावात् प्रतीयते हि तादृशः ॥

## भेदसंघाताभ्यां चाक्षुषः ॥ २८ ॥

भेदात्संघाताद्भेदसंघाताभ्यां च चक्षुर्ज्ञानग्राह्योवयवी कश्चित् परिमाणादणुपरिमाणकारणपूर्वकः, कश्चिन्महापरिमाणकारणपूर्वकः, कश्चित्समानकारणारब्धस्तद्वद्दृष्टोपि स्याद्बाधकाभावात् । तदाहुः—

**चाक्षुषोवयवी कश्चिद्भेदात्संघाततो द्वयात् । उत्पद्यते ततो नास्य संघातादेव जन्मनः ॥ १ ॥**

घटादिरूपव्यतिरेकेण चक्षुर्बुद्धौ च प्रतिभासमानोवयवी कथं चाक्षुषो नाम ? गंधादेरपि चाक्षुषत्वप्रसंगादिति चेन्न, घटाद्यवयविन एव चक्षुर्बुद्धौ प्रतिभासनात् । तद्व्यतिरेकेण रूपस्य तत्राप्रतीतेर्गंधादि-

वत् । चक्षुर्बुद्धौ रूपं प्रतिभासते न पुनस्तदभिन्नोवयवीति ब्रुवाणः कथं स्वस्थः? कथं रूपादभिन्नोवयवी रूपमेव न स्यादिति चेत् तस्य ततः कथंचिद्भेदात् । न हि सर्वथा गुणगुणिनोरभेदमात्रमाचक्ष्महे प्रतीतिविरोधात् पर्यायार्थतस्तयोर्भेदस्यापि प्रतीतेः । सर्वथाभेदे तयोर्भेद इव गुणगुणिभावानुपपत्तेः गुणस्यात्मवत्कुटपटवच्च । तत्र द्रव्यार्थिकप्राधान्याद्द्रव्यस्वरूपादभिन्नत्वाद्रूपस्य चाक्षुषत्वे द्रव्यस्य चाक्षुषत्वसिद्धिः स्पृश्यादभिन्नस्य स्पर्शस्याभावात्तत्र तस्य स्पर्शनत्वसिद्धिरिति चेत् पर्यायार्थिकप्राधान्याच्च द्रव्याद्भेदेपि रूपस्येव द्रव्यस्यापि चाक्षुषत्वोपगमान्न तस्याचाक्षुषत्वं, नाप्यस्पर्शनत्वं स्पर्शस्येव तद्द्रव्यस्य स्पर्शनत्वप्रतीतेः । न च दर्शनं स्पर्शनं च द्रव्यमिति द्वींद्रियग्राह्यं द्रव्यमुपगम्यते तस्य घ्राणरसनश्रोत्रमनोग्राह्यत्वेनापि प्रसिद्धेः । रूपादिरहितस्य द्रव्यस्यैव द्रव्यरहितानां रूपादीनां प्रत्यक्षाद्यविषयत्वादसर्वपर्यायाणां द्रव्याणां मतिश्रुतयोर्विषयत्वव्यवस्थापनात् । इदमेव हि प्रत्यक्षस्य प्रत्यक्षत्वं यदनात्मन्यविवेकेन बुद्धौ स्वरूपस्य समर्पणं । इमे पुना रूपादयो द्रव्यरहिता एवामूल्यदानक्रयिणः स्वरूपं च नोपदर्शयंति प्रत्यक्षतां च स्वीकर्तुमिच्छंतीति स्फुटमभिधीयतां । एतेन श्रुतज्ञानेप्यप्रतिभासमानाः श्रुतज्ञानपरिच्छेद्यत्वं स्वीकर्तुमिच्छंतस्त एवामूल्यदानक्रयिणः प्रतिपादितास्तदाहितद्रव्यवत् । ततः प्रतीतिसिद्धमवयविनः चाक्षुषत्वं स्पर्शनत्वादि समुपलक्षयति बाधकाभावात् ॥

किं पुनर्द्रव्यस्य लक्षणमित्याह;—

## सद्द्रव्यलक्षणम् ॥ २९ ॥

अथ विशेषतः सद्द्रव्यस्य लक्षणं सामान्यतो वा? यदि विशेषतस्तदा पर्यायाणां द्रव्यत्वप्रसंगादतिव्याप्तिर्नाम लक्षणदोषः, अव्याप्तिश्च त्रिकालानुयायिनि द्रव्ये सद्विशेषाभावात् वर्तमानद्रव्य एव तद्भावात् । यदि पुनः सामान्यतस्तद्द्रव्यस्य लक्षणं शुद्धमेव द्रव्यं स्यादिति सैवाव्याप्तिरशुद्धद्रव्ये तदभावादिति वदंतं प्रत्युच्यते;—

**सद्द्रव्यलक्षणं शुद्धमशुद्धं सविशेषणं । प्रोक्तं सामान्यतो यस्मात्ततो द्रव्यं यथोदितं ॥ १ ॥**

न हि विशेषतः सद्द्रव्यलक्षणं यतोत्रातिव्याप्त्यव्याप्ती स्यातां सामान्यतस्तस्य तल्लक्षणत्वात् । न चैवं शुद्धद्रव्यमेव सल्लक्षणं स्यादशुद्धद्रव्यस्यापि लक्षणत्वोपपत्तेः । ततो नाव्याप्तिर्लक्षणस्य । यथैव हि देशकालैरविच्छिन्नं सर्वत्र सर्वदा सर्वथा वस्तुनि सत्सदिति प्रत्ययाभिधानव्यवहारनिबंधनं सत्तासामान्यं शुद्धद्रव्यलक्षणमबाधमनुभूयमानमाबालप्रसिद्धं तथा सर्वद्रव्यविशेषेषु द्रव्यं द्रव्यमित्यनुभूतबुद्ध्यभिधाननिबंधनद्रव्योपाधि सदेव द्रव्यत्वमशुद्धद्रव्यसविशेषणस्य सत्त्वस्याशुद्धत्वात् । एवं जीवपुद्गलधर्माधर्माकाशकालद्रव्यं प्रत्येतव्यं । क्रमयौगपद्यवृत्ति स्वपर्यायव्यापि जीवत्वविशेषणस्य सत्त्वस्य जीवद्रव्यत्वात्ताद्दृक् पुद्गलत्वविशिष्टस्य पुद्गलद्रव्यत्वात् क्रमाक्रमभाविधर्मपर्यायव्यापिधर्मत्वविशेषणस्य धर्मद्रव्यत्वात्, तथाविधाधर्मत्वोपहितस्याधर्मद्रव्यत्वात्, तादृशाकाशत्वोपाधेराकाशद्रव्यत्वात्, क्रमाक्रमभाविपर्यायव्यापिकालत्वविशिष्टस्य कालद्रव्यत्वात् ॥

नन्वस्तु सद्द्रव्यस्य लक्षणं तत्तु नित्यमेव, तदेवेदमिति प्रत्यभिज्ञानात् । तदनित्यत्वेऽघटनात् सर्वदा बाधकरहितत्वादिति कश्चित्, प्रतिक्षणमुत्पादव्ययात्मकत्वादनश्वरमेव तद्विच्छेदप्रत्ययस्याभ्रांतस्यान्यथानुपपत्तेरित्यपरः । तं प्रत्याह;—

## उत्पादव्ययध्रौव्ययुक्तं सत् ॥ ३० ॥

स्वजात्यपरित्यागेन भावांतरावाप्तिरुत्पादः, तथा पूर्वभावविगमो व्ययः, ध्रुवेः स्थैर्यकर्मणो ध्रुवतीति ध्रुवस्तस्य भावः कर्म वा ध्रौव्यं तैर्युक्तं सदिति बोद्धव्यम् ॥

**तत्रोत्पादव्ययध्रौव्ययुक्तं सदिति सूचनात् । गुणसत्त्वं भवेन्नैव द्रव्यलक्षणमंजसा ॥ १ ॥**

न हि गुणभूतं सत्त्वमुत्पादव्ययध्रौव्ययुक्तमुपपद्यते तस्य कल्पितत्वात्, नांजसा द्रव्यस्य लक्षणं वस्तुभूतस्यैव सत्त्वस्योत्पादादियुक्तत्वोपपत्तेः भेदज्ञानादुत्पादव्ययध्रौव्यसिद्धिवदभेदज्ञानाद्ध्रौव्यसिद्धेरप्रतिबंधत्वात् । ननु च ध्रौव्ययुक्तं सद्द्रव्यस्य लक्षणं उत्पादव्ययुक्तं सत् पर्यायस्य लक्षणमिति व्यक्तं वक्तव्यमविरोधात् । नैवं वक्तव्यं, सतः एकत्वादेका सत्तेति वचनात्तदेवैकं द्रव्यमनंतपर्यायमित्युच्यते न पुनर्द्विविधा द्रव्यसत्ता पर्यायसत्ता चेति । ततोन्यस्य महासामान्यस्यैकस्य तद्व्यापिनो द्रव्यस्य प्रसंगात् । तदपि यद्यसद्रूपं तदा न द्रव्यं खरविषाणवत् । सद्रूपं चेत्, सैवैका सत्तेति सिद्धं सल्लक्षणं द्रव्यमेव पर्यायस्य पर्यायांतररूपेण सद्रूपत्वप्रतीतेः । तत एव सल्लक्षणमेव द्रव्यं शुद्धमित्यवधार्यते, तस्यासद्रूपत्वाभावात् प्रागभावादेरपि भावांतरस्वभावस्यैव सदसत्त्वसिद्धेः । सत्प्रत्ययाविशेषाद्विशेषलिंगाभावादेका सत्तेति परैरप्यभिधानात् केवलध्रौव्ययुक्तमेव सदित्येकांतव्यवच्छेदनार्थमुत्पादव्ययुक्तमित्युच्यते, तस्यानंतपर्यायात्मकत्वात् पर्यायाणां चोत्पादव्ययध्रौव्ययुक्तत्वात् । न नित्य सदेकमस्त्यनुस्यूताकारं तस्यासद्रूपव्यावृत्त्या कल्पितत्वात् स्वलक्षणस्यैवोत्पादव्ययवतः सत्त्वादित्येकांतव्यवच्छित्तये ध्रौव्ययुक्तमित्यभिभाषणात् । स्यान्मतं; यद्युत्पादादीनि परैरुत्पादादिभिर्विना संति तदा द्रव्यमपि तैर्विनैव सदस्त्विति व्यर्थं तद्युक्तवचनं, अथ परैरुत्पादादिभिर्योगात् तदानवस्था स्यात् प्रत्येकमुत्पादादीनामपरोत्पादादित्रययोगात्तदुत्पादादीनामपि प्रत्येकमपरोत्पादादित्रययोगतः सत्त्वसिद्धेः । सुदूरमपि गत्वोत्पादादीनां स्वतः सत्त्वे सतोपि स्वत एव सत्त्वं भवेदुत्पादादीनां सतोनर्थांतरत्वे लक्ष्यलक्षणभावविरोधस्तद्विशेषाभावादिति । तदेतत्प्रज्ञाकरेणोक्तं तस्याप्रज्ञाविजृंभितमित्ययं दर्शयति;—

**यथोत्पादादयः संतः परोत्पादादिभिर्विना । तथा वस्तु न चेत्केनानवस्थादि निवार्यते ॥२॥**
**इत्यसत्सर्वथा तेषां वस्तुनो सदसिद्धितः । लक्ष्यलक्षणभावः स्यात्सर्वथैक्यानभीष्टितः ॥ ३ ॥**
**उत्पादव्ययध्रौव्यैक्यैर्युक्तं सत्समाहितं ।**

तादात्म्येन स्थापितं सदिति युजेः समाध्यर्थस्य व्याख्यानान्न तेषां सतोर्थांतरत्वमुच्यते येन तत्पक्षभावी दोषोनवस्था तद्योगवैयर्थ्यलक्षणः स्यात् । न चार्थांतरत्वमेव यतो लक्ष्यलक्षणभावविरोधः कथंचिद्भेदोपगमाद्युजेर्योगार्थस्यापि व्याख्यानात् ॥

किं पुनः सतो रूपं नित्यं? यद्ध्रौव्ययुक्तं स्यात्, किं वानित्यं? यदुत्पादव्ययुक्तं भवेदित्युपदर्शयन्नाह;—

## तद्भावाव्ययं नित्यं ॥ ३१ ॥

सामर्थ्याल्लभ्यते द्वितीयं सूत्रं 'अतद्भावेन सव्ययमनित्यं' इति तस्य भावस्तद्भावस्तत्त्वमेकत्वं तदेवमिति प्रत्यभिज्ञानसमधिगम्यं तदित्युपगमात् । तेन कदाचिद्व्ययासत्त्वादव्ययं नित्यं सामर्थ्यादनुत्पादमिति गम्यते व्ययनिवृत्तावुत्पादनिवृत्तिसिद्धेरुत्तराकारोत्पादस्य पूर्वाकारव्ययेन व्याप्तत्वात् तन्निवृत्तौ निवृत्तिसिद्धेः । अतद्भावोन्यत्वं पूर्वस्मादन्यदिदमित्यन्वयप्रत्ययादवसेयं । तत्त्वध्रौव्यमनित्यमुत्पादव्ययोगात् तदुक्तं नित्यं तदेवेदमिति प्रतीतेर्न नित्यमन्यप्रतिपत्तिसिद्धेरिति तदेव युक्तमेतत्सूत्रद्वितयमित्युपदर्शयति;—

**तद्भावेनाव्ययं नित्यं तथा प्रत्यवमर्शतः । तद्धौव्यं वस्तुनो रूपं युक्तमर्थक्रियाक्रियः ॥ १ ॥**
**सामर्थ्यात्सव्ययं रूपमुत्पादव्ययसंज्ञकं । सूत्रेस्मिन् सूचितं तस्यापाये वस्तुत्वहानितः ॥ २ ॥**

न ह्येकांततो नित्यं सन्नाम तस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । नाप्यनित्यमेव तत एव । न चार्थक्रियारहितं वस्तु सत् खरशृंगवत्, अर्थक्रियाकारिण एव वस्तुनः सत्त्वोपपत्तेः । ततस्सन्नित्यम-नित्यं च युक्तं सूचितमविरुद्धत्वात् ॥

कुतस्तदविरुद्धमित्याह;—

## अर्पितानर्पितसिद्धेः ॥ ३२ ॥

तद्भावेनाव्ययं नित्यमतद्भावेन सव्ययमनित्यमिति साध्यं । ततः—

**नित्यं रूपं विरुध्येत नेतरेणैकवस्तुनि । अर्पितेत्यादिसूत्रेण प्राहैवं नयभेदवत् ॥ १ ॥**

कुतः पुनः सतो नित्यमनित्यं च रूपमर्पितं चेत्याह;—

**द्रव्यार्थादर्पितं रूपं पर्यायार्थादनर्पितं । नित्यं वाच्यमनित्यं तु विपर्यासात्प्रसिद्ध्यति ॥ २ ॥**

द्रव्यार्थादादिष्टं रूपं पर्यायार्थादनादिष्टं यथा नित्यं, तथा पर्यायार्थादादिष्टं द्रव्यार्थादनादिष्टमनि-त्यमिति सिद्ध्यत्येव । ततस्तदेकत्र सदात्मनि न विरुद्धं । यदेव रूपं नित्यं तदेवानित्यमिति वचने विरोधसिद्धेः विकलादेशायत्तनयनिरूपणायां सर्वथा विरोधस्यानवतारात् ॥ नन्वेवमुभयदोषाद्यनुषंगः स्यादित्यारेकायामिदमाह;—

**प्रमाणार्पणतस्तत्स्याद्वस्तु जात्यंतरं ततः । तत्र नोभयदोषादिप्रसंगोनुभवास्पदे ॥ ३ ॥**

न हि सकलादेशे प्रमाणायत्ते प्रतिभासनमुत्पादव्ययध्रौव्ययुक्तं तदुभयदोषाभ्यां स्पृश्यते, तस्य नित्यानित्यैकांताभ्यां जात्यंतरत्वात् । तत एव नानवस्थावैयधिकरण्यं संकरव्यतिकरौ वा संशयो वा यतो प्रतिपत्तेरभावस्तस्यापाद्यते चित्रसंवेदनवदनुभवास्पदे वस्तुनि तदनवतारात् । तदित्थं परापरद्रव्यस्य सल्लक्षणस्य प्रसिद्धेर्न चाक्षुषमवयविद्रव्यं पुद्गलं स्कंधसंज्ञकं प्रतिक्षेप्तुं शक्यं, सर्वप्रतिक्षेपप्रसंगात् ॥

कुतः पुनः पुद्गलानां नानाद्रव्याणां संबंधो यतः स्कंध एकोवतिष्ठत इत्यारेकायामिदमाह;—

## स्निग्धरूक्षत्वाद्बंधः ॥ ३३ ॥

स्नेहगुणयोगात्स्निग्धाः रूक्षगुणयोगाद्रूक्षास्तद्भावात् पुद्गलानां बंधः स्यात् । न रूक्षो नाम गुणोस्ति, स्नेहाभावे रूक्षव्यवहारसिद्धेरिति चेन्न; रूक्षाभावे स्नेहव्यवहारप्रसंगात् स्नेहस्याप्यभावोपपत्तेः, शीताभावे चोष्णव्यवहारप्रसक्तेरुष्णगुणाभावानुषंगात् । स्पर्शनेंद्रियज्ञाने शीतवदुष्णगुणस्य प्रतिभासनादुष्णो गुण-स्पर्शविशेषोनुष्णाशीतपाकजेतरस्पर्शवदिति चेत्, तर्हि स्नेहस्पर्शनकरणज्ञाने रूक्षस्य लघुगुरुस्पर्शविशेष-वदवभासनात् कथं रूक्षो गुणो न स्यात्? तस्य बाधकाभावादप्रतिक्षेपार्हत्वाच्चतुर्विंशतिरेव गुणा इति नियमस्याघटनात् । तथा सति;—

**स्कंधो बंधात्स चास्त्येषां स्निग्धरूक्षत्वयोगतः । पुद्गलानामिति ध्वस्ता सूत्रेस्मिंस्तदभावता १**
**स्निग्धाः स्निग्धैस्तथा रूक्षा रूक्षैः स्निग्धाश्च पुद्गलाः । बंधं यथासते स्कंधसिद्धेर्बाधकहानितः २**
**नैकदेशेन कार्त्स्न्येन बंधस्याघटनाद्यतः । कार्यकारणमाध्यस्थ्यक्षणवत्तद्विभावनात् ॥ ३ ॥**

यथैककार्यकारणक्षणाभ्यां तन्मध्यस्यैकदेशेन संबंधे सावयवत्वमनवस्था च तदेकदेशस्याप्येकदेशांतरेण संबंधात् । कार्त्स्न्येन संबंधे पुनरेकक्षणमात्रसंतानप्रसंगः कार्यकारणभावाभावश्च सर्वथैकस्मिंस्तद्विरोधात् ।

किं तर्हि? संबंध एवेति कथ्यते । तथा परमाणूनामपि युगपत्परस्परमेकत्वपरिणामहेतुर्बंधो नैकदेशेन सर्वात्मना वा सावयवत्वानवस्थाप्रसंगादेकपरमाणुमात्रपिंडप्रसंगाच्च । किं तर्हि? पिंड एव स्निग्धरूक्षत्वविशेषाश्रयत्वात्तस्य तथा दर्शनात् सक्तुतोयादिवत् ॥

पूर्वापरविदां बंधस्तथाभावात् परो भवेत् । नानाणुभावतः सांशादणोर्बंधोऽपरोस्ति किम् ॥४॥
निरंशत्वं न चाणूनां मध्यं प्राप्तस्य नावतः । तथा ते संविदोर्मध्यं प्राप्तायाः संविदः स्फुटम् ॥५॥
संविदद्वैततत्त्वस्यासिद्धौ बंधो न केवलं । स स्यात् किंतु स्वसंतानाद्यभावात्सर्वशून्यता ॥ ६ ॥
तत्संविन्मात्रसंसिद्धौ संतानस्ते प्रसिद्ध्यति । तद्वद्बंधः स्थितोर्थानां परिणामो विशेषतः ॥७॥

शून्यवादिनापि संविन्मात्रमुपगंतव्यं तस्य चावश्यं कारणमन्यथा नित्यत्वमसंगात् कार्यमभ्युपगंतव्यमन्यथा तदवस्तुत्वापत्तेरिति तत्संतानसिद्धिः । तत्सिद्धौ च कार्यकारणसंविदोर्मध्यमध्यासीनायाः संविदस्तत्संबंधेपि सांशत्वाभाववत्परमाणूनां मध्यमधिष्ठितोपि परमाणोरनंशत्वसिद्धेस्तत्सर्वसमुदायविशेषोप्यनेकपरिणामो बंधः प्रसिध्यत्येव । स च सर्वपरमाणूनामविशेषेण प्रसक्त इत्यनिर्गुणानां बंधप्रतिषेधार्थमाह;—

## न जघन्यगुणानाम् ॥ ३४ ॥

जघन्यमिव जघन्यं निकृष्टमिति शाखादित्वादेर्देहांगत्वाद्वा जघनशब्दसिद्धिः जघने भवो जघन्यो निकृष्टः जघन्य इव जघन्योत्यंताप्रकृष्ट इति । गुणशब्दस्यानेकार्थत्वे विवक्षावशाद्भागग्रहणं द्विगुणावयवा इति यथा द्विभागा इत्यर्थप्रतिपत्तेर्जघन्यो गुणो येषां ते जघन्यगुणाः परमाणवः सूक्ष्मत्वाद्वा तेषां न बंध इत्यभिसंबंधः । तेनैकगुणस्य स्निग्धरूक्षस्य वा परेण स्निग्धेन रूक्षेण चैकगुणेन द्वित्रिसंख्येयासंख्येयानंतगुणेन वा नास्ति बंधस्तथा द्व्यादिभिर्द्व्यादिगुणैरेकगुणैश्चेति सूत्रितं भवति । ननु च जघन्यगुणाः परमाणवः केचित्संतीति कुतो निश्चयः स्निग्धरूक्षगुणयोरपकर्षातिशयदर्शनात् परमापकर्षस्य सिद्धेर्जघन्यगुणसिद्धिः । उष्ट्रीक्षीराद्धि महिषीक्षीरस्यापकृष्टः स्नेहगुणः प्रतीयते ततो गोक्षीरस्य ततोप्यजाक्षीरस्य ततोपि तोयस्येति । तथा रूक्षगुणोपि शर्करातः कणिकानामपकृष्टः प्रतीयते ततोपि पांशूनामिति । स्निग्धरूक्षगुणः क्वचिदत्यंतमपकर्षमेति प्रकृष्यमाणापकर्षत्वादा नभसः परिमाणे परिमाणवदित्यनुमानाज्जघन्यगुणसिद्धिः । एतेनोत्कृष्टगुणसिद्धिर्व्याख्याता, प्रकर्षातिशयदर्शनात्क्वचित्परमप्रकर्षसिद्धेः । ननु च कदाचिदबंधः परमाणूनां सर्वदा स्कंधात्मतयैव पुद्गलानामवस्थितेः । बुद्ध्या परमाणुकल्पनोपपत्तेरविभागपरिच्छेदवदिति कश्चित्तं प्रत्याह;—

न जघन्यगुणानां स्याद्बंध इत्युपदेशतः । पुद्गलानामबंधस्य प्रसिद्धेरपि संग्रहः ॥ १ ॥

स्कंधानामेव केषांचिद्वालुकादीनामबंधोस्तु न परमाणूनामित्ययुक्तं, प्रमाणविरोधात् । "पृथिवी सलिलं छाया चतुरिंद्रियविषयकर्मपरमाणुः षड्विधभेदं भणितं पुद्गलतत्त्वं जिनेंद्रेण"त्यागमेन पारमार्थिकपरमाणुप्रकाशकेन कल्पितपरमाणुवादस्य विधानात् । परमार्थतो असंबंधपरमाणुवादस्य च परमाणूत्पत्तिसूत्रेण निराकरणात् । भेदादणुः कल्प्यते इति क्रियाध्याहारान्नोत्पत्तिः परमाणूनामिति चेन्न, भेदसंघातेभ्य उत्पद्यंत इत्यत्र स्वयमुत्पद्यंत इति क्रियायाः क्रियांतराध्याहारनिवृत्त्यर्थमुपन्यासात् भेदादणुरिति सूत्रस्य नियमार्थत्वात् पूर्वसूत्रेणैव परमाणूत्पत्तेर्विधानात् । किं च, विवादापन्नाः स्कंधभेदाः क्वचित्प्रकर्षभाजः प्रकृष्यमाणत्वात् परिमाणवदित्यनुमानबाधितत्वाच्च परमाणूनामबंधकल्पना श्रेयसी । ननु च परमाणूनां

मबंधसाधने तेषां पुनर्बंधाभावः साकल्येनैकदेशेन बंधस्याघटनादिति चेन्न, सूक्ष्मस्कंधानामपि बंधाभावप्रसंगात् । तेषामपि कार्त्स्न्येन बंधे सूक्ष्मैकस्कंधमात्रपिंडप्रसक्तेः । एकदेशेन संबंधे चैकस्कंधदेशस्य स्कंधांतरदेशेन बंधो नैकदेशेन वा भवेत्? कार्त्स्न्येन चेत्तदेकदेशमात्रप्रसक्तिः, एकदेशेन चेदनवस्था स्यात् प्रकारांतरेण तद्बन्धे परमाणूनामपि बंधस्तथैव स्यात् स्निग्धरूक्षत्वाद्बंध इति निःप्रतिद्वंद्वस्य बंधस्य साधनात् । ततः सूक्तं न जघन्यगुणानां बंध इति । प्रतिषेधवत्पुद्गलानामबंधसिद्धेरपि संग्रह इति । येषां परमाणूनां बंधस्तेषां बंध एव सर्वदा, येषां त्वबंधस्तेषामबंध एवेत्येकांतोप्यनेनापास्तः । केषांचिद्बंधानामपि कदाचिद्बंधदर्शनाद्बंधवतां वा बंधप्रतीतेर्बाधकाभावात् परमाणुष्वपि तन्नियमानुपपत्तेः ॥

# गुणसाम्ये सदृशानाम् ॥ ३५ ॥

गुणवैषम्ये बंधप्रतिपत्त्यर्थं सदृशग्रहणं । सदृशानां स्निग्धगुणानां परस्परं रूक्षगुणानां चान्योन्यं भागसाम्ये बंधस्य प्रतिषेधात् । नन्वेवं विसदृशानां गुणसाम्ये बंधप्रतिषेधो न स्यादिति न मंतव्यं, सदृशग्रहणस्य विसदृशव्यवच्छेदार्थत्वाभावात् सदृशानामेवेत्यवधारणानाश्रयणात् । गुणसाम्ये वेति सूत्रोपदेशे हि सदृशानां गुणवैषम्येपि बंधप्रतिषेधप्रसक्तौ तद्वचत्सिद्धये सदृशग्रहणं कृतं, तेन स्निग्धरूक्षजात्या साम्येपि गुणवैषम्ये बंधसिद्धिः । किमर्थमिदं सूत्रमब्रवीदित्याह;—

**अजघन्यगुणानां तत्प्रसक्तावविशेषतः । गुणसाम्ये समानानां न बंध इति चाब्रवीत् ॥ १ ॥**

केषां पुनर्बंधः स्यादित्याह;—

# द्व्यधिकादिगुणानां तु ॥ ३६ ॥

द्व्यधिकश्चतुर्गुणः । कथं? एकगुणस्य केनचिद्बंधप्रतिषेधाद्द्विगुणस्य बंधसंभवात्ततोद्व्यधिकस्य चतुर्गुणत्वोपपत्तेः । प्रकारवाचिनादिग्रहणेन पंचगुणादिपरिग्रहः, त्रिगुणादीनां बंधे पंचगुणादीनां द्व्यधिकतोपपत्तेः । एवं च तुल्यजातीयानां विजातीयानां च द्व्यधिकादिगुणानां बंधः सिद्धो भवति । तु शब्दस्य प्रतिषेधानिवृत्त्यर्थत्वात् । तथाहि—

**द्व्यधिकादिगुणानां तु बंधोस्तीति निवेदयत् । सर्वापवादनिर्मुक्तविषयस्याह संभवम् ॥ १ ॥**

उक्तं च । "णिद्धस्स णिद्धेण दुराहिएण लुक्खस्स लुक्खेण दुराहिएण । णिद्धस्स लुक्खेण उ एइ बंधो जहण्णवज्जे विसमे समे वा ॥" विषमोऽतुल्यजातीयः समः सजातीयो न पुनः समानभाग इति व्याख्यानाच्च समगुणयोर्बंधप्रसिद्धिः ॥

कुतः पुनर्द्वावेव गुणावधिकौ सजातीयस्य विजातीयस्य वा परेण बंधहेतुतां प्रतिपद्येते नान्यथेत्याह;—

# बंधेधिकौ पारिणामिकौ ॥ ३७ ॥

यस्मादिति शेषः । प्रकृतत्वाद्गुणसंप्रत्ययः । क, प्रकृतौ गुणौ द्व्यधिकादिगुणानां त्वित्यत्र समासे गुणीभूतस्यापि गुणशब्दस्यानुवर्तनमिह सामर्थ्यात्, तदन्यस्यानुवर्तनासंभवात् । गुणाविति चाभिसंबंधोर्थवशाद्विभक्तिवचनयोः परिणामात् भावांतरापादकौ पारिणामिकौ, रेणोः क्लिन्नगुडवत् । तथाहि—

**बंधेधिकौ गुणौ यस्मादन्येषां पारिणामिकौ । दृष्टौ सक्तुजलादीनां नान्यथेत्यत्र युक्तिवाक् १**

तथैव हि रूक्षाणां सक्तूनां स्निग्धा जलकणास्ततो द्वाभ्यां गुणाभ्यामधिकाः पिंडात्मतया पारिणामिका दृश्यंते नान्यथा । तथैव परमाणोर्द्विगुणस्य चतुर्गुणः परमाणुः परिणामकः स्यादन्यथा द्वयोः परमाण्वो-

न्योन्यमविविक्तरूपद्व्यणुकस्कंधपरिणामायोगात् संयोगमात्रप्रसक्तेः परस्परविवेकप्रसक्तेस्तदनन्वयवत्त्वं । न च विभागसंयोगाभ्यामन्यपरिणामः प्राप्तिरूपो न संभवतीति युक्तं वक्तुं, तृतीयस्यावस्थाविशेषस्य स्कंधैकत्वप्रत्ययहेतोः सद्भावात् । शुक्लपीतद्रव्ययोः परिणामे शुक्लपीतवर्णपरिणामवत् क्लिन्नगुडानुप्रवेशे रेण्वादीनां मधुररसपरिणामवद्वा । नन्वत्रापि द्वावेव गुणावधिकौ पारिणामिकाविति कुतः प्रतिपत्तिः ? सुनिश्चितासंभवद्बाधकप्रमाणादागमाद्विशेषतस्तत्प्रतिपत्तिः । एवं ह्युक्तमार्षे वर्गणायां बंधविधाने नोआगमद्रव्यबंधविकल्पो सादिवैस्रसिकबंधनिर्देशे प्रोक्तः । विषमस्निग्धतायां विषमरूक्षतायां च बंधः समस्निग्धतायां समरूक्षतायां वा भेद इति । तदनुसारेण सूत्रकारैर्बंधव्यवस्थापनात् परमागमसिद्धो बंधविशेषहेतुर्व्यधिकादिगुणत्वं । द्वयोरेव वाधिकयोर्गुणयोः पारिणामिकत्वं । सामान्येन तु पुद्गलानां बंधहेतुः कश्चिदस्ति कार्त्स्न्यैकदेशतो बंधासंभवेपि बंधविनिश्चयात्तत्र बाधकाभावादिति पुद्गलस्कंधद्रव्यसिद्धिः, तस्यैव रूपादिभिः स्वभावैः परिणतस्य चक्षुरादिकरणग्राह्यतामापन्नस्य रत्यादिव्यवहारगोचरतया व्यवस्थितेः । न हि तथा परिणतं तद्भवत्यतिप्रसंगात्, नापि तदेव परिणाममात्रप्रसंगात् । न च परिणामिनोसत्त्वे परिणामः संभवति खरविषाणस्य तैक्ष्ण्यादिवत् । नापि परिणामाभावे परिणामि भवति खरविषाणवदिति परिणामपरिणामिनोरन्योन्याविनाभावित्वादन्यतरापायेप्युभयासत्त्वप्रसक्तिः । ततो नित्यतापरिणामि द्रव्यमुपगंतव्यं तत्परिणामवत् ॥

## गुणपर्ययवद्द्रव्यम् ॥ ३८ ॥

गुणाः वक्ष्यमाणलक्षणाः पर्यायाश्च तत्सामान्यापेक्षया नित्ययोगे मतुः । द्रवति द्रोष्यत्यदुद्रुवत्तांस्तान् पर्यायानिति द्रव्यमित्यपि न विरुध्यते । विशेषापेक्षया पर्यायाणां नित्ययोगाभावात्कादाचित्कत्वसिद्धेः ॥ किमर्थमिदं पुनर्द्रव्यलक्षणं ब्रवीतीत्यारेकायामाह;—

**गुणपर्ययवद्द्रव्यमित्याह व्यवहारतः । सत्पर्यायस्य धर्मादेर्द्रव्यत्वप्रतिपत्तये ॥ १ ॥**

सतो हि महाद्रव्यस्य पर्यायो धर्मास्तिकायादिर्व्यवहारनयार्पणाया द्रव्यत्वमपि स्वीकरोत्येव, तस्य चाधारसाधारणलक्षणं गुणपर्यायवत्त्वमिति प्रतिपत्तव्यं, न पुनः क्रियावत्त्वं तस्याव्यापकत्वान्निष्क्रियेष्वाकाशादिष्वभावात् । समवायिकारणत्वमपि न द्रव्यलक्षणं युक्तं, गुणकर्मणोरपि द्रव्यत्वप्रसंगात्तयोर्गुणत्वकर्मत्वसमवायिकारणत्वसिद्धेः । तयोस्तत्समवायित्वमेव तत्कारणत्वं गुणत्वकर्मत्वसामान्ययोरकार्यत्वादिति चेन्न, सदृशपरिणामलक्षणस्य सामान्यस्य कथंचित्कार्यत्वसाधनात् । कथंचित्तदनित्यत्वमपि नानिष्टं, प्रत्यभिज्ञानस्य सर्वथा नित्येष्वसंभवादित्युक्तप्रायं । गुणवत्त्वे सति क्रियावत्त्वं समवायिकारणत्वं च द्रव्यलक्षणमित्यप्ययुक्तं, गुणवद्द्रव्यमित्युक्ते लक्षणस्याव्याप्त्यतिव्याप्त्योरभावात् तद्वचनानर्थक्यात् । नन्वेवमत्रापि पर्यायवद्द्रव्यमित्युक्ते गुणवदित्यनर्थकं सर्वद्रव्येषु पर्यायबंधस्य भावात् । गुणवदिति चोक्ते पर्यायवदिति व्यर्थं तत एवेति तदुभयं लक्षणं द्रव्यस्य किमर्थमुक्तमित्यत्रोच्यते—

**गुणवद्द्रव्यमित्युक्तं सहानेकांतसिद्धये । तथा पर्यायवद्द्रव्यं क्रमानेकांतवित्तये ॥ २ ॥**

नास्त्येकत्र वस्तुनीहानेको धर्मः सर्वभावानां परस्परपरिहारस्थितिलक्षणत्वादेकेन धर्मेण सर्वात्मना व्याप्तेः धर्मिणि धर्मांतरस्य तद्व्याप्तिविरोधादन्यथा सर्वधर्मसंकरप्रसंगादिति । सहानेकांतनिराकरणवादिनः प्रति गुणवद्द्रव्यमित्युक्तं । सकृदनेकधर्माधिकरणस्य वस्तुनः प्रतीयमानत्वात् कुटे रूपादिवत् स्वपरपक्षसाधकत्वेतरधर्माधिकरणैकहेतुवत् । पितापुत्रादिव्यपदेशविषयानेकधर्माधिकरणपुरुषवद्वा । ग्राह्यग्राहकसंवेदनाकारं संवेदनमेकमुपयन् सकृदनेकधर्माधिकरणमेकं बहिरंतर्वा प्रतिक्षिपतीति कथं परीक्षको नाम ?

वेद्याद्याकारविवेकं परोक्षे संविदाकारं च प्रत्यक्षमिच्छन्नपि न सहानेकांतं निराकर्तुमर्हति संविदद्वैते प्रत्यक्षपरोक्षाकारयोरपारमार्थिकत्वे परमार्थेतराकारमेकं संवेदनं बलादापतेत् परमार्थाकारस्यैव सत्त्वात् संविदा नापारमार्थिकाकारः, सन्निति ब्रुवाणस्सकृत्सदसत्स्वभावाक्रांतमेकं संवेदनं स्वीकरोत्येव । न सन्नाप्यसत्संवेदनमित्यपि व्याहतं, पुरुषाद्वैतादिवत्ततः सकृदनेकस्वभावमेकं वस्तु तत्त्वतः सर्वस्य स्वेष्ट-तत्त्वव्यवस्थानुपपत्तेः । स्वपररूपोपादानापोहनव्यवस्थापाद्यत्वाद्वस्तुत्वस्येति प्रपंचितप्रायं । तथा क्रमानेकांतनिराकरणवादिनं प्रति पर्यायवद्द्रव्यं प्रतीयमानत्वात् सर्वस्य परिणामित्वसिद्धेः प्रतिपादितत्वात् । एवं क्रमाक्रमानेकांतनिराकरणप्रवणमानसं प्रति गुणपर्यायवद्द्रव्यमित्युक्तं सर्वथा निरुपाधिभावस्याप्रमाणत्वात् । अथवेयं त्रिसूत्री समवतिष्ठते, गुणवद्द्रव्यं पर्ययवद्द्रव्यं गुणपर्ययवद्द्रव्यं द्रव्यत्वान्यथानुपपत्तेरित्यनुमानत्रयं चेदं संक्षेपतो लक्ष्यते । ननु चैवं निष्क्रियं न सर्वद्रव्यसमवायिकारणं चेति पराकूतनिराकृतये क्रियावद्द्रव्यं समवायिकारणमिति च द्रव्यलक्षणमभिधीयते, पृथिव्यप्तेजोवायुमनसां क्रियावत्त्वसिद्धेः सर्वद्रव्याणां समवायिकारणत्वस्य च गुणवत्त्ववत्प्रतीतेरित्येतदपि च परेषां वचोऽसमीचीनं, द्रव्यवद्विशेषवत्सामान्यवच्च द्रव्यमिति द्रव्यलक्षणवचनप्रसंगात् । न कार्यद्रव्यवत्कारणद्रव्यं नापि विशेषवत्सामान्यवद्वेति परद्रव्यविप्रतिपत्तिनिराकरणार्थत्वात् । स्याद्वादिनां पुनः कार्यद्रव्यविशेषसदृशपरिणामलक्षणसामान्यानामपि क्रियावत्समवायवच्च पर्यायत्वान्न तथा वचनं कर्तव्यमिति सर्वमनवद्यं ॥

तदेवं जीवपुद्गलधर्माधर्माकाशभेदात्पंचविधमेव द्रव्यमिति वदंतं प्रत्याह;—

## कालश्च ॥ ३९ ॥

गुणपर्ययवद्द्रव्यमित्यभिसंबंधनीयम् ॥

**कालश्च द्रव्यमित्याह प्रोक्तलक्षणयोगतः । तस्माद्द्रव्यत्वविज्ञाननिवृत्त्यर्थं समासतः ॥ १ ॥**

के पुनः कालस्य गुणाः के च पर्यायाः प्रसिद्धा यतो गुणपर्यायवद्द्रव्यमिति प्रोक्तलक्षणयोगः सिद्ध्येत्तस्माद्द्रव्यत्वविज्ञाननिवृत्तेश्चेत्यत्रोच्यते—

**निःशेषद्रव्यसंयोगविभागादिगुणाश्रयः । कालः सामान्यतः सिद्धः सूक्ष्मत्वाद्याश्रयोन्यथा २**

**क्रमवृत्तिपदार्थानां वृत्तिकारणतादयः । पर्यायाः संति कालस्य गुणपर्यायवानतः ॥ ३ ॥**

सर्वद्रव्यैः संयोगस्तावत्कालस्यास्ति सादिरनादिश्च विभागश्चासर्वगतक्रियावद्द्रव्यैः संख्यापरिमाणादयश्च गुणा इति सामान्यतोऽशेषद्रव्यसंयोगस्य विभागादिगुणानां चाश्रयः कालः सिद्धः । विशेषेण तु सूक्ष्मामूर्तत्वागुरुलघुत्वैकप्रदेशत्वादयस्तस्य गुणा इति सूक्ष्मत्वादिविशेषगुणाश्रयश्च । क्रमवृत्तीनां पदार्थानां पुद्गलादिपर्यायाणां वृत्तिहेतुत्वपरिणामक्रियाकारणत्वपरत्वापरत्वप्रत्ययहेतुत्वाख्याः पर्यायाश्च कालस्य संति यैस्तत्रानुमानमिति । गुणपर्यायवान् कालः । कथं द्रव्यलक्षणभाक्? ततः कालो द्रव्यं गुणपर्ययवत्त्वाज्जीवादिद्रव्यवदिति तस्माद्द्रव्यत्वविज्ञाननिवृत्तिः ॥

## सोऽनंतसमयः ॥ ४० ॥

परमसूक्ष्मः कालविशेषः समयः अनंताः समया यस्य सोनंतसमयः कालोवबोद्धव्यः । पर्यायतो द्रव्यतो वा व्यवहारतः परमार्थतो वेति शंकायामिदमुच्यते—

**सोनंतसमयः प्रोक्तो भावतो व्यवहारतः । द्रव्यतो जगदाकाशप्रदेशपरिमाणकः ॥ १ ॥**

भावः पर्यायस्तेनानंतसमयः कालोनंतपर्यायवर्तनाहेतुत्वात् । एकैको हि कालाणुरनंतपर्यायान् वर्त-

यते प्रतिक्षणं शक्तिभेदाज्ञान्यथा । ततोनंतशक्तिः सन्ननंतसमयः व्यवहारतोऽभिधीयते समयस्य व्यवहारकालत्वादावलिकादिवत् । द्रव्यतस्तु लोकाकाशप्रदेशपरिमाणकोऽसंख्येय एव कालो मुनिभिः प्रोक्तो न पुनरेक एवाकाशादिवत्, नाप्यनंतः पुद्गलद्रव्यवत् प्रतिलोकाकाशप्रदेशं वर्तमानानां पदार्थानां वर्तनाहेतुत्वसिद्धेः । लोकाकाशाद्बहिस्तदभावात् । कथमेवमलोकाकाशस्य वर्तनं कालकृतं युक्तं तत्र कालस्यासंभवादिति चेत्, अत्रोच्यते—

**लोकाद्बहिरभावे स्यात्लोकाकाशस्य वर्तनं । तस्यैकद्रव्यतासिद्धेर्युक्तं कालोपपादितं ॥ २ ॥**

न ह्यलोकाकाशं द्रव्यांतरमाकाशस्यैकद्रव्यत्वात्तस्य लोकस्यांतर्बहिश्च वर्तमानस्य वर्तनं लोकवर्तिना कालेनोपपादितं युक्तं, न पुनः कालानपेक्षं सकलपदार्थवर्तनस्यापि कालानपेक्षत्वप्रसंगात् । न चैतदभ्युपगंतुं शक्यं, कालास्तित्वसाधितत्वात् ॥

ननु च जीवादीनि षडेव द्रव्याणि गुणपर्यायवत्त्वान्यथानुपपत्तेरित्ययुक्तं गुणानामपि द्रव्यत्वप्रसंगात्तेषां गुणपर्ययवत्त्वप्रतीतेरित्यारेकायामिदमाह;—

## द्रव्याश्रया निर्गुणा गुणाः ॥ ४१ ॥

आश्रयशब्दोधिकरणसाधनः कर्मसाधनो वा द्रव्यशब्द उक्तार्थः । द्रव्यमाश्रयो येषां ते द्रव्याश्रयाः, निष्क्रांता गुणेभ्यो निर्गुणाः । एवंविधा गुणाः प्रतिपत्तव्याः न पुनरन्यथा । तत्र द्रव्याश्रया इति विशेषणवचनाद्गुणानां किमवसीयत इत्युच्यते—

**द्रव्याश्रया इति ख्यातेः सूत्रेस्मिन्नवसीयते । गुणाश्रया गुणत्वाद्या न गुणाः परमार्थतः ॥१**

न हि गुणत्वसर्वज्ञेयत्वधर्मा गुणाश्रया गुणा शक्यव्यवस्थाः, परमार्थतस्तेषां कथंचिद्गुणेभ्योनर्थांतरतया गुणत्वोपचारात् । तत्त्वतस्तेषां गुणत्वे गुणानां द्रव्यत्वप्रसंगाद्गुणगुणिभावव्यवहारावस्थितिविरोधात् । द्रव्येष्वपि गुणास्तदुपचरिता एव भवंतु विशेषाभावादित्ययुक्तं, क्वचिन्मुख्यगुणाभावे तदुपचारायोगात् । ततो द्रव्याश्रया इति वचनादद्रव्याश्रयाणां गुणत्वादीनां गुणत्वं व्यावर्तितमवसीयते । निर्गुणा इति वचनात् । किं क्रियते इत्याह—

**निर्गुणा इति निर्देशात्कार्यद्रव्यस्य वार्यते । गुणभावः परद्रव्याश्रयिणोपीति निर्णयः ॥ २ ॥**

द्रव्याश्रया गुणा इत्युच्यमाने हि परमाणुद्रव्याश्रयाणां द्व्यणुकादिकार्यद्रव्याणां गुणत्वं प्रसज्येत तन्निर्गुणा इति वचनाद्विनिवार्यते तेषां गुणत्वेन द्रव्यत्वसिद्धेः । एतेन घटसंस्थानादीनां गुणत्वं प्रत्युक्तं, तेषां पर्यायत्वात् ॥

कः पुनरसौ पर्याय इत्याह;—

## तद्भावः परिणामः ॥ ४२ ॥

जीवादीनां द्रव्याणां तेन प्रतिनियतेन रूपेण भवनं तद्भावः तेषां द्रव्याणां स्वभावो वर्तमानकालतयानुभूयमानस्तद्भावः परिणामः प्रतिपत्तव्यः । स च—

**तद्भावः परिणामोत्र पर्यायः प्रतिवर्णितः । गुणाच्च सहभुवो भिन्नः क्रमवान् द्रव्यलक्षणम्॥१**

पूर्वस्वभावपरित्यागाज्जहद्वृत्तोत्पादो द्रव्यस्योत्तराकारः परिणामः स एव पर्यायः क्रमवान् द्रव्यलक्षणं । न चासौ गुण एव प्रतिवर्णितस्तस्य सहभावित्वात्कथंचिद्भिन्नत्वेन व्यवस्थानात् । नन्वेवं नयद्वयविरोधस्तृतीयस्य गुणार्थिकनयस्य सिद्धेरित्यारेकायामाह—

पर्याय एव च द्वेधा सहक्रमविवर्तितः । शुद्धाशुद्धत्वभेदेन यथाद्रव्यं द्विधोदितं ॥ २ ॥
तेन नैव प्रसज्येत नयद्वैविध्यबाधनं । संक्षेपतोन्यथा त्र्यादिनयसंख्या न वार्यते ॥ ३ ॥

संक्षेपतो हि द्रव्यार्थिकः पर्यायार्थिकश्चेति नयद्वयवचनं गुणवचने न बाध्यते पर्यायस्यैव सहक्रमविवर्तनवशाद्गुणपर्यायव्यपदेशात् द्रव्यस्य निरुपाधित्ववशेन शुद्धाशुद्धव्यपदेशवत् । प्रपंचस्तु यथा—

शुद्धद्रव्यार्थिकोऽशुद्धद्रव्यार्थिकश्चेति द्रव्यार्थिको द्वेधा । तथा सहभावी पर्यायार्थिकः क्रमभावी पर्यायार्थिकश्चेति पर्यायार्थिकोपि द्वेधा अभीयतां । ततस्त्र्यादिसंख्या न वार्यत एव द्विभेदस्य पर्यायार्थिकस्यैकविधस्य द्रव्यार्थिकस्य विवक्षायां नयत्रितयसिद्धेः । पर्यायार्थिकस्यैकविधस्य द्रव्यार्थिकस्य द्विभेदस्य विवक्षायामिति कश्चित् । द्वयोर्विभेदयोर्विवक्षायां तु नयचतुष्टयमिष्यते । ते नैगमसंग्रहव्यवहारविकल्पाद्द्रव्यार्थिकस्य त्रिविधस्य पर्यायार्थिकस्य चार्थपर्यायव्यंजनपर्यायार्थिकभेदेन द्विविधस्य विवक्षायां नयपंचकं शुद्धाशुद्धद्रव्यार्थिकद्वयस्य ऋजुसूत्रादिपर्यायार्थिकचतुष्टयस्य विवक्षायां नयषट्कं, नैगमादिसूत्रपाठापेक्षया नयसप्तकमिति । नयानामष्टादिसंख्यापि न वार्यते । ततो न गुणेभ्यः पर्यायाणां कथंचिद्भेदेन कथनमयुक्तं, येन गुणपर्ययवद्द्रव्यमिति द्रव्यलक्षणं निरवद्यं न भवेत् ॥

प्रतीयतामेवमजीवतत्त्वं समासतः सूत्रितसर्वभेदं ।
प्रमाणतस्तद्विपरीतरूपं प्रकल्प्यतां सन्नयतो निहत्य ॥ १ ॥

इति पंचमाध्यायस्य द्वितीयमाह्निकम् ।

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥





# अथ षष्ठोऽध्यायः ॥ ६ ॥

## कायवाङ्मनःकर्म योगः ॥ १ ॥

नन्वजीवपदार्थव्याख्यानानंतरमास्रवे वक्तव्ये किं चिकीर्षुः सूत्रकारः प्रागेव योगं ब्रवीतीत्यारेकायामिदमुपदिश्यते;—

**अथास्रवं विनिर्देष्टुकामः प्रागात्मनोंजसा । कायवाङ्मनसां कर्म योगोस्तीत्याह कर्मणाम् ॥ १ ॥**

आत्मनः कर्मणां ज्ञानावरणादीनामास्रवं विनिर्देष्टुकामोंजसा प्रागेव कायवाङ्मनसां कर्मयोगोस्तीत्याहेदं सूत्रं । तत्र योज्यते अनेनात्मा कर्मभिरिति योगो बंधहेतुर्न पुनः समाधिः युजेर्योगार्थस्य ण्यंतस्य प्रयोगात् । प्रेरवौष्यः प्रायेणेति यस्य विधानात् । स च कायवाङ्मनःकर्म, तेनैवात्मनि ज्ञानावरणादिकर्मभिर्बंधस्य करणात् तस्य बंधहेतुत्वोपपत्तेः । प्रधानपरिणामो योग इत्ययुक्तं, तस्यात्मबंधहेतुत्वायोगात् । प्रधानस्यैव बंधहेतुरसाविति चायुक्तं, बंधस्योभयस्थत्वसिद्धेः । तर्हि जीवाजीवपरिणामो बंध इति चेत्, सत्यं; जीवकर्मणोर्बंधस्य तदुभयपरिणामहेतुकत्ववचनात् । कायादिक्रियालक्षणयोगपरिणामो जीवस्यानुपपन्नो निष्क्रियत्वादिति न मंतव्यं ॥

**कायादिवर्गणालंबप्रदेशस्पंदनं हि यत् । युक्तं कायादिकर्मास्य सक्रियत्वप्रसिद्धितः ॥ २ ॥**

जीवस्य सक्रियत्वसाधनादुपपन्नमेव हि कायादि कर्मेष्यते । कायवर्गणालंबिप्रदेशपरिस्पंदनस्यात्मनि कायकर्मत्वाद्वाग्वर्गणालंबिनस्तस्य वाक्कर्मत्वात् मनोवर्गणापुद्गलालंबिनो मनःकर्मत्वात् । न च तस्यायोगकेवलिनि सिद्धेषु च प्रसक्तिस्तेषां प्रदेशपरिस्पंदनाभावात् । तथाहि—अयोगकेवलिनो न प्रदेशस्पंदः समुच्छिन्नक्रियाप्रतिपातिध्यानाश्रयत्वात् । यस्य तु प्रदेशस्पंदः स्यात् स तथा प्रसिद्धो यथा सयोग इति युक्तिः । सिद्धानामत एव प्रदेशस्पंदाभावस्तेषामयोगव्यपदेशः समुच्छिन्नक्रियाप्रतिपातिध्यानाश्रयत्वासिद्धेरव्यपदेश्यचारित्रमयत्वात् कायादिवर्गणाभावाच्च सिद्धानां न योगः युज्यते । ततो वीर्यांतरायस्य क्षयोपशमे क्षये वा सति कायादिवर्गणालम्बितो जीवप्रदेशपरिस्पंदो योगस्त्रिविधः प्रत्येतव्यः ।

## स आस्रवः ॥ २ ॥

स आस्रव इत्यवधारणात् केवलिसमुद्घातकाले दंडकपाटप्रतरलोकपूरणकाययोगस्यासंबंधव्यवच्छेदः । कायादिवर्गणालंबनस्यैव योगस्यास्रवत्ववचनात् । तत्स्पंदनालंबनत्वात् । कथमेवं च केवलिनः समुद्घातकालेभ्यो बंधः स्यादिति चेत्, कायवर्गणानिमित्तात्मप्रदेशपरिस्पंदस्य तन्निमित्तस्य भावात्स इति प्रत्येयं । कायवाङ्मनःकर्मास्रव इत्येकमेव सूत्रमस्तु लघुत्वादिति चेन्न, योग आस्रव इति सिद्धांतोपदेशमत्यव्यापाद्यप्रसंगात् । तर्हि योग आस्रव इत्यस्तु निरवद्यत्वादिति चेन्न, केवलिसमुद्घातस्याप्यास्रवत्वप्रसंगात् तस्य लोकयोगत्वेन प्रसिद्धेः संदेहाच्च । कायवाङ्मनःकर्म योग आस्रव इत्यपि न श्रेयः, संदेहप्रसक्तेः । कायवाङ्मनःकर्म योग इत्यपि संकेतं, न चैवं तद्युक्तं तस्य योगलक्षणत्वेन निर्देशात् । संबंधस्यात्मनि निःक्रियेपि भावात्स एवास्रवो युक्त इति चेन्न, आत्मनो निष्क्रियत्वनिराकरणात्तत्र तत्कर्मण एव

भावात् । ततो योगविभाग एव श्रेयान् निःसंदेहार्थत्वात् तदन्यस्यापि योगस्यास्रवत्वसंप्रतिपत्तेश्च ॥

कुतः पुनर्यथोक्तलक्षणो योग एवास्रवः सूत्रितो न तु मिथ्यादर्शनादयोपीत्याह;—

**स आस्रव इह प्रोक्तः कर्मागमनकारणं । पुंसोत्रानुप्रवेशेन मिथ्यात्वादेरशेषतः ॥ १ ॥**

मिथ्यादर्शनं हि ज्ञानावरणादिकर्मणामागमनकारणं मिथ्यादृष्टेरेव न पुनः सासादनसम्यग्दृष्ट्यादीनां । अविरतिरप्यसंयतस्यैव कार्त्स्न्येनैकदेशेन वा न पुनः संयतस्य, प्रमादोपि प्रमत्तपर्यंतस्यैव नाप्रमत्तादेः, कषायश्च सकषायस्यैव न शेषस्योपशांतकषायादेः, योगः पुनरशेषतः सयोगकेवल्यंतस्य तत्कारणमिति स एवास्रवः प्रोक्तोत्र शास्त्रे संक्षेपादशेषास्रवप्रतिपत्त्यर्थत्वान्मिथ्यादर्शनादेरत्रैव योगेनुप्रवेशात् तस्यैव मिथ्यादर्शनाद्यनुरंजितस्य केवलस्य च कर्मागमनकारणत्वसिद्धेः ॥

कीदृशः स योगः पुण्यस्यास्रवः कीदृशश्च पापस्येत्याह;—

## शुभः पुण्यस्याशुभः पापस्य ॥ ३ ॥

सम्यग्दर्शनाद्यनुरंजितो योगः शुभो विशुद्ध्यंगत्वात्, मिथ्यादर्शनाद्यनुरंजितोऽशुभः संक्लेशांगत्वात् । स पुण्यस्य पापस्य च वक्ष्यमाणस्य कर्मण आस्रवो वेदितव्यः । एतेन स्वस्मिन् दुःखं परत्र सुखं जनयन् च पुण्यस्य, स्वस्मिन् सुखं परस्मिन् दुःखं च कुर्वन् पापस्यास्रव इत्येकांतो निरस्तः । विशुद्धिसंक्लेशात्मकस्यैव स्वपरस्थस्य सुखासुखस्य पुण्यपापास्रवत्वोपपत्तेरन्यथातिप्रसंगात् । तदुक्तं—"विशुद्धिसंक्लेशांगं चेत्स्वपरस्थं सुखासुखं । पुण्यपापास्रवो युक्तो न चेद्व्यर्थस्तवार्हतः ॥" इति । तदेवं—

**शुभः पुण्यस्य विज्ञेयोऽशुभः पापस्य सूत्रितः । संक्षेपाद्विप्रकारोपि प्रत्येकं स द्विधास्रवः ॥१॥**

कायादियोगस्त्रिविधः शुभाशुभभेदात् । प्रत्येकं स द्विविधोपि द्विविध एवास्रवो विज्ञेयः । पुण्यपापकर्मणोः सामान्यादाश्रूयमाणयोर्द्विविधत्वेन सूत्रितत्वात् । कुतः पुनः शुभः पुण्यस्याशुभः पापस्यास्रवो जीवस्येति निश्चीयत इत्याह;—

**शुभाशुभफलानां तु पुद्गलानां समागमः । विशुद्धेतरकायादिहेतुस्तत्त्वात्स्वदृष्टवत् ॥ २ ॥**

जीवस्य शुभफलपुद्गलानामास्रवो विशुद्धकायाध्यवसानाद्यंतरंगबहिरंगकृतः शुभफलपुद्गलास्रवत्वात्स्वयं दृष्टशुभफलपथ्याहारादिसमागमवत् । तथैवाशुभफलपुद्गलसमागमो जीवस्याविशुद्धकारणकृतः अशुभफलपुद्गलसमागमत्वात् स्वयं दृष्टाशुभफलापथ्याहारादिवदित्यनुमानात्तन्निश्चयः । न तावदत्रासिद्धो हेतुः शुभस्य विशुद्धिरूपस्याशुभस्य च संक्लेशात्मनः परिणामस्य स्वसंवेदनसिद्धस्य कारणानां पुद्गलानां समागमस्य शुभाशुभफलस्य प्रसिद्धेस्तद्भावभावित्वान्यथानुपपत्तेः । ननु चात्मनि शुभाशुभफलपुद्गलसमागमस्यात्मविशेषगुणकृतत्वान्न शुभाशुभकायादियोगकृतत्वं युक्तमिति चेन्न, तस्य विशुद्धिसंक्लेशपरिणामव्यतिरेकेणासंभवात् । धर्माधर्मौ तद्व्यतिरिक्तावेवेति चेन्न, भावधर्माधर्मयोर्विशुद्धिसंक्लेशरूपत्वात् । द्रव्यधर्माधर्मयोः पुद्गलस्वभावत्वात् समागमस्य विशुद्धिसंक्लेशपरिणामानुगृहीतस्य कायादियोगकृतत्वोपपत्तेः । स्वप्रसिद्धशुभाशुभफलपथ्यापथ्याहारादिपुद्गलसमागमस्य तत्कृतत्वनिश्चयात्तदभावे सर्वथा तदनुपपत्तेः ।

**द्वैविध्यात्तत्फलं चैवमास्रवो द्विविधः स्मृतः । कायादिरखिलो योगः सोऽसंख्येयो विशेषतः**
**ज्ञानावरणवीर्यांतराययोः कर्मणोरिह । क्षयोपशमतोनंतभेदयोः स्पर्द्धकात्मनोः ॥ ४ ॥**
**प्रादुर्भावादनंतः स्याद्योगोऽनंतनिमित्तकः । अनंतकर्महेतुत्वादनंतात्मास्रवस्ततः ॥ ५ ॥**
**असंख्येयोऽथ संख्याताध्यवसायात्मकोऽस्त्रिधा । संख्यातश्च यथायोगं संक्षेपाद्द्विविधोप्ययं ॥६॥**

स्वामिद्वैविध्याच्च द्विविधो योग इत्याह;—

## सकषायाकषाययोः सांपरायिकेर्यापथयोः ॥ ४ ॥

यथासंख्यमभिसंबंधमाह;—

**स सांपरायिकस्य स्यात्सकषायस्य देहिनः । ईर्यापथस्य च प्रोक्तोऽकषायस्येह सुव्रतः ॥ १ ॥**

इह सूत्रे स आस्रवः सकषायस्य जीवस्य सांपरायिकस्य कर्मणः स्यात्, अकषायस्य पुनरीर्यापथस्येत्यास्रवस्योभयस्वामिकत्वात् द्वयोः प्रसिद्धिः ॥

**कषणादात्मनां घातात्कषायः कुगतिप्रदः । क्रोधादिः सह तेनात्मा सकषायः प्रवर्तनात् ॥२॥**
**कषायरहितस्तु स्यादकषायः प्रशांतितः । कषायस्य क्षयाद्वेति प्रतिपत्तव्यमागमात् ॥ ३ ॥**
**समंततः पराभूतिः संपरायः पराभवः । जीवस्य कर्मभिः प्रोक्तस्तदर्थं सांपरायिकं ॥ ४ ॥**
**कर्म मिथ्यादृगादीनामार्द्रचर्मणि रेणुवत् । कषायपिच्छिले जीवे स्थितिमाप्नुवदुच्यते ॥ ५ ॥**
**ईर्या योगगतिः सैवं यथा यस्य तदुच्यते । कर्मेर्यापथमस्यास्तु शुष्ककुड्येश्मवच्चिरं ॥ ६ ॥**
**योगमात्रनिमित्तं तु पुंस्यास्रवदपि स्थितिः । न प्रयात्यनुभागं वा कषायान्सत्त्वतः सदा ॥७॥**

कषायपरतंत्रस्यात्मनः सांपरायिकास्रवस्तदपरतंत्रस्येर्यापथास्रव इति सूक्तं । कथं पुनरात्मनः कस्यचित्पारतंत्र्यमपरस्यापारतंत्र्यं वात्मत्वाविशेषेप्युपपद्यते इत्याह;—

**कषायहेतुकं पुंसः पारतंत्र्यं समंततः । सत्त्वांतरानपेक्षीह पद्ममध्यगभृंगवत् ॥ ८ ॥**
**कषायविनिवृत्तौ तु पारतंत्र्यं निवर्त्यते । यथेह कस्यचिच्छांतकषायावस्थितिक्षणे ॥ ९ ॥**

संसारिणो जीवस्य पारतंत्र्यं चिदापन्नं कषायहेतुकं सत्त्वांतरानपेक्षित्वे सति पारतंत्र्यशब्दवाच्यत्वात् पद्ममध्यगभ्रमरस्य तत्पारतंत्र्यवत् । निःकषायस्य यतेर्दस्युकृतेन रक्षादिपरतंत्रत्वेन व्यभिचार इति चेन्न, तस्य सत्त्वांतरानपेक्षित्वेन विशेषणात् । वीतरागस्याघातिकर्मपारतंत्र्येणानेकांत इति चेन्न, तस्य पूर्वकषायकृतत्वात् । महेश्वरसिसृक्षापेक्षित्वात्संसारिजीवपारतंत्र्यस्य सत्त्वांतरानपेक्षित्वमसिद्धमिति चेन्न, महेश्वरापेक्षित्वस्य संसारिणामपाकृतत्वात् । नित्यशुद्धस्वभावत्वाज्जीवस्य कर्मपारतंत्र्यमसिद्धमिति चेन्न, तस्य संसाराभावप्रसंगात् । प्रकृतेः संसार इति चेन्न, पुरुषकल्पनावैयर्थ्यप्रसंगात् तस्या एव मोक्षस्यापि घटनात् । न च प्रकृतिरेव संसारमोक्षभागचेतनत्वाद्घटवत् । चेतनसंसर्गविवेकाभ्यां सा तद्भागेवेति चेत्, तर्हि यथा प्रकृतेश्चेतनसंसर्गात्पारतंत्र्यलक्षणः संसारस्तथा चेतनस्यापि प्रकृतिसंसर्गात् तत्पारतंत्र्यं सिद्धं, संसर्गस्य द्विष्ठत्वात् । नन्वेवं प्रकृतिपारतंत्र्येण व्यभिचारस्तस्य कषायहेतुकत्वाभावादिति न मंतव्यं, कापिलानां कषायस्य क्रोधादेः प्रकृतिपरिणामतयेष्टत्वात् । तत्पारतंत्र्यस्य कषायहेतुकत्वसिद्धेः । स्याद्वादिनां तु कषायस्य जीवपरिणामत्वेपि कर्मलक्षणप्रकृतेः पारतंत्र्यस्य तत्प्रकृतत्वोपपत्तेः कथं तेन व्यभिचारः? कषायपरिणामो हि जीवस्य कर्मणां बंधमादधानो यथा तत्पारतंत्र्यं कुरुते तथा कर्मणोपि जीवमपरतंत्रत्वमिति न व्यभिचारसाधनं कषायहेतुकत्वनिवृत्तौ निवर्तमानत्वादन्यथा मुक्तात्मनोपि पारतंत्र्यप्रसंगात् । जीवन्मुक्तस्यापि हि शांतकषायावस्थाकाले पारतंत्र्यनिवृत्तिरुपलभ्यते । "जीवन्नेव हि विद्वान् संगाशाभ्यां विमुच्यते" इति प्रसिद्धेः साध्यसाधनविकलमुदाहरणमिति च न शंकनीयं, पद्ममध्यगतस्य भृंगस्य तद्गंधलोभकषायहेतुकत्वेन तत्संकोचकाले पारतंत्र्यांतरानपेक्षिणः प्रसिद्धत्वात् । ततोऽनवद्यमिदं साधनं ॥

तत्र सांपरायिकास्रवस्य के भेदा इत्याह;—

**इंद्रियकषायाव्रतक्रियाः पंचचतुःपंचपंचविंशतिसंख्याः पूर्वस्य भेदाः ॥५॥**

इंद्रियाणि पंचसंख्यानि कषायाश्चतुःसंख्याः अव्रतानि पंचसंख्यानि क्रियाः पंचविंशतिसंख्या इति यथासंख्यमभिसंबंधः ॥

**सांपरायिकमत्रोक्तं पूर्वं तस्येंद्रियादयः । भेदाः पंचादिसंख्याः स्युः परिणामविशेषतः ॥१॥**

न हि जीवस्येंद्रियादिपरिणामानां विशेषोसिद्धः परिणामित्वस्य वचनात् । कारणविशेषापेक्षत्वाच्च स्पर्शादिषु विषयेषु पुंसः स्पर्शादीनि पंच भावेंद्रियाणि तदुपकृतौ वर्तमानानि द्रव्येंद्रियाणि पंचेंद्रियसामान्योपादानादुक्तलक्षणानि प्रत्येतव्यानि । तानि वीर्यांतरायेंद्रियज्ञानावरणक्षयोपशमान्नामकर्मविशेषोदयाच्चोपजायमानानि कायेभ्यो मोहनीयविशेषोदयादुत्पद्यमानेभ्यः कथंचिद्भिद्यंते नियतविषयत्वाच्च । कषायाः पुनरनियतविषया वक्ष्यमाणास्ततो भिन्नलक्षणानि हिंसादीन्यव्रतानि च वक्ष्यंते । क्रियास्तत्राभिधीयंते पंचविंशतिः ॥

**तत्र चैत्यश्रुताचार्यपूजास्तवादिलक्षणा । सम्यक्त्ववर्धनी ज्ञेया विद्भिः सम्यक्त्वसत्क्रिया ॥२॥**
**कुचैत्यादिप्रतिष्ठादिर्या मिथ्यात्वप्रवर्धनी । सा मिथ्यात्वक्रिया बोध्या मिथ्यात्वोदयसंस्कृता ३**
**कायादिभिः परेषां यद्गमनादिप्रवर्तनं । सदसत्कार्यसिद्ध्यर्थं सा प्रयोगक्रिया मता ॥ ४ ॥**
**न कायवाङ्मनोयोगास्तो निवर्तयितुं क्षमाः । पुद्गलास्तदुपादानं स्वहेतुद्वयतोन्यथा ॥ ५ ॥**
**संयतस्य सतः पुंसोऽसंयमं प्रति यद्भवेत् । आभिमुख्यं समादानक्रिया सा वृत्तघातिनी ॥ ६**
**ईर्यापथक्रिया तत्र प्रोक्ता तत्कर्महेतुका । इति पंचक्रियास्तावच्छुभाशुभफलाः स्मृताः ॥ ७॥**
**क्रोधावेशात्प्रदोषो यः सांतप्रादोषिकी क्रिया । तत्कार्यत्वात्सहेतुत्वात् क्रोधादन्या ह्यनीदृशात्**
**प्रदुष्टस्योद्यमो हंतुं गदिता कायिकी क्रिया । हिंसोपकरणादानं तथाधिकरणक्रिया ॥ ९ ॥**
**दुःखोत्पादनतंत्रत्वं स्यात्क्रिया पारितापिकी । क्रिया सा तावता भिन्ना प्रथमा तत्फलत्वतः॥**
**.................................................. । कषायाश्चेति पंचैताः प्रपत्तव्याः क्रियाः पराः॥११॥**
**रागार्द्रस्य प्रमत्तस्य सुरूपालोकनाशयः । स्याद्दर्शनक्रिया स्पर्शे स्पृष्टधीः स्पर्शनक्रिया ॥१२॥**
**एते चेंद्रियतो भिन्ने परिस्पंदात्मिके मते । ज्ञानात्मनःकषायाच्च तत्फलत्वात्तथाव्रतात् ॥१३॥**
**अपूर्वप्राणिघातार्थोपकरणप्रवर्तनं । क्रिया प्रात्ययिकी ज्ञेया हिंसाहेतुस्तथा परा ॥ १४ ॥**
**स्त्र्यादिसंपातिदेशेंतर्मलोत्सर्गः प्रमादिनः । शक्तस्य यः क्रियेत्येह सा समंतानुपातिकी ॥१५॥**
**अदृष्टे योऽप्रमृष्टे च स्थाने न्यासो यतेरपि । कायादेः सा त्वनाभोगक्रिया सैताश्च पंच ताः १६**
**परनिर्वर्त्यकार्यस्य स्वयं करणमत्र यत् । सा स्वहस्तक्रियावद्यप्रधाना धीमतां मता ॥ १७ ॥**
**पापप्रवृत्तावन्येषामभ्यनुज्ञानमात्मना । स्यान्निसर्गक्रियालस्यादकृतिर्वा सुकर्मणां ॥ १८ ॥**
**पराचरितसावद्यप्रकाशनमिह स्फुटं । विदारणक्रिया त्वन्या स्यादन्यत्र विशुद्धितः ॥ १९ ॥**
**आवश्यकादिषु ख्यातामर्हदाज्ञामुपासितुं । अशक्तस्यान्यथाख्यानादाज्ञाव्यापादिकी क्रिया ॥**
**शाठ्यालस्यवशादर्हत्प्रोक्ताचारविधौ तु यः । अनादरः स एव स्यादनाकांक्षक्रिया विदां २१**
**एताः पंच क्रियाः प्रोक्ताः परास्तत्त्वार्थवेदिभिः । कषायहेतुका भिन्नाः कषायेभ्यः कथंचन॥**
**छेदनादिक्रियासक्तचित्तत्वं स्वस्य यद्भवेत् । परेण तत्कृतौ हर्षः सेहारंभक्रिया मता ॥२२॥**
**परिग्रहाविनाशार्था स्यात्पारिग्रहिकी क्रिया । दुर्भेदकपटो ज्ञानादौ सा मायाक्रिया परा २३**

मिथ्यात्वादिकारणाविष्टदृढीकरणमत्र यत् । प्रशंसादिभिरुक्तान्या सा मिथ्यादर्शनक्रिया ॥२५॥
वृत्तमोहोदयात्पुंसामनिवृत्तिः कुकर्मणः । अप्रत्याख्यानक्रियेत्येताः पंच पंच क्रियाः स्मृताः २६

ननु चेंद्रियकषायाव्रतानां क्रियात्मभावनिवृत्तेः क्रियावचनेनैव गतत्वात् प्रपंचमात्रप्रसंग इति चेन्न, अनेकांतात् । नामस्थापनाद्रव्येंद्रियकषायाव्रतानां क्रियात्मभावत्वाभावात् । द्रव्यार्थादेशात्तेषां क्रियात्मभावत्वात् । किं च, द्रव्यभावास्रवत्वभेदाच्चेंद्रियादीनां क्रियाणां च न क्रियाः तत्प्रपंचमात्रं इंद्रियादयो हि शुभेतरास्रवपरिणामाभिमुखत्वाद्द्रव्यास्रवाः क्रियास्तु कर्मादानरूपाः पुंसो भावास्रवा इति सिद्धांतः । कायवाङ्मनःकर्म योगः स आस्रव इत्यनेन भावास्रवस्य कथनात् । द्रव्यास्रव एव योगः कर्मागमनभावास्रवस्य हेतुत्वादिति चेन्न, आस्रवत्यनेनेत्यास्रव इति करणसाधनतायां योगस्य भावास्रवत्वोपपत्तेः । एवमिंद्रियादीनामपि भावास्रवत्वप्रसंग इति चेन्न, तेषां क्रियाकारणत्वेन द्रव्यास्रवत्वेन विवक्षितत्वात् । आस्रवणमास्रव इति भावसाधनतायां क्रियाणां भावास्रवत्वघटनात् कार्यकारणभावाच्चेंद्रियादिभ्यः क्रियाणां पृथग्वचनं युक्तं इंद्रियादिपरिणामा हेतवः क्रियाणां तेषु सत्सु भावादसत्स्वभावादिति निगदितमन्यत्र । इंद्रियग्रहणमेवास्त्विति चेन्न, तदभावेप्यप्रमत्तादीनामास्रवसद्भावात् । एकद्वित्रिचतुरिंद्रियासंज्ञिपंचेंद्रियेषु यथासंभवं चक्षुरादींद्रियमनोविचाराभावेपि क्रोधादिहिंसादिपूर्वककर्मादानश्रवणात् । कषायाणां सांपरायिकभावे पर्याप्तत्वादन्याग्रहणमिति चेन्न, सन्मात्रेपि कषाये भगवत्प्रशांतस्य कषायस्य तत्प्रसंगात् । न च तस्येंद्रियकषायाव्रतक्रियास्रवाः संति, योगास्रवस्यैव तत्र भावात् । चक्षुरादिरूपाद्यग्रहण वीतरागत्वात् । अव्रतवचनमेवेति चेन्न, तत्प्रवृत्तिनिमित्तनिर्देशार्थत्वादिंद्रियकषायक्रियावचनस्य । तदेवमिंद्रियादय एकान्नचत्वारिंशत्संख्याः सांपरायिकस्य भेदा युक्ता एव वक्तुं संग्रहात् ॥

कुतः पुनः सत्यात्मसंभवतामेतेषामास्रवाणां विशेष इत्याह;—

## तीव्रमंदज्ञाताज्ञातभावाधिकरणवीर्यविशेषेभ्यस्तद्विशेषः ॥ ६ ॥

अतिप्रवृद्धक्रोधादिवशात्तीव्रः स्थूलत्वादुद्रिक्तः परिणामः, तद्विपरीतो मंदः, ज्ञानमात्रं ज्ञात्वा वा प्रवृत्तिर्ज्ञातं, मदात्प्रमादाद्वा अनवबुध्य प्रवृत्तिरज्ञातं, अधिक्रियंतेस्मिन्नर्था इत्यधिकरणं प्रयोजनाश्रयं द्रव्यं, द्रव्यस्यात्मसामर्थ्यं वीर्यं । भावशब्दः प्रत्येकमभिसंबध्यते भुजिवत्, तीव्रभावो मंदभावो ज्ञातभावो अज्ञातभाव इति । युगपदसंभवाद्भावशब्दस्यायुक्तं विशेषणमिति चेन्न, बुद्धिविशेषव्यापारात्तस्य तद्विशेषणत्वोपपत्तेः । न हि सत्प्रत्ययाविशेषलिंगाभावादेको भावः सत्तालक्षण एवेति युक्तं, भावद्वैविध्यात् । द्विविधो हि स्याद्वादिनां भावः परिस्पंदरूपोऽपरिस्पंदरूपश्च । तत्रापरिस्पंदरूपोंऽतर्द्रव्याणामस्तित्वमात्रमनादिनिधनं तदेकं कथंचिदिति मा भूद्विशेषकं, परिस्पंदरूपस्तु व्ययोदयात्मकस्तीव्रादीनां विशेषकः कायादिव्यापारलक्षणः सकृदुपपद्यते, कायादिस्पंदस्य च तस्याभिमतत्वात् । कायवाङ्मनःकर्मयोगाधिकारात्कथं तस्य विशेषकत्वमिति चेत्, बौद्धाद्व्यापारात् भेदेनाप्योद्धारसिद्धेः । आत्मनो व्यतिरेकाद्वा तीव्रादीनां भावत्वसिद्धेः । किं च, भावस्य भूयस्त्वात् असंख्येयलोकपरिमाणो हि जीवस्यैकैकस्मिन्नपि कषायादिपरिणामो भावः श्रूयते । ततो युक्तं भावस्य युगपत्तीव्रादीनां विशेषकत्वं । एकत्वेपि वा भावस्य परेक्षा बुद्ध्यानेकत्वकल्पनान्न चोद्यमेतत् । वीर्यस्य च परिणामत्वान्न पृथग्ग्रहणमिति चेन्न, तद्विशेषवतो व्यपरोपणादिष्वास्रवभेदज्ञापनार्थत्वात् पृथक्त्वं तद्ग्रहणस्य । वीर्यवतो ह्यात्मनस्तीव्रतीव्रतरादिपरिणामविशेषो जायत इति प्राणव्यपरोपणादिष्वास्रवफलभेदो ज्ञायते । तथा च तीव्रादिग्रहणमिति चेत् ? इतरथा हि जीवाधिकरणस्यात्मवीर्यस्य तीव्रादीनामपि पृथग्ग्रहणमनर्थकं स्यात्, तद्विशेष-

त्वाच्छरीरप्रमाणतासिद्धिः । कथं? अनुमानविरूप्यमाणत्वस्याबाधितत्वात्कार्यस्य शरीराद्यनन्यत्वोपपत्तेः । कुतः ।

पुनः सांपरायिकास्रवाणां विशेषः किंहेतुकेभ्यश्च प्रपंच्यत इत्याह—

तीव्रत्वादिविशेषेभ्यस्तेषां प्रत्येकमीरितः । बंधः कषायहेतुभ्यो विशेषो व्यासतः पुनः ॥१॥
न युक्तः सूत्रितभिन्नः कर्मबंधानुरूपतः । तच्च कर्म नृणां तस्मादिति हेतुफलस्थितिः ॥ २ ॥

जीवस्य भावास्रवो हि स्वपरिणाम एवेंद्रियकषायादिस्तीव्रत्वादिविशेषात् । प्रपंचतः पुनः कषायविशेषकारणाद्विशिष्टो ज्ञातः । स च कर्मबंधानुसारतोनेकप्रकारो युक्तः सूत्रितः । कर्म पुनर्नृणामनेकप्रकारं कषायविशेषाद्भावकर्मण इति हेतुफलव्यवस्था । परस्पराश्रयान्न तद्व्यवस्थेति चेन्न, बीजांकुरवदनादित्वात्कार्यकारणभावस्य तत्र सर्वेषां संप्रतिपत्तेश्च ॥

किं पुनरत्राधिकरणमित्याह;—

## अधिकरणं जीवाजीवाः ॥ ७ ॥

द्विवचनप्रसंग इति चेन्न, पर्यायापेक्षया बहुत्वनिर्देशात् । न हि जीवद्रव्यसामान्यमजीवद्रव्यसामान्यं वा हिंसाद्युपकरणभावेन सांपरायिकास्रवहेतुस्तेनाधिकरणत्वं प्रतिपद्यते केनचित्पर्यायेण विशिष्टस्यैव तस्य तथाभावप्रतीतेः । सामानाधिकरण्यं तदभेदार्पणाय जीवाजीवास्तदधिकरणमिति । सर्वथा तद्भेदेऽभेदे च सामानाधिकरण्यानुपपत्तिः । तत्त्वेभिर्निर्धारणार्थः सूत्रे सामर्थ्यान्निर्देशः । तेषु तीव्रमंदज्ञाताज्ञातभावाधिकरणवीर्यविशेषेषु यदधिकरणं तस्य जीवाजीवात्मकत्वेन निर्धारणात् । तदेव दर्शयति;—

तत्राधिकरणं जीवाजीवा यस्य विशेषतः । सांपरायिकभेदानां विशेषः प्रतिसूत्रितः ॥ १ ॥

तदधिकरणं जीवाजीवा इति प्रतिपत्तव्यं ॥

तत्राद्यं कुतो भिद्यते इत्याह;—

## आद्यं संरंभसमारंभारंभयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ८ ॥

आद्यग्रहणमनर्थकमुत्तरसूत्रे परवचनसामर्थ्यात्सिद्धेरिति चेन्न, विशिष्टार्थत्वात्तस्य । तदग्रहणे हि प्रतिपत्तिगौरवप्रसंगः । परवचनसामर्थ्यादनुमानात्संप्रत्ययात्परशब्दस्येष्टवाचिनोपि भावाद्वचनादाद्यसंप्रत्ययात्सिद्ध्येत्सूक्तमिह ग्रहणं । प्रमादवतः प्रयत्नावेशः प्राणव्यपरोपणादिषु संरंभः, क्रियायाः साधनानां समभ्यासीकरणं समारंभः, प्रथमप्रवृत्तिरारंभश्चादय आद्यकर्मणि द्योतनत्वात् । संरंभणं संरंभः, समारंभणं समारंभः, आरंभणमारंभ इति भावसाधनाः संरंभादयो, योगशब्दो व्याख्यातार्थः कायवाङ्मनःकर्म योग इति । कृतवचनं कर्तुः स्वातंत्र्यप्रतिपत्त्यर्थं, कारिताभिधानं परप्रयोगापेक्षं, अनुमतशब्दः प्रयोक्तुर्मानसव्यापारप्रदर्शनार्थः, क्वचिन्मौनव्रतिकवत्तस्य वचनप्रयोजकत्वासंभवात् कायव्यापारेऽप्रयोक्तृत्वान्मानसव्यापारसिद्धेः । कषंत्यात्मानमिति कषायाः मोक्तलक्षणाः विशेषशब्दस्य प्रत्येकं परिसमाप्तिर्भुजिवत्, तेन संरंभादिविशेषैर्योगविशेषैः कृतादिविशेषैः कषायविशेषैरेकशः प्रथमाधिकरणं भिद्यत इति सूत्रार्थो व्यवतिष्ठते । एतदेवाह—

जीवाजीवाधिकरणं प्रोक्तमाद्यं हि भिद्यते । संरंभादिभिराख्यातैर्विशेषैस्त्रिभिरेकशः ॥ १ ॥
योगैस्तथा त्रिधा त्रिभिः कारितानुमतैरपि । कृतादिभिः पुनर्भेदः क्रोधाद्यैः सह ॥ २ ॥

कषायैर्भिद्यमानात्मचतुर्भिरिति संग्रहः । कषायस्थानभेदानां सर्वेषां परमागमे ॥ ३ ॥

जीवाधिकरणं संरंभादिभिस्त्रिभिर्भिद्यमानं हिंसास्रवस्य तावत्रिविधं । हिंसायां संरंभः समारंभः आरंभश्चेति । तदेव योगैस्त्रिभिः प्रत्येकं भिद्यमानं नवधावधार्यते कायेन संरंभो वाचा संरंभो मनसा संरंभ इति, तथा समारंभस्तथा चारंभ इति । तदेव नवभेदं कृतादिभिर्भिन्नं सप्तविंशतिसंख्यं कायेन कृतकारितानुमताः संरंभसमारंभारंभाः, तथा वाचा मनसा चेति । पुनश्चैतत्सप्तविंशतिभेदं कषायैः क्रोधादिभिश्चतुर्भिर्भिद्यमानात्मकं भवेदष्टोत्तरशतं—क्रोधमानमायालोभैः कृतकारितानुमताः कायवाङ्मनसा संरंभसमारंभारंभा इति । तथैवानृतादिष्वव्रतेषु योज्यं । एवं कषायस्थानभेदानां सर्वेषां परमागमे संग्रहः कृतो भवति । तदप्यष्टोत्तरशतं प्रत्येकमसंख्येयैः कषायस्थानैः प्रतिभिद्यमानमसंख्येयमिति जीवाधिकरणं व्याख्यातं । जीव एव हि तथा परिणामविशेषकर्मणामास्रवतां तत्कारणानां च हिंसादिपरिणामानामधिकरणतां प्रतिपद्यते न पुनः पुद्गलादिस्तस्य तथा परिणामाभावात् । संरंभादीनां वा क्रोधाद्याविष्टपुरुषकर्तृकाणां तदनुरंजनादधिकरणभावो नीलपटादिवत् । न चैषां जीवविवर्तानामास्रवादिभावे जीवस्य तद्व्याघातः सर्वेषां तेषां तद्भेदाभावात् । न हि नीलगुणस्य नीलद्रव्यमेवाधिकरणं तत्रैव नीलप्रत्ययप्रसंगात् । नीलः पट इति संप्रत्ययात्तु पटस्यापि तदधिकरणाभावः सिद्धस्तस्य नीलिद्रव्यानुरंजनान्नीलद्रव्यत्वपरिणामात्तद्भावोपपत्तेः कथंचिदभेदसिद्धेः । सर्वथा तद्भेदेपि पटे संयुक्तनीलीसमवायान्नीलगुणस्य नीलः पट इति प्रत्ययो घटत एवेति चेन्न, आत्माकाशादिष्वपि प्रसंगात् । तैर्नीलीद्रव्यसंयोगविशेषाभावान्न तत्प्रसंग इति चेत्, स कोन्यो विशेषः संयोगस्य तथा परिणामात् । तथाहि परिणामिरवं हि तंतुषु तत्संयुक्तमत्रोपचारात् । न च नीलः पट इत्युपचरितः प्रत्ययोऽस्खलदुपचाराच्छुक्लः पट इति प्रत्ययवत् तद्बाधकाभावाविशेषात् । तत्सूक्तं यथा नील्या नीलगुणः पटे नील इति च तस्य तदधिकरणभावस्तथा संरंभादिष्वास्रवो जीवेष्वास्रव इति वास्रवस्य तेधिकरणं जीवपरिणामानां जीवग्रहणेन ग्रहणादधिकरणं जीवा इत्युपपत्तेः अन्यथा तत्परिणामग्रहणप्रसंगादिति ॥

ततः परमधिकरणमाह;—

## निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ ९ ॥

अधिकरणमित्यनुवर्तते । निर्वर्तनादीनां कर्मसाधनं भावो वा सामानाधिकरण्येन वैयधिकरण्येन वाधिकरणसंबंधः कथंचिद्भेदाभेदोपपत्तेः । द्विचतुर्द्वित्रिभेदा इति द्वंद्वपूर्वोन्यपदार्थनिर्देशः । कश्चिदाह—परवचनमनर्थकं पूर्वत्राद्यवचनात्, पूर्वत्राद्यवचनमनर्थकमिह सूत्रे परवचनात्तयोरेकतरवचनाद्वितीयस्यार्थापत्तिसिद्धेः पूर्वपरयोरन्योन्याविनाभावित्वात् । न चेयमर्थापत्तिरनैकांतिकी क्वचिद्व्यभिचारचोदनात् सर्वत्र व्यभिचारचोदनायाः प्रयासमात्रत्वात् परस्परापेक्षयोरव्यभिचारात् । पूर्वपरयोरंतराले मध्यमस्यापि संभवात्राविनाभाव इत्यप्ययुक्तं, मध्यमस्य पूर्वपरोभयापेक्षत्वात् पूर्वमात्रापेक्षया तस्य परत्वोपपत्तेः परमात्रापेक्षया पूर्वत्वघटनादव्यवहितयोः पूर्वपरयोरविनाभावसिद्धिः । परशब्दस्यासंबंधार्थत्वान्नानर्थक्यमित्यपि न साधीयो निवर्त्याभावात् । परसंबंधमधिकरणमिति वचनं हि स्वसंबंधमधिकरणं निवर्तयति न चेह तदस्ति, तथा वचनाभावात् । एतेन प्रकृष्टवाचित्वं परशब्दस्य प्रत्युक्तं तन्निवर्त्यस्याप्रकृष्टस्यावचनात् । इष्टवाचित्वमपि तादृशमेवानिष्टस्य निवर्त्यस्याभावात् । न च प्रकारांतरमस्ति यतोत्र परवचनमनर्थवत्स्यादिति ? सोप्ययुक्तवादी, परवचनस्यान्यार्थत्वात् । परं जीवाधिकरणादजीवाधिकरणमित्यर्थः तेनाद्याज्जीवाधिकरणाद्विदमपरं जीवाधिकरणमिति निवर्तितं स्यात् । जीवाजीवप्रकरणात्तत्सिद्धिरिति चेत्, ततो-

न्यस्याजीवस्यासंभवात्। द्रव्याश्रितत्वात् परशब्दस्य नानर्थक्यमनिष्टस्य निर्वर्तनादेरिष्टजीवाधिकरणस्यत्व निवर्तित्वात्। एतदेवाह—

ततोधिकरणं प्रोक्तं परं निर्वर्तनादयः। द्रव्यादिभेदास्तदस्य स्यादजीवात्मकमेव हि ॥ १ ॥

निर्वर्तना द्विधा, मूलोत्तरभेदात्। निक्षेपश्चतुर्धा, अप्रत्यवेक्षणदुःप्रमार्जनसहसानाभोगभेदात्। त एते निर्वर्तनादयो द्व्यादिभेदाः परमाद्यजीवाधिकरणादिष्टमधिकरणमस्याजीवात्मकत्वात्॥ नन्वेवं जीवाजीवाधिकरणद्वैविध्यात् द्वावेवास्रवौ स्यातां न पुनरिंद्रियादयो बहुप्रकाराः कथंचिदास्रवाः स्युः सर्वाश्च कषायानपेक्षानपि वा जीवाजीवानाश्रित्य ते प्रवर्तेरन्नित्यारेकायामिदमाह—

जीवाजीवान्समाश्रित्य कषायानुग्रहान्वितान्। आस्रवा बहुधा भिन्नाः स्युर्नृणामिंद्रियादयः

बहुविधक्रोधादिकषायानुग्रहीतात्मनो जीवाजीवाधिकरणानां बहुप्रकारत्वोपपत्तेस्तदाश्रितानामिंद्रियाद्यास्रवाणां बहुप्रकारत्वसिद्धिः। तत एव मुक्तात्मनोऽकषायवतो वा न तदास्रवप्रसंगः॥

कुतस्ते तथा सिद्धा एवेत्याह—

बाधकाभावनिर्णीतेस्तथा सर्वत्र सर्वदा। सर्वेषां स्वेष्टनात्सिद्धास्तीव्रत्वादिविशिष्टवत् ॥ ३ ॥

यथैव हि तीव्रमंदत्वादिविशिष्टाः सांपरायिकास्रवस्य भेदाः सुनिश्चितासंभवद्बाधकप्रमाणत्वात्सिद्धास्तथा जीवाजीवाधिकरणाः सर्वस्य तत एवेष्टसिद्धेः॥

एवं भूमा कर्मणामास्रवोयं सामान्येन ख्यापितः सांपरायी।
तत्सामर्थ्यादन्यमीर्यापथस्य प्राहुर्ध्वस्ताशेषदोषाश्रयस्य ॥ ४ ॥

यथोक्तप्रकारेण सकषायस्यात्मनः सामान्यतोस्यास्रवस्य ख्यापने सामर्थ्यादकषायस्य तैरीर्यापथास्रवसिद्धिरिति न तत्र सूत्रकाराः सूत्रितवंतः, सामर्थ्यसिद्धस्य सूत्रणे फलाभावादतिप्रसक्तेश्च। विशेषः पुनरीर्यापथास्रवस्याकषाययोगविशेषाद्बोद्धव्यः॥

इति षष्ठाध्यायस्य प्रथममाह्निकम्।

---

## तत्प्रदोषनिह्नवमात्सर्यांतरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ १० ॥

आस्रवा इति संबंधः। के पुनः प्रदोषादयो ज्ञानदर्शनयोरित्युच्यते—कस्यचित्तत्कीर्तनानंतरमनभिव्याहरतोंतःपैशून्यं प्रदोषः, परातिसंधानतो व्यपलापो निह्नवः, यावद्यथावद्देयस्य प्रदानं मात्सर्यं, विच्छेदकरणमंतरायः, वाक्कायाभ्यामनावर्तनमासादनं, प्रशस्तस्यापि दूषणमुपघातः। न चासादनमेव स्याद्दूषणेपि विनयाद्यनुष्ठानलक्षणत्वात्। तदिति ज्ञानदर्शनयोः प्रतिनिर्देशसामर्थ्यादन्यस्याश्रुतेः। ज्ञानदर्शनावरणयोरास्रवास्तत्प्रदोषादयो ज्ञानदर्शनप्रदोषादय इत्यभिसंबंधात्। समासे गुणीभूतयोरपि ज्ञानदर्शनयोरार्थेन न्यायेन प्रधानत्वात् तच्छब्देन परामर्शोपपत्तिः। सामान्यतः सर्वकर्मास्रवस्येंद्रियव्रतादिरूपस्य वचनादिह भूयोपि तत्कथनं पुनरुक्तमेवेत्यारेकायामिदमुच्यते—

विशेषेण पुनर्ज्ञानदृगावरणयोर्मताः। तत्प्रदोषादयः पुंसामास्रवास्तेनुभागगाः ॥ १ ॥

सामान्यतोभिहितानामप्यास्रवाणां पुनरभिधानं विशेषतः प्रत्येकं ज्ञानावरणादीनामष्टानामप्यास्रवप्रतिपत्त्यर्थम्। एते चास्रवाः सर्वेनुभागगाः प्रतिपत्तव्याः कषायास्रवत्वात्। पुंसामिति वचनात् प्रधानादिव्युदासः। कथं पुनस्ते तदावरणकर्मास्रवहेतव इत्युपपत्तिमाह—

तत्प्रदोषादयो ये ते तदावरणपुद्गलान् । नरो नयंति बीभत्सुप्रदोषाद्या यथा करान् ॥ २ ॥

ये यत्प्रदोषादयस्ते तदावरणपुद्गलानात्मनो ढौकयंति यथा बीभत्सुस्वशरीरप्रदेशप्रदोषादयः करादीन् । ज्ञानदर्शनविषयाश्च कस्यचित्प्रदोषादय इत्यत्र न तावदसिद्धो हेतुः क्वचित्कदाचित्प्रदोषादीनां प्रतीतिसिद्धत्वात् । नाप्यनैकांतिको विपक्षवृत्त्यभावात् । अशुच्यादिपूतिगंधिविषयैः प्रदोषादिभिस्तदन्यप्राणिविषयकराद्यावरणाढौकनहेतुभिर्व्यभिचारीति चेन्न, घ्राणसंबंधदुर्गंधपुद्गलाः प्रदोषादिहेतुकत्वात् तस्पिधायककराद्यावरणढौकनस्य दोषाद्यभावे तदधिष्ठानसंभूतबाह्याशुच्यादिगंधप्रदोषानुपपत्तेः । तद्विषयत्वपरिज्ञानायोगात् तदन्यविषयवत् । तत एव न विरुद्धं सर्वथा विपक्षावृत्तेरविरुद्धोपपत्तेः । विपक्षे बाधकप्रमाणाभावात्संदिग्धविपक्षव्यावृत्तिकोऽयं हेतुरिति चेन्न, साध्याभावे साधनाभावप्रतिपादनात् । यस्य यद्विषयाः प्रदोषादयस्तस्य तद्विषयास्तदविद्यैव न पुनस्तदावरणपुद्गलः सिद्ध्येत् ततो न तत्प्रदोषादिभ्यो ज्ञानदर्शनयोरावरणपुद्गलप्रसिद्धिरिति न शंकनीयं, तदावरणस्य कर्मणः पौद्गलिकत्वसाधनात् । कथं मूर्तकर्मामूर्तस्य ज्ञानादेरावरणमिति चेत्, तदविद्याद्यमूर्तं कथमिति समः पर्यनुयोगः । यथैवामूर्तस्य वारकत्वे ज्ञानादीनां शरीरमावारकं विप्रसज्यं तथैवामूर्तस्य सद्भावे तेषां गगनमावारकमासज्येत । तदविरुद्धत्वान्न तत्तदावारकमिति चेत्, तत एव शरीरमपि तद्विरुद्धस्यैव तदावारकत्वसिद्धेः । स्यान्मतं, ज्ञानादेर्वर्तमानस्य सतोप्यविद्याद्युदये तिरोधानात्तदेव तद्विरुद्धं तदावरणं युक्तं न पुनः पौद्गलिकं कर्म तस्य तद्विरुद्धत्वासिद्धेरिति । तदसत्, तस्यापि तद्विरुद्धत्वप्रतीतेः सुरादिद्रव्यवत् । ननु मदिरादिद्रव्यमविद्यादिविकारस्य मदस्य ज्ञानादिविरोधिनो जनकत्वात् परंपरया तद्विरुद्धं न साक्षादिति चेत्, पौद्गलिकं कर्म तथैव तद्विरुद्धमस्तु तस्यापि विज्ञानविरुद्धाज्ञानादिहेतुत्वात् तस्य भावावरणत्वात् । न च द्रव्यावरणापाये भावावरणसंभवोतिप्रसंगात् । युक्तस्यातत्प्राप्तेरपि वारणात् । तस्य सम्यग्ज्ञानसात्मीभावे मिथ्याज्ञानादेरत्यंतमुच्छेदात्तस्योदये तदात्मनो भावावरणस्य सद्भावात् । कुतो द्रव्यावरणसिद्धिरिति चेत्, आत्मनो मिथ्याज्ञानादिः पुद्गलविशेषसंबंधिबंधनस्तत्स्वभावान्यथाभावस्वभावत्वादुन्मत्तकादिहेतुकोन्मादादिवदित्यनुमानात् । मिथ्याज्ञानादिहेतुकापरमिथ्याज्ञानव्यभिचारान्नेदमनुमानं समीचीनमिति चेन्न, तस्यापि परापरपौद्गलिककर्मोदये सत्येव भावात् तदभावे तदनुपपत्तेः । परापरोन्मत्तकादिरससद्भावे तत्कृतोन्मादादिसंतानवत् । कामिन्यादिभावेनोद्भूतैरुन्मादादिभिरनेकांत इति चेन्न, तेषामपि परंपरया तन्वीमनोहरांगनिरीक्षणादिनिबंधत्वात् तदभावे तदनुपपत्तेः । ततो युक्तमेव तद् ज्ञानदर्शनप्रदोषादीनां तदावरणकर्मास्रवत्ववचनं युक्तिसद्भावाद्बाधकाभावाच्च तादृशान्यवचनवत् ॥

अथासद्वेद्यास्रवसूचनार्थमाह;—

## दुःखशोकतापाक्रंदनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥ ११ ॥

पीडाद्यसद्वेद्यास्रवसूचनार्थमाह । पीडालक्षणः परिणामो दुःखं, तच्चासद्वेद्योदये सति विरोधिद्रव्याद्युपनिपातात् । अनुग्राहकबांधवादिविच्छेदे मोहकर्मविशेषोदयादसद्वेद्ये च वैक्लव्यविशेषः शोकः, स च बांधवादिगताशयस्य जीवस्य चिरखेदलक्षणः प्रसिद्ध एव । परिवादादिनिमित्तादाविलांतःकरणस्य तीव्रानुशयस्तापः, स चासद्वेद्योदये क्रोधादिविशेषोदये च सत्युपपद्यते । परितापात्युपात्तप्रचुरविलापांगविकाराभिव्यक्तं क्रंदनं, तच्चासद्वेद्योदये कषायविषयोदये च प्रजायते । आयुरिंद्रियबलप्राणवियोगकरणं वधः, सोप्यसद्वेद्योदये च सति प्रत्येतव्यः । संक्लेशश्रवणं स्वपरानुग्रहणं हा नाथ नाथेत्यनुकंपाप्रायं परिदेवनं, तच्चासद्वेद्योदये मोहोदये च सति बोद्धव्यं । तदेवं शोकादीनामसद्वेद्योदयापेक्षत्वाद् दुःखजातीयत्वेपि

दुःखाद्युपवचनं मोहविशेषोदयापेक्षत्वात् तद्विशेषप्रतिपादनार्थत्वात् पर्यायार्थादेशाद्भेदोपपत्तेश्च नावर्ये-क्षुप्रेक्षणीयं, तथैवाक्षेपसमाधानवचनात् । वार्तिककारैर्दुःखजातीयत्वात्सर्वेषां पृथग्वचनमिति न कति-पयविशेषसंबद्धेन जात्याख्यानात् कथंचिदन्यत्वोपपत्तेश्चेति । दुःखादीनां कर्तादिसाधनभावः पर्यायिप-र्यायिणोर्भेदाभेदोपपत्तेः । तयोरभेदे तावदात्मैव दुःखपरिणामात्मको दुःखयतीति दुःखं, भेदे तु दुःख-यत्यनेनास्मिन्वा दुःखमिति, तन्मात्रकथने दुःखनं दुःखमिति । शोकादिष्वपि कर्तृकरणाधिकरणभावसा-धनत्वं प्रत्येयं, तदेकांतावधारणानुपपन्नमन्यतरैकांतसंग्रहात् । पर्यायैकांते हि दुःखादिचित्तस्य कर्तृत्वसं-ग्रहः करणादित्वसंग्रहो वा स्यान्न पुनस्तदुभयसंग्रहः । तत्र कर्तृत्वसंग्रहस्तावदयुक्तः करणाद्यभावे तदसंभवात् । मनःकरणं संतानोधिकरणमित्युभयसंग्रहोपि न श्रेयान्, कर्तृकाले स्वयमसतः पूर्वविज्ञा-नलक्षणस्य मनसः करणत्वायोगात् षण्णामनंतरातीतं विज्ञानं यद्धि तन्मन इति वचनात् । सत्ता न भावा वस्तु ततोधिकरणत्वानुपपत्तेः खरविषाणवत् । चक्षुरादिकरणं शरीरमधिकरणमित्यपि न श्रेयस्त-स्यापि तत्काले स्थित्यभावात् । यदि पुनर्दुःखादि चित्तं कर्तृ स्वकार्योत्पादने तत्समानसमयवर्ति चक्षुरादि करणं शरीरमधिकरणं व्यवहारमात्रात् । परमार्थतस्तु न किंचित्कर्तृ करणादि वा भूतिमात्रव्यतिरेकेण भावानां क्रियाकारकत्वायोगात् । भूतिर्येषां क्रिया सैव कारकं सैव चोद्यते इति वचनात् । सर्वस्या-कर्तृत्वादिव्यावृत्तेरेव कर्तृत्वादिव्यवहारणादिति मतं, तदापि न दुःखादिचित्तस्य कर्तुश्चक्षुरादिकरणाधिक-रणे तस्य बहिर्भूतरूपादिज्ञानोत्पत्तौ करणत्ववचनात् । नापि मनस्तस्य दुःखादिचित्तसमानकालसंभवात् । ननु रूपादिस्कंधपंचकस्य युगपद्भावाद्दुःखाद्यनुभवात्मकस्य वेदनास्कंधस्य पूर्वस्य कर्तृत्वमुत्तरदुःखाद्युत्पत्तौ तस्यैव वाधिकरणत्वं सर्वस्य स्वाधिकरणत्वात् । दुःखादिहेतुर्बहिरर्थविज्ञप्तिलक्षणस्य वेदनस्कंधस्य चोत्त-रतत्कार्योत्पूर्वकस्य मनोव्यपदेशमर्हतः करणत्वं युक्तमेवेति चेन्न, निरन्वयनष्टस्य कर्तृकरणत्वविरोधात् । स्वकार्यकाले तदनाशे वा क्षणभंगविघातः । तथैव स्वभावस्य भावस्य स्वात्मैवाधिकरणमित्यप्यसंभाव्यं, शक्तिवैचित्र्ये सति तस्य तदुपपत्तेः तस्याध्येयत्वशक्त्याधेयताव्यवस्थितेरधिकरणत्वशक्त्या पुनरधिकरण-त्वस्थितिः । संवृत्या तदुपपत्तौ परमार्थतो न कर्तादिसिद्धिरिति न दुःखादीनां कर्तादिसाधनत्वं । नित्य-त्वैकांतेपि न तत्संगच्छते, निरतिशयात्मनः कर्तृत्वानभ्युपगमात् । केनचित्सहकारिणा ततो भिन्नस्याति-शयस्य करणे तस्य पूर्वकर्तृत्वावस्थातोऽप्रच्युतेः कर्तृत्वविरोधात् । प्रच्युतौ वा नित्यत्वविघातात् तदभि-न्नस्यातिशयस्य करणे तस्यैव कृतेरनित्यतैव स्यात् । कथंचित्तस्य नित्यतायां परमताश्रयणं दुर्निवारं । एतेन प्रधानपरिणामस्य महदादेः करणत्वं प्रत्युक्तं, स्याद्वादानाश्रयणे कस्यचित्परिणामानुपपत्तेः प्रसाध-नात् । तत एव नाधिकरणत्वं कर्मता वा तस्येति चिंतितं । एतेन स्वतो भिन्नानेकगुणस्यात्मनः कर्तृत्वं व्यवच्छिन्नं, नित्यस्यानादेयाप्रहेयातिशयत्वात् । तत एव न मनसः करणत्वं दुःखाद्युत्पत्तौ सर्व-थाप्यनित्यत्वप्रसंगात् । दुःखाधिकरणत्वमप्यात्मनोनुपपन्नं पूर्वं तदधिकरणस्वभावस्यात्यागे तद्विरोधात्, त्यागे नित्यत्वक्षतेः सर्वथापत्तेः । ततोनेकात्मन्येवात्मनि दुःखादीनि संस्थितौ संभाव्यंते नेतरत्र । तान्या-त्मपरोभयस्थानि क्रोधाद्यावेशवशाद्भवंति स्वघातनवत् स्वदास्यादिताडनवत् स्वाधमर्णनिरोधकोत्तमर्णवच्च । असद्वेद्यस्येत्यत्र विद्यादीनामवगमनाद्यर्थत्वादनर्थको निर्देश इति चेन्न, विदेश्चेतनार्थस्य ग्रहणात् विदेश्चे-तनार्थे चुरादित्वात्तस्येदं वेद्यते इति वेद्यं न पुनरवगमनलाभविचारणसद्भावार्थानां वेत्तिविंदतिविन्तिवेत्ती-नामन्यतमग्रहणं येनानर्थको निर्देशः स्यात् । तदसद्वेद्यमप्रशस्तत्वादनिष्टफलप्रादुर्भावकारणत्वाच्च विशि-ष्यते । असच्च तद्वेद्यं च तदिति । अत्र सूत्रे दुःखाभिधानमादौ प्रधानत्वात् । तस्य प्राधान्यं तद्विकल्प-त्वादितरेषां शोकादीनां । शोकादिग्रहणमत्यन्यविकल्पोपलक्षणार्थत्वादन्यसंग्रहः । के पुनस्तेन्ये? अशुभ-

प्रयोगैः पूर्णपरपरिवादाः कृपाविहीनत्वं अंगोपांगछेदनतर्जनसंत्रासनानि । तथा भर्त्सनभक्षणविश्रसनबंधनसंरोधननिरोधाधैर्मर्दनचिदूभेदनवाहनसंघर्षणानि तथा विग्रहे रौक्ष्यविधानं परात्मनिंदाप्रशंसने चैव संक्लेशबंधनमायुर्बहुमानत्वं च सुखलोभात् बह्वारंभपरिग्रहविश्रंभविघातनैकशीलत्वं पापक्रियोपजीवननिःशीलानर्थदंडकरणानि तद्दानं च परेषां पापाचारैर्जनैश्च सह मैत्री तत्सेवा संभाषणसंव्यवहाराच्च संलक्ष्याः । ते एते दुःखादयः परिणामाः स्वपरोभयस्थाः असद्वेद्यस्य कर्मण आस्रवाः प्रत्येतव्याः । प्रपंचतोऽन्यत्र तदभिधानात् । अथ दुःखादीनामसद्वेद्यास्रवत्वं किमागममात्रसिद्धमाहोस्विदनुमानसिद्धमपीत्याशंकायामस्यानुमानसिद्धत्वमादर्शयति—

**दुःखादीनि यथोक्तानि स्वपरोभयगानि तु । आस्रावयंति सर्वस्याप्यसातफलपुद्गलान् ॥ १ ॥**
**तज्जातीयात्मसंक्लेशविशेषत्वाद्यथानले । प्रवेशादिविधायीनि स्वसंवेद्यानि कानिचित् ॥ २ ॥**

दुःखमात्मस्थमसातफलपुद्गलास्रावि दुःखजातीयात्मसंक्लेशविशेषत्वात् पावकप्रवेशकारिप्रसिद्धदुःखवत् । तथा परत्र दुःखमसातफलपुद्गलास्रावि तत एव तद्वत्, तथोभयस्थं दुःखं विवादापन्नमसातफलपुद्गलास्रावि तत एव तद्वत् । एवं शोकतापाक्रंदनवधपरिदेवनान्यात्मपरोभयस्थान्यसातफलपुद्गलास्रावीण्युत्पादयितुर्जीवस्य दुःखजातीयात्मसंक्लेशविशेषत्वाद्विषभक्षणादिविधायिशोकतापाक्रंदनवधपरिदेवनवत् इत्यष्टादशानुमानानि प्रतिपत्तव्यानि । न तावदत्र दुःखजातीयात्मसंक्लेशविशेषत्वं साधनमसिद्धं, क्रोधाद्युपनीतदुःखादीनां विशुद्धिरिति विरोधिनां दुःखजातीयात्मसंक्लेशविशेषत्वप्रसिद्धेः । नाप्यनैकांतिकं तीर्थकराद्युत्पादितकायक्लेशादिदुःखेन न स्वपरोभयस्थेनाप्यसातफलपुद्गलानास्रवणादिति न मंतव्यं, तस्यातज्जातीयत्वादात्मसंक्लेशविशेषत्वासिद्धेः । तत एव न तीर्थकरोपदेशविरोधात् दुःखादीनामसद्वेद्यास्रवत्वायुक्तिः, सर्वेषां स्वर्गापवर्गसाधनानां दुःखजातीनां पापास्रवत्वप्रसंगात् । तपश्चरणाद्यनुष्ठायिनो द्वेषाद्यभावाच्च आसादितप्रसादत्वाच्च दिष्ट्या प्रसन्नमनसामेव स्वपरोभयदुःखाद्युत्पादने पापास्रवत्वसिद्धेः ॥ "ग्रामे पुरे वा विजने जने वा प्रासादशृंगे द्रुमकोटरे वा । प्रियांगनांकेथ शिलातले वा मनोरतिं सौख्यमुदाहरंति ॥" इति । न च मनोरत्यभावे बुद्धिपूर्वः स्वतंत्रः कश्चित्तपःक्लेशमारभते, विरोधात् । ततो न प्रकृतहेतोः तपश्चरणादिभिर्व्यभिचारः सर्वसंप्रतिपत्तेः । परेषामसद्वेद्यादीनां निराकरणाच्च निरवद्यदुःखादीनामसद्वेद्यास्रवत्वसाधनं ॥

## भूतव्रत्यनुकंपादानसरागसंयमादियोगः क्षांतिः शौचमिति सद्वेद्यस्य ॥ १२ ॥

आयुर्नामकर्मोदयवशाद्भवनाद्भूतानि सर्वप्राणिन इत्यर्थः । व्रताभिसंबंधिनो व्रतिनः सागारानगारभेदा वक्ष्यमाणाः । अनुकंपनमनुकंपा । भूतानि च व्रतिनश्च भूतव्रतिनः तेषामनुकंपा भूतव्रत्यनुकंपा । 'साधनं कृता बहुल'मिति वृत्तिः गले चोपकवत् मयूरव्यंसकादित्वाद्वा । स्वस्य परानुग्रहबुद्ध्यातिसर्जनं दानं वक्ष्यमाणं, सांपरायनिवारणप्रवणो अक्षीणाशयः सरागः, प्राणींद्रियेष्वशुभप्रवृत्तेर्विरतिः संयमः सरागो वा संयमः स आदिर्येषां ते सरागसंयमादयः । संयमासंयमकामनिर्जराबालतपसां वक्ष्यमाणानामादिग्रहणादवरोधः । निरवद्यक्रियाविशेषानुष्ठानं योगः समाधिरित्यर्थः । तस्य ग्रहणं कायादिदंडभावनिवृत्त्यर्थं । भूतव्रत्यनुकंपा च दानं च सरागसंयमाश्चेति द्वंद्वः तेषां योगः । धर्मप्रणिधानात्क्रोधादिनिवृत्तिः क्षांतिः क्षमूष् सहने इत्यस्य दिवादिकस्य रूपं । लोभप्रकाराणामुपरमः शौचं, स्वद्रव्यात्यागपरद्रव्यापहरणसान्यासिकनिह्नवादयो लोभप्रकाराः तेषामुपरमः शौचमिति प्रतीताः । इतिकरणः प्रकारार्थः । वृत्तिप्रयोगसंसर्गी

चेन्न, तत्र संसर्गमात्रत्वात् । प्रमादसंमोहाभ्यां सचित्तादिषु वृत्तिर्देशविरतस्योपभोगपरिभोगविषयेषु परिमितेष्वपीत्यर्थः । द्रवो वृष्यं चाभिषवः, असम्यक् पक्वो दुःपक्वः । त एतेतिक्रमाः पंच कथमित्याह—

**तथा सचित्तसंबंधाहाराद्याः पंच सूत्रिताः । तेत्र षष्ठस्य शीलस्य तद्विरोधनहेतवः ॥ १ ॥**

सप्तमस्य शीलस्य केतिक्रमा इत्याह;—

## सचित्तनिक्षेपापिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥ ३६ ॥

सचित्ते निक्षेपः, प्रकरणात् सचित्तेनापिधानं, अन्यदातृदेयार्पणं परव्यपदेशः, प्रयच्छतोप्यादराभावो मात्सर्यं, अकाले भोजनं कालातिक्रमः ॥ कुत एतेतिचारा इत्याह;—

**स्मृताः सचित्तनिक्षेपप्रमुखास्ते व्यतिक्रमाः । सप्तमस्येह शीलस्य तद्विघातविधायिनः ॥ १ ॥**

अथ सल्लेखनायाः केतिचारा इत्याह;—

## जीवितमरणाशंसामित्रानुरागसुखानुबंधनिदानानि ॥ ३७ ॥

आकांक्षणमाशंसा, अवश्यहेयत्वे शरीरस्यावस्थानादरो जीविताशंसा, जीवितसंक्लेशान्मरणं प्रति चित्तानुरोधो मरणाशंसा, पूर्वं सुहृत्सहपांशुक्रीडनाद्यनुसरणं मित्रानुरागः, पूर्वानुभूतप्रीतिविशेषस्मृतिसमन्वाहारः सुखानुबंधः, भोगाकांक्षया नियतं दीयते चित्तं तस्मिंस्तेनेति वा निदानं । त एते संन्यासस्यातिक्रमाः कथमित्याह—

**विज्ञेया जीविताशंसाप्रमुखाः पंच तत्त्वतः । प्रोक्तसल्लेखनायास्ते विशुद्धिक्षतिहेतवः ॥ १ ॥**

तदेवं शीलव्रतेष्वनतिचारैस्तीर्थकरत्वस्य परमशुभनाम्नः कर्मणो हेतुरित्येतस्य पुण्यास्रवस्य प्रपंचतो निश्चयार्थं व्रतशीलसम्यक्त्वभावनातदतिचारप्रपंचं व्याख्याय संप्रति शक्तितस्त्यागतपसी इत्यत्र प्रोक्तस्य व्याख्यानार्थमुपक्रम्यते;—

## अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३८ ॥

स्वपरोपकारोनुग्रहः, स्वशब्दो धनपर्यायवचनः । किमर्थोयं निर्देश इत्याह—

**स्वं धनं स्यात्परित्यागोतिसर्गस्तस्य तु स्फुटः । तद्दानमिति निर्देशोतिप्रसंगनिवृत्तये ॥ १ ॥**
**अनुग्रहार्थमित्येतद्विशेषणमुदीरितं । तेन स्वमांसदानादि निषिद्धं परमापकृत् ॥ २ ॥**

न हि परकीयवित्तस्यातिसर्जनं दानं स्वस्यातिसर्ग इति वचनात् । स्वकीयं हि धनं स्वमिति प्रसिद्धं धनपर्यायवाचिनः स्वशब्दस्य तथैव प्रसिद्धेः । न चैवं स्वदुःखकारणं परदुःखनिमित्तं वा सर्वमाहारादिकं धनं भवतीति तस्याप्यतिसर्गो दानमिति प्रसज्यते सामान्यतोनुग्रहार्थमिति वचनात् । स्वानुग्रहार्थस्य वापरानुग्रहार्थस्य च धनस्यातिसर्गो दानमिति व्यवस्थितेः । तेन च विशेषणेन स्वमांसादिदानं स्वापायकारणं परस्यावद्यनिबंधनं च प्रतिक्षिप्तमालक्ष्यते, तस्य स्वपरयोः परमापकारहेतुत्वात् ॥

कुतस्तस्य दानस्य विशेष इत्याह;—

## विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ३९ ॥

प्रतिग्रहादिक्रमो विधिः, विशेषो गुणकृतः तस्य प्रत्येकमभिसंबंधः । तपःस्वाध्यायपरिवृद्धिहेतुत्वादिर्द्रव्यविशेषः, अनसूयाऽविषादादिर्दातृविशेषः, मोक्षकारणगुणसंयोगः पात्रविशेषः । एतदेवाह—

**तद्विशेषः प्रपंचेन स्वाध्यायादिविशेषकः । दातुः शुद्धिविशेषाय सम्यग्बोधस्य विश्रुतः ॥ १ ॥**

कुतोयं विध्यादीनां यथोदितो विशेषः स्यादित्याह;—

**विध्यादीनां विशेषः स्यात्स्वकारणविशेषतः । तत्कारणं पुनर्बाह्यमांतरं चाप्यनेकधा ॥ २ ॥**

विधिद्रव्यदातृपात्राणां हि विशेषः, स्वकारणविशेषात् । तच्च कारणं बाह्यमनेकधा द्रव्यक्षेत्रकालभावभेदात् । आंतरं चानेकधा श्रद्धाविशेषादिपरिणामः । कः पुनरसौ विध्यादीनां विशेषः प्रख्यातो यतो दानस्य विशेषतः फलविशेषसंपादनः स्यादित्याह—

**पात्रपरिग्रहादिभ्यो विधिभ्यस्तावदास्रवः । दातुः पुण्यस्य संक्लेशरहितेभ्योतिशायिनः ॥३॥**
**किंचित्संक्लेशयुक्तेभ्यो मध्यमस्योपवर्णितः । बृहत्संक्लेशयुक्तेभ्यः स्वल्पस्येति विभिद्यते ॥ ४ ॥**
**निकृष्टमध्यमोत्कृष्टविशुद्धिभ्यो विपर्ययः । तेभ्यः स्यादिति संक्षेपादुक्तं सूरिभिरंजसा ॥ ५ ॥**
**गुणवृद्धिकरं द्रव्यं पात्रेऽपात्रे समर्पितं । दोषवृद्धिकरं पापकारि मिश्रं तु मिश्रकृत् ॥ ६ ॥**
**दाता गुणान्वितः शुद्धः परं पुण्यमवाप्नुयात् । दोषान्वितस्त्वशुद्धात्मा परं पापमुपैति सः ॥७॥**
**गुणदोषान्वितः शुद्धाशुद्धभावे समश्नुते । बहुधा मध्यमं पुण्यं पापं चेति विनिश्चयः ॥ ८ ॥**
**दत्तमन्नं सुपात्राय स्वल्पमप्युरुपुण्यकृत् । मध्यमाय तु पात्राय पुण्यं मध्यममानयेत् ॥ ९ ॥**
**कनिष्ठाय पुनः स्वल्पमपात्रायाफलं विदुः । पापापापं फलं चेति सूरयः संप्रचक्षते ॥ १० ॥**

सामग्रीभेदाद्धि दानविशेषः स्यात् कृष्यादिविशेषाद्बीजविशेषवत् । निरात्मकत्वे सर्वभावानां विध्यादिस्वरूपाभावः क्षणिकत्वावधिविज्ञानस्य तदभिसंबंधाभावः नित्यत्वाज्ञत्वनिःक्रियत्वाच्च तदभावः । क्रियागुणसमवायादुपपत्तिरिति चेन्न, तत्परिणामाभावात् क्षेत्रस्य वाचेतनत्वात् । स्याद्वादिनस्तदुपपत्तिरनेकांताश्रयणात् । तथाहि—

**अपात्रेभ्यो दत्तं भवति सफलं किंचिदपरं न पात्रेभ्यो वित्तं प्रचुरमुदितं जातुचिदिह ।**
**अदत्तं पात्रेभ्यो जनयति शुभं भूरि गहनं जनोऽयं स्याद्वादं कथमिव निरुक्तं प्रभवति ॥ ११ ॥**

किंचिद्धि वस्तु विशुद्धांतरमपात्रेभ्योपि दत्तं सफलमेव, संक्लेशदुर्गतं तु पात्रेभ्यो दत्तं न प्रचुरमपि सफलं कदाचिदुपपद्यतेऽतिप्रसंगात्, ..........मदत्तमपि पात्रेभ्योऽपात्रेभ्यश्च शुभमेव फलं जनयति संक्लेशांगाप्रदानस्यैव श्रेयस्करत्वात् । ततः पात्रायापात्राय वा स्याद्दानं सफलं, स्याददानं, स्यादुभयं, स्यादवक्तव्यं च स्याद्दानं वा वक्तव्यं चेति स्याद्वादिनयप्रमाणमयज्योतिःप्रतानो अपसारितसकलकुनयतिमिरपटलः सम्यगनेकांतवादिदिनकर एव विभागेन विभावयितुं प्रभवति न पुनरितरो जनः कूपमंडूकवत्पारावारवारिविजृंभितमिति प्रायेणोक्तं पुरस्तात् प्रतिपत्तव्यम् ॥

इति सप्तमाध्यायस्य द्वितीयमाह्निकम् ।

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे सप्तमोऽध्यायः समाप्तः ॥ ७ ॥





# अथ अष्टमोऽध्यायः ॥ ८ ॥

अथ बंधेऽभिमतव्येऽभिधीयंतेस्य हेतवः । निर्हेतुकत्वकूटस्थाकारणत्वनिवृत्तये ॥ १ ॥

## मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः ॥ १ ॥

मिथ्यादर्शनं क्रियास्वंतर्भूतं, विरतिप्रतिपक्षभूताप्यविरतिः, आज्ञाव्यापादनानाकांक्षक्रियायामंतर्भावः प्रमादस्य, कषायाः क्रोधादयः प्रोक्ताः, योगाः कायादिविकल्पाः प्रक्लृप्ताः । मिथ्यादर्शनं द्वेधा नैसर्गिकपरोपदेशनिमित्तभेदात् । तत्रोपदेशनिरपेक्षं नैसर्गिकं, परोपदेशनिमित्तं चतुर्विधं क्रियाक्रियावादाज्ञानिकवैनयिकमतविकल्पात् । चतुरशीतिः क्रियावादा इति कौत्कुल्यकंठविद्धिप्रभृतिमतविकल्पात् । अशीतिशतमक्रियावादानां मरीचिकुमारोलूककपिलादिदर्शनभेदात् । आज्ञानिकवादाः सप्तषष्टिसंख्याः साकल्यवाकल्यप्रभृतिदृष्टिभेदात् । वैनयिकानां द्वात्रिंशत् वशिष्टपराशरादिमतभेदात् । एते मिथ्यादर्शनोपदेशास्त्रीणि शतानि त्रिषष्ठ्युत्तराणि बंधहेतवः प्राणिवधनिमित्तत्वादधर्महेतुत्वसिद्धेः । आगमप्रामाण्यात् प्राणिवधो धर्महेतुरिति चेन्न, तस्यागमत्वासिद्धेरनवस्थानात् । परमागमे प्रसिद्धत्वात्तदसिद्धिरिति चेन्न, अतिशयज्ञानाकरत्वात् । अन्यत्राप्यतिशयज्ञानदर्शनादिति चेन्न, अत एव तेषां संभवात् । श्रद्धामात्रमिति चेन्न, भूयसामुपलब्धेः रत्नाकरवत् । तदुद्भवत्वात्तेषामपि प्रामाण्यमिति चेन्न, निस्सारत्वात् कंत्वादिवत् । सर्वेषामविशेषप्रसंगात् । यज्ञकर्मणोन्यत्र वधः पापायेति चेन्न, उभयत्र तुल्यत्वात् । तादर्थ्यात्सर्वस्येति चेन्न, साध्यत्वात् अन्यथोपयोगे दोषप्रसंगात् । मंत्रप्राधान्याददोष इति चेन्न, प्रत्यक्षविरोधात् हिंसादोषाविनिवृत्तेः । नियतपरिणामनिमित्तस्यान्यथा विधिनिषेधासंभवात् कर्तुरसंभवाच्च । पंचविधं वा मिथ्यादर्शनं, अविरतिकषाययोगा द्वादशपंचविंशतित्रयोदशभेदाः, प्रमादोनेकविधः । समुदायावयवयोर्बंधहेतुत्वं वाक्यपरिसमाप्तेर्वैचित्र्यात् । अविरतेः प्रमादस्याविशेष इति चेन्न, विरतस्यापि प्रमाददर्शनात् । कषायाविरत्योरभेद इति चेन्न, कार्यकारणभेदोपपत्तेः ॥ कुतः पुनर्मिथ्यादर्शनादयः पंच बंधहेतव इत्याह—

स्युर्बंधहेतवः पुंसः स्वमिथ्यादर्शनादयः । तस्य तद्भावभावित्वादन्यथा तदसिद्धितः ॥ २ ॥

पुंसो बंधहेतव इति वचनात् प्रधानक्षणिकचित्तस्य संतानस्य च व्यवच्छेदः, स्वमिथ्यादर्शनादयः इति निर्देशात् प्रधानपरिणामास्ते पुंसो बंधहेतव इति व्युदस्तं, कृतनाशाकृताभ्यागमप्रसंगात् बंधस्य मिथ्यादर्शनाद्यन्वयव्यतिरेकानुविधानात्तद्धेतुकत्वसिद्धिः ॥ ननु च मोक्षकारणत्रैविध्योपदेशात् बंधकारणपांचविध्यं विरुद्धमित्याशंकायामाह;—

तद्विपर्ययतो मोक्षहेतवः पंच सूत्रिताः । सामर्थ्यादत्र नातोस्ति विरोधः सर्वथा गिराम् ॥ ३ ॥

निर्णीतप्रायं चैतच्च पुनरुच्यते ॥

कोयं बंध इत्याह;—

## सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बंधः ॥ २ ॥

पुनः कषायग्रहणमनुवाद इति चेन्न, कर्मविशेषाशयवाचित्वाज्जठराग्निवत् । जीवाभिधानं प्रयोजित-

त्वात्, जीवस्य हि कथममूर्तेन कर्मणा बंध इति परैः प्रचोदिते ततो जीव इत्यभिधीयते । जीवत्वावि-निर्मुक्तत्वाद्वा, जीवनं ह्यायुस्तेनाविनिर्मुक्त एवात्मा कर्मपुद्गलानादत्तेऽतश्च जीवाभिधानं युक्तं । कर्मणो योग्यान् पुद्गलानादत्त इति पृथग्विभक्त्युच्चारणं वाक्यांतरज्ञापनार्थं तेन कर्मणो जीवः सकषायो भवति पूर्वोपात्तादित्येकं वाक्यं सकषायत्वात् पूर्वमकर्मकस्य मुक्तस्य सकषायत्वायोगात् । तथा कर्मणो योग्यान् पुद्गलानादत्ते जीवः सकषायत्वात् इति द्वितीयं वाक्यं कर्मयोग्यपुद्गलादानात्पूर्वमकषायस्य क्षीणकषाया-दिवत्तदघटनात् । ततो जीवकर्मणोरनादिबंध इत्युक्तं भवति बीजांकुरवत् । सकषायत्वकर्मयोग्यपुद्गला-दानयोर्भावद्रव्यबंधस्वभावयोर्निमित्तनैमित्तिकभावव्यवस्थानात् । पुद्गलवचनं कर्मणस्तादात्म्यख्यापनार्थं पुद्ग-लात्मकं द्रव्यकर्म न पुनरन्यस्वभावं । तदसिद्धमिति चेन्न, अमूर्तेरनुग्रहोपघाताभावात् । न ह्यमूर्तिरा-त्मगुणो जीवस्यामूर्तेरनुग्रहोपघातौ कर्तुमलं कालवदाकाशादीनां । मूर्तिमतस्तु पौद्गलिकस्य कर्मणोनुग्र-होपघातकरणममूर्तेप्यात्मनि कथंचिन्न विरुध्यते, तदनादिबंधं प्रति तस्य मूर्तिमत्त्वप्रसिद्धेरन्यथा बंधा-योगात् । आदत्ते इति प्रतिज्ञातोपसंहारार्थं । तथाहि—यो यः शुभाशुभफलदायिद्रव्ययोग्यान् पुद्गलाना-दत्ते स स सकषायो यथा तादृशः स स कर्मणो योग्यान् पुद्गलानादत्ते यथोभयवादिप्रसिद्धः शुभाशु-भफलप्रासादिपुद्गलादायी रक्तो द्विष्टो वा सकषायश्च विवादापन्नः संसारी तस्मात् कर्मणो योग्यान् पुद्गलानादत्ते इति प्रतिज्ञातोपसंहारः प्रतिपत्तव्यः । अतस्तदुपश्लेषो बंधः तद्भावो मदिरापरिणामवत् । सवचनमन्यनिवृत्त्यर्थं, कर्मणो योग्यानां सूक्ष्मैकक्षेत्रावगाहिनामनंतानामादानादात्मनः कषायार्द्रीकृतस्य प्रतिप्रदेशं तदुपश्लेषो बंधः स एव बंधो नान्यः संयोगमात्रं स्वगुणविशेषसमवायो वेति तात्पर्यार्थः । कषायार्द्रीकृते जीवे कर्मयोग्यपुद्गलानां कर्मपरिणामस्य भावाद्गुडोदकधातकीकुसुमाद्यार्द्रभाजनविशेषे मदिरायोग्यपुद्गलानां मदिरापरिणामवत् । करणादिसाधनो बंधशब्दः तस्योपचयापचयसद्भावः कर्मण आयव्ययदर्शनात् व्रीहिकोष्ठागारवत् । कर्मणामायव्ययदर्शनात् तत्फलायव्ययानुभवनात् सिद्धं ततोनुमि-तानुमानं । एतदेवाह—

**पुद्गलानां तु यदादानं बंधो द्रव्यात्मकः स्मृतः । योग्यानां कर्मणः स्वेष्टानिष्टनिर्वर्तनात्मनः ॥१॥**

कथं पुनः पुद्गलाः कर्मपरिणामयोग्याः केचिदुपपद्यंते इत्याह;—

**पुद्गलाः कर्मणो योग्याः केचिन्मूर्तार्थयोगतः । पच्यमानत्वतः शालिबीजादिवदितीरितं ॥२॥**

पुद्गला एव कर्मपरिणामभाजो मूर्तद्रव्यसंबंधेन विपच्यमानत्वाच्छालिबीजादिवदित्युक्तं पुरस्तात् । ततः कर्मणो योग्याः पुद्गलाः केचित्संत्येव ॥

**तानादत्ते स्वयं जीवः सकषायत्वतः स तु । यो नादत्ते प्रसिद्धो हि कषायरहितः परः ॥३॥**
**सकषायः सकर्मत्वजीवः स्यात्पूर्वतोन्यतः । कषायेभ्यः सकर्मेति नान्यथा भवभागयं ॥४॥**
**जीवः संबंध इति वा सकषायत्वतोन्यथा । तस्य मुक्तात्मवत्तत्त्वानुपपत्तेः प्रसिद्धितः ॥ ५ ॥**
**सकषायत्वमध्यक्षात्स्वसंवेदनतः स्वयं । कोपवानहमित्येवं रूपात् सिद्धं हि देहिनां ॥ ६ ॥**
**प्रधानं सकषायं तु स्यादेवाचेतनत्वतः । कुंभादिवत्ततो नेदं संवचमिति निर्णयः ॥ ७ ॥**
**कर्मणः सकषायत्वं जीवस्येति न शाश्वतं । सहेतुकस्य कौटस्थ्यविरोधात् कुटकादिवत् ॥ ८ ॥**
**ततो नु मुच्यमानो नु [illegible] क्षये । सकषायत्वविध्वंसाविध्वंसकृतसिद्धितः ॥ ९ ॥**
**जीवो हि कर्मणो योग्यानादत्ते पुद्गलान् स्वयं । सकषायत्वतः पूर्वं शुद्धस्य तदसंभवात् ॥ १० ॥**
**[illegible] पुद्गलात्मभिरात्मनः । सिद्धो नात्मगुणैरेवं कषायैर्योगकर्मभिः ॥ ११ ॥**

अन्यथा सकषायत्वप्रत्ययस्य विरोधतः । संसारिणां शरीरादिसंबंधस्यैव हानितः ॥ १२ ॥

सोयं सामान्यतो बंधः प्रतिपादितस्तत्प्रकारप्रतिपादनार्थमाह;—

## प्रकृतिस्थित्यनुभाग(भव)प्रदेशास्तद्विधयः ॥ ३ ॥

प्रकरोतीत्यनुवृत्तेरपादानसाधना प्रकृतिः, भावसाधनौ स्थित्यनुभवौ, कर्मसाधनः प्रदेशशब्दः । प्रकृतिः स्वभाव इत्यनर्थान्तरं, स्वभावाप्रच्युतिः स्थितिः, तद्रसविशेषोनुभवः, इयत्तावधारणं प्रदेशः । विधिशब्दः प्रकारवचनः । तस्य विधयस्तद्विधयो बंधप्रकाराः प्रकृत्यादय इत्यर्थः ॥ तदेवाह;—

तस्य बंधस्य विधयः प्रकृत्याद्याः सुसूत्रिताः । तथाविधत्वसंसिद्धेर्बंधव्यानां कथंचन ॥ १ ॥
स्थित्यादिपर्ययोन्मुक्तैः कर्मयोग्यैर्हि पुद्गलैः । प्रकृत्यावस्थितैर्बंधः प्रथमोत्र विवक्षितः ॥ २ ॥
प्रतिप्रदेशमेतैस्तु मतो बंधः प्रदेशतः । स्थित्यादिपर्ययाक्रांतैः स स्थित्यादिविशेषितः ॥ ३ ॥

बंधस्य भेदादेवं हि बंधो भिद्यते नान्यथा बंधव्यानि च कर्माणि प्रकृत्यावस्थितानि प्रकृतिबंधव्यपदेशं लभंते । तान्येवात्मप्रदेशवृत्तीनि प्रदेशबंधव्यपदेशं । समयादूर्ध्वस्थितिपर्ययाक्रांतानि स्थितिबंधव्यपदेशं फलदानप्रशक्तिलक्षणानुभवपर्ययाक्रांतान्यनुभवबंधव्यपदेशमिति शोभनं सूत्रिताः प्रकृत्यादिविधयो बंधस्य । तत्र योगनिमित्तौ प्रकृतिप्रदेशौ, स्थित्यनुभवौ कषायहेतुकौ । आद्यो द्वेधा मूलोत्तरप्रकृतिभेदात् ॥

तत्र मूलप्रकृतिबंधं तावदाह;—

## आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रांतरायाः ॥ ४ ॥

सामानाधिकरण्ये सति पूर्वोत्तरवचनविरोध इति चेन्न, उभयनयधर्मविवक्षासद्भावात् तयोरेकवचनबहुवचनप्रयोगोपपत्तेः । प्रमाणं श्रोतार इति सामान्यविशेषयोरेकत्वबहुत्वव्यवस्थितेर्यथासंभवं कर्त्रादिसाधनत्वं ज्ञानावरणादिशब्दानां प्रयोगपरिणामादागच्छदेवाविशिष्टं कर्म ज्ञानावरणादिविशेषैर्विभिद्यते अन्नादेर्वातादिविकारवत् । ज्ञानावरणमेव मोह इति चेन्न, अर्थांतरभावात् कार्यभेदे च कारणान्यत्वात् । ज्ञानावरणस्य हि कार्यं ज्ञानं, मोहस्य तत्त्वार्थश्रद्धानमचारित्रं चेति । एतेन ज्ञानदर्शनावरणयोरन्यत्वमुक्तं तत्कार्ययोरज्ञानादर्शनयोरन्यत्वात् तदाव्रियमाणयोश्च ज्ञानदर्शनयोरन्यत्वं प्रयुक्तं भेदसाधनं । ज्ञानावरणस्याविशेषेपि प्रत्यासन्नं मत्यादिविशेषो जलवत् । एतेनेतराणि व्याख्यातानि दर्शनावरणादीन्यपि प्रत्यासन्नं मूलोत्तरप्रकृतिविकल्पभांजि विभाव्यंते । सकलकर्मप्रकृतीनां कार्यविशेषानुमेयत्वादिंद्रियशक्तिविशेषवत् । तदेवाह—

कर्मप्रकृतयस्तत्र स्युर्ज्ञानावरणादयः । तादृक्कार्यविशेषानुमेयाः करणशक्तिवत् ॥ १ ॥

कश्चिदाह—पुद्गलद्रव्यस्यैकस्यावरणसुखदुःखादिनिमित्तत्वानुपपत्तिर्विरोधात् इति । स विनिवार्यते न वा, तत्स्वाभाव्याद्वन्हेर्दाहपाकप्रतापप्रकाशसामर्थ्यवत् । अनैकांतिकत्वाच्च द्रव्यस्य नैकत्वादिरूपेणानैकांतिकत्वं यतो विरोधः । पराभिप्रायेणेंद्रियाणां भिन्नजातीयानां क्षीराद्युपभोगे वृद्धिवत् । वृद्धिरेकैवेति चेन्न, प्रतींद्रियं वृद्धिभेदात् । तथैवातुल्यजातीयेनानुग्रहसिद्धिः । तेन चेतनस्यात्मनोऽचेतनं कर्मानुग्राहकं सिद्धं भवति । किमेतावानेव प्रकृतिबंधविकल्पो नेत्याख्यायते—एकादिसंख्येयविकल्पश्च शब्दतः तत्रैकस्तावत्सामान्यात् कर्मबंधो विशेषाणामविवक्षितत्वात् सेनावचनवत् । स एव पुण्यपापभेदाद्द्विविधः स्वामिभृत्यभेदात् सेनावत् । त्रिविधश्चानादिः सांतः, अनादिरनंतः, सादिः सांतश्चेति, भुजाकाराल्पतरावस्थितभेदाद्वा । प्रकृत्यादिभेदाच्चतुर्विधः, द्रव्यादिभेदात् पंचविधः । षड्जीवनिकायभेदात् षोढा ।

रागद्वेषमोहक्रोधमानमायालोभहेतुभेदात् सप्तविधः । ज्ञानावरणादिविकल्पादष्टविधः । एवं संख्येया विकल्पाः शब्दतो योजनीयाः । चशब्दादसंख्याताः स्थानविकल्पादसंख्येयाः प्रदेशबंधपरिणामभेदादनंताः ज्ञानावरणाद्यनुभवाविभागपरिच्छेदापेक्षया वा । क्रमयोजनज्ञानेनात्मनोधिगमाद् ज्ञानावरणं सर्वेषामादावुक्तं । ततो दर्शनावरणमनाकारोपलब्धेः । तदनंतरं वेदनीयवचनं तदव्यभिचारात् । ततो मोहाभिधानं तद्विरोधात् । आयुर्वचनं तत्समीपे तन्निबंधनत्वात् । तदनंतरं नामवचनं तदुदयापेक्षत्वात् प्रायो नामोदयस्य । ततो गोत्रवचनं प्राप्तशरीरादिलाभस्य संशब्दनाभिव्यक्तेः । परिशेषादंते अंतरायवचनं ॥

अथोत्तरप्रकृतिबंधं प्रतिपिपादयिषुस्तत्संख्याभेदान् सूत्रयन्नाह;—

## पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदा यथाक्रमम् ॥ ५ ॥

पंचादिपंचांतानां द्वंद्वपूर्वोन्यपदार्थनिर्देशः । द्वितीयग्रहणमिति चेन्न, परिशेषात्सिद्धेः । पूर्वत्राद्यवचनात् । इह हि परिशेषादेव द्वितीय उत्तरप्रकृतिबंध इति सिध्यति । भेदशब्दः प्रत्येकं परिसमाप्यते । यथाक्रमं यथानुपूर्वं तेन ज्ञानावरणं पंचभेदमिति । आद्यसंबंधः परिपाट्या द्रष्टव्यः । एतदेवाह—

**ते च पंचादिभेदाः स्युर्यथाक्रममितीरणात् । कार्यप्रभेदतः साध्याः सद्भिः प्रकृतयोपराः ॥ १ ॥**

तत्र केषां ज्ञानानां पंचानामाव्रियमाणा नामावृतिकार्यभेदात्पंचभेदं ज्ञानावरणमित्याह;—

## मतिश्रुतावधिमनःपर्ययकेवलानाम् ॥ ६ ॥

मत्यादीन्युक्तलक्षणानि । मत्यादीनामिति पाठो लघुत्वादिति चेन्न, प्रत्येकमभिसंबंधार्थत्वात् । तेन पंच ज्ञानावरणानि सिद्धानि भवंति । पंचवचनात्पंचसंख्याप्रतीतिरिति चेन्न, प्रत्येकं पंचत्वप्रसंगात् । प्रतिपदं पठेत् । मतेरावरणं श्रुतस्यावरणमित्याद्यभिसंबंधात् प्रत्येकं पंचावरणानि प्रसज्यंते । कश्चिदाह— मत्यादीनां सत्त्वासत्त्वयोरावृत्यभाव इति तं प्रत्याह, नवात्रादेशवचनात् सतश्चावरणदर्शनात् नभसोंभोधरपटलवत् । मत्यादीनां सत्त्वैकांते वासत्त्वैकांते च क्षायोपशमिकत्वविरोधात् कथंचित्सतामेवावरणसंभवः । अर्थांतराभावाच्च प्रत्याख्यानावरणवत् । यस्योदये ह्यात्मनः प्रत्याख्यानपरिणामो नोत्पद्यते तत्प्रत्याख्यानावरणं न पुनरर्थांतरं प्रत्याख्यानमावृतस्याभावात् । तद्वदात्मनो यत्क्षयोपशमे सति मतिज्ञानादिरूपतयोत्पत्तिस्तन्मत्याद्यावरणं न पुनरर्थांतरं मत्यादिज्ञानमावृतस्यासंभवात् । अपर आह—अभव्यस्योत्तरावरणद्वयानुपपत्तिस्तदभावात् । न च, उक्तत्वात् । किमुक्तमिति चेत्, आदेशवचनात् सतश्चावरणदर्शनात् भावांतराभावाच्चेति । द्रव्यार्थादेशात् सतोरपि मनःपर्ययकेवलज्ञानयोरावरणोपगमे स्याद्वादिनां नाभव्यस्य भव्यत्वप्रसंगः, कदाचित्तदावरणविगमासंभवात् । पर्यायार्थादेशादसतोरपि तयोरावरणघटनादुत्पत्तिप्रतिबंधिनोप्यावरणत्वप्रसिद्धेः तयोरभाव्यादर्थांतरयोरभावाच्च न कश्चिद्दोषः । न च मनःपर्ययादिसदसत्त्वमात्रात् द्रव्यतो भव्येतरविभागः । किं तर्हि ? सम्यक्त्वादिव्यक्तिभावाभावाभ्यां भव्याभव्यत्वविकल्पः, कनकेतरपाषाणवत् । न च ज्ञानावरणोदयादज्ञोतिदुःखितस्ततोनादिरेव परमनिर्वृत्तिरिति दर्शनमुपपन्नं । कुतः पुनर्मत्याद्यावरणसिद्धिरित्याह;—

**मत्यादीनां हि पंचानां ज्ञानानां पंच वेदितं । कर्मावरणमन्यस्य हेतोर्भाविन्यभावतः ॥ १ ॥**

सत्यप्यात्मन्युपादानहेतौ कालाकाशादौ समाने विषये च योग्यदेशवर्तिन्याहारपरोपदेशाभ्यासादौ च कस्यचिन्मत्यादिज्ञानविशेषाणामभावात् । ततोन्यत्कारणमदृष्टमनुमीयते तत्तदावरणमेव भवितुमर्हतीति निश्चयः ॥

अथ दर्शनावरणं नवभेदं कथमित्याह;—

## चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धयश्च ॥ ७ ॥

चक्षुरादीनां दर्शनावरणसंबंधाद्भेदनिर्देशः । चक्षुरचक्षुरवधिकेवलानां दर्शनावरणानीति । मदखेदक्लमविनोदनार्थः स्वापो निद्रा, उपर्युपरि तद्वृत्तिर्निद्रानिद्रा, प्रचलयत्यात्मानमिति प्रचला, पौनःपुन्येन सेवाहितवृत्तिः प्रचलाप्रचला, स्वप्ने यया वीर्यविशेषाविर्भावः सा स्त्यानगृद्धिः स्त्याने स्वप्ने गृध्यति दीप्यते रौद्रबहुकर्म करोति यदुदयादित्यर्थः । नानाधिकरणाभावाद्वीप्सानुपपत्तिरिति चेन्न, कालादिभेदेन तद्भेदसिद्धेः, पटुर्भवान् पटुदेशीयत् पटुतर एव स इति यथा । देशभेदादपि मथुरायां दृष्टस्य पुंसः पाटलिपुत्रे दृश्यमानस्य तत्त्ववत् । तत्रैकस्मिन्नप्यात्मनि कालदेशभेदात् नानात्वभाजि वीप्सा युक्ता निद्रानिद्रा प्रचलाप्रचलेति । आभीक्ष्ण्ये वा द्वित्वप्रसिद्धिः यथा गेहं गेहमनुप्रवेशमास्त इति । निद्रादिकर्मसद्वेद्योदयात् निद्रादिपरिणामसिद्धिः । निद्रादीनामभेदेनाभिसंबंधविरोध इति चेन्न, विवक्षातः संबंधात् । चक्षुरचक्षुर्दर्शनावरणोदयाच्चक्षुरादींद्रियालोचनविकलः, अवधिदर्शनावरणोदयादवधिदर्शनविप्रयुक्तः, केवलदर्शनावरणोदयादनाविर्भूतकेवलदर्शनः, निद्रानिद्रानिद्रोदयात्तमोमहातमोवस्था, प्रचलाप्रचलाप्रचलोदयाच्चलनातिचलनभावः ॥ एतदेवाह—

**चतुर्णां चक्षुरादीनां दर्शनानां चतुर्विधं । निद्रादयश्च पंचेति नव प्रकृतयोस्य ताः ॥ १ ॥**

चतुर्णां हि चक्षुरादिदर्शनानामावरणाच्चतुर्विधमवबोध्यं, तदाव्रियमाणभेदात् तद्भेदसिद्धेः । निद्रादयश्च पंच दर्शनावरणानीति भेदाभेदाभ्यामभिसंबंधोत्राविरुद्ध एवेत्युक्तं ॥

अथ तृतीयस्योत्तरप्रकृतिबंधस्य भेदप्रदर्शनार्थमाह;—

## सदसद्वेद्ये ॥ ८ ॥

यस्योदयाद्देवादिगतिषु शारीरमानससुखप्राप्तिस्तत्सद्वेद्यं, यत्फलं दुःखमनेकविधं तदसद्वेद्यं । तदेवोपदर्शयति—

**द्वेधा तु सदसद्वेद्ये सातेतरकृतादिमे । प्रकृती वेदनीयस्य नान्यथा तद्व्यवस्थितिः ॥ १ ॥**

अथ चतुर्थस्योत्तरप्रकृतिबंधस्य भेदोपदर्शनार्थमाह;—

## दर्शनचारित्रमोहनीयाकषायकषायवेदनीयाख्यास्त्रिद्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकषायकषायौ हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुन्नपुंसकवेदा अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः ॥ ९ ॥

दर्शनादिभिस्त्रिद्विनवषोडशभेदानां यथासंख्येन संबंधः । दर्शनमोहनीयं त्रिभेदं, चारित्रमोहनीयं द्विभेदं, अकषायवेदनीयं नवविधं, कषायवेदनीयं षोडशविधमिति । तत्र दर्शनमोहनीयं त्रिभेदं सम्यक्त्वमिथ्यात्वतदुभयानीति । तद्बंधं प्रत्येकं भूत्वा सत्कर्म प्रतीत्य त्रेधा । चारित्रमोहनीयं द्वेधा, अकषायकषायभेदात् । कषायप्रतिषेधप्रसंग इति चेत् न, ईषदर्थत्वान्नञः । अकषायवेदनीयं नवविधं हास्यादिभेदात् । कषायवेदनीयं षोडशविधमनंतानुबंध्यादिविकल्पात् ॥ कुतो मोहस्याष्टाविंशतिः प्रकृतयः स्थिता इत्याह—

दर्शनेत्यादिसूत्रेण मोहनीयस्य कर्मणः। अष्टाविंशतिराख्याता तावद्धा कार्यदर्शनात् ॥ १ ॥

प्रसिद्धान्येव हि मोहप्रकृतीनामष्टाविंशतेस्तत्कार्याण्यश्रद्धानादीनि कार्याणि मिथ्यात्वादीनामिहेति न प्रतन्यते। ततस्तदुपलंभात्तासामनुमानमनवद्यमन्यथा तदनुपपत्तेर्दृष्टकारणव्यभिचाराच्च ॥

अथायुरुत्तरप्रकृतिबंधभेदमुपदर्शयन्नाह;—

## नारकतैर्यग्योनमानुषदैवानि ॥ १० ॥

आयूंषीति शेषः। नारकादिभवसंबंधेनायुर्व्यपदेशः। यद्भावाभावयोर्जीवितमरणं तदायुः। अन्नादि तन्निमित्तमिति चेन्न, तस्योपग्राहकत्वात् देवनारकेषु चाभावात्। नरकेषु तीव्रशीतोष्णवेदनेषु यन्निमित्तं दीर्घजीवनं तन्नारकायुः। क्षुत्पिपासाशीतोष्णवातादिकृतोपद्रवप्रचुरेषु तिर्यक्षु यस्योदयाद्वसनं तत्तैर्यग्योनं। शारीरमानससुखदुःखभूयिष्ठेषु मनुष्येषु जन्मोदयान्मानुष्यायुषः। शारीरमानससुखप्रायेषु देवेषु जन्मोदयाद्देवायुषः। कुत एतान्यायूंषि सिद्धानीत्याह—

नारकादीनि चत्वारि चायूंषि भवभेदतः। सिद्धानि तदभावेस्य प्राणिनामव्यवस्थितेः ॥ १ ॥

अथ नामोत्तरप्रकृतिबंधभेददर्शनार्थमाह;—

## गतिजातिशरीरांगोपांगनिर्माणबंधनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यागुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशस्कीर्तिसेतराणि तीर्थकरत्वं च ॥ ११ ॥

कुतः पुनरिमे नाम्नः प्रकृतिभेदाः समनुमीयंत इत्याह;—

द्विचत्वारिंशदाख्याता गतिनामादयस्तथा। नाम्नः प्रकृतिभेदास्तेनुमीयंते स्वकार्यतः ॥ १ ॥

यदुदयादात्मा भवांतरं गच्छति सा गतिः, तत्राव्यभिचारिसादृश्यैकीकृतोर्थात्मा जातिः, यदुदयादात्मनः शरीरनिर्वृत्तिस्तच्छरीरनाम, यदुदयादंगोपांगविवेकस्तदंगोपांगनाम, यन्निमित्ता परिनिष्पत्तिस्तन्निर्माणं, शरीरनामकर्मोदयोपात्तानां यतोन्योन्यसंश्लेषणं तद्बंधनं, अविवरभावेनैकत्वकरणं संघातनाम, यद्धेतुका शरीराकृतिनिर्वृत्तिस्तत्संस्थाननाम, यदुदयादस्थिबंधनविशेषस्तत्संहननं, यदुदयात् स्पर्शरसगंधवर्णविकल्पाष्टपंचद्विपंचसंख्यास्तानि स्पर्शादिनामानि, यदुदयात्पूर्वशरीराकारविनाशस्तदानुपूर्व्यनाम, यन्निमित्तमगुरुलघुत्वं तदगुरुलघु नाम, यदुदयात्स्वयं कृतो बंधनाद्युपघातस्तदुपघातनाम, यन्निमित्तः परशस्त्राघातनं तत्परघातनाम, यदुदयान्निर्वृत्तमातपनं तदातापनाम, यन्निमित्तमुद्योतनं तदुद्योतनाम, यद्धेतुरुच्छ्वासस्तदुच्छ्वासनाम, विहाय आकाशं तत्र गतिनिर्वर्तकं विहायोगतिनाम, एकात्मोपभोगकारणं शरीरं यतस्तत्प्रत्येकशरीरनाम, यतो बह्वात्मसाधारणोपभोगशरीरता तत्साधारणशरीरनाम, यदुदयाद्द्वींद्रियादिषु जन्म तत्त्रसनाम, यन्निमित्त एकेंद्रियेषु प्रादुर्भावस्तत्स्थावरनाम, यदुदयादन्यप्रीतिप्रभवस्तत्सुभगनाम, यदुदयाद्रूपादिगुणोपेतोप्यप्रीतिस्तद्दुर्भगनाम, यन्निमित्तं मनोज्ञस्वरनिर्वर्तनं तत्सुस्वरनाम, तद्विपरीतं दुःस्वरनाम, यदुदयाद्रमणीयत्वं तच्छुभनाम, तद्विपरीतमशुभनाम, सूक्ष्मशरीरनिर्वर्तकं सूक्ष्मनाम, अन्यबाधाकरशरीरकारणं बादरनाम, यदुदयादाहारादिपर्याप्तिनिर्वृत्तिस्तत्पर्याप्तिनाम षड्विधं, षड्विधपर्याप्त्यभावहेतुरपर्याप्तिनाम, स्थिरभावस्य निर्वर्तकं स्थिरनाम, तद्विपरीतमस्थिरनाम, प्रभोपेतशरीरकार-

रणमादेयनाम, निष्प्रभशरीरकारणमनादेयनाम, पुण्यगुणख्यापनकारणं यशस्कीर्तिनाम, यशो गुणविशेषः कीर्तिस्तस्य शब्दनमिति न तयोरनर्थांतरत्वं । तत्प्रत्यनीकफलमयशस्कीर्तिनाम, आर्हन्त्यनिमित्तकारणं तीर्थकरत्वं, गणधरत्वादीनामुपसंख्यानमिति चेन्न, अन्यनिमित्तत्वात् । गणधरत्वस्य श्रुतज्ञानावरणवीर्यांतरायक्षयोपशमप्रकर्षहेतुकत्वात् चक्रवर्तित्वादेरुच्चैर्गोत्रोदयनिमित्तकत्वात् । तदेव तीर्थकरत्वस्यापीति चेत् न, तीर्थकरत्वस्य हि तन्निमित्तत्वे गणधरस्य तत्प्रसंगश्चक्रधरादेश्च, न च तदस्ति, ततोर्थांतरनिमित्तं, यत्तदर्थांतरं । तत्तीर्थकरनामैव । घातिक्षयस्य मुंड( सामान्य )केवल्यादेरपि भावान्न तन्निबंधनं तस्य शंकनीयं, छत्रत्रयादिपरमविभूतिफलस्य ततोसंभवनिश्चयात् । ननु च विहायोगत्यंतानां प्रत्येकशरीरादिभिरेकवाक्यत्वाभावः । कुत इति चेत्, पूर्वेषां प्रतिपक्षविरहादेकवाक्यत्वाभावः । प्रधानत्वात्तीर्थकरत्वस्य पृथग्ग्रहणं, अन्यत्वाच्च प्रत्येकशरीरादिभिरेकवाक्यत्वाभावः प्रत्येतव्यः ॥

**प्राधान्यं सर्वनामभ्यः शतेभ्यः शुद्धिजन्मनः । बोध्यं तीर्थकरत्वस्य भवांते फलदायिनः ॥२॥**

गोत्रोत्तरप्रकृतिबंधभेदप्रकाशनार्थमाह;—

## उच्चैर्नीचैश्च ॥ १२ ॥

गोत्रं द्विविधमुच्चैर्नीचैरिति विशेषणात् । यस्योदयात् लोके पूजितेषु कुलेषु जन्म तदुच्चैर्गोत्रं, गर्हितेषु यत्कृतं तन्नीचैर्गोत्रं ॥ कुतस्तदेवंविधं सिद्धमित्याह—

**उच्चैर्नीचैश्च गोत्रं स्याद्विभेदं देहिनामिह । तथा संशब्दनस्यान्यहेतुहीनस्य सिद्धितः ॥ १ ॥**

तथांतरायोत्तरप्रकृतिबंधावबोधनार्थमाह;—

## दानलाभभोगोपभोगवीर्याणाम् ॥ १३ ॥

दानादीनामंतरायापेक्षयार्थव्यतिरेकनिर्देशः, अंतराय इत्यनुवर्तनात् । दानादिपरिणामव्याघातहेतुत्वात्तद्व्यपदेशः । भोगोपभोगयोरविशेष इति चेन्न, गंधादिशयनादिभेदतस्तद्भेदसिद्धेः । कुतस्ते दानाद्यंतरायाः प्रसिद्धा इत्याह;—

**दानादीनां तु पंचानामंतरायाः प्रसूत्रिताः । पंच दानादिविघ्नस्य तत्कार्यस्य विशेषतः ॥ १ ॥**

उक्तमेव प्रकृतिबंधप्रपंचमुपसंहरन्नाह;—

**एवं प्रकृतिभिर्बंधः कर्मभिर्विनिवेदितः । आद्यः प्रकृतिबंधोत्र जीवस्यानेकधा स्थितः ॥ २ ॥**

तदुत्तरप्रकृतिवदुत्तरोत्तरप्रकृतीनामपि प्रकृतिबंधव्यपदेशात् सामान्यतो विशेषतश्च प्रकृतिबंधः स्थित्यादिबंधापेक्षयान्य एवानेकधोक्तः । तथा च—

**यावतामनुभवोस्तु फलानां दृष्टहेतुघटनाच्च जनानां ।**
**तावतीह गणना प्रकृतीस्ताः कर्मणामनुमिनोतु महात्मा ॥ ३ ॥**

इति अष्टमाध्यायस्य प्रथममाह्निकम् ।

---

## आदितस्तिसृणामंतरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥ १४ ॥

आदित इति वचनं मध्यांतनिवृत्त्यर्थं, तिसृणामितिवचनमवधारणार्थं, अंतरायस्य चेति व्यवहितैः-

वचनं सर्वावस्थितिप्रतिपत्त्यर्थं । उत्कर्षपरिमाणं सागरोपमकोटीकोट्य इति । द्वित्वे बहुत्वानुपपत्तिरिति चेन्न, राजपुरुषवत्तत्सिद्धेः । कोटीनां कोट्यः कोटीकोट्य इति । पराभिधानं जघन्यस्थितिनिवृत्त्यर्थं । संज्ञिपंचेंद्रियपर्याप्तकस्य परा स्थितिः, अन्येषामागमात्संप्रत्ययः । तद्यथा एकेंद्रियस्य पर्याप्तकस्यैकसागरोपमा सप्तभागास्त्रयः, द्वींद्रियस्य पंचविंशतिः सागरोपमाणां सप्तभागास्त्रयः, त्रींद्रियस्य पंचाशत्सागरोपमाणां, चतुरिंद्रियस्य सागरोपमशतस्य, असंज्ञिपंचेंद्रियस्य सागरोपमसहस्रस्य, अपर्याप्तसंज्ञिपंचेंद्रियस्यांतःसागरोपमकोटीकोट्यः । एकद्वित्रिचतुःपंचेंद्रियासंज्ञिनां त एव भागाः पल्योपमासंख्येयभागोना इति परमागमप्रवाहः ॥ कुतः परा स्थितिराख्यातप्रकृतीनामित्याह;—

**आदितस्तिसृणां कर्मप्रकृतीनां परा स्थितिः । अंतरायस्य च प्रोक्ता तत्फलस्य प्रकर्षतः ॥१॥**
**सागरोपमकोटीनां कोट्यस्त्रिंशत्तदन्यथा । तदभावे प्रमाणस्याभावात्सा केन बाध्यते ॥ २ ॥**

अथ मोहनीयस्य परां स्थितिमुपदर्शयन्नाह;—

## सप्ततिर्मोहनीयस्य ॥ १५ ॥

सागरोपमकोटीकोट्यः परा स्थितिरित्यनुवर्तते । इयमपि परा स्थितिः संज्ञिपंचेंद्रियस्य पर्याप्तकस्य, एकद्वित्रिचतुरिंद्रियाणामेकपंचविंशतिपंचाशच्छतसागरोपमानि यथासंख्यं, तेषामेवापर्याप्तकानामेकेंद्रियादीनां पल्योपमासंख्येयभागोना, सैव पर्याप्तासंज्ञिपंचेंद्रियस्य सागरोपमसहस्रं, तस्यैवापर्याप्तकस्य सागरोपमसहस्रं पल्योपमसंख्येयभागोनं, संज्ञिनोपर्याप्तकस्यांतःसागरोपमकोटीकोट्य इति परमागमार्थः ॥

अथ नामगोत्रयोः का परा स्थितिरित्याह;—

## विंशतिर्नामगोत्रयोः ॥ १६ ॥

सागरोपमकोटीकोट्यः परा स्थितिरित्यनुवर्तते । इयमपि परा संज्ञिनः पर्याप्तकस्यैकेंद्रियस्य एकसागरोपमः सप्तभागौ द्वौ, द्वींद्रियस्य पंचविंशतेः सागरोपमाणां, त्रींद्रियस्य पंचाशतः, चतुरिंद्रियस्य शतस्य, असंज्ञिनः पंचेंद्रियस्य सहस्रस्य, संज्ञिनोपर्याप्तकस्यांतःसागरोपमकोटीकोट्यः, एकेंद्रियादेः सैव स्थितिः पल्योपमासंख्येयभागोना । कथं बाधवर्जितमेतत्सूत्रद्वयमित्याह—

**सप्ततिर्मोहनीयस्य विंशतिर्नामगोत्रयोः । इति सूत्रद्वयं बाधवर्जमेतेन वर्णितम् ॥ १ ॥**

ततोऽन्यथा स्थितिर्मोहकप्रमाणाभावे नैवेत्यर्थः ॥

अथायुषः कोत्कृष्टा स्थितिरित्याह;—

## त्रयस्त्रिंशत्सागरोपमाण्यायुषः ॥ १७ ॥

पुनः सागरोपमग्रहणात् कोटीकोटिनिवृत्तिः, परा स्थितिरित्यनुवर्तते । इयमपि परा स्थितिः संज्ञिनः पर्याप्तकस्य । इतरेषां यथागमं । तद्यथा—असंज्ञिनः पंचेंद्रियस्य पर्याप्तस्य पल्योपमासंख्येयभागः, शेषाणामुत्कृष्टा पूर्वकोटी । इयमपि तथैव बाधवर्जितेत्याह;—

**तथायुषस्त्रयस्त्रिंशत्सागरोपमसंख्यया । परमस्थितिनिर्णीतिरिति साकल्यतः स्मृता ॥ १ ॥**

कर्मणामष्टानामपि परा स्थितिरिति शेषः ॥

अथ वेदनीयस्य काऽपरा स्थितिरित्याह;—

## अपरा द्वादश मुहूर्ता वेदनीयस्य ॥ १८ ॥

सूक्ष्मसांपराये इति वाक्यशेषः । एतदेवाह—

अधुना वेदनीयस्य मुहूर्ता द्वादश स्थितिः । सामर्थ्यान्मध्यमा मध्येऽनेकधा संप्रतीयते ॥ १ ॥

अथायुषोऽनंतरयोः कर्मणोः का जघन्या स्थितिरित्याह;—

## नामगोत्रयोरष्टौ ॥ १९ ॥

मुहूर्ता इत्यनुवर्तते अपरा स्थितिरिति च । सा च सूक्ष्मसांपराये विभाव्यते । तथाहि—

**सा नामगोत्रयोरष्टौ मुहूर्ता इति वर्तनात् । यामादयो व्यवच्छिन्नाः कामं मध्येस्तु मध्यमा १.**

अथोक्तेभ्योऽन्येषां कर्मणां का निकृष्टा स्थितिरित्याह;—

## शेषाणामंतर्मुहूर्ता ॥ २० ॥

अपरा स्थितिरित्यनुवर्तते । शेषाणि ज्ञानदर्शनावरणांतरायमोहनीयायूंषि । तत्र ज्ञानदर्शनावरणांतरायाणां सूक्ष्मसांपराये, मोहनीयस्यानिवृत्तिबादरसांपराये, आयुषः संख्येयवर्षायुषतिर्यग्मनुष्येषु ॥ सर्वकर्मणां स्थितिबंधमुपसंहरन्नाह;—

**शेषाणां कर्मणामंतर्मुहूर्ता चेति कार्त्स्न्यतः । जघन्यमध्यमोत्कृष्टा स्थितिर्या प्रतिपादिता ॥१॥**

**तया विशेषितैर्बंधः कर्मभिः स्वयमाहृतैः । स्थितिबंधोवबोद्धव्यस्तत्प्राधान्यविवक्षया ॥ २ ॥**

**स्थित्या केवलया बंधस्तद्वच्छून्यैर्न युज्यते । तद्वदाश्रितया त्वस्ति भूमिभूधरयोरिव ॥ ३ ॥**

**स्थितिशून्यानि कर्माणि निरन्वयविनाशतः । प्रदीपादिवदित्येतत्स्थितेः सिद्धानि धार्यते ॥ ४॥**

निर्णीता हि स्थितिः सर्वपदार्थानां क्षणादूर्ध्वमपि प्रत्यभिज्ञानादबाधितस्वरूपाद्भेदप्रत्ययादुत्पादविनाशवत् । ततः स्थितिमद्भिः कर्मभिरात्मनः स्थितिबंधोऽनेकधा सूत्रितोनवद्यो बोद्धव्यः प्रकृतिबंधवत् ॥

अथानुभवबंधं व्याचष्टे;—

## विपाकोऽनुभवः ॥ २१ ॥

विशिष्टः पाको नानाविधो वा विपाकः, पूर्वास्रवतीव्रादिभावनिमित्तविशेषाश्रयत्वात् द्रव्यादिनिमित्तभेदेन विश्वरूपत्वाच्च सोनुभवः कथ्यते । शुभपरिणामानां प्रकर्षाच्छुभप्रकृतीनां प्रकृष्टोनुभवः, अशुभपरिणामानां प्रकर्षात्तद्विपर्ययः । स किंमुखेनात्मनः स्यादित्याह;—

**विपाकोनुभवो ज्ञेयः पुद्गलादिमुखेन तु । कर्मणां फलनिष्पत्तौ सामर्थ्यायोगतोन्यथा ॥ १ ॥**

पुद्गलविपाकिनां कर्मणामंगोपांगादीनां पुद्गलद्वारेणानुभवोऽन्यथात्मनि फलदाने सामर्थ्याभावात्, क्षेत्रविपाकिनां तु नरकादिगतिप्रायोग्यानुपूर्व्यादीनां क्षेत्रद्वारेण, जीवविपाकिनां पुनर्ज्ञानावरणसद्वेद्यादीनामात्मभावप्रतिषेधविधानविधानानां जीवमुख्येनैव, भवविपाकिनां तु नारकाद्यायुषां भवद्वारेण तत्र एव । तेन मूलप्रकृतीनां स्वमुखेनैवानुभवो, अतुल्यजातीयानामुत्तरप्रकृतीनां च निवेदितः । तुल्यजातीयानां तूत्तरप्रकृतीनां परमुखेनापीति प्रतिपत्तव्यमन्यत्रायुर्दर्शनचारित्रमोहेभ्यः, तेषां परमुखेन स्वफलदाने सामर्थ्याभावात् ॥

कुतः पुनर्ज्ञानावरणादिकर्मप्रकृतीनां प्रतिनियतफलदानसामर्थ्यं निश्चीयत इत्याह;—

## स यथानाम ॥ २२ ॥

यथानामेति शेषस्तेन ज्ञानावरणादीनां सविकल्पानां प्रत्येकमन्वर्थसंज्ञानिर्देशात्तदनुभवसंप्रत्ययः । ज्ञानावरणादिकमेव हि तेषां प्रयोजनं नान्यदिति कथमन्वर्थसंज्ञा न स्यात्? ततः—

सामर्थ्यादनामभेदेन ज्ञायेतान्वर्थनामता । ज्ञानावरणादीनां कर्मणामन्यथा स्मृतेः ॥ १ ॥
तथा चानुभवप्राप्तेरात्मनः कर्मनिर्भवेत् । एषोनुभवबंधोस्त्यान्यास्रवस्य विशेषतः ॥ २ ॥
किं पुनरात्मन्यनुभवादुपात्तफलानि कर्माण्यात्मन्यवतिष्ठंते किं वा निर्जीर्यंते इत्याह;—

## ततश्च निर्जरा ॥ २३ ॥

पूर्वोपार्जितकर्मपरित्यागो निर्जरा। सा द्विप्रकारा विपाकजेतरा च । निमित्तांतरस्य समुच्चयार्थश्चशब्दः । तच्च निमित्तांतरं तपोविज्ञेयं, तपसा निर्जरा चेति वक्ष्यमाणत्वात् । संवरात्परत्र पाठ इति चेन्न, अनुभवानुवादपरिहारार्थत्वात् । पृथग्निर्जरावचनमनर्थकं बंधेंतर्भावादिति चेन्न, अर्थापरिज्ञानात् । फलदानसमर्थ्यं हि अनुभवबंधस्ततोनुभूतानां गृहीतवीर्याणां पुद्गलानां निवृत्तिर्निर्जरा । सा कथं तत्रांतर्भवेत्? तस्य तद्धेतुत्वनिर्देशात्तद्भेदोपपत्तेः । लघ्वर्थमिहैव तपसा चेति वक्तव्यमिति चेन्न, संवरानुग्रहतंत्रत्वात् । तपसा निर्जरा च भवति संवरश्चेति । धर्मेन्तर्भावात्संवरहेतुत्वमिति चेन्न, पृथग्ग्रहणस्य प्राधान्यख्यापनार्थत्वात् । एतदेवाह—

ततश्च निर्जरेत्येतत्संक्षेपार्थमिहोदितं । निर्जराप्रस्तुतेरग्रेप्येतद्भेदप्रसिद्धये ॥ १ ॥
यथाकालं विपाकेन निर्जरा कर्मणामियं । वक्ष्यमाणा पुनर्जीवस्योपक्रमनिबंधना ॥ २ ॥
प्रागनुक्ता समुच्चार्या चशब्देनात्र सा पुनः । तपसा निर्जरा चेति नियमो न निरुच्यते ॥ ३ ॥
फलं दत्त्वा निवर्तंते द्रव्यकर्माणि देहिनः । तेनाहृतत्वतः स्वाद्याद्याहारद्रव्यवत्स्वयं ॥ ४ ॥
भावकर्माणि नश्यंति तन्निवृत्त्यविशेषतः । तत्कार्यत्वाद्यथाग्न्यादिनाशे धूमादिवृत्तयः ॥ ५ ॥
ततः फलोपभोगेपि कर्मणां न क्षयो नृणां । पाद्यादिवदित्येतद्वचोपास्तं कुनीतिकं ॥ ६ ॥
पारतंत्र्यमकुर्वाणाः पुंसो ये कर्मपुद्गलाः । कर्मत्वेन विशिष्टास्ते संतोप्यत्रांबरादिवत् ॥ ७ ॥
तदेवमनुभवबंधं प्रतिपाद्याधुना प्रदेशबंधमवगमयितुमनाः प्राह—

## नामप्रत्ययाः सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाहस्थिताः सर्वात्मप्रदेशेष्वनंतानंतप्रदेशाः ॥ २४ ॥

नाम्नः प्रत्यया नामप्रत्ययाः इत्युत्तरपदप्रधाना वृत्तिः । नामासां प्रत्यय इति चेन्न, समयविरोधात् । अन्यपदार्थायां हि वृत्तौ नामप्रत्ययो यासां प्रकृतीनामिति सर्वकर्मप्रकृतीनां नामहेतुकत्वं प्रसक्तं, तच्च समयेन विरुध्यते । तत्र तासां तद्धेतुकत्वेनानभिधानात् प्रतिनियतप्रदोषाद्यास्रवनिमित्तत्वप्रकाशनात् । के पुनस्ते नाम्नः प्रत्ययाः कुतो वेत्यावेदयन्नाह;—

नामान्वर्थं पदाख्यातं प्रत्ययास्तस्य हेतवः । प्रदेशाः कर्मणोऽनंतानंतमानविशेषिताः ॥ १ ॥
स्कंधात्मना विरुध्यंते न प्रमाणेन तत्त्वतः । स्कंधाभावेक्षविज्ञानाभावात् सर्वा गृह्यते ॥ २ ॥

अनंतानंतप्रदेशवचनं प्रमाणांतरव्यपोहार्थं । कर्मणोनंतानंताः प्रदेशाः परमाणुरूपाः कथं स्कंधात्मना परिणमंते पर्वतात्मना सूक्ष्मसलिलकणवद्विरोधात् । ततो न ते नाम्नो ज्ञानाभावादेरनुभवफलस्य हेतव इति न शंकनीयं; स्कंधाभावेक्षविज्ञानाभावात् सर्वपदार्थाग्रहणस्यानुषक्तेः सकलानुमेयार्थानामपि लिंगार्थग्रहणासंभवात् । तृतीयस्थानसंक्रांतानामपि शब्दगम्यानां प्रकाशकशब्दग्रहणविरोधात् । स्वसंवेदनादात्मग्रहणात्र सर्वाग्रहणमिति चेन्न, शरीरादिस्कंधाभावे मनोनिमित्तकस्य स्वसंवेदनस्यानुपपत्तेः । मुक्तस्वसंविदितविज्ञानात् सर्वार्थग्रहणसिद्धेर्न सर्वार्थाग्रहण इति चेन्न, लिंगशब्दाद्यग्रहणे तत्कल्पनस्यानुपपत्तेः । न हि

परमाणव एव लिंगशब्दात्मनामात्मसात्च कुर्वते, तेषां सर्वथा बुद्ध्यगोचरत्वात्। नापि परमाणव एवेंद्रियमाश्रिता लिंगादिग्रहणकरणादिना नियुज्यंते, न च शरीरभावेनानुभवास्यभोगायतनत्वं प्रतिपद्यते अतिप्रसंगात्। परमाणूनामपि स्वकारणविशेषात्तथोत्पत्तेस्तद्भावाविरोध इति चेन्न; अत्यासन्नासंसृष्टरूपतयोत्पत्तेरेव स्कंधतयोत्पत्तेः, अन्यथैकत्वपरिणामविरोधादुक्तदोषस्य निवारयितुमशक्तेरिति विचारितं प्राक्। ततः सूक्तं कर्मणः प्रदेशाः स्कंधत्वेन परिणामविशेषान्नाम्नः प्रत्यया न विरुध्यंते तत्त्वतः प्रमाणेनाधिगतेरिति। सर्वात्मप्रदेशेष्विति किमर्थमितिचेदुच्यते—

सर्वेष्वात्मप्रदेशेषु न कियत्सुचिदेव ते। तत्फलस्य तथा वित्ते नीरे क्षीरप्रदेशवत् ॥ ३ ॥

यथैव हि सर्वत्र कलशोदके क्षीरमिश्रे क्षीररसविशेषस्य फलस्योपलब्धेः सर्वेषु तदुदकप्रदेशेषु क्षीरसंश्लेषः सिद्धस्तथा सर्वेष्वात्मप्रदेशेषु कर्मफलस्याज्ञानादेरुपलंभात् कर्मप्रदेशसंश्लेषः सिध्यतीति सूक्तमिदं सर्वात्मप्रदेशेष्विति वचनमेकप्रदेशाद्यपोहार्थमिति। सूक्ष्मेत्यादि निर्देशेन किं कृतमित्याह—

सूक्ष्मशब्देन च योग्यस्वभावग्रहणाय ते। पुद्गलाः प्रतिपाद्यंते स्थूलानां तदसंभवात् ॥ ४ ॥

सूक्ष्मग्रहणं ग्रहणयोग्यस्वभावप्रतिपादनार्थमिति वचनात् ॥

एकक्षेत्रावगाहाभिधानं क्षेत्रांतरस्य तत्। निवृत्त्यर्थं स्थिताः स्यात्तु क्रियांतरनिवृत्तये ॥ ५ ॥

एकक्षेत्रावगाहवचनं क्षेत्रांतरनिवृत्त्यर्थं, स्थिता इति वचनं क्रियांतरनिवृत्त्यर्थमिति प्रतिपादनात्। एकक्षेत्रावगाहः कोसाविति चोच्यते—

अत्यंतनिबिडावस्थावगाहोर्थात् प्रतीयते। तेन तेवस्थितास्तत्र गोमये धूमराशिवत् ॥ ६ ॥

ततः सूक्ष्माश्च ते एकक्षेत्रावगाहस्थिताश्चेति स्वपदार्थवृत्तिः प्रत्येया, ते च कर्मणः प्रदेशाः ॥

भूयः प्रदेशमेकत्र प्रदेशे द्रव्यमीक्ष्यते। परमाणौ यथा क्ष्माभृत् कुलं नैवेति केचन ॥ ७ ॥
तेषामल्पप्रदेशस्थैर्घनैः कर्पासपिंडकैः। अन्यैकांतिकता हेतोर्भूयोदेशैरसंशयम् ॥ ८ ॥

योगविशेषादिति वचनं निमित्तनिर्देशार्थं। कथमित्याह;—

योगः पूर्वोदितस्तस्य विशेषात् कारणात्तथा। स्थितास्तेत्र विना हेतोर्नियतावस्थितिक्षतेः॥ ९ ॥

सर्वेषु भवेषु सर्वत इत्यनेन कालोपादानं कृतम् ॥

सर्वेष्वसर्वेष्वेते कचिदेव भवेन्न तु। सर्वतो वचनादेव प्रतिपत्तव्यमंजसा ॥ १० ॥
इति प्रदेशैर्यो बंधः कर्मस्कंधादिभिर्मतः। स नुः प्रदेशबंधः स्यादेष बंधो विलक्षणः ॥११॥
सोयं कारणभेदेन कार्यभेदेन चास्थितः। स्वभावस्य च भेदेन कर्मबंधश्चतुर्विधः ॥ १२ ॥
बद्धस्पृष्टादिभेदेनावस्थितादिभिदापि च। द्रव्यादिभेदतो नामादिप्रभेदेन वा तथा ॥ १३ ॥
विना प्रकृतिबंधाच्च स्युर्ज्ञानावरणादयः। कार्यभेदात्स्वयं सिद्धाः स्थितिबंधाद्विना स्थिराः १४
न चानुभवबंधेन विनानुभवनं नृणां। प्रदेशबंधतः कृत्स्नैर्नैकैर्न व्याप्यवृत्तये ॥ १५ ॥
एवं कार्यविशेषेभ्यो विशेषो बंधनिष्ठितः। प्रत्येयोनेकधा युक्तेरागमाच्च तथाविधात् ॥ १६ ॥
पुण्यास्रवोक्तिसामर्थ्यात् पुण्यबंधोऽवगम्यते। सद्वेद्यादीनि चत्वारि तत्पुण्यमिह सूत्रितं ॥१७॥

## सद्वेद्यशुभायुर्नामगोत्राणि पुण्यम् ॥ २५ ॥

शुभग्रहणमायुरादीनां विशेषणं। शुभायुस्त्रिविधं, शुभं नाम सप्तत्रिंशद्विकल्पं, उच्चैर्गोत्रं च शुभं। कुतः सद्वेद्यादि प्रसिद्धमित्युच्यते—

यस्योदयात्सुखं तत्स्यात्सद्वेद्यं देहिनां तथा । शुभमायुस्त्रिधा यस्य फलं शुभभवत्रयं ॥ १ ॥
सप्तत्रिंशद्विकल्पं तु शुभं नाम तथा फलं । उच्चैर्गोत्रं शुभं प्राहुः शुभसंशब्दनार्थकम् ॥ २ ॥
इति कार्यानुमेयं तद्द्विचत्वारिंशदात्मनि । पापास्रवोक्तिसामर्थ्यात्पापबंधो व्यवस्थितः ॥ ३ ॥

पापं पुनस्ततः पुण्यादन्यदित्यत्र सूच्यते;—

## अतोन्यत् पापम् ॥ २६ ॥

असद्वेद्याशुभायुर्नामगोत्राणीत्यर्थः । कुतस्तदवसीयते इत्याह;—

दुःखादिभ्योऽशुभेभ्यस्तत्फलेभ्यस्त्वनुमीयते । हेतुभ्यो दृश्यमानेभ्यस्तज्जन्माव्यभिचारतः॥१॥
एवं संक्षेपतः कर्मबंधो द्वेधावतिष्ठते । पुण्यपापातिरिक्तस्य तस्यात्यंतमसंभवात् ॥ २ ॥
पुण्यं पुण्यानुबंधीष्टं पापं पापानुबंधि च । किंचित्पापानुबंधि स्यात्किंचित्पुण्यानुबंधि च ॥३॥
यथार्थोर्थानुबंधी स्यान्न्यायाचरणपूर्वकः । तथानर्थोपि चांभोधिसमुत्तारादिरर्थकृत् ॥ ४ ॥
अन्यायाचरणायातस्तद्वदर्थोप्यनर्थकृत् । अनर्थोपीति निर्णीतमुदाहरणमंजसा ॥ ५ ॥

तत्र पापानुबंधिनः पुण्यस्य पुण्यानुबंधिनश्च पापस्य कार्यं दर्शयति यत्प्रदर्शनसामर्थ्यात् पुण्यानुबंधिनः पुण्यस्य पापानुबंधिनश्च पापस्य फलम् ॥

अवसीयति प्रथमकस्तुत संपदां पदं समनुभवंति वंद्यपादाः ।
तदनु च विपदं गरीयसीं दधति परामपि निंद्यवृत्तितां ॥ ६ ॥
यदिह तदिहमुत्तरैनसो निजसुकृतस्य फलं वदंति तज्ज्ञाः ।
तदपरमपि चादिमैनसः सुकृतपरस्य विपर्ययेण वृत्तेः ॥ ७ ॥

इति अष्टमाध्यायस्य द्वितीयमाह्निकम् ॥

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे अष्टमोऽध्यायः ॥ ८ ॥





# अथ नवमोऽध्यायः ॥ ९ ॥

## आस्रवनिरोधः संवरः ॥ १ ॥

कर्मागमननिमित्ताप्रादुर्भूतिरास्रवनिरोधः, तन्निरोधे सति तत्पूर्वककर्मादानाभावः संवरः । तथा निर्देशः कर्तव्य इति चेन्न, कार्ये कारणोपचारात् । निरुध्यतेऽनेन निरोध इति वा, निरोधशब्दस्य करणसाधनत्वात् आस्रवनिरोधः संवर इत्युच्यते न पुनः कर्मादानाभावः । स इति योगविभागो वा आस्रवस्य निरोधः ततः संवर इति । एतदेवाह—

**अथास्रवनिरोधः स्यात्संवरोऽपूर्वकर्मणां । कारणस्य निरोधे हि बंधकार्यस्य नोदयः ॥ १ ॥**

आस्रवः कारणं बंधस्य कुतः सिद्ध इति चेत्—

**आस्रवः कारणं बंधे सिद्धस्तद्भावभावतः । तन्निरोधे विरुध्येत नात्मा संवृतरूपभृत् ॥ २ ॥**

न हि निरोधो निरूपितो अभावस्तस्य भावांतरस्वभावत्वसमर्थनात्, तेनात्मैव निरुद्धास्रवः संवृतस्वभावभृत् संवरः सिद्धः सर्वथाविरोधाद्भावाभावाभ्यां भवतोऽभवतश्च । बंधस्यास्रवकारणत्ववत् बंधस्यैव निरोधः संवर इति कश्चित्, तदयुक्तमित्याहः—

**संवरः पूर्वबंधस्य निरोध इति भाषितं । न युक्तमास्रवे सत्यप्येतद्बाधानुषंगतः ॥ ३ ॥**

न हि सत्यप्यास्रवे संवरः संभवति सर्वस्य तत्प्रसंगात् । न चापूर्वकर्मबंधस्य निरोधे सत्यास्रवनिरोध एवेति नियमोस्ति, क्षीणकषायसयोगकेवलिनोरपूर्वबंधनिरोधेपि कर्मास्रवसिद्धेः । प्रकृत्यादिसकलबंधनिरोधस्तु न नास्रवनिरोधमंतरेण भवतीति तन्निरोध एव बंधनिरोधस्ततो युक्तमेतदास्रवनिरोधः कर्मणामात्मनः संवर इति । मिथ्यादर्शनादिप्रत्ययधर्मसंवरणं संवरः । स द्वेधा, द्रव्यभावभेदात् । संसारनिमित्तक्रियानिवृत्तिर्भावसंवरः, तन्निरोधे तत्पूर्वककर्मपुद्गलादानविच्छेदो द्रव्यसंवरः । तद्विभावनार्थं गुणस्थानविभागवचनं । मिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यग्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयताप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसांपरायसूक्ष्मसांपरायोपशमकक्षपकोपशांतक्षीणकषायवीतरागछद्मस्थसयोगायोगिकेवलिभेदाद्गुणस्थानविकल्पः । तत्र मिथ्यादर्शनोदयवशीकृतो मिथ्यात्वोदयेऽसम्यग्मिथ्यादृष्टिः, तदुदयाभावेऽनंतानुबंधिकषायोदयविधेयीकृतः सासादनसम्यग्दृष्टिः, सम्यङ्मिथ्यादृष्टिः, सम्यक्त्वोपेतश्चारित्रमोहोदयापादिताविरतिरसंयतसम्यग्दृष्टिः, विषयविरतिपरिणतः संयतासंयतः, परिप्राप्तसंयमः प्रमादवान् प्रमत्तसंयतः प्रमादविरहितोऽप्रमत्तसंयतः, अपूर्वकरणपरिणामः उपशमकः क्षपकश्चोपचारात्, अनिवृत्तिपरिणामवशात् स्थूलभावेनोपशमकः क्षपकश्चानिवृत्तिबादरसांपरायः, सूक्ष्मभावेनोपशमात् क्षपणाच्च सूक्ष्मसांपरायः, सर्वस्योपशमात्क्षपणाच्चोपशांतकषायः क्षीणकषायश्च, घातिकर्मक्षयादाविर्भूतज्ञानाद्यतिशयः केवली । स द्विविधो योगभावाभावभेदात् । तत्र मिथ्यात्वप्रत्ययस्य कर्मणस्तदभावे संवरो ज्ञेयः । असंयमस्त्रिविधोऽनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानोदयविकल्पात् तत्प्रत्ययस्य तदभावे संवरः, प्रमादोपनीतस्य तदभावे निरोधः, कषायास्रवस्य तन्निरोधे निरासः, केवलयोगनिमित्तं सद्वेद्यं तदभावे तस्य निरोध इति सकलसंवरो अयोगकेवलिनः । सयोगकेवल्यंतेषु गुणस्थानेषु देशसंवरः प्रतिपत्तव्यः ॥

स कैः क्रियत इत्याह;—

## स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥

संसारकारणगोपनाद्गुप्तिः, सम्यगयनं समितिः, इष्टे स्थाने धत्ते इति धर्मः, स्वभावानुचिंतनमनुप्रेक्षा, परिषह्यंते इति परीषहास्तेषां जयो न्यक्कारः, चारित्रशब्दो व्याख्यातार्थः। संवृण्वतो गुप्त्यादिभिः गुप्त्यादय इति चास्रवनिमित्तकर्मसंवरणात्। स इति वचनं गुप्त्यादिभिः साक्षात्संबंधनार्थं ॥ कुतो गुप्त्यादिभिर्गुप्त्यादय एव वा संवरः स्यादित्याह—

स चास्रवनिरोधः स्याद्गुप्त्यादिभिरुदीरितैः। तत्कारणविपक्षत्वात्तेषामिति विनिश्चयः ॥ १ ॥

तत्र गुप्तीनां तत्कारणविपक्षत्वं न तावदसिद्धं, कर्मागमनकारणानां कायादियोगानां विरोधिनः स्वरूपनिश्चयात्। तथा समित्यादीनां वा समित्यादितत्कारणविरुद्धभावनया प्रतिपादनात् ॥

अथ धर्मेन्तर्भूतेन तपसा किं संवर एव क्रियते किं वान्यदपि किंचिदित्यारेकायामिदमाह;—

## तपसा निर्जरा च ॥ ३ ॥

धर्मेंतर्भावात् पृथग्ग्रहणमनर्थकमिति चेन्न, निर्जराकरणत्वख्यापनार्थत्वात् तपसः। प्रधानप्रतिपत्त्यर्थं च। संवरनिमित्तत्वसमुच्चयार्थश्चशब्दः। तपसोभ्युदयहेतुत्वान्निर्जरांगत्वाभाव इति चेन्न, एकस्यानेककार्यारंभदर्शनात्। गुणप्रधानफलोपपत्तेर्वा कृषीवलवत्। केन हेतुना—

तपसा निर्जरा च स्यात् संवरश्चेति सूत्रितं। संचितापूर्वकर्माप्तिविपक्षत्वेन तस्य तु ॥ १ ॥

तपो ह्यपूर्वदोषनिरोधि संचितदोषविनाशि च लंघनादिवत् प्रसिद्धं। ततस्तेन संवरनिर्जरयोः क्रिया न विरुध्यते ॥

अथ का गुप्तिरित्याह;—

## सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥

योगशब्दो व्याख्यातार्थः, प्राकाम्याभावो निग्रहः, सम्यगिति विशेषणं सत्कारलोकपरिपंक्त्याद्याकांक्षानिवृत्त्यर्थं। तस्मात् कायादिनिरोधात्तन्निमित्तकर्मानास्रवणात् संवरप्रसिद्धिः। कीदृक् संवरस्तया विधीयत इत्याह—

योगानां निग्रहः सम्यग्गुप्तिस्त्रेधा तयोदितः। संवरो बंधहेतूनां प्रतिपक्षस्वभावया ॥ १ ॥

कः पुनः सकलं संवरं समासादयतीत्याह—

अयोगः केवली सर्वं संवरं प्रतिपद्यते। द्रव्यतो भावतश्चेति परं श्रेयः समश्नुते ॥ २ ॥

काः समितय इत्याह;—

## ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥

सम्यग्ग्रहणेनानुवर्तमानेन प्रत्येकमभिसंबंधः, सम्यगीर्येत्यादिः। समितिरित्यन्वर्थसंज्ञा वा तांत्रिकी पंचानां। तत्र चर्यायां जीवबाधापरिहार ईर्यासमितिः, सूक्ष्मबादरैकद्वित्रिचतुरिंद्रियसंज्ञ्यसंज्ञिपंचेंद्रियपर्याप्तकापर्याप्तकभेदाच्चतुर्दशजीवस्थानानि बुद्धिकस्य जीवबाधापरिहरणं सम्यगीर्यासमितिरित्यर्थः। हितमितासंदिग्धाभिधानं भाषासमितिः। अनवद्यगुद्गमादिदोषवर्जनमेषणासमितिः, उद्गमादयो हि दोषाः—उद्गमोत्पादनैषणसंयोजनप्रमाणांगारधूमकारणभूतास्तेषां कदाचिदपि कोऽपि निर्वर्जनमेषणासमितिरित्यर्थः।

धर्मोपकरणानां ग्रहणविसर्जनं प्रति यतनमादाननिक्षेपणासमितिः । जीवाविरोधेनांगमलनिर्हरणं समुत्सर्गसमितिः । वाक्काययुप्तिरियमस्त्वीति चेन्न, तत्र सर्वकालविशेषे सति सर्वनिग्रहोपपत्तेः । ननु च पात्राभावात् पाणिपुटाहाराणां संवराभाव इति चेन्न, पात्रग्रहणात्परिग्रहदोषात् दैन्यप्रसंगाच्च । अजवप्रसंग इति चेन्न, तेन विनाभावात् चिरकालं तपश्चरणस्य । नैवं तस्य पात्रादि विनाभाव इति न परमर्षिभिः पात्रादि ग्राह्यं प्रासुकान्नग्रहणवत् । कुतः समितीनां संवरत्वमित्याह—

सम्यक्प्रभृतयः पंचेर्याद्याः समितयः स्मृताः । असंयमभवस्यास्त्रवस्य निरोधनं ॥ १ ॥
तद्विपक्षत्वतस्तासामिति देशेन संवरः । समितौ वर्तमानानां संयतानां यथायथं ॥ २ ॥

अथ धर्मप्रतिपादनार्थमाह;—

## उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥ ६ ॥

प्रवर्तमानस्य प्रमादपरिहारार्थं धर्मवचनं, क्रोधोत्पत्तिनिमित्ताविसह्याक्रोशादिसंभवे कालुष्याभावः क्षमा, जात्यादिमदावेशाद्यभिमानाभावो मार्दवं, योगस्यावक्रतार्जवं, प्रकर्षप्राप्तलोभनिवृत्तिः शौचं, गुप्तावंतर्भाव इति चेन्न, तत्र मानसपरिस्पंदप्रतिषेधात् । आर्किचन्येऽवरोध इति चेन्न, तस्य नैर्मल्यप्रधानत्वात् । तच्चतुर्विधं शौचं ततोऽन्यदेव । कुत इति चेत्, जीवितारोग्येंद्रियोपभोगभेदात् तद्विषयप्राप्तप्रकर्षलोभनिवृत्तेः शौचलक्षणत्वात् । सत्सु साधुवचनं सत्यं । भाषासमितावंतर्भाव इति चेन्न, तत्र साध्वसाधुभाषाव्यवहारे हितमितार्थत्वात् । बह्वपि वक्तव्यं, अन्यथानर्थप्रसंगात् । न भाषादिनिवृत्तिः संयमो गुप्त्यंतर्भावात् । नापि कायादिप्रवृत्तिर्विशिष्टा संयमः, समितिप्रसंगात् । त्रसस्थावरवधात् प्रतिषेध आत्यंतिकः संयम इति चेन्न, परिहारविशुद्धिचारित्रेंतर्भावात् । कस्तर्हि संयमः? समितिषु वर्तमानस्य प्राणींद्रियपरिहारः संयमः, अतोपहृतसंयमभेदसिद्धिः । संयमो हि द्विविधः, उपेक्षासंयमो अपहृतसंयमश्चेति । देशकालविधानज्ञस्य परानुरोधनोत्सृष्टकायस्य त्रिधा गुप्तस्य रागद्वेषानभिषंगलक्षण उपेक्षासंयमः । अपहृतसंयमस्त्रिविधः उत्कृष्टो मध्यमो जघन्यश्चेति । तत्र प्रासुकवसत्याहारमात्रबाह्यसाधनस्य स्वाधीनेतरज्ञानचरणकरणस्य बाह्यजंतूपनिपाते सत्यप्यात्मानं ततोपहृत्य जीवान् परिपालयत उत्कृष्टः, मृदुना प्रमृज्य जंतूनपहरतो मध्यमः, उपकरणांतरेच्छया जघन्यः । तत्प्रतिपादनार्थः शुद्ध्यष्टकोपदेशः । भावशुद्ध्यादयोऽष्टौ शुद्धयः । तत्र भावशुद्धिः कर्मक्षयोपशमजनिता मोक्षमार्गरुच्याहितप्रसादा रागाद्युपप्लवरहिता, तस्यां सत्यामाचारः प्रकाशते परिशुद्धभित्तिगतचित्रकर्मवत् । कायशुद्धिः निरावरणाभरणा निरस्तसंस्कारा यथाजातमलधारिणी निराकृतांगविकारा सर्वत्र प्रयतवृत्तिः प्रशमसुखं मूर्तिमंतं प्रदर्शयंती, तस्यां सत्यां न स्वतोस्य भयं उपजायते नाप्यन्यतस्तस्य कारणाभावात् । विनयशुद्धिः अर्हदादिषु परमगुरुषु यथार्हपूजाप्रवणा ज्ञानादिषु च यथाविधि भक्तियुक्ता गुरोः सर्वत्रानुकूलवृत्तिः प्रश्नस्वाध्यायवाचना कथाविज्ञापनादिषु प्रतिपत्तिकुशला देशकालभावावबोधनिपुणा सदाचार्यमतानुचारिणी, तन्मूलाः सर्वसंपदः । ईर्यापथशुद्धिः नानाविधजीवस्थानयोन्याश्रयावबोधजनितप्रयत्नपरिहृतजंतुपीडा ज्ञानादित्यस्वेंद्रियप्रकाशनिरीक्षितदेशगामिनी द्रुतविलंबितसंभ्रांता विस्मितलीलाविकारदिगंतरावलोकनादि विरहितगमना, तस्यां सत्यां संयमः प्रतिष्ठितो भवति विभव इव सुनीतौ । भिक्षाशुद्धिः परीक्षितोभयप्रचारा प्रमृष्टपूर्वापरस्वांगदेशविधाना आचारसूत्रोक्तकालदेशप्रवृत्तिप्रतिपत्तिकुशला लाभालाभमानापमानसमानमनोवृत्तिः लोकगर्हितकुलपरिवर्जनपरा चंद्रगतिरिव हीनाधिकगृहा विशिष्टोपस्थाना दीनानाथदानशाला-

शालाविवाहयजनगेहादिपरिवर्जनोपलक्षिता दीनवृत्तिविगमा प्रासुकाहारगवेषणप्रणिधाना आगमविहितनिर-वद्याशनपरिप्राप्तप्राणयात्राफला तत्प्रतिबद्धा हि चरणसंपत् गुणसंपदिव साधुजनसेवानिबंधना अतो लाभा-लाभयोः सुरसविरसयोश्च समसंतोषाद्भिक्षेति भण्यते, यथा सलीलसालंकारवरयुवतिभिरुपनीयमान-घासो गौर्न तदंगगतसौंदर्यनिरीक्षणपरः तृणमेवात्ति यथा वा तृणलवं नानादेशस्थं यथालाभमभ्यवहरति न योजनासंपदमवेक्षते, तथा भिक्षुरपि भिक्षापरिवेषकजनमृदुललितरूपवेषविलासावलोकननिरुत्सुकः शुष्कद्रवाहारयोजनाविशेषं चानपेक्षमाणः यथागतमश्नातीति गौरिव गोर्वा चारो गोचार इति च व्यपदि-श्यते तथा गवेषणेति च । यथा शकटं रत्नभारपरिपूर्णं येन केनचित् स्नेहेनाक्षलेपं कृत्वाभिलषितं देशांतरं वणिग्जनो नयति तथा मुनिर्गुणरत्नभरितां तनुशकटिमनवद्यभिक्षायुरक्षम्रक्षणेनाभिप्रेतसमाधि-पत्तनं प्रापयतीति अक्षम्रक्षणमिति च नाम निरूढं । यथा भांडागारे समुत्थितमनलमशुचिना शुचिना वा वारिणा शमयति गृही यतिरपीति उदराग्निप्रशमनमिति च निरुच्यते, दातृजनबाधया विना कुशलो मुनिः भ्रमरवदाहरतीति भ्रमराहार इत्यपि परिभाष्यते, येन केनचित्प्रकारेण श्वभ्रपूरणवदुदर-गर्तमनगारः पूरयति स्वादुनेतरेण वाहारेणेति श्वभ्रपूरणमिति च निरुच्यते । प्रतिष्ठापनशुद्धिपरः संयतः नखरोमसिंघाणकनिष्ठीवनशुक्रोच्चारप्रस्रवणशोधने देहपरित्यागे च विदितदेशकालो जंतूपरोधमंतरेण प्रयतते । संयतेन शयनासनशुद्धिपरेण स्त्रीक्षुद्रचौरपानशौंडशाकुनिकादिपापजनवासाः वर्ज्याः शृंगा-रविकारभूषणोज्वलवेशवेश्याक्रीडाभिरामगीतनृत्यवादित्राकुलशालादयः परिहर्तव्याः, अकृत्रिमाः गिरि-गुहांतरकोटरादयः कृत्रिमाश्च शून्यागारादयो मुक्तमोचितावासाः अनात्मोद्देशनिर्वर्तिताः निरारंभाः सेव्याः । वाक्यशुद्धिः पृथिवीकायकारंभादिप्रेरणरहिता परुषनिष्ठुरादिपरपीडाकरप्रयोगनिरुत्सुका व्रत-शीलदेशनादिप्रधानफला हितमितमधुरमनोहरा संयतयोग्या तदधिष्ठाना हि सर्वसंपद इति, शुद्ध्यष्टक-मुपदिष्टं भगवद्भिः संयमप्रतिपादनार्थं । ततो निरवद्यः संयमः स्यात् । तपो वक्ष्यमाणभेदं । परिग्रहनिवृत्ति-स्त्यागः । अभ्यंतरतपोविशेषोत्सर्गग्रहणात् सिद्धिरिति चेन्न, तस्यान्यार्थत्वात् । शौचवचनात्सिद्धिरिति चेन्न, तत्रासत्यपि गर्धोत्पत्तेः, दानं वा स्वयोग्यं त्यागः । ममेदमित्यभिसंधिनिवृत्तिराकिंचन्यं । अनुभूतां-गनास्मरणकथाश्रवणस्त्रीसंसक्तशयनासनादिवर्जनात् ब्रह्मचर्यं, स्वातंत्र्यार्थं गुरौ ब्रह्मणि चर्यमिति वा । अन्वर्थसंज्ञाप्रतिपादनार्थत्वाद्वा पौनरुक्त्यं गुप्त्याद्यंतर्भूतानामपि संवरधारणसामर्थ्याद्धर्म इति संज्ञाया अन्वर्थताप्रतिपत्तेरन्यथानुपपत्तेरित्यर्थगतं । तद्भावनाप्रकारत्वाद्वा सप्तप्रकारप्रतिक्रमणवत्, सप्तप्रकारं हि प्रतिक्रमणमैर्यापथिकरात्रिंदिवपाक्षिकचातुर्मासिकसांवत्सरिकोत्तमस्थानलक्षणत्वात् । तत्र गुप्त्यादिप्रति-स्थापनार्थं यथा भाष्यते तथोत्तमक्षमादिदशविधधर्मोऽपि । ततस्तदंतर्भूतस्यापि पृथग्वचनं सार्थं । उत्तम-विशेषणं दृष्टप्रयोजनपरिवर्जनार्थं । सर्वेषां स्वगुणप्रतिपक्षदोषाभावात्संवरहेतुत्वं । कथमित्याह—

**दृष्टकार्यानपेक्षाणि क्षमादीन्युत्तमानि तु । स्याद्धर्मः समितिभ्योऽन्यः क्रोधादिप्रतिपक्षतः ॥१॥**

क्रोधादिप्रतिपक्षत्वमित्येव धर्मः, उत्तमायाः क्षमायाः क्रोधप्रतिपक्षत्वात् मार्दवार्जवशौचानां मानमाया-लोभविपक्षत्वात् सत्यादीनामनृतासंयमातपोऽत्यागममत्वाब्रह्मप्रतिकूलत्वाच्च । स हि धर्म उत्तमक्षमादीन्येव समितिभ्योन्यः सूत्रितः । नन्वत्र व्यक्तिवचनभेदाद्वैलक्षण्यमिति चेन्न, सर्वेषां धर्मभावाव्यतिरेकस्यैकत्वाद्वा-निरूढिमत्वाच्च । कस्य पुनः संवरस्य हेतुर्धर्म इत्याह—

**तन्निमित्तास्रवध्वंसी यथायोग्यं स देशतः । संवरस्य भवेद्धेतुरसंयतदृगादिषु ॥ २ ॥**

क्रोधादिनिमित्तास्रवध्वंसीन्युत्तमक्षमादीनि विधिवन्तीति तत्स्वभावो धर्मस्तन्निमित्तास्रवध्वंसी कथ्यते ।

स यथायोग्यं देशतः संवरस्य हेतुर्भवेदसंशयमेव असंयतसम्यग्दृष्ट्यादिषु तत्संभवात् । तथाहि असंयतसम्यग्दृष्टौ तावदनंतानुबंधिक्रोधादिप्रतिपक्षभूताः क्षमादयः संभवंत्येव । संयतासंयते चानंतानुबंध्यप्रत्याख्यानावरणक्रोधादिविपक्षाः, प्रमत्तसंयतादिषु सूक्ष्मसांपरायांतेषु पुनरनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानावरणप्रतिबंधिनः, उपशांतकषायादिषु समस्तक्रोधादिसंपन्नाः संगच्छंते विरोधाभावात् । एवं संयमादयोपि प्रमत्तसंयतादिषु यथायोगं संभवंतः प्रतिपत्तव्याः । ते च स्वप्रतिपक्षहेतुकास्रवनिरोधनिबंधनत्वाद्देशसंवरस्य हेतवः स्युः ॥

अथानुप्रेक्षाप्रतिपादनार्थमाह;—

## अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्यातत्वानुचिंतनमनुप्रेक्षाः ॥ ७ ॥

उपात्तानुपात्तद्रव्यसंयोगव्यभिचारस्वभावोऽनित्यत्वं, क्षुधितव्याघ्राभिद्रुतमृगशावकवज्जंतोर्जरामृत्युरुजांतरपारेत्राणाभावोऽशरणत्वं, द्रव्यादिनिमित्तादात्मनो भवांतरावाप्तिः संसारः, जन्मजरामरणावृत्तिमहादुःखानुभवनं प्रति सहायानपेक्षत्वमेकत्वं, शरीरव्यतिरेको लक्षणभेदोऽन्यत्वं, अशुभकारणत्वादिभिरशुचित्वं, आस्रवसंवरनिर्जराग्रहणमनर्थकमुक्तत्वादिति चेन्न, तद्गुणदोषान्वेषणपरत्वादिह तद्ग्रहणस्य । लोकसंस्थानादिविधिर्व्याख्यातः, रत्नत्रय(त्रस)भावादिलाभस्य कृच्छ्रप्रतिपत्तिर्बोधिदुर्लभत्वं, जीवस्थानगुणस्थानानां गत्यादिषु मार्गणालक्षणो धर्मो व्याख्यातः । गतींद्रियकाययोगवेदकषायज्ञानसंयमदर्शनलेश्याभव्यसम्यक्त्वसंज्ञाहारकेषु मार्गणा । स्वाख्यात इति चेन्न, प्रादिवृत्तेः शोभनमाख्यात इति । अनुप्रेक्षा इति भावसाधनत्वे बहुवचनविरोधः, कर्मसाधनत्वे सामानाधिकरण्याभाव इति चेन्न वा, कृदभिहितस्य भावस्य द्रव्यवद्भावात् सामानाधिकरण्यसिद्धेश्चोभयोः कर्मसाधनत्वात् । मध्येनुप्रेक्षावचनमुभयनिमित्तत्वात् । धर्मपरीषहजययोर्निमित्तभूता ह्यनुप्रेक्षास्तन्मध्येऽभिधीयंते । कुतस्ताः कथ्यंत इत्याह;—

अनुप्रेक्षाः प्रकीर्त्यंते नित्यत्वाद्यनुचिंतनं । द्वादशात्रानुप्रेक्षाविपक्षत्वान्मुनीश्वरैः ॥ १ ॥

परिकल्पिता एवानित्यत्वादयो धर्मास्तेषामात्मनि शरीरादिषु च परमार्थतोसत्त्वादित्यपरे तान् प्रत्याह;—

अनित्यत्वादयो धर्माः संत्यात्मादिषु तात्त्विकाः । तथा साधनसद्भावाः सर्वेषां शेषतत्त्ववत् ॥२॥
ततोनुचिंतनं तेषां नासतां कल्पितात्मनां । नाप्यनर्थकमिष्टस्य संवरस्य प्रसिद्धितः ॥ ३ ॥

अथानुप्रेक्षानंतरं परीषहजयं प्रस्तुवानः सर्वपरीषहाणां सहनं तेत्र किमर्थं सोढव्या इत्याह;—

## मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ८ ॥

परीषहा इति महत्त्वादन्वर्थसंज्ञा । प्रकरणात् संवरमार्गप्रतिपत्तिः । तदच्यवनार्थो निर्जरार्थश्च परीषहजयः । तत्र मार्गाच्यवनार्थत्वं कथमस्येत्याह—

मार्गाच्यवनहेतुत्वं परीषहजयस्य सत् । परीषहाजये मार्गच्यवनस्य प्रतीतितः ॥ १ ॥

निर्जरार्थत्वं कथमित्याह;—

निर्जराकारणत्वं च तपःसिद्धिपरत्वतः । तदभावे तपोलोपान्निर्जरा क्वातिशक्तितः ॥ २ ॥
परिषोढव्यता प्रासात्तस्मादेते परीषहाः । परीषहजयोत्थानामास्रवाणां विरोधतः ॥ ३ ॥

के पुनस्ते परीषहा इत्याह;—

## क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥

परीषहा इति सामानाधिकरण्येनाभिसंबंधो व्यक्तिभेदेपि सामान्यविशेषयोः कथंचिदभेदात् । तेन क्षुधादयो द्वाविंशतिः परीषहाः । तत्र प्रकृष्टक्षुदग्निप्रज्वलने धृत्यंभसोपशमः क्षुज्जयः । उदन्योदीरणहेतूपनिपाते तद्वशाप्राप्तिः पिपासासहनं । पृथग्वचनमैकार्थ्यादिति चेन्न, सामर्थ्यभेदात् । अभ्यवहारसामान्यादैकार्थ्यमिति चेन्न, अधिकरणभेदात् । शैत्यहेतुसंनिपाते तत्प्रतीकारानभिलाषात् संयमपरिपालनं शीतक्षमा । दाहप्रतीकारकांक्षाभावाच्चारित्ररक्षणमुष्णसहनं, दंशमशकादीनां सहनं । दंशमशकग्रहणमसंग इति चेन्न, उपलक्षणत्वात् मशकशब्दस्य दंशजातीयानामादिशब्दार्थप्रतिपत्तेः । जातरूपधारणं नाग्न्यसहनं, संयमेऽरतिभावादरतिपरीषहजयः । सर्वेषामरतिकारणत्वात् पृथगरतिग्रहणानर्थक्यमिति चेन्न, क्षुदाद्यभावेपि मोहोदयात्तत्प्रवृत्तेः । वरांगनारूपदर्शनस्पर्शनादिविनिवृत्तिः स्त्रीपरीषहजयः । भव्यादोषनिग्रहश्चर्याविजयः । संकल्पितासनादविचलनं निषद्यातितिक्षा । आगमोदितशयनादप्रच्यवनं शय्यासहनं । अनिष्टवचनसहनमाक्रोशपरीषहजयः । मारकेष्वमर्षापोहनभावनं वधमर्षणं । प्राणात्ययेप्याहारादिषु दीनाभिधाननिवृत्तिर्याचनाविजयः । अलाभेपि लाभवत्संतुष्टस्यालाभविजयः । नानाव्याधिप्रतीकारानपेक्षत्वं रोगसहनं । तृणादिनिमित्तवेदनायां मनसोऽप्रणिधानं तृणस्पर्शजयः । स्वपरांगमलोपचयापचयसंकल्पाभावो मलधारणं । केशखेदसहनोपसंख्यानमिति चेन्न, मलपरीषहावरोधात् । मानापमानयोस्तुल्यमनसः सत्कारपुरस्कारानभिलाषः । प्रज्ञोत्कर्षावलेपनिरासः प्रज्ञाविजयः । अज्ञानावमानज्ञानाभिलाषसहनमज्ञानपरीषहजयः । प्रव्रज्याद्यनर्थकत्वासमाधानमदर्शनसहनं । श्रद्धानालोचनग्रहणमविशेषादिति चेन्न, अव्यभिचारदर्शनार्थत्वात् । मनोरथपरिकल्पनामात्रमिति चेन्न, वक्ष्यमाणकारणसामर्थ्यात् । अवध्यादिदर्शनोपसंख्यानमिति चेन्न, अवधिज्ञानाद्यभावे तत्सहचरितदर्शनाभावादज्ञानपरीषहावरोधात् ।

ननु क्षुदादीनां परिसोढव्यत्वसिद्धिः कथमित्याह—

**ते च क्षुदादयः प्रोक्ता द्वाविंशतिरसंशयं । परिषह्यतया तेषां तत्त्वसिद्धिर्विशुद्धये ॥ १ ॥**

ते क्षुदादयो हि द्वाविंशतिपरीषहाः परिसोढव्याः प्रोक्ताः सूत्रकारैरसंशयं तेषां विशुद्ध्यर्थं परिषह्यत्वात् तत एवान्वर्था संज्ञा महती कृता परीषहा इत्युक्तं ॥

अथ कस्मिन् गुणस्थाने कियंतः संभवंतीत्याह;—

## सूक्ष्मसांपरायछद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥

चतुर्दशवचनादन्यस्याभावः । सूक्ष्मसांपराये नियमानुपपत्तिर्मोहोदयादिति चेन्न, सन्मात्रत्वात् तत्र तस्य । अत एव परीषहाभाव इति चेन्न, बाधाविशेषोपरमे तद्भावस्याविरुध्यासितत्वात् सर्वार्थसिद्धस्य सप्तमनरकपर्यंतगमनसामर्थ्यवत् । कथं पुनः सूक्ष्मसांपराये गुणे तद्वति वा छद्मस्थवीतरागे चानुत्पन्नकेवलज्ञाने क्षीणोपशांतमोहे चतुर्दशैव परीषहाः क्षुदादय इति प्रतिपादयन्नाह;—

**स्युः सूक्ष्मसांपराये च चतुर्दश परीषहाः । छद्मस्थवीतरागे च ततोऽन्येषामसंभवात् ॥ १ ॥**
**छद्मस्थवीतरागे हि मोहाभावान्न तत्कृताः । अष्टौ परिषहाः संति तथा तेऽन्ये चतुर्दश ॥ २ ॥**
**ते सूक्ष्मसांपरायेपि तथाकिंचित्करत्वतः । सतोपि मोहनीयस्य सूक्ष्मस्येति प्रतीयते ॥ ३ ॥**

[illegible] सा भूयंतर एव चेत् । व्यक्तिरूपा न संत्येव शक्तिरूपेण तत्र ते ॥ ४॥
मोहनीयसहायस्य वेदनीयस्य तत्फलं । केवलस्यापि तद्भावेतिप्रसंगो हि दुस्त्यजः ॥ ५ ॥

न हि सदिंधनादिसहायस्याग्नेर्धूमः कार्यमिति केवलस्यापि स्यात् । तथा मोहसहायस्य वेदनीयस्य तत्फलं क्षुदादि तदेकाकिनोपि न युज्यत एव तस्य सर्वदा मोहानपेक्षत्वप्रसंगात् । तथा च समाप्त्य-[illegible]मपि कस्यचिदुद्भूतिप्रसंगः । तस्मान्न क्षुदादयः सूक्ष्मसांपराये व्यक्तिरूपाः संति मोहादिसहायासंभवात् छद्मस्थवीतरागवदिति, शक्तिरूपा एव ते तत्रावगंतव्याः ॥

अथ भगवति केवलिनि कियंतः परीषहा इत्याह;—

## एकादश जिने ॥ ११ ॥

तत्र केचित् संतीति व्याचक्षते, परे तु न संतीति । तदुभयव्याख्यानाविरोधमुपदर्शयन्नाह;—

एकादश जिने संति शक्तितस्ते परीषहाः । व्यक्तितो नेति सामर्थ्याद्व्याख्यानद्वयमिष्यते ॥१॥

वेदनीयोदयभावात् क्षुदादिप्रसंग इति चेन्न, घातिकर्मोदयसहायाभावात् तत्सामर्थ्यविरहात् । सद्भावोपचाराद्ध्यानकल्पनवच्छक्तित एव केवलिन्येकादशपरीषहाः संति न पुनर्व्यक्तितः, केवलाद्वेदनीयाद्व्यक्तक्षुदाद्यसंभवादित्युपचारतस्ते तत्र परिज्ञातव्याः । कुतस्ते तत्रोपचर्यंते इत्याह—

लेश्यैकदेशयोगस्य सद्भावादुपचर्यते । यथा लेश्या जिने तद्वद्वेदनीयस्य तत्त्वतः ॥ २ ॥
घातिहत्युपचर्यंते सत्तामात्रात् परीषहाः । छद्मस्थवीतरागस्य यथेति परिनिश्चितं ॥ ३ ॥
न क्षुदादेरभिव्यक्तिस्तत्र तद्धेतुभावतः । योगशून्ये जिने यद्वदन्यथातिप्रसंगतः ॥ ४ ॥
नैकं हेतुः क्षुदादीनां व्यक्तौ चेदं प्रतीयते । तस्य मोहोदयाद्व्यक्तेरसद्वेद्योदयेपि च ॥ ५ ॥
क्षामोदरत्वसंपत्तौ मोहापाये न सेत्स्यते । सत्याहाराभिलाषेपि नासद्वेद्योदयादृते ॥ ६ ॥
न भोजनोपयोगस्यासत्त्वेनाप्यनुदीरणा । असातावेदनीयस्य न चाहारेक्षणादिना ॥ ७ ॥
क्षुदित्यशेषसामग्रीजन्याभिव्यज्यते कथं । तद्वैकल्ये सयोगस्य पिपासादेरयोगतः ॥ ८ ॥
क्षुदादिवेदनोद्भूतौ नार्हतोऽनंतशर्मता । निराहारस्य चाशक्तौ स्थातुं नानंतशक्तिता ॥ ९ ॥
नित्योपयुक्तबोधस्य न च संज्ञास्ति भोजने । पाने चेति क्षुदादीनां नाभिव्यक्तिर्जिनाधिपे ॥१०

अथ बादरसांपराये कियंतः परीषहा इत्याह;—

## बादरसांपराये सर्वे ॥ १२ ॥

बादरसांपरायग्रहणात् प्रमत्तादिनिर्देशः निमित्तविशेषस्याक्षीणत्वात् सर्वेषु सामायिकछेदोपस्थापनापरिहारविशुद्धिसंयमेषु सर्वसंभवः । केन रूपेण ते तत्र संतीत्याह—

बादरः सांपरायोस्ति येषां सर्वे परीषहाः । संति तेषां निमित्तस्य साकल्याद्व्यक्तिरूपतः ॥ १ ॥

अथ कस्मिन्निमित्ते कः परीषहः ?—

## ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥

ज्ञानावरणे अज्ञानं न प्रज्ञेति चेन्न, ज्ञानावरणसद्भावे तद्भावात् । मोहादिति चेन्न, तद्भेदानां परिगणितत्वात् । सावलेपायाः प्रज्ञाया अपि ज्ञानावरणनिमित्तत्वोपपत्तेः मिथ्याज्ञानवत् । एतदेवाह—

ज्ञानावरणनिष्पाद्ये प्रज्ञाज्ञाने परीषहौ । प्रज्ञावलेपनिर्वृत्तेर्ज्ञानावरणतोन्यतः ॥ १ ॥

अन्यद्धि ज्ञानावरणं प्रज्ञावलेपनिमित्तमज्ञाननिमित्ताद् ज्ञानावरणात् । न चैवं ज्ञानावरणोत्तरप्रकृतिसं-[illegible] ॥

## दर्शनमोहांतराययोरदर्शनालाभौ ॥ १४ ॥

किं पुनरदर्शनमित्याह—

अदर्शनमिहार्थानामश्रद्धानं हि तद्भवेत् । सति दर्शनमोहेऽस्य न ज्ञानात् प्रागदर्शनं ॥ १ ॥

विशिष्टकारणनिर्देशादवध्यादिदर्शनसंदेहाभावः । अंतराय इति सामान्यनिर्देशेपि सामर्थ्याद्विशेषसं-प्रत्ययः । कः पुनरसौ विशेष इत्याह;—

अंतरायोऽत्र लाभस्य तयोरन्योर्याद्विशेषतः । कारणस्य विशेषाद्धि विशेषः कार्यगः स्थितः ॥ २ ॥

तेन दर्शनमोहोदये तत्त्वार्थाश्रद्धानलक्षणमदर्शनं, लाभांतरायोदये चालाभ इति प्रकाशितं भवति ॥

## चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः ॥ १५ ॥

निषद्यापरीषहस्य मोहोदयनिमित्तत्वं प्राणिपीडार्थत्वात्, पुंवेदोदयादिनिमित्तत्वान्नाग्न्यादीनामिति चारित्रमोहोदयनिबंधना एते । तदेवाह—

नाग्न्याद्याः सप्त चारित्रमोहे सति परीषहाः । सामान्यतो विशेषाच्च तद्विशेषेषु तेर्थतः ॥ १ ॥

ज्ञानावरणमोहांतरायसंभूतयो मताः । इत्येकादश ते तेषामभावे तत्कचित्सदा ॥ २ ॥

## वेदनीये शेषाः ॥ १६ ॥

उक्तादन्यनिर्देशः शेष इति । ते च क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरी-षहाः । किमेकाकिन्येव वेदनीयेमी भवंत्युत सहकारापेक्षे सतीत्याशंकायामिदमाह—

शेषाः स्युर्वेदनीये ते समग्रसहकारिणि । इति सर्वत्र विज्ञेयमसाधारणकारणं ॥ १ ॥

ननु ज्ञानावरणे इत्यादिसूत्रेषु विभक्तिविशेषे निमित्तात्कर्मसंयोग इति चेन्न, तद्योगाभावात् । न हि यथा चर्मणि द्वीपिनं हंतीत्यत्र कर्मसंयोगस्तथात्रास्ति ततोयं सन्निर्देशस्तदुपलक्षणत्वात् गोषु दुह्यमानासु गत इत्यादिवत् ॥

अथैकस्मिन्नात्मनि सकृत् कियंतः परीषहाः संभवंतीत्याह;—

## एकादयो भाज्या युगपदेकस्मिन्नैकोनविंशतेः ॥ १७ ॥

आङभिविध्यर्थः । शीतोष्णशय्यानिषद्याचर्याणामसहभावादेकान्नविंशतिसंभवः । प्रज्ञाज्ञानयोर्विरोधा-दन्यतराभावे अष्टादशप्रसंग इति चेन्न, अपेक्षातो विरोधाभावात् । श्रुतज्ञानापेक्षया हि प्रज्ञाप्रकर्षे सत्यवध्याद्यभावापेक्षयाऽज्ञानोपपत्तेः । दंशमशकस्य युगपत्प्रवृत्तेरेकोनविंशतिविकल्प इति चेन्न, प्रका-रार्थत्वात् । मशक एवेत्ययं परीषहोन्यथातिप्रसंगात् । दंशग्रहणात्तुल्यजातीय इति चेन्न, श्रुतिविरो-धात् । न हि दंशशब्दः प्रकारमभिधत्ते । मशकशब्दोपि तत्तुल्यमिति चेन्न, अन्यतरेण परीषहस्य निरू-पितत्वात् । न हि दंशशब्देन निरूपिते परीषहे मशकशब्दग्रहणं तदर्थमेव युक्तमतः प्रकारोर्थांतर इति निश्चयः । चर्यानिषद्याशय्यानामरतेरविशेषादेकान्नविंशतिवचनमिति चेन्न, अरतौ परीषहजया-भावात् । न हि चर्यानिषद्याशय्यानामरतेरेकत्वादेकत्वं युक्तं तत्र अरतौ परीषहजयायोगात्, तत्कृतपी-डासहनात् । परीषहजयेन्यत्वमेव तेषामिति द्वाविंशतिवचनमेव युक्तं । तस्मात्—

एकादयो भाज्याः क्वचिदेकान्नविंशतिः । विंशत्यादेरसंभूतेर्विरोधात्सत्त्वयापि वा ॥ १ ॥

इत्युक्तेर्नियमाभावः सिद्धोऽनां सहस्रके । सहकारिविहीनत्वाकेवलेऽतोऽपि ॥ २ ॥

किं पुनश्चारित्रमित्याह;—

## सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसांपराययथाख्यातमिति चारित्रम् ॥ १८ ॥

सामायिकवचनमौलीलार्थः । सामायिकमिति वा समासविषयत्वात् अयंतीत्यायाः सत्त्वघातहेतवोऽनर्थाः संगता आयाः समायाः सम्यग्वा आयाः समायास्तेषु भवं सामायिकं, समायाः प्रयोजनमस्येति च सामायिकमिति समासविषयत्वं सामायिकस्यावस्थानस्य । तच्च सर्वसावद्ययोगप्रत्याख्यानपरं । गुप्तिप्रसंग इति चेन्न, इह मानसप्रवृत्तिभावात् । समितिप्रसंग इति चेन्न, तत्र यतस्य प्रवृत्त्युपदेशात् । धर्मप्रसंग इति चेन्न, अत्रेतिवचनस्य कृत्स्नकर्मक्षयहेतुत्वज्ञापनार्थत्वात् । प्रमादकृतानर्थप्रबंधविलोपे सम्यक् प्रतिक्रिया छेदोपस्थापना, विकल्पनिवृत्तिर्वा । परिहारेण विशिष्टा शुद्धिर्यस्मिन् तत्परिहारविशुद्धिचारित्रं । तत्पुनस्त्रिंशद्वर्षजातस्य संवत्सरपृथक्त्वं तीर्थकरपादमूलसेविनः प्रत्याख्याननामधेयपूर्वपारावारपारंगतस्य जंतुनिरोधप्रादुर्भावकालपरिमाणजन्मयोनिदेशद्रव्यस्वभावविधानज्ञस्य प्रमादरहितस्य वा महावीर्यस्य परमनिर्जरस्यातिदुष्करचर्यानुष्ठायिनः तिस्रः संध्या वर्जयित्वा द्विगव्यूतिगामिनः संपद्यते नान्यस्य मनागपि तद्विपरीतस्येति प्रतिपत्तव्यं । अतिसूक्ष्मकषायत्वात् सूक्ष्मसांपरायं, तस्य गुप्तिसमित्योरंतर्भाव इति चेन्न, तद्भावेपि गुणनिमित्तविशेषाश्रयणात् । लोभसंज्वलनाख्यसांपरायः सूक्ष्मोस्मिन् भवतीति विशेष आश्रितः । निरवशेषशांतक्षीणमोहत्वाद्यथाख्यातचारित्रं, यथा ख्यातमिव आत्मस्वभावाव्यतिक्रमेण ख्यातत्वात् । इतेरुपादानं ततः कर्मसमाप्तेर्ज्ञापनार्थत्वात् । यथाख्यातचारित्रसिद्धा सकलकर्मक्षयपरिसमाप्तिः । सामायिकादीनामुत्तरोत्तरगुणप्रकर्षख्यापनार्थमानुपूर्व्यवचनं, प्राच्यचारित्रद्वयविशुद्धेरल्पत्वादुत्तरचारित्रापेक्षया परिहारविशुद्धिचारित्रस्य ततोनंतगुणजघन्यशुद्धित्वात् । तस्यैव तदनंतगुणोत्कृष्टविशुद्धित्वात् पूर्वचारित्रद्वयस्य तदनंतगुणोत्कृष्टविशुद्धित्वात् । ततः सूक्ष्मसांपरायस्यानंतगुणजघन्यविशुद्धित्वात् तस्यैव तदनंतगुणोत्कृष्टत्वात्, ततो यथाख्यातचारित्रस्य संपूर्णविशुद्धित्वात् । एतदेवाह—

सामायिकादि चारित्रं सूत्रितं पंचधा ततः । संवरः कर्मणां ज्ञेयो चारित्रापेक्षजन्मनां ॥ १ ॥
धर्मांतर्भूतमप्येतत्संयमग्रहणादिह । पुनरुक्तं प्रधानत्वख्यातये निर्वृतिं प्रति ॥ २ ॥

अथ तपोवचनं धर्मांतर्भूतं तद्द्विविधं बाह्यमाभ्यंतरं च, तत्र बाह्यभेदप्रतिपत्त्यर्थमाह;—

## अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशाः बाह्यं तपः ॥ १९ ॥

दृष्टफलानपेक्षं संयमप्रसिद्धिरागोच्छेदकर्मविनाशध्यानागमावाप्त्यर्थमनशनं । तद्द्विविधं अवधृतानवधृतकालभेदात् । संयमप्रजागरदोषप्रशमनसंतोषस्वाध्यायसुखसिद्ध्यर्थमवमौदर्यं । एकागारसप्तवेश्मैकरथ्यार्धग्रामादिविषयसंकल्पो वृत्तिपरिसंख्यानं । दांतेंद्रियत्वतेजोहानिसंयमोपरोधव्यावृत्त्याद्यर्थं घृतादिरसपरित्यजनं रसपरित्यागः । रसवत्परित्याग इति चेन्न, मतोर्लुप्तनिर्दिष्टत्वात् शुक्लपट इत्यादिवत् । अव्यतिरेकाद्वा तद्गुणसंप्रत्ययः । सर्वत्यागप्रसंग इति चेन्न, प्रकर्षगतेः । प्रकृष्टरसस्यैव द्रव्यस्य त्यागसंप्रत्ययात् । प्रतिज्ञातगंधत्यागस्य प्रकृष्टगंधकस्तूरिकादित्यागवत् । कश्चिदाह—अनशनावमौदर्यरसपरित्यागानां वृत्तिपरिसंख्यानाधारात् पृथग्निर्देशः । तद्विकल्पनिर्देश इति चेन्न, अनवस्थानात् । तं प्रत्याह नवा, कायक्लेशादीनामुपसंख्यानार्थत्वाद्वृत्तिपरिसंख्यानस्य । अनशनस्याभ्यवहर्तव्यनिवृत्तिरूपत्वादवमौदर्यरसपरित्यागयोरभ्यवहर्तव्यैकदेशनिवृत्तिपरत्वात्ततो भेदप्रसिद्धेः । बाधात्ययब्रह्मचर्यस्वाध्यायध्यानादिप्रसिद्ध्यर्थं

विविक्तशय्यासनं । कायक्लेशः स्थानमौनातपनादिरनेकधा । देहदुःखतितिक्षासुखानभिष्वंगप्रवचनप्रभावनाद्यर्थः । परीषहजातीयत्वात् पौनरुक्त्यमिति चेन्न, स्वकृतक्लेशापेक्षत्वात् कायक्लेशस्य । सम्यगित्यनुवृत्तेर्दृष्टफलनिवृत्तिः, सम्यग्योगनिग्रहो गुप्तिरित्यतः सम्यग्ग्रहणमनुवर्तते । बाह्यद्रव्यापेक्षत्वाद्बाह्यत्वं, परप्रत्यक्षत्वात् तीर्थ्यगृहस्थकार्यत्वाच्चानशनादेः । एतच्च कर्मनिर्दहनात्तपः, देहेंद्रियतापाद्वा । कथं पुनः कर्मणां संवरः स्यात्तपसोऽस्मादित्याह;—

**षोढा बाह्यं विनिर्दिष्टं तपोत्रानशनादि यत् । संवरस्तेन च ज्ञेयो व्रतपोहेतुकर्मणां ॥ १ ॥**

अथाभ्यंतरं तपः प्रकाशयन्नाह;—

## प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥ २० ॥

तप इति संबध्यते । अस्यान्यतीर्थानभ्यस्तत्वादुत्तरत्वं अभ्यंतरत्वमिति यावत्, अंतःकरणव्यापाराद्बाह्यद्रव्यानपेक्षत्वात् । स्वत एतच्च स्वसंवेद्यमिति दर्शयन्नाह—

**प्रायश्चित्तादिषड्भेदं तपः संवरकारणं । स्यादुत्तरं स्वसंवेद्यमिति स्पष्टमनोगतं ॥ १ ॥**

तद्भेदगणनार्थमाह;—

## नवचतुर्दशपंचद्विभेदा यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥

नवादीनां भेदशब्देनोपसंहितानामन्यपदार्था वृत्तिः । द्विशब्दस्य पूर्वनिपातप्रसंग इति चेन्न, पूर्वसूत्रापेक्षत्वात् । शाब्दान्न्यायाद्द्वंद्वे स्युरल्पाच्तरमिति सूत्रात्संयोगादल्पीयस इत्युपसंख्यानाच्च द्विशब्दस्य पूर्वनिपातप्रसक्तावप्यर्थान्न्यायात् प्रायश्चित्तादिसूत्रार्थापेक्षया यथाक्रममभिसंबंधार्थलक्षणमुल्लंघ्यते, अर्थस्य बलीयस्त्वात् लक्ष्यानुविधानाल्लक्षणस्य । एते च नवादयः प्रभेदा इत्याह—

**प्रोक्ता नवादयो भेदाः प्राग्ध्यानात्ते यथाक्रमं । प्रायश्चित्तादिभेदानां तपसोभ्यंतरस्य हि ॥१॥**

यतस्तपसोऽभ्यंतरस्य प्रायश्चित्तादय एव भेदात्मानो नवादयस्तेषां भेदा इति प्रभेदास्ते । प्राग्ध्यानादिति वचनं यथासंख्यप्रतिपत्त्यर्थं ॥

तत्रास्य तपोभेदस्य नवविकल्पान् प्रतिपादयन्नाह;—

## आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनाः ॥२२॥

प्रायश्चित्तस्य नव विकल्पाः प्रमाददोषव्युदासभावप्रसादनिःशल्यानवस्थाव्यावृत्तिमर्यादात्यागसंयमदार्ढ्यभावनादिसिद्ध्यर्थं प्रायश्चित्तं, प्रायोपराधस्तस्य चित्तं विशुद्ध्यर्थमित्यर्थः । तस्मादालोचनादयो निरवद्यवृत्तयो नव विकल्पा भवंतीत्याह—

**आलोचनादयो भेदाः प्रायश्चित्तस्य ते नव । यथागममिह ज्ञेया निरवद्यप्रवृत्तये ॥ १ ॥**

तत्र गुरवे प्रमादनिवेदनं दशदोषविवर्जितमालोचनं । प्रायश्चित्तलघुकरणार्थमुपकरणदानं, यदि लघु मे शक्त्यपेक्षं किंचित्प्रायश्चित्तं दीयते तदाहं दोषं निवेदयामीति दीनवचनं, परादृष्टदोषगूहनेन प्रकटदोषनिवेदनं, प्रमादालस्याभ्यामल्पदोषावज्ञानेन स्थूलदोषप्रतिपादनं, महादोषसंवरणेनाल्पदोषकथनं, ईदृशे दोषे किं प्रायश्चित्तमित्युपायेन प्रच्छन्नं, बहुयतिजनालोचनाशब्दाकुले स्वदोषनिवेदनं, किमिदं गुरूपपादितं प्रायश्चित्तं युक्तमागमे न वेत्यनुगुरुप्रश्नः, महदपि प्रायश्चित्तं गृहीतं न फलकरमिति संचिंत्य स्वसमानाय प्रमादावेदनं, परगृहीतस्यैव प्रायश्चित्तस्यानुमतेन स्वदुश्चरितसंवरणं, इति दशालोचनदोषास्तेषां वर्जनमात्मापराधस्यात्मैव निर्माय बालवदृजुबुद्ध्याभिधानं तद्विशिष्टमालोचनं सम्यगवगंतव्यं ।

तथा संयतस्वयं त्रिविधमेककाले संयतिकाप्ययं त्रिविधं प्रकाशे प्रायश्चित्तं गृहीत्वा कुर्वतोऽकुर्वतश्च कुतश्चित्प्रायश्चित्तान्यथाफल्यैलरादिगुणदोषप्रसक्तिः प्रसिद्धैव । मिथ्यादुष्कृताभिधानाद्यभिव्यक्तप्रतिक्रिया प्रतिक्रमणं । तदुभयसंसर्गे सति शोधनं तदुभयं सर्वस्य प्रतिक्रमणस्यालोचनपूर्वकत्वात् केवलं प्रतिक्रमणमयुक्तमिति चेन्न, तत्र गुरुणाभ्यनुज्ञातेन शिष्येणैवालोचनकरणात् । तदुभयस्मिन् गुरुणैवोभयस्य विधानात् । संसक्तान्नपानोपकरणादीनां विभजनं विवेकः । व्युत्सर्गः कायोत्सर्गादिकरणं । तपोनशनादि, दिवसपक्षमासादिना प्रव्रज्याहापनं छेदः । पक्षमासादिविभागेन दूरतः परिवर्जनं परिहारः । पुनर्दीक्षाप्रापणमुपस्थापनं । तदिदं नवविधमपि प्रायश्चित्तं किं कस्मिन् प्रमादाचरिते स्यादिति परमागमादवसेयं, तस्य देशकालाद्यपेक्षस्यान्यथावसातुमशक्यत्वात् ॥

अथ विनयविकल्पप्रतिपादनार्थमाह;—

## ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥

विनय इत्यनुवर्तते, प्रत्येकमभिसंबंधः ज्ञानविनय इत्यादि । तत्र सबहुमानज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयः । पदार्थश्रद्धाने निःशंकितत्वादिलक्षणोपेतता दर्शनविनयः, सामायिकादौ लोकबिंदुसारपर्यंते श्रुतसमुद्रे भगवद्भिः प्रकाशितेऽन्यथा पदार्थकथनासंभवनात् । तद्वतश्चारित्रे समाहितचित्तता चारित्रविनयः । प्रत्यक्षेष्वाचार्यादिष्वभ्युत्थानाभिगमनांजलिकरणादिरुपचारविनयः, परोक्षेष्वपि कायवाङ्मनोभिरंजलिक्रियागुणसंकीर्तनानुस्मरणादिः । ज्ञानलाभाचारविशुद्धिसम्यगाराधनाद्यवलंबनं विनयभावनं । किमर्थं पुनर्ज्ञानादयो विनया इत्यभेदेनोक्ता इत्याह—

ज्ञानादयोत्र चत्वारो विनयाः प्रतिपादिताः । कथंचित्तद्भेदस्य सिद्धये परमार्थतः ॥ १ ॥
ज्ञानादिभावना सम्यग्ज्ञानादिविनयो हि नः । तस्यांतरंगता न स्यादन्यथान्यैव वेदनात् ॥२॥

अथ वैयावृत्त्यप्रतिपत्त्यर्थमाह;—

## आचार्योपाध्यायतपस्विशैक्ष्यग्लानगणकुलसंघसाधुमनोज्ञानाम् ॥ २४ ॥

वैयावृत्त्यमित्यनुवृत्तेः प्रत्येकमभिसंबंधः । व्यावृत्तस्य भावः कर्म वा वैयावृत्त्यं । किमर्थं तदुक्तमित्याह;—

आचार्यप्रभृतीनां यद्दशानां विनिवेदितं । वैयावृत्त्यं भवेदेतदन्वर्थप्रतिपत्तये ॥ १ ॥

आचरंति तस्माद्व्रतानीत्याचार्यः । उपेत्य तस्मादधीयत इत्युपाध्यायः । महोपवासाद्यनुष्ठायी तपस्वी । शिक्षाशीलः शैक्षः । रुजादिक्लिष्टशरीरो ग्लानः । गणः स्थविरसंततिः । दीक्षकाचार्यसंस्त्यायः कुलं । चातुर्वर्ण्यश्रमणनिवहः संघः । चिरप्रव्रजितः साधुः । मनोज्ञोऽभिरूपः, संमतो वा लोकस्य विद्वत्त्ववक्तृत्वमहाकुलत्वादिभिः, असंयतसम्यग्दृष्टिर्वा । तेषां व्याधिपरीषहमिथ्यात्वाद्युपनिपाते तत्प्रतीकारो वैयावृत्त्यं, बाह्यद्रव्यासंभवे स्वकायेन तदानुकूल्यानुष्ठानं च । तच्च समाध्याधानविचिकित्साभावप्रवचनवात्सल्याद्यभिव्यक्त्यर्थं । बहूपदेशात् क्वचिन्नियमेन प्रवृत्तिज्ञापनाय भूयसामुपन्यासः ॥

अथ स्वाध्यायप्ररूपणार्थमाह;—

## वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः ॥ २५ ॥

स्वाध्याय इत्यनुवर्तमानेनाभिसंबंधः । निरवद्यग्रंथार्थोभयप्रतिपादनं वाचना । संशयच्छेदाय निश्चितबलाधानाय वा परानुयोगः पृच्छना । अधिगतार्थस्य मनसाभ्यासोऽनुप्रेक्षा । घोषशुद्धं परिवर्तनमाम्नायः । धर्मकथाद्यनुष्ठानं धर्मोपदेशः । प्रज्ञातिशयप्रशस्ताध्यवसायाद्यर्थः स्वाध्यायः । कथमयमंतरंगरूप इत्याह—

स्वाध्यायः पंचधा प्रोक्तो वाचनादिप्रभेदतः। अंतरंगश्रुतज्ञानभावनात्मकतस्तु सः ॥ १ ॥

अथ व्युत्सर्गप्रतिनिर्देशार्थमाह;—

**बाह्याभ्यंतरोपध्योः ॥ २६ ॥**

व्युत्सर्ग इत्यनुवृत्तेर्व्यतिरेकनिर्देशः पूर्ववत्। उपधीयते बलाधानार्थमित्युपधिः। अनुपात्तवस्तुत्यागो बाह्योपधिव्युत्सर्गः। क्रोधादिभावनिवृत्तिरभ्यंतरोपधिव्युत्सर्गः। कायत्यागश्च नियतकालो यावज्जीवं वा। परिग्रहनिवृत्तेरवचनमिति चेन्न, तस्य धनहिरण्यवसनादिविषयत्वात्। धर्माभ्यंतरभावादिति चेन्न, प्रासुकनिरवद्याहारादिनिवृत्तितंत्रत्वात्। प्रायश्चित्ताभ्यंतरत्वादिति चेन्न, तस्य प्रतिद्वंद्विभावात्। प्रायश्चित्तस्य हि व्युत्सर्गस्यातिचारः प्रतिद्वंद्वीष्यते निरपेक्षश्चायं ततो नैतद्वचनमनर्थकं। अनेकत्रावचनमनेनैव गतत्वादिति चेन्न, शक्त्यपेक्षत्वात्। तदेवाह—

**स्याद्बाह्याभ्यंतरोपध्योर्व्युत्सर्गोधिकृतो द्विधा। व्रतधर्मात्मको दानप्रायश्चित्तात्मकोऽपरः ॥ १ ॥**

**कथंचित्त्यागतां प्राप्तोप्येको निर्दिश्यते नृणां। शक्तिभेदव्यपेक्षायां फलेष्वेकोप्यनेकधा ॥ २ ॥**

सावद्यप्रत्याख्यानशक्त्यपेक्षया हि व्रतापरित्यागः। स चाव्रतास्रवनिरोधफलः। पुण्यास्रवफलं तु दानं स्वातिसर्गशक्त्यपेक्षं। धर्मात्मकस्तु संवरणशक्त्यपेक्षस्त्यागः प्रायश्चित्तात्मकोतिचारशोधनशक्त्यपेक्षः अभ्यंतरतपोरूपस्तु कायोत्सर्जनशक्त्यपेक्ष इति त्यागसामान्यादेकोप्यनेकः। स च निःसंगनिर्भयजीविताशाव्युदासाद्यर्थो व्युत्सर्गः। कथमुपध्योर्बाह्यताभ्यंतरता च मता यतस्तपोऽव्युत्सर्गः स्यादित्याह—

**बाह्याभ्यंतरतोपध्योरनुपात्तेतरत्वतः। जीवेन तत्र कायाद्योर्वेद्यावेद्योर्नृणां मता ॥ ३ ॥**

अथ ध्यानं व्याख्यातुकामः प्राह;—

**उत्तमसंहननस्यैकाग्रचिंतानिरोधो ध्यानमांतर्मुहूर्तात् ॥ २७ ॥**

किमनेन सूत्रेण क्रियत इत्याह;—

**उत्तमेत्यादिसूत्रेण ध्यानं ध्याताभिधीयते। ध्येयं च ध्यानकालश्च सामर्थ्यात्तत्परिक्रिया ॥ १ ॥**

तत्र कश्चिदाह—योगश्चित्तवृत्तिनिरोध इति, स एवं पर्यनुयोज्यः किमशेषचित्तवृत्तिरोधस्तुच्छः किं वा स्थिरज्ञानात्मक इति? नाद्यः पक्षः श्रेयानुत्तरस्तु स्यादित्याह—

**नाभावोशेषचित्तानां तुच्छः प्रमितिसंगतः। स्थिरज्ञानात्मकश्चित्तानिरोधो नोत्र संमतः ॥ २ ॥**

ननु चाशेषचित्तवृत्तिनिरोधान्न तुच्छोभ्युपगम्यते तस्य ग्राहकप्रमाणाभावादनिश्चितत्वात्। किं तर्हि? पुंसः स्वरूपेवस्थानमेव तन्निरोधः स एव हि समाधिरसंप्रज्ञातो योगो ध्यानमिति च गीयते ज्ञानस्यापि तदा समाधिभृतामुच्छेदात्। 'तदा द्रष्टुः स्वरूपेवस्थानं' इति वचनात् ॥

**द्रष्टा ह्यात्माज्ञानवांस्तु न कुंभाद्यस्ति कस्यचित्। धर्ममेघसमाधिस्थेन द्रष्टा ज्ञानवान् यतः ॥ ३ ॥**

तथाहि—ज्ञानवानात्मा द्रष्टृत्वात् यस्तु न ज्ञानवान् स न द्रष्टा यथा कुंभादि द्रष्टा चात्मा ततो ज्ञानवान्। प्रधानं ज्ञानवदिति चेन्न, तस्यैव द्रष्टृत्वप्रसंगादद्रष्टुर्ज्ञानवत्ताभावात् कुंभादिवत्। अज्ञानवत्त्वे पुरुषस्यानित्यत्वापत्तिरिति चेन्न, प्रधानस्याप्यनित्यत्वानुषक्तेः। तत्परिणामस्य व्यक्तस्यानित्यत्वोपगमाददोष इति चेत्, पुरुषपर्यायस्यापि बोधविशेषादेरनित्यत्वे को दोषः? तस्य पुरुषात् कथंचिद्व्यतिरेके पुंसस्तत्प्रसंग इति चेत्, प्रधानाद्व्यक्तं किमत्यंतव्यतिरिक्तमिष्टं येन ततः कथंचिद्व्यतिरेकादनित्यता न भवेत्। व्यक्ताव्यक्तयोरव्यतिरेकैकांतेपि व्यक्तमेवानित्यं परिणामत्वान्न पुनरव्यक्तं परिणामित्वादिति चेत्,

तत एव ज्ञानज्ञानिनोरव्यतिरेकेपि ज्ञानमेवानित्यमस्तु पुरुषस्तु नित्योस्तु विशेषाभावात्। पुरुषोऽपरिणाम्येवेति चेत्, प्रधानमपि परिणामि मा भूत्। व्यक्तेः परिणामि प्रधानं न शक्तेः सर्वदा स्थास्नुत्वादिति चेत्, तथा पुरुषोपि सर्वथा विशेषाभावात् सर्वस्य सतः परिणामित्वसाधनाच्च, अपरिणामिनि क्रमयौगपद्यविरोधादर्थक्रियानुपपत्तेः सत्त्वस्यैवासंभवात्। ततो द्रष्टात्मा ज्ञानवानेव बाधकाभावादिति न तस्य स्वरूपेवस्थितिरज्ञानात्मिका काचिदसंप्रज्ञातयोगदशायामुपपद्यते जडात्मभावात् ॥

**संप्रज्ञातस्तु यो योगो वृत्तिसारूप्यमात्रकं। संज्ञानात्मक एवेति न विवादोस्ति तावता ॥ ४ ॥**

संप्रज्ञातो योगो ज्ञानात्मक एव 'वृत्तिसारूप्यमितरत्रे'ति वचनात्। वृत्तयः पंचतय्यः तासां विषयसारूप्यमात्रं जिहासोपादित्सारहितमुपेक्षाफलं तद्ध्यानं चित्तवृत्तिनिरोधस्येत्थंभूतस्य भावादिति यद्भाष्यते तत्र ज्ञानात्मत्वमात्रेण नास्ति विवादः सर्वस्य ध्यानस्य ज्ञानात्मकत्वप्रसिद्धेः। ज्ञानमेव स्थिरीभूतं समाधिरिति परैरप्यभिधानात्। विषयसारूप्यं तु वृत्तीनां प्रतिबिंबाधानं तदानुपपन्नमेव क्वचिदमूर्तेर्थे कस्यचित्प्रतिबिंबासंभवात्। तथाहि—न प्रतिबिंबभृतो वृत्तयोऽमूर्तत्वाद्यथा खं यत् प्रतिबिंबभृन्न तदमूर्तं दृष्टं यथा दर्पणादि। कर्मभृतश्च वृत्तयस्तस्मान्न प्रतिबिंबभृत इत्यत्र न तावदसिद्धो हेतुर्ज्ञानवृत्तीनां मूर्तत्वानभ्युपगमात्। तदभ्युपगमे बाह्येंद्रियप्रत्यक्षत्वप्रसंगात्। मनोवदतिसूक्ष्मत्वादप्रत्यक्षत्वे स्वसंवेदनप्रत्यक्षतापि न स्यात्तद्वदेव। न चास्वसंविदिता एव ज्ञानवृत्तयोर्थग्राहित्वविरोधात्। प्रदीपादिवदस्वसंविदितेपि विषयग्राहित्वं ज्ञानवृत्तीनामविरुद्धमिति चेन्न, वैषम्यात्। प्रदीपादिद्रव्यं हि नार्थग्राहि स्वयमचेतनत्वात्। किं तर्हि? चक्षुरादे रूपादिग्राहि ज्ञानकारणस्य सहकारितयार्थग्राहीत्युपचर्यते न पुनः परमार्थतस्तत्र तथा ज्ञानवृत्तयः। यस्तु तत्त्वतोर्थग्राहिण इष्यंते ततो न साम्यमुदाहरणस्येति नास्वसंविदितत्वसिद्धिस्तासां दर्शनवत्। न च स्वसंविदितत्वं कस्यचिन्मूर्तस्य दृष्टमिष्टं चातिप्रसंगादित्यमूर्तत्वमेव चित्तवृत्तीनामवस्थितं ततो नासिद्धो हेतुः। नाप्यनैकांतिको विरुद्धो वा विपक्षवृत्त्यभावाद्यतश्चित्तवृत्तीनां प्रतिबिंबभृत्त्वाभावो न सिध्येत्। विषयप्रतिनियमान्यथानुपपत्त्या प्रतिबिंबभृतो ज्ञानवृत्तय इति चेन्न, निराकारत्वेपि विषयप्रतिनियमसिद्धेः पुंसो दर्शनस्य भोगनियमवत्। अथ बुद्धिप्रतिबिंबितमेव नियतमर्थं पुरुषश्चेतयते नान्यथा प्रतिनियमाभावप्रसंगादिति मतं, तर्हि बुद्धिरपि कुतः प्रतिनियतार्थप्रतिबिंबं बिभर्ति न पुनः सकलार्थप्रतिबिंबमिति। नियमहेतुर्वान्यः प्रतिनियताहंकाराभिमतमेवार्थं बुद्धिः प्रतिबिंबयतीति चेत्, किमनया परंपराप्रतिबिंबमंतरेणैवाहंकारप्रतिनियमितमर्थं बुद्धिर्व्यवस्यति मनः······· स्वसामग्रीं प्रतिनियमादेव सर्वत्र प्रतिनियमसिद्धेरलं प्रतिबिंबकल्पनया। तथा च न चित्तवृत्तीनां सारूप्यं नाम यन्मात्रं संप्रज्ञातयोगः स्यादिति परेषां ध्यानासंभवः। नापि ध्येयं तस्य सूत्रेनुपादानात्। ध्यानासिद्धौ तदसिद्धेश्च। स्याद्वादिनां तु ध्यानं ध्येये विशिष्टे सूत्रितमेव, चिंतानिरोधस्यैकदेशतः कार्त्स्न्यतो वा ध्यानस्यैकाग्रविषयत्वेन विशेषणात्। तथाहि—

**अनेकत्राप्रधाने वा विषये कल्पितेपि वा। माभूच्चिंतानिरोधोयमित्येकाग्रे स संस्मृतः ॥ ५ ॥**

**एकाग्रेणेति वा नानामुखत्वेन निवृत्तये। क्वचिच्चिंतानिरोधस्याध्यानत्वेन प्रभादिवत् ॥ ६ ॥**

एकशब्दः संख्यापदं, अंग्यते तदंगति तस्मिन्निति वाग्रं मुखं, भद्रेंद्राग्रविप्रेत्यादि निपातनात् अंगेर्गत्यर्थस्य कर्मण्यधिकरणे वा रन्विधानात्। चिंतांतःकरणवृत्तिः अनियतक्रियार्थस्य नियतक्रियाकर्तृत्वेनावस्थानं निरोधः एकमग्रं मुखं यस्य सोयमेकाग्रः चिंताया निरोधः एकाग्रश्चासौ चिंतानिरोधश्च स इत्येकाग्रचिंतानिरोधः। स कुत इति चेत्, एकाग्रत्वेन चिंतानिरोधो वीर्यविशेषात् प्रदीपशिखावत्। वीर्यविशेषे हि दीपशिखाया निर्वातमकरणत्वे अंतरंगबहिरंगहेतुवशात् परिस्पंदाभावोपपत्तौ विभाव्यते तथा

चिंतायां अपि वीर्यांतरायविगमविशेषनिराकुकदेशादिहेतुवशादि……यविशेषः समुचीयते । तत एकाग्रत्वं तेन चिंतांतरनिरोधादेकाग्रचिंतानिरोध इति नानामुखत्वेन तस्य निवृत्तिः सिद्धा भवति । अर्थपर्यायवाची वा अग्रशब्दः, अंग्यते इत्यग्रमिति अर्थसाधनस्याग्रशब्दस्यार्थपर्यायवाचित्वोपपत्तेः । एकत्वं च तदग्रं च तदेकाग्रं एकत्वसंख्याविशिष्टोर्थः । प्रधानभूते वा प्रधानवाचिन एकशब्दस्याश्रयणात् । एकाग्रे चिंतानिरोध एकाग्रचिंतानिरोध इति योगविभागात् मयूरव्यंसकादित्वाद्वा वृत्तिः । ततोऽनेकार्थे गुणभूते वा कल्पनारोपो ध्यानं मा भूत् । नन्वनेकांतवादिनां सर्वस्यार्थस्यैकानेकरूपत्वात् कथमनेकरूपव्यवच्छेदेनैकाग्रध्यानं विधीयत इति कश्चित्, सोप्यनालोचितवचनः, एकस्यार्थस्य पर्यायस्य वा प्रधानभावे ध्यानविषयवचनात् । तत्र द्रव्यस्य पर्यायांतराणां च सत्त्वेपि गुणीभूतत्वाद्ध्यानविषयत्वव्यवच्छेदात् । तत एव चैकशब्दस्य संख्याप्राधान्यवाचिनो व्याख्यानात् । नन्वेवं कल्पनारोपित एव विषये ध्यानमुक्तं स्यात्तत्त्वतः पर्यायमात्रस्य वस्तुनोनुपपत्तेर्द्रव्यमात्रवत्, द्रव्यपर्यायात्मनो जात्यंतरस्य च वस्तुत्वात् नयविषयस्य च वस्त्वेकदेशत्वान्यथा नयस्य विकलादेशत्वविरोधादिति परः । सोपि न नीतिवित्, पर्यायस्य निराकृतद्रव्यपर्यायांतरस्यैव वा वस्तुसाधनानिरस्तसमस्तपर्यायद्रव्यवत् । न पुनरपेक्षितद्रव्यपर्यायांतरस्य पर्यायस्यावस्तुत्वं तस्य नयविषयतया वस्त्वेकदेशत्वेप्यवस्तुत्वनिराकरणात् । "नायं वस्तु न चावस्तु वस्त्वंशः कथ्यते यतः । न समुद्रोऽसमुद्रो वा समुद्रांशो यथैव हि ॥" इति नियमात् । न च वस्त्वंशादकल्पनारोपित एव वस्तुनोपि तथा प्रसंगात् । स्वरूपालंबनमेव ध्यानमित्यन्ये; तेपि न युक्तवचसः, सर्वथा तत्स्वरूपस्य ध्यानध्येयरूपद्वयविरोधात् । कथंचिदनेकस्वरूपस्य तदविरोधिध्यानरूपादर्थांतरभूते ध्येयरूपे ध्यानं प्रवर्तते इति स्वतो व्यतिरिक्तमेव द्रव्यपरमाणुं भावपरमाणुं वा समालंबते । न च द्रव्यपरमाणुर्भावपरमाणुर्वार्थपर्ययो न भवति पुद्गलादिद्रव्यपर्यायत्वात् तस्येति चिंतितप्रायं । ततोयं ध्यानशब्दो भावकर्तृकरणसाधनो विवक्षावशात् ध्येयं प्रति व्यावृत्तस्य भावमात्रत्वात् ध्यातिर्ध्यानमिति भवति । करणप्रशंसापरायां वृत्तौ कर्तृसाधनत्वं ध्यायतीति ध्यानं । साधकतमत्वविवक्षायां करणसाधनं ध्यायत्यनेन ज्ञानावरणवीर्यांतरायविरामविशेषोद्भूतशक्तिविशेषेणेति ध्यानमिति । एकांतकल्पनायां दोषविधानमुक्तं, प्रथमसूत्रे ज्ञानशब्दस्य करणादिसाधनत्वसमर्थनात् निर्विषयस्य ध्यानस्य भावसाधनत्वाद्यनुपपत्तेश्च । भाववंतमंतरेण भावस्यासंभवात् कर्तुरभावे करणत्वानुपपत्तेः । सर्वथैकांते कारकव्यवस्थासंभवस्य चोक्तत्वात् । न च विकल्पारोपिते विषये ध्यानमित्येकांतवादोपि श्रेयान्, निर्विषयध्यानस्यापि एकत्वप्रसंगात् कुमारीपरिकल्पितभोज्ये काल्पनिकभोजनवत् । न च परिकल्पितात् ध्यानाद्ध्यातुः फलमकल्पितरूपमुपपद्यते कल्पितभोजनादकल्पिततृप्तिवत् । ततो नैकांतवादिनां ध्यानध्येयव्यवस्था, प्रमाणविरोधात् स्वयमिष्टतत्त्वनिर्णयायोगात् ध्यातुरभावाच्च । न हि कूटस्थपुरुषो ध्याता पूर्वापरस्वभावत्यागोपादानहीनत्वात् क्षणिकचित्तवत् । नापि प्रधानं तस्याचेतनत्वात् कायवत् । महदादिव्यक्तात्मा ध्यातेति चेन्न, तस्य प्रधानव्यतिरेकेणाभावात् । कल्पितस्य चावस्तुत्वात्संतानवत् । स्याद्वादिनां तु ध्याताप्ति, तस्योत्तमसंहननत्वविशिष्टस्य मूर्तिमत्त्वात् । तथा चाह—

**प्रोक्तं संहननं यस्य भवेदुत्तममिष्यते । तस्य ध्यानं परं मुक्तिकारणं नेतरस्य तत् ॥ ७ ॥**

आद्यं संहननं त्रयमुत्तमसंहननं सोयमुत्तमसंहननस्तस्य ध्यानं न पुनरनुत्तमसंहननस्य, तस्य ध्यानशक्त्यभावात् । विहितपवनविजयस्यानुत्तमसंहननस्यापि ध्यानसामर्थ्यं मनोविजयप्राप्तेरिति चेत्, स परमपवनविजयः कुतः ? गुरूपदिष्टाभ्यासातिशयादिति चेन्न, तदभ्यासस्यैवानुत्तमसंहननेन विधातुमशक्यत्वात् । तदभ्यासे पीडोत्पत्तेरार्तध्यानप्रसंगात्‌ । मनसा धारणायामेवावहितमनसोऽन्यध्येये प्रवृत्त्यनु-

परेः संहननस्य व्यापारद्धितयायोगात् ज्ञानयौगपद्यप्रयत्नयौगपद्याभ्यां मनसोऽव्यवस्थितेः । एतेन प्राणायामधारणयोरध्यानकारणत्वमुक्तं प्रत्याहारवत् । यमनियमयोस्तु तदंगत्वमिष्टमेव । असंयतस्य योगाप्रसिद्धेः । आ अंतर्मुहूर्तादिति कालविशेषवचनाच्च नानुत्तमसंहननस्य ध्यानसिद्धिः, तेनोत्तमसंहननविधानस्यैवैतत्कालाध्यवसायधारणासामर्थ्यादुपपन्नं भवति । तत ऊर्ध्वं तन्नास्तीत्याह—

**अंतर्मुहूर्ततो नोर्ध्वसंभवस्तस्य देहिनां । आ अंतर्मुहूर्तादित्युक्तं कालांतरच्छिदे ॥ ८ ॥**

न ह्युत्तमसंहननोपि ध्यानमंतर्मुहूर्तादूर्ध्वमविच्छिन्नं ध्यातुमीष्टे पुनरावृत्त्या परांतर्मुहूर्तकाले ध्यानसंततिश्चिरकालमपि न विरुध्यते । ननु यद्येकांतर्मुहूर्तस्थायि ध्यानं प्रतिसमयं तादृशमेव तदित्यंतसमयेपि तेन तादृशेनैव भवितव्यं । तथा च द्वितीयाद्यंतर्मुहूर्तेष्वपि तस्य स्थितिसिद्धेर्न जातु विच्छेदः स्यात्, प्रथमांतर्मुहूर्तपरिसमाप्तौ तद्विच्छेदे वा द्वितीयादिसमये विच्छेदानुषक्तेः क्षणमात्रस्थितिः ध्यानमायातं, सर्वपदार्थानां क्षणमात्रस्थायितया प्रतीतेरक्षणिकत्वे बाधकसद्भावात् इति केचित्, तेषामपि प्रथमक्षणे ध्यानस्यैकक्षणस्थायित्वे तदवसानेप्येकक्षणस्थायित्वप्रसंगात् न जातुचिद्विनाशः सकलक्षणव्याप्तिस्थितिप्रसिद्धेः, अन्यथैकक्षणेपि न तिष्ठेत् । अथैकक्षणस्थितिकत्वेनोत्पत्तिरेव क्षणस्थायिनः प्रच्युतिरतो न सदवस्थितिः । तर्ह्यंतर्मुहूर्तस्थितिकध्यानवादिनामंतर्मुहूर्तादुत्तरकालं समयादिस्थितिकत्वेनोत्पत्तिरेवानंतर्मुहूर्तस्थायिनः प्रच्युतिरंतर्मुहूर्तस्थायितयात्मलाभ एवोत्पत्तिरिति नाविच्छेदशंकेः सततावस्थितिप्रसंगो यतः कौटस्थ्यसिद्धिः । कथमन्यदान्यस्योत्पत्तिरंतर्मुहूर्तस्थायिनोः प्रच्युतिरतिप्रसंगात् इति चेत्, कथमेकक्षणप्रच्युतिः क्षणांतरस्थितिकत्वेनोत्पत्तिरन्यस्य स्यादिति समः पर्यनुयोगः । सर्वथातिप्रसंगस्य समानत्वात् । तथा च न क्वचिदुत्पत्तिः क्षणार्थानां सिध्येत् विनाशेपि नानुत्पन्नस्य भावस्येति । नित्यवादिनां कूटस्थार्थसिद्धिरबाधिता स्यात् क्षणिकत्व एव बाधकसद्भावात् । स्यादाकूतं क्षणिकवादिनां क्षणादूर्ध्वं प्रच्युतिर्द्वितीयक्षणस्थितिकत्वेनोत्पत्तिः । ततो नोत्पत्तिविपत्तिरहितं न संततमनुषज्यते यतः क्षणिकत्वसिद्धेर्वाप्रतिहता न स्यादिति । तदसत्, तथांतर्मुहूर्तस्थितिकत्वस्यापि सिद्धेः सर्वथा विशेषाभावात् । न चैवं क्षणिकत्ववस्तुनो नाशोत्पादौ समं स्याता प्रथमक्षणभावित्वादस्य, द्वितीयक्षणभावित्वात्तद्विनाशस्य कार्योत्पादस्य कारणविनाशात्मकत्वात् सममेव नाशोत्पादौ तुलांतयोर्नामोन्नामवदिति चेत्, कथं प्रकृतचोद्यपरिहारः? एकक्षणस्थायितयोत्पाद एव द्वितीयक्षणे विनाश इति नान्यदान्यस्योत्पत्तिरन्यस्य विनाशः । सममेव नाशोत्पादयोस्तथा प्रसिद्धिरिति चेत, तर्ह्यंतर्मुहूर्तमात्रस्थायितयोत्पत्तिरेव तदुत्तरकालतया विनाश इति समः समाधिः । नन्वेवं संवत्सरादिस्थितिकमपि ध्यानं कुतो न भवेदिति चेन्न, तथासंभावनाभावात् । यद्धि यथास्थितिकं संभाव्यते तत्तथास्थितिकं शक्यं वक्तुं नान्यथा । न चांतःकरणवृत्तिलक्षणायाश्चिंताया निरोधो नियतविषयतयावस्थानलक्षणोंतर्मुहूर्तादूर्ध्वं संभाव्यते मनसोसदादिष्वन्यविषयांतरे सजातीये विजातीये वा संक्रमणनिश्चयात्तत्कार्यानुभवस्मरणादेः संचारान्यथानुपपत्तेः । केवलमनुत्तमसंहननस्य चिंतानिरोधमनल्पकालमुपलभ्य स्थिरत्वेन प्रक्षीयमाणं वावबुध्योत्तमसंहननस्यांतर्मुहूर्तकालस्तथासाविति संभाव्यते । तथा परमागमप्रामाण्यं चेत्यलं प्रसंगेन । कः पुनरयमंतर्मुहूर्त इत्युच्यते—उक्तपरिमाणोंतर्मुहूर्तः परमागमे ततोत्र न निरूप्यते । ज्ञानमेव ध्यानमिति चेन्न, तस्य व्यग्रत्वात्, ध्यानस्य पुनरव्यग्रत्वात् । तत एवैकाग्रवचनं वैयग्र्यनिवृत्त्यर्थं सूत्रे युज्यते । चिंतानिरोधग्रहणं तत्स्वाभाव्यप्रदर्शनार्थं तत एव ज्ञानवैलक्षण्यं, अन्यथास्य कथं चिंता न स्यात् । ध्यानमित्यधिकृतस्वरूपनिर्देशार्थं । मुहूर्तवचनादहरादिनिवृत्तिस्तथाविधसंहननाभावात् । अभावो निरोध इति चेन्न, केनचित्पर्यायेणेष्टत्वात् । परोपगतस्य निरूप्यस्याभावस्य प्रमाणाविषयत्वेन निरस्तत्वात् । किं च अभावस्य च

वस्तुत्वापत्तेर्हेत्वंगत्वादिभ्यः । न हि हेत्वंगं तु पक्षधर्मत्वादि वस्तुत्वमतिक्रामति । तद्वद्विपक्षे असत्त्वमपि हेत्वंगं तथा परपक्षप्रतिषेधे पक्षांगं चाभावो निदर्शनांगं चेति तस्य वस्तुधर्मयोगाद्वस्तुत्वं तथा प्रमाणनयविषयत्वात् कारणत्वात् कार्यत्वाद्विशेषणत्वाद्धेतोश्चेति प्रपंचतोभ्यूह्यं ततो न कश्चिदुपालंभः । ननु चैकत्रत्र नैकाग्रवचनं कर्तव्यं? किं तर्ह्येकार्थवचनं स्पष्टार्थत्वादिति चेन्नानिष्टप्रसंगात् । वीचारोर्थव्यंजनयोगसंक्रांतिरिति हीष्टं तत्र द्रव्येपर्यायात् संक्रमाभावस्यानिष्टस्य प्रसंगः । एकाग्रवचनेपि तुल्यमिति चेन्न, आभिमुख्ये सति पौनःपुन्येनापि प्रवृत्तिज्ञापनार्थत्वात् । आभिमुख्यवाचिनि ह्यग्रशब्दे सत्येकार्थेणैवाभिमुख्येन चिंतानिरोधः पर्याये द्रव्ये च संक्रामन्न विरुध्यते । प्राधान्यवाचिनो वैकशब्दस्य ग्रहणमिहाश्रीयते । प्रधानपुंसो ध्यातुरभिमुखश्चिंतानिरोध एकाग्रचिंतानिरोध इति सामर्थ्यात् कचिद्ध्येयेर्थे द्रव्यपर्यायात्मनीति प्रतीयते, ततो नानिष्टप्रसंगः । अंगतीत्यग्रं पुमानिति तु शब्दार्थकथने सत्येकस्मिन् वा पुंसि चिंतानिरोध एकाग्रचिंतानिरोध इति द्रव्यार्थादेशाद्वाध्येयप्राधान्यापेक्षा निवर्तिता, स्वस्मिन्नेव ध्यानस्य वृत्तिरिति नानार्थवाचित्वादेकाग्रवचनं न्याय्यं नैकार्थवचनं । नन्वेवमस्तु चिंतानिरोधो ध्यानं तस्य तु दिवसमासाद्यवस्थानमुपयुक्तस्येति चेन्न, इंद्रियोपघातप्रसंगात् । प्राणापाननिग्रहो ध्यानमिति चेन्न, शरीरपातप्रसंगात् । मंदं मंदं प्राणापानस्य प्रचारो निग्रहस्ततो नास्त्येव शरीरपातः तत्कृतवेदनाप्रकर्षाभावादिति चेन्न, तस्य तादृशनिग्रहस्य ध्यानपरिकर्मत्वेन सामर्थ्यात्सूत्रितत्वात् आसनविशेषविजयादिवत् । तेनैकाग्रचिंतानिरोध एव ध्यानं । मात्राकालपरिगणनमिति चेन्न, ध्यानातिक्रमात् । तथा चित्तवैयग्र्यात् । एतेन जपस्य ध्यानत्वं प्रतिषिद्धं । विध्युपायनिर्देशः कर्तव्य इति चेन्न, गुप्त्यादिप्रकरणस्य तादर्थ्यात् । संवरार्थं तदिति चेन्न, प्रागुपदेशस्योभयार्थत्वात् । ततः संवरार्थः गुप्त्यादिप्रकरणं ध्यानविधौ तदुपायनिर्देशार्थं च भवति । तथापीह सकलध्यानधर्माणामिह सामर्थ्यसिद्धत्वात् ॥

तदेवं सामान्येनोक्तस्य ध्यानस्य विशेषप्रतिपत्त्यर्थमाह;—

## आर्तरौद्रधर्म्यशुक्लानि ॥ २८ ॥

ऋतमर्दनमर्तिर्वा ऋते भवमार्तं अर्तौ भवमार्तमिति वा दुःखभावं प्रार्थनाभावं वेत्यर्थः । रुद्रः क्रुद्धस्तत्कर्म रौद्रं तत्र भवं वा । धर्मादनपेतं धर्म्यं । शुचिगुणयोगाच्छुक्लं । लोभाभिभवादेर्न तदाविर्भावोपपत्तेः । शुचिगुणयोगः प्रसिद्धः पारमार्थिकः । कथमेकं ध्यानं चत्वारि ध्यानानि स्युरित्याह;—

**आर्तादीनि तदेव स्युश्चत्वारि प्रतिभेदतः । ध्यानान्येकाग्रसामान्यचिंतांतरनिरोधतः ॥ १ ॥**

आर्तरौद्रधर्माण्यपि हि ध्यानान्येवैकाग्र्यसादृश्यात् चिंतांतरनिरोधाच्च शुक्लवत् । केवलमप्रशस्ते पूर्वे प्रशस्ते चेतरे । कुत इत्याह ।

तत्र तावत्;—

## परे मोक्षहेतू ॥ २९ ॥

सामर्थ्यात् पूर्वे संसारहेतू सूत्रिते । संसारहेतुत्वादार्तरौद्रयोरप्रशस्तत्वं, परयोस्तु धर्मशुक्लयोः प्रशस्तत्वं मोक्षहेतुत्वात् इति । पूर्वाभ्यां धर्मस्यैव परत्वमिति चेन्न, व्यवहितेपि परशब्दप्रयोगात् द्विवचननिर्देशाद्वा गौणस्यापि संप्रत्ययः । कुतः परयोर्मोक्षहेतुत्वं पूर्वयोः संसारहेतुत्वमित्याह;—

**मोक्षहेतू परे ध्याने पूर्वे संसारकारणे । इति सामर्थ्यतः सिद्धं विमोहत्वेतरत्वतः ॥ १ ॥**

कथं धर्मस्य विमोहत्वमिति चेत्, मोहप्रकर्षाभावादिति प्रत्येयं । सामर्थ्यात् परयोर्मोक्षहेतुत्ववचनात् पूर्वयोः संसारहेतुत्वसिद्धिस्तयोर्मोहप्रकर्षयोगात् ॥

तत्रार्तं किंरूपमित्याह;—

## आर्तममनोज्ञस्य संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ३० ॥

अप्रियममनोज्ञं बाधाकारणत्वात्। भृशमर्थांतरचिंतनादाहरणं समन्वाहारः। आभिमुख्येनाहरणादेक-ग्रावरोधः पुनः पुनः प्रबंध इत्यर्थः। स्मृतेः समन्वाहारः स्मृतिसमन्वाहारः। तेनामनोज्ञस्योपनिपाते स कथं नाम मे न स्यादिति संकल्पश्चिंताप्रबंध आर्तमिति प्रकाशितं भवति। तत्र किंहेतुकमित्याह;—

आर्तं चतुर्विधं तत्र संक्लेशांगतयोदितं। आर्तमित्यादिसूत्रेण प्रथमं द्वेषहेतुकम् ॥ १ ॥

मिथ्यादर्शनाविरतिप्रमादपरिणामः संक्लेशः, तत् स्वरूपं तत्कारणकं तत्फलं च संक्लेशांगं तस्य भावः संक्लेशांगता तयार्तध्यानमुदितं। तच्चतुर्विधं स्वरूपभेदात्। तत्र प्रथममार्तमित्यादिसूत्रेण द्वेषहेतुकं सूत्रितं ॥

द्वितीयं किंरूपमित्याह;—

## विपरीतं मनोज्ञस्य ॥ ३१ ॥

उक्तविपर्ययाद्विपरीतं मनोज्ञस्य विप्रयोगे तत्संप्रयोगाय स्मृतिसमन्वाहारो द्वितीयमार्तमित्यर्थः। प्रियस्य मनोज्ञस्य विप्रयोगो विश्लेषस्तस्मिन् सति तत्संप्रयोगाय पुनः पुनश्चिंताप्रबंधः। सा मे प्रिया कथं प्रयोगिनी स्यादिति प्रबंधेन चिंतनमार्तध्यानमप्रशस्तमिति सूत्रकारस्याभिप्रायः। किं जन्म तदित्याह;—

विपरीतं मनोज्ञस्येत्यादिसूत्रेण निश्चितं। द्वितीयमनुयोगोत्थमार्तध्यानमसत्फलं ॥ १ ॥

तृतीयं किमार्तमित्याह;—

## वेदनायाश्च ॥ ३२ ॥

स्मृतिसमन्वाहारस्तृतीयमार्तमित्यभिसंबंधकरणात् दुःखवेदनासंप्रत्ययः। किंनिबंधनं तदित्याह;—

असद्वेद्योदयोपात्तद्वेषकारणमीरितं। तृतीयं वेदनायाश्चेत्युक्तं सूत्रेण तत्त्वतः ॥ १ ॥

चतुर्थं किमित्याह;—

## निदानं च ॥ ३३ ॥

निदानविषयः स्मृतिसमन्वाहारः निदानं। विपरीतं मनोज्ञस्येत्येवं सिद्धमिति चेन्नाप्राप्तपूर्वविषयत्वान्निदानस्य। किंहेतुकं तदित्याह—

निदानं चेति वाक्येन तीव्रमोहनिबंधनं। चतुर्थं ध्यानमित्यार्तं चतुर्विधमुदाहृतं ॥ १ ॥
नीलां लेश्यां समाश्रित्य कापोतीं वा समुद्भवेत्। तदज्ञानात् कुतोप्यात्मपरिणामात्तथाविधात् ॥ २
पापप्रयोगनिःशेषदोषाधिष्ठानमाकुलं। भोगप्रसंगनानात्मसंकल्पासंगकारणं ॥ ३ ॥
धर्माश्रयपरित्यागि कषायाशयवर्धनं। विपाककटु तिर्यक्षु समुद्भवनिबंधनं ॥ ४ ॥

केषां पुनस्तत्स्यादित्याह;—

## तदविरतदेशविरतप्रमत्तसंयतानाम् ॥ ३४ ॥

अविरतादयो व्याख्याताः। कदाचित्प्राच्यमार्तध्यानत्रयं प्रमत्तानां, तेषां निदानस्यासंभवात्। तत्संभवे प्रमत्तसंयतत्वविरोधात्। कुतस्तेषां तद्भवेदित्याह—

तत्स्यादविरतादीनां त्रयाणां तन्निमित्ततः। नाप्रमत्तादिषु क्षीणतन्निमित्तेषु जातुचित् ॥ १ ॥

अथ रौद्रं ध्यानं कुतः कस्य किंस्वरूपमुच्यते? इत्याह;—

## हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ३५ ॥

ध्यानोत्पत्तौ हिंसादीनां निमित्तभावाद्धेतुनिर्देशः । तेन स्मृतिसमन्वाहाराभिसंबंधः । तत इदमुच्यते—

हिंसादिभ्योविरतिमोहोदयेभ्यः प्रजायते । रौद्रं ध्यानं स्मृतेः पौनःपुन्यं दुर्मतिकारणं ॥१ ॥

तस्यादविरतस्योक्तेर्देशसंयमिनोपि च । यथायोगं निमित्तानां शेषं सद्भावसिद्धितः ॥ २ ॥

देशविरतस्यापि हिंसाद्यावेशाद्वित्तादिसंरक्षणतंत्रत्वाच्च रौद्रं ध्यानं संभवति तदनुरूपकषायोदयात् । केवलमविरतवन्न तस्य नारकादिनामनिमित्तं सम्यक्त्वसामर्थ्यात् । संयतेपि कदाचिदस्तु रौद्रध्यानं हिंसाद्यावेशादिति चेत् तदयुक्तं, संयते तदावेशे संयमप्रच्युतेः ॥

ततश्चतुर्विधं रौद्रं ध्यानं समुपजायते । पुंसोतिकृष्णलेश्यस्याविरतस्यैव तत्परं ॥ ३ ॥

तथा कापोतलेश्यस्य विरताविरतस्य च । प्रमादानामधिष्ठानं विरतस्य न जातुचित् ॥ ४ ॥

अथ प्रशस्तस्य ध्यानस्य धर्म्यस्य तावत्प्रतिपादनार्थमाह;—

## आज्ञापायविपाकसंस्थानविचयाय धर्म्यम् ॥ ३६ ॥

विचितिर्विवेको विचारणा विचयः । तदपेक्षया आज्ञादीनां कर्मनिर्देशः । अधिकारात् स्मृतिसमन्वाहारसंबंधः, आज्ञाविचयाय स्मृतिसमन्वाहार इत्यादि । तदेवं—

आज्ञादिविचयायोक्तं धर्म्यं ध्यानं चतुर्विधं । आर्तरौद्रपरित्यक्तैः कार्यं चिंतानिरोधकं ॥ १ ॥

तत्राज्ञा द्विविधा हेतुवादेतरविकल्पतः । सर्वज्ञस्य विनेयांतःकरणायसमुचितः ॥ २ ॥

तद्विचयाय स्मृतिसमन्वाहारो द्विविध इत्याज्ञाविचयध्यानं द्वेधा । तत्रागमप्रामाण्यादर्थावधारणमाज्ञाविचयः, सोयमहेतुवादविषयोननुमेयार्थगोचरार्थत्वात् । आज्ञाप्रकाशनार्थो वा हेतुवादः । सामर्थ्यादयमप्याज्ञाविचयः । कः पुनरपाय इत्याह—

असन्मार्गादपायः स्यादनपायः स्वमार्गतः । स एवोपाय इत्येष ततो भेदेन नोदितः ॥ ३ ॥

तस्य विचयो धर्म्यध्यानं द्वितीयं । अथवासन्मार्गापायविचयः सर्वज्ञोपदेशपराङ्मुखजनापेक्षया संप्रत्येयः, असन्मार्गापायसमाधानं वा तदपेक्षयैव । कः पुनर्विपाक इत्याह—

विपाकोनुभवः पूर्वं कृतानां कर्मणां स्वयं । जीवाद्याश्रयभेदेन चतुर्धा धीमतां मतः ॥ ४ ॥

ततः कर्मफलानुभवनविवेकं प्रति प्रणिधानं विपाकविचयः । स च प्रपंचतो गुणस्थानभेदेन कर्मप्रकृतीनामुदयोदीरणचिंतनेन परमागमात्प्रत्येतव्यः । लोकसंस्थानस्वभावावधानं संस्थानविचयः । कोसौ लोक इत्याह—

लोकः संस्थानभेदाद्वा स्वभावाद्वा निवेदितः । तदाधारो जनो वापि मानभेदोपि वा क्वचित् ॥५

लोकस्याधोमध्योर्ध्वभेदस्य संस्थानं सन्निवेशः, लोकप्रमानस्वभावस्य च लोकस्य संस्थानं प्रतिद्रव्यस्वाकृतिः तदाधारस्य च जनस्य लोकस्य संस्थानं स्वोपात्तशरीरपरिणामाकारः, मानभेदस्य च लोकस्य संख्याविशेषाकारः संस्थानं तस्य विचयः संस्थानविचयः । कः पुनर्विचय इत्याह—

विचयस्तत्र मीमांसा प्रमाणनयतः स्थितः । तन्निर्बंधिचिंताप्रबंधो ध्रुवंचिंतांतरनिरोधतः ॥ ६ ॥

शुक्लं ध्यानं तदाध्यायमैकाग्र्येण प्रवर्तितः । स्याच्चिंतानिरोधस्य धर्म्यं पापव्यपायतः ॥ ७ ॥

धर्मादनपेतं धर्म्यं तस्योत्तमक्षमादिमत एव प्रवृत्तेः । अनुप्रेक्षाणां धर्म्यध्यानसजातीयत्वात् पृथगनुपदेश इति चेन्न, ज्ञानप्रवृत्तिविकल्पात् । सर्वानुप्रेक्षाणामनित्यत्वाद्यनुचिंतनस्य ज्ञानविशेषत्वात् ध्यानस्यानुचिंतनं निरोधरूपत्वात् । कस्य तद्धर्म्यध्यानं स्यादित्याह—

धर्म्यध्येन विनिर्दिष्टं तत्प्रमत्ताप्रमत्तयोः । अंतरंगतपोभेदरूपं संयतयोः स्फुटं ॥ ८ ॥
संयतासंयतस्यैकदेशेनासंयतस्य तु । योग्यतामात्रतः कैश्चिद्यैर्दुर्ध्यानं प्रचक्षते ॥ ९ ॥

धर्म्यमप्रमत्तस्येति चेन्न, पूर्वेषां निवृत्तिप्रसंगात् । इष्यते च तेषां सम्यक्त्वप्रभावाद्धर्म्यध्यानं । उपशांतक्षीणकषाययोश्चेति चेन्न, शुक्लाभावप्रसंगात् । तदुभयं तत्रेति चेन्न, पूर्वस्यानिष्टत्वात् । धर्म्यं श्रेण्योर्नेष्यते ततस्तयोः शुक्लमेव ॥

अथ श्रुतकेवलिनः किं ध्यानमित्याह;—

## शुक्ले चाद्ये पूर्वविदः ॥ ३७ ॥

पूर्वविद्विशेषणं श्रुतकेवलिनस्तदुभयप्रणिधानसामर्थ्यात् । चशब्दः पूर्वध्यानसमुच्चयार्थः । किं कृत्वैवमुच्यते सूत्रमाचार्यैरित्याह—

मत्वा चत्वारि शुक्लानि प्रोच्यमानानि सूरिणा । आद्ये पूर्वविदः शुक्ले धर्म्यं चेत्यभिधीयते॥१॥

विषयविवेकापरिज्ञानमिति चेन्न, व्याख्यानतो विशेषप्रतिपत्तेः । श्रेण्यारोहणात्प्राक् धर्म्यध्यानं, श्रेण्योः शुक्लध्यानमिति व्याख्यानं विषयविवेकापरिज्ञाननिमित्तमाश्रीयते । तथाहि—

श्रेण्याधिरोहिणः शुक्ले धर्म्यं पूर्वस्य तस्य हि । अपूर्वकरणादीनां शुक्लारंभकतास्थितेः ॥ २ ॥

अथावशिष्टे शुक्ले कस्य भवत इत्याह;—

## परे केवलिनः ॥ ३८ ॥

केवलिशब्दसामान्यनिर्देशात्तद्वतोरुभयोर्ग्रहणं । कथमित्याह;—

परे केवलिनः शुक्ले संयोगस्येतरस्य च । यथायोगं स्मृते तज्ज्ञैः प्रकृष्टे शुद्धिभेदतः ॥ १ ॥

कानि पुनस्तानि चत्वारि शुक्लध्यानानि यानि स्वामिविशेषाश्रयतया विभज्यंते इत्याह;—

## पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्तीनि ॥ ३९ ॥

वक्ष्यमाणलक्षणापेक्षया सर्वेषामन्वर्थत्वं । तत एवाह;—

पृथक्त्वेत्यादिसूत्रेणान्वर्थनामानि तान्यपि । शुक्लानि कथितान्युक्तस्वामिभेदानि लक्षणैः ॥१॥

अथैतेषु चतुर्षु शुक्लध्यानेषु किं कियद्योगस्य भवतीत्याह;—

## त्र्येकयोगकाययोगायोगानाम् ॥ ४० ॥

योगशब्दो व्याख्यातार्थः । यथासंख्यं चतुर्णां संबंधः । त्रियोगस्य पृथक्त्ववितर्कं, त्रिषु योगेष्वेकयोगस्यैकत्ववितर्कं, काययोगस्य सूक्ष्मक्रियाप्रतिपाति, अयोगस्य व्युपरतक्रियानिवर्तीति । तदाह—

तत्र प्राच्यं त्रियोगस्यैकैकयोगस्य तत्परं । तृतीयं काययोगस्यायोगस्य च तुरीयकं ॥ १ ॥
योगमार्गणया तेषां सद्भावनियमः स्मृतः । एवं त्र्येत्यादिसूत्रेण विवादविनिवृत्तये ॥ २ ॥

तत्राद्ययोर्विशेषप्रतिपत्त्यर्थमाह;—

## एकाश्रये सवितर्कवीचारे पूर्वे ॥ ४१ ॥

कुत इत्याह;—

एकाश्रये प्रतिमाससुद्धानाश्रयत्वतः । सवितर्के श्रुते तत्त्वात्सवीचारे च संक्रमात् ॥ १ ॥
अर्थव्यंजनयोगेषु सामान्येनोपवर्तिते । पूर्वे शुक्ले त्रियोगैकयोगसंयतसंश्रयात् ॥ २ ॥

पूर्वविदारभ्यत्वादेकाश्रयत्वसिद्धिः । सवितर्कवीचारे इति द्वंद्वपूर्वोन्यपदार्थनिर्देशः । पूर्वस्योक्तत्वे-वेति चेन्न, उक्तत्वात् ॥

तत्र यथाप्रसंगो च प्रसिद्धनिवृत्त्यर्थमिदमारभ्यते;—

## अवीचारं द्वितीयम् ॥ ४२ ॥

अवीचारं द्वितीयं तत्संक्रांतेरसमुद्भवात् । एकयोगस्य तद्ध्यातुरिति प्राहापवादतः ॥ १ ॥
सवितर्कं सवीचारं पृथक्त्वेन ततः स्थितं । प्राच्यं शुक्लं तु सवितर्कवीचारवलादिह ॥ २ ॥
तथाऽवितर्कवीचारे परे शुक्ले निवेदिते । काययोगाधिनाथत्वादयोगाधिपतित्वतः ॥ ३ ॥

कोयं वितर्क इत्याह;—

## वितर्कः श्रुतम् ॥ ४३ ॥

किमेतत्सूत्रवचनादभिप्रेतमित्याह;—

वितर्कः श्रुतमस्पष्टतर्कणं न पुनर्मतेः । भेदश्चिंताख्य इत्येतत्सूत्रारंभादभीप्सितं ॥ १ ॥

कः पुनर्वीचार इत्याह;—

## वीचारोर्थव्यंजनयोगसंक्रांतिः ॥ ४४ ॥

कुतोन्यो न वीचार इत्याह;—

अर्थव्यंजनयोगेषु संक्रांतिश्चेतसस्तु या । स वीचारो न मीमांसा चरेर्गत्यर्थनिष्ठतः ॥ १ ॥
एवं निरुक्तितोर्थस्याव्यभिचारित्वदर्शनात् । प्रोक्तं वितर्कवीचारलक्षणं सूत्रतः स्वयं ॥ २ ॥

द्रव्यं हित्वा पर्याये तं त्यक्त्वा द्रव्ये संक्रमणमर्थसंक्रांतिः, अर्थस्य द्रव्यपर्यायात्मकत्वात् । एवं श्रुतवचनमवलंब्य श्रुतवचनांतरालंबनं व्यंजनसंक्रांतिः । काययोगाद्योगांतरे ततोपि काययोगे संक्रमणं योगसंक्रांतिः । एवं परिवर्तनं वीचारस्तेन युतं वितर्केण च श्रुताख्येन विशिष्टं पृथक्त्ववितर्कवीचारं प्रथमशुक्लध्यानं । कीदृग्ध्याता तद्ध्यातुमर्हतीत्याह;—

कृतगुप्त्याद्यनुष्ठानो यतिर्वीर्यातिशायनः । अर्थव्यंजनयोगेषु संक्रांतौ पृथगुद्यतः ॥ ३ ॥
तदोपशमनान्मोहप्रकृतीः क्षपयन्नपि । यथा परिचयं ध्यायेत्कचिद्वस्तुनि सक्रियः ॥ ४ ॥
सवितर्कं सवीचारं पृथक्त्वेनादिमं मुनिः । ध्यानं प्रक्रमते ध्यातुं पूर्ववेदी निराकुलः ॥ ५ ॥

अथ द्वितीयं को ध्यातुमर्हतीत्याह;—

स एवामूलतो मोहक्षपणापूर्णमानसः । प्राप्यानंतगुणां शुद्धिं निरुंधन् बंधमात्मनः ॥ ६ ॥
ज्ञानावृतिसहायानां प्रकृतीनामशेषतः । ह्रासयन् क्षपयंश्चासां स्थितिबंधं समंततः ॥ ७ ॥
श्रुतज्ञानोपयुक्तात्मा वीतवीचारमानसः । क्षीणमोहोऽकंपात्मा प्राप्तक्षायिकसंयमः ॥ ८ ॥
ध्यात्वैकत्ववितर्काख्यं ध्यानं घात्यघस्मरं । दधानः परमां शुद्धिं दुरवाप्यामतोन्यतः ॥ ९ ॥

अथ तृतीयं ध्यानं को ध्यायत इत्याह;—

ततो निर्दग्धनिःशेषघातिकर्मेंधनः प्रभुः । केवली सद्यायघातिकर्मस्थितिविशेषतः ॥ १० ॥
संत्यज्य वाङ्मनोयोगं काययोगं च बादरं । सूक्ष्मं तु तं समाश्रित्य मंदस्पंदोदयस्तरं ॥ ११ ॥
ध्यानं सूक्ष्मक्रियमप्रतिपाति तृतीयकं । ध्यायेद्योगी यथायोगं कृत्वा करणसंततिं ॥ १२ ॥

अथ चतुर्थं शुक्लं को ध्यायतीत्याह;—

ततः स्वयं समुच्छिन्नप्रदेशस्पंदनं स्थिरः। ध्वस्तनिःशेषयोगेभ्यो ध्यानं ध्यातांतसंवरः ॥१३॥
संपूर्णनिर्जरश्चांत्ये क्षणे क्षीणभवस्थितिः। मुख्यं सिद्धत्वमध्यास्ते प्रसिद्धाष्टगुणोदयं ॥ १४ ॥

अथामनस्कस्य केवलिनः कथमेकाग्रचिंतानिरोधलक्षणं ध्यानं संभाव्यते इत्यारेकायामिदमाह;—

संक्लेशांगतयैकत्र चिंता चिंतांतरच्युता। पापं ध्यानं यथा प्रोक्तं व्यवहारनयाश्रयात् ॥ १५ ॥
विशुद्ध्यंगतया चैवं धर्म्यं शुक्लं च किंचन। समनस्कस्य तादृक्षं नामनस्कस्य मुख्यतः ॥१६॥
उद्भूतकेवलस्यास्य सकृत्सर्वार्थवेदिनः। ऐकाग्र्यभावतः केचिदुपचाराद्वदंति तत् ॥ १७ ॥
चिंतानिरोधसद्भावो ध्यानात्सोपि निबंधनं। तत्र ध्यानोपचारस्य योगे लेश्योपचारवत् ॥ १८
सर्वचिंतानिरोधस्तु यो मुख्यो निश्चिताश्रयात्। सोस्ति केवलिनः स्थैर्यमेकाग्रं च परं सदा ॥१९
मुख्यं ध्यानमतस्तस्य साक्षान्निर्वाणकारणं। छद्मस्थस्योपचारात्स्यात्तदन्यास्तित्वकारणात् ॥ २०
यथैकवस्तुनि स्थैर्यं ज्ञानस्यैकाग्र्यमिष्यते। तथा विश्वपदार्थेषु सकृत्तत्केन वार्यते ॥ २१ ॥
मोहानुद्रेकतो ज्ञातुर्यथा व्याक्षेपसंक्षयः। मोहिनोस्ति तथा वीतमोहस्यासौ सदा न किम् ॥२२
यथैकत्र प्रधानेर्थे वृत्तिर्वा तस्य मोहिनः। तथा केवलिनः किं न द्रव्येऽनंतविवर्तके ॥ २३ ॥
इति निश्चयतो ध्यानं प्रतिषेध्यं न धीमता। प्रधानं विश्वतत्त्वार्थवेदिनां प्रस्फुटात्मनां ॥२४॥
सयोगकेवली ध्यानी यदि धर्मोपदेशना। कथं ततः प्रवर्तेतेत्येके तत्राभिधीयते ॥ २५ ॥
अंतर्मुहूर्तकालं वा ध्यानस्यानेकवत्सरं। नैकाग्र्यं केवलिध्यानं प्रसिद्धं तत्त्वदेशिनाम् ॥ २६ ॥
तत एव च ते सिद्धाः कृतकृत्या जिनाधिपाः। स्तूयंते सिद्धसाधर्म्यात्सदेहत्वेपि धीधनैः ॥२७
अयोगित्वसमुद्भूतेः पूर्वमंतर्मुहूर्तमा। तृतीयं ध्यानमाख्यातं वाक्प्रवृत्त्या विवर्जितं ॥ २८ ॥
वाक्कायवृत्तिसद्भावे यथा ध्यानी न मादृशः। तथार्हन्निति तस्यास्तूपचाराद्ध्यानदेशना ॥२९

तदेतद्व्यवहारनिश्चयनयनिरूपणनिपुणैः प्रमाणांतःकरणप्रवणैः सर्वमालोच्यं परमगहनत्वाच्छद्मस्थास्मादृशजनानामिति निवेदयन्नुपसंहरति;—

क्वचिच्चिंता ध्यानं नियतविषयं पुंसि कथितं क्वचित्तस्याः कार्त्स्न्याद्विलयनमिदं सर्वविषयं।
क्वचित्किंचिन्मुख्यं गुणमपि वदंति प्रतिनयं ततश्चिंत्यं सद्भिः परमगहनं जिनपतिमतं ॥३०॥

इति नवमाध्यायस्य प्रथममाह्निकम्।

---

## सम्यग्दृष्टिश्रावकविरतानंतवियोजकदर्शनमोहक्षपकोपशमकोपशांतमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥ ४५ ॥

किमर्थमिदमप्रस्तुतमुच्यते? तपसा निर्जरा चेति प्रकृते तपसि बाह्येऽभ्यंतरे च ध्यानपर्यंते व्याख्याते सर्वसम्यग्दृष्टीनां यथासंभवं बाह्यरूपेणाभ्यंतररूपेण च तपसा समाननिर्जरात्वप्रसक्तौ तद्विशेषप्रतिपादनार्थं प्रस्तुतमेवेदं सूत्रमभिधातुं। कुतः पुनः सम्यग्दृष्ट्यादयोऽसंख्येयगुणनिर्जरा क्रमाद्भवंतीत्याह—

सम्यग्दृष्ट्यादयः संत्यसंख्येयगुणनिर्जराः। क्रमादत्र तथा शुद्धेरसंख्येयगुणत्वतः ॥ १ ॥

प्रथमं सम्यक्त्वादिप्रतिलंभे अध्यवसायविशुद्धिप्रकर्षादसंख्येयगुणनिर्जरत्वं दशानां। प्रथमं हि भव्यस्योपशमसम्यक्त्वं तदावरणे वेदकसम्यक्त्वक्षायिकसम्यग्दर्शनप्रापकत्वादयः सुप्रसिद्धास्तत्र प्रतिलब्धा-

व्यवसायविशुद्धिप्रकर्षाद्स्थानामपि क्रमादसंख्येयगुणनिर्जरत्वमुपपद्यते । क्षपक इत्यसाधुरन्वाख्यानाभावादिति चेन्न, चशब्देन मित्संज्ञोपलब्धेः । क्षै जै षै क्षये इत्यस्य कृतात्वस्य णौ पुकि कृते जनी-जृष्-क्नसु-रञ्जोऽमन्ताश्चेति चशब्देन मित्संज्ञोपलब्धेर्ह्रस्वत्वात् साधुरेव क्षपकशब्द इत्यर्थः ॥

अथ तपोभाजां संयतानां परस्परं गुणविशेषाद्भेदेपि नैगमनयान्नैर्ग्रंथ्यसाम्यमादर्शयन्नाह;—

## पुलाकबकुशकुशीलनिर्ग्रंथस्नातका निर्ग्रंथाः ॥ ४६ ॥

अपरिपूर्णव्रता उत्तरगुणहीनाः पुलाकाः, ईषद्विशुद्धिपुलाकसादृश्यात् । अखंडितव्रताः शरीरसंस्कारर्द्धिसुखयशोविभूतिप्रवणा बकुशाः, छेदशबलयुक्तत्वात् । बकुशशब्दो हि शबलपर्यायवाचीह । कुशीला द्विविधाः प्रतिसेवनाकषायोदयभेदात् । कथंचिदुत्तरगुणविराधनं प्रतिसेवना ग्रीष्मे जंघाप्रक्षालनवत्, संज्वलनमात्रोदयः कषायोदयस्तेन योगात् मूलोत्तरगुणभृतोपि प्रतिसेवनाकुशीलाः कषायकुशीलाश्चोच्यंते । उदके दंडराजिवत्संनिरस्तकर्माणोंऽतर्मुहूर्तकेवलज्ञानदर्शनप्रापिणो निर्ग्रंथाः । प्रक्षीणघातिकर्माणः केवलिनः स्नातकाः, स्नातं वेदसमाप्ताविति स्वार्थिके के निष्पन्नः शब्दः । कुत एते निर्ग्रंथाः पंचापि मता इत्याह;—

पुलाकाद्या मताः पंच निर्ग्रंथा व्यवहारतः । निश्चयाच्चापि नैर्ग्रंथ्यसामान्यस्याविरोधतः ॥१॥
वस्त्रादिग्रंथसंपन्नास्ततोन्ये नेति गम्यते । बाह्यग्रंथस्य सद्भावे ह्यंतर्ग्रंथो न नश्यति ॥ २ ॥
ये वस्त्रादिग्रहेप्याहुर्निर्ग्रंथत्वं यथोदितं । मूर्च्छानुद्भूतितस्तेषां स्त्र्याद्यादानेपि किं न तत् ॥ ३॥
विषयग्रहणं कार्यं मूर्छा स्यात्तस्य कारणं । न च कारणविध्वंसे जातु कार्यस्य संभवः ॥ ४ ॥
विषयः कारणं मूर्छा तत्कार्यमिति यो वदेत् । तस्य मूर्छोदयोऽसत्त्वे विषयस्य न सिद्ध्यति ॥५॥
तस्मान्मोहोदयान्मूर्छा स्वार्थे तस्य ग्रहस्ततः । स यस्यास्ति स्वयं तस्य न नैर्ग्रंथ्यं कदाचन ॥६

कश्चिदाह—प्रकृष्टाप्रकृष्टगुणानां निर्ग्रंथत्वाभावश्चारित्रभेदात् गृहस्थवदिति तं प्रत्याह—न च, दृष्टत्वाद्ब्राह्मणशब्दवत् । न हि जात्याचाराध्ययनादिभेदाद्भिन्नेषु ब्राह्मणत्वं विरुध्यते, संग्रहव्यवहारापेक्षत्वात् निश्चयनयादेव समग्रगुणेषु तद्व्यपदेशसिद्धेः । किं च, दृष्टिरूपसामान्यात् सर्वेषां निर्ग्रंथता न विरुध्यते । भग्नव्रते वृत्तावतिप्रसंग इति चेन्न, रूपाभावात् । निर्ग्रंथरूपं हि यथाजातरूपमसंस्कृतं भूषावेशायुधविरहितं गृहस्थेषु न संभवतीति । ( अन्यस्मिन् सरूपेतिप्रसंग इति चेन्न, दृष्ट्यभावात् ) ॥

तेषां पुलाकादीनां भूयोपि विशेषप्रतिपत्त्यर्थमिदमाह;—

## संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपादस्थानविकल्पतः साध्याः ॥ ४७ ॥

........................................................................................................

........................................................................................................

........................................................ ॥

इति नवमाध्यायस्य द्वितीयमाह्निकम् ।

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे नवमोऽध्यायः समाप्तः ॥ ९ ॥

---

१ [illegible]



## अथ दशमोऽध्यायः ॥ १० ॥

इदानीं मोक्षस्य स्वरूपाभिधानं प्राप्तकालं तत्प्राप्तिः केवलज्ञानावाप्तिपूर्विकेति केवलज्ञानोत्पत्तिकारणमुच्यते;—

### मोहक्षयात् ज्ञानदर्शनावरणांतरायक्षयाच्च केवलम् ॥ १ ॥

............................................................................................................

............................................................................................................

............................................................................................................

.................................................. ॥

कस्माद्धेतोर्मोक्षः किंलक्षणश्चेत्यत्रोच्यते;—

### बंधहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥ २ ॥

............................................................................................................

............................................................................................................

............................................................................................................

.................................................. ॥

तस्य कर्मणः सद्बंधोदयोदीरणव्यवस्थाग्रहणं तत्कृतविभागो गुणस्थानापेक्षः प्रवचनान्नेयः ॥

किं द्रव्यकर्मणामेव मोक्षः स्यादुत भावकर्मणामपीत्याशंकायामिदमाह;—

### औपशमिकादिभव्यत्वानां च ॥ ३ ॥

भव्यत्वग्रहणमन्यपारिणामिकनिवृत्त्यर्थं, तेन जीवत्वादेरव्यावृत्तिः सर्वतः सर्वदा प्रसिद्धा भवति । कस्मादौपशमिकादिक्षयान्मोक्ष इत्याह;—

तथौपशमिकादीनां भव्यत्वस्य च संक्षयात् । मोक्ष इत्याह तद्भावे संसारित्वप्रसिद्धितः ॥ १ ॥
न त्वौपशमिके भावे क्षायोपशमिकेपि च । भावेत्रौदयिके पुंसोऽभावोस्तु क्षायिके कथं ॥ २ ॥

अत्र समाधीयते;—

सिद्धिः सव्यपदेशस्य चारित्रादेरभावतः । क्षायिकस्य न सत्यस्मिन् कृतकृत्यत्वनिर्वृतिः ॥ ३ ॥
न चारित्रादिरस्त्यस्ति सिद्धानां मोक्षसंक्षयात् । सिद्धा एव तु सिद्धास्ते गुणस्थानविमुक्ततः ॥ ४

नन्वेवं केवलदर्शनादीनामपि क्षायिकभावानां मोक्षे क्षयः प्रसज्यत इत्यारेकायामपवादमाह;—

### अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥

अन्यत्रशब्दोयं परिवर्जनार्थस्तदपेक्षः सिद्धत्वेभ्य इति विभक्तिनिर्देशः । अन्यत्र [illegible]भ्यां

सर्वे योधाः पराङ्मुखाः' इति यथा । अन्यतन्मुक्तमोक्षे तद्विज्ञानमिति चेन्न, भवनांतस्यापि प्रमोक्षे तद्-भेदात् । अनंतवीर्यादिनिवृत्तिप्रसंग इति चेन्न, अत्रैवांतर्भावात् । अनंतवीर्यहीनस्यानंतावबोधवृत्त्यभा-वात् सुखस्य ज्ञानसमवायित्वात् । बंधस्याव्यवस्था अधादिमदिति चेन्न, मिथ्यादर्शनाद्युच्छेदे कार्यकारण-तत्क्षयात् । पुनः प्रवर्तनप्रसंगो जानतः पश्यतश्च कारुण्यादिति चेन्न, सर्वास्रवपरिक्षयात् । वीतरागे स्नेहपर्यायस्य कारुण्यस्यासंभवाद्भक्तिस्पृहादिवत् । अकस्मादिति चेदनिर्मोक्षप्रसंगः सतो हेतुकस्य नित्य-त्वापत्तेर्विनाशायोगात् । मुक्तस्य स्थानवत्त्वात् पात इति चेन्न, अनास्रवत्वात् । सास्रवस्य यानपात्रादेः पातदर्शनात्, गौरवाभावाच्च तस्य न पातस्तालफलादेः सति गौरवे वृन्तसंयोगाभावात्पतनप्रसिद्धेः । ननु महापरिमाणानामल्पीयस्याधारे मोक्षक्षेत्रे परस्परोपरोध इति चेन्न, अवगाहशक्तियोगात् नानाप्रदीपम-णिप्रकाशादिवत् । तत एव जन्ममरणद्वंद्वोपनिपातव्याबाधाविरहात् परमसुखिनः । तत्सुखस्य नास्त्युप-मानमाकाशपरिमाणवत् । मुक्तानामनाकारत्वादभाव इति चेन्नातीतानंतरशरीराकारानुविधायित्वात् गत-सिक्थकमूषागर्भवत् । मुक्तानामशरीरत्वे तदभावाद्विसर्पणप्रसंग इति चेत् न, कारणाभावात् । कुतः कार-णात् संहरणविसर्पणे संसारिणः स्यातामिति चेत्, नामकर्मसंबंधात् संहरणविसर्पणधर्मत्वं प्रदीपे प्रका-शवत् । नात्मनः संहरणविसर्पणवत्त्वे साध्ये प्रदीपो दृष्टांतः श्रेयान् मूर्तिमद्वैधर्म्यादिति चेन्न, उभय-लक्षणप्राप्तत्वात् । दृष्टांतस्य हि लक्षणं साध्यधर्माधिकरणत्वं साधनधर्माधिकरणत्वं च । तत्र संहरणविस-र्पणधर्मकत्वस्य साध्यस्याधिष्ठानपरिमाणानुविधायित्वस्य साधनस्य च प्रदीपे सद्भावात् स दृष्टांतः स्यादेव जीवस्य चामूर्तमूर्तत्वोभयलक्षणयुक्तत्वात् न मूर्तिमद्वैधर्म्यमस्ति यतोयं दृष्टांतो न स्यात् । "बंधं प्रत्ये-कत्वं लक्षणतो भवति तस्य नानात्वं । तस्मादमूर्तिभावो नैकांताद्भवति जीवस्य ॥" इति वचनात् कथं-चिन्मूर्तिमत्त्वस्यापि प्रसिद्धेः । नामकर्मसंबंधप्रसंगः प्रदीपस्येति चेन्न, तस्य दृष्टांतत्वेनाविवक्षितत्वात् साधनधर्मत्वानभिप्रायात् स्वाधिष्ठानपरिमाणानुविधायित्वस्य च साधनधर्मस्य तत्र भावात् । शरीरं हि जीवस्याधिष्ठानं प्रदीपस्य तु गृहं तत्परिमाणानुविधानमुभयोरस्तीति नोपालंभनः । शरीरपरिमाणानुविधा-यित्वं साधनं प्रदीपे तस्यासत्त्वात् । नापि गृहपरिमाणानुविधायित्वं तस्यात्मन्यभावात् । तत इदमुच्यते— संसारी जीवः प्रदेशसंहरणविसर्पणधर्मकः स्वाधिष्ठानपरिमाणानुविधायित्वात् प्रदीपप्रकाशवत् । न हि मुक्तात्मा स्वाधिष्ठानपरिमाणानुविधायी तस्याशरीराधिष्ठानस्याभावात् । पूर्वानंतरशरीरपरिमाणं तु यदनु-कृतं तत्परित्यागकारणस्य नामकर्मसंबंधिनिबंधनशरीरांतरस्याभावान्न विसर्पणं मुक्तस्य, यतो लोकाका-शपरिमाणत्वापत्तिः । ननु संहरणविसर्पणस्वभावस्यात्मनः प्रदीपवदेवानित्यत्वप्रसंग इति चेन्न, तावन्मा-त्रस्य विवक्षितत्वात् चंद्रमुखीवत् । संहरणविसर्पणस्वभावत्वमात्रं विवक्षितं चंद्रमुखी प्रियदर्शनवत् । सर्वसाधर्म्ये दृष्टांतस्यापह्नवात् । सर्वथाऽभावो मोक्षः प्रदीपवदिति चेन्न, साध्यत्वात् । प्रदीपेपि निर-न्वयविनाशस्याप्रतीतेः तस्य तमःपुद्गलभावेनोत्पादाद्दीपपुद्गलभावेन विनाशात् पुद्गलजातेरमुक्तत्वात् । दृष्टत्वाच्च निगलादिवियोगे देवदत्ताद्यवस्थानवत् । न सर्वथा मोक्षावस्थायामभावः । यत्रैव कर्मविप्र-मोक्षस्तत्रैवावस्थानमिति चेन्न, साध्यत्वात् । यो यत्र विप्रमुक्तः स तत्रैवावतिष्ठत इति सिद्धं, देशांतरगतिदर्शनात् । निगलादिविनिर्मुक्तस्य गतिकारणसद्भावाद्देशांतरगतिदर्शनमिति चेत्, निःशेषकर्म-बंधनविप्रमुक्तस्यापि गतिनिमित्तस्योर्ध्वगज्यास्वभावस्य भावात् देशांतरे गतिरस्तु । तथैवं—

मोक्षः केवलसम्यक्त्वज्ञानदर्शनसंक्षयात् । सिद्धत्वसंक्षयाच्चेति त्वन्यकेवलादिवद्भवेत् ॥ १ ॥
एतैः सह विरोधस्याभावान्मोक्षस्य सर्वथा । स्वं सम्यक्त्वादेशैव व्यपदेशकारणत्वतः ॥ २ ॥
सिद्धत्वं केवलादिभ्यो विशिष्टं तेषु सत्स्वपि । कर्मोदयनिमित्तस्यासिद्धत्वस्य क्षयोद्भवः ॥ ३ ॥

ततः सकलकल्मषसंततिसंसक्तिविनिर्मुक्तिरेव स्वात्मेति समाम्नायते युक्तिशास्त्राविरुद्धवचसः सूरयो भगवंतस्तस्य स्वात्मनः प्राप्तिः परा निर्वृत्तिरिति निःसंदिग्धं, तेन स्वविशेषगुणव्यावृत्तिर्मुक्तिश्चैतन्यमात्रस्थितिर्वा अन्यथा वा वदंतोपाकृताः, प्रमाणव्याहतत्वादिति निवेदयति;—

स्वात्मांतर्बहिरंगकल्मषततिव्यासक्तिनिर्मुक्तता
जीवस्येति वदंति शुद्धधिषणा युक्त्यागमान्वेषिणः ।
प्राप्तिस्तस्य तु निर्वृतिः परतरा नाभावमात्रं न वा
विश्लेषो गुणतोन्यथा स्थितिरपि व्याहन्यमानत्वतः ॥ ४ ॥

इति दशमाध्यायस्य प्रथममाह्निकम् ।

---

## तदनंतरमूर्ध्वं गच्छत्यालोकांतात् ॥ ५ ॥

तद्ग्रहणं मोक्षस्य प्रतिनिर्देशार्थं, आङभिविध्यर्थः । एतदेव समभिधत्ते;—

तच्छब्दाद्गृह्यते मोक्षः सन्निधानान्यसंग्रहः । सामर्थ्यादिति तस्यैवानंतरं तदनंतरं ॥ १ ॥
गच्छतीति वचःशक्तेर्मुक्तिदेशे स्थितिच्छिदा । ऊर्ध्वमित्यभिधानात्तु दिगंतरगतिच्युतिः ॥२॥
आलोकांतादिति ध्वानादालोकाकाशगामिता ।

मुक्तिश्च इति स्वयं पक्षनिर्देशः·········हेतुनिर्देशस्तर्हि कर्तव्य इत्याह;—

## पूर्वप्रयोगादसंगत्वाद्बंधच्छेदात्तथा गतिपरिणामाच्च ॥ ६ ॥

एतच्च हेतुचतुष्टयं कथं गमकमित्याह;—

पूर्वस्याद्येन वाच्येन प्रोक्तं हेतुचतुष्टयं । साध्येन व्याप्तमुन्नेयमन्यथानुपपत्तितः ॥ १ ॥

अत्रैव दृष्टांतप्रतिपादनार्थमाह;—

## आविद्धकुलालचक्रवद्व्यपगतलेपालाबुवदेरंडबीजवदग्निशिखावच्च ॥ ७ ॥

किमर्थमिदमुदाहरणचतुष्टयमुक्तमित्याह;—

आविद्धेत्यादिना दृष्टं सद्दृष्टांतचतुष्टयं । बहिर्व्याप्तिरपीष्टेह साधनत्वप्रसिद्धये ॥ १ ॥

हेतुदृष्टांतानां यथासंख्यमभिसंबंधः । कथमित्याह—

ऊर्ध्वं गच्छति मुक्तात्मा तथा पूर्वप्रयोगतः । यथाविद्धं कुलालस्य चक्रमित्यत्र साधनं ॥ २ ॥
नासिद्धं मोक्तुकामस्य लोकाग्रगमनं प्रति । प्रणिधानविशेषस्य सद्भावाद्धूरिशः स्फुटं ॥ ३ ॥
न चानैकांतिकं तत्स्याद्विरुद्धं वा विपक्षतः । व्यावृत्तेः सर्वथा नेष्टविघातकृदिदं ततः ॥ ४ ॥
असंगत्वाद्यथालाबूफलं निर्गतलेपनं । बंधच्छेदाद्यथैरंडबीजमित्यप्यतो गतं ॥ ५ ॥
ऊर्ध्वगज्यास्वभावत्वादग्निज्वाला यथेति च । दृष्टांतेपि न सर्वत्र साध्यसाधनशून्यता ॥ ६ ॥

असंगत्वबंधच्छेदयोरर्थाविशेषादनुवादप्रसंग इति चेन्नार्थान्यत्वात् । बंधस्यान्योन्यप्रवेशे सत्यविभागेनावस्थानरूपत्वात्, संगस्य च परस्य प्राप्तिमात्रत्वात् । नोदाहरणमलाबूः मारुतादेशादिति चेन्न, तिर्यग्गमनप्रसंगात् तिर्यग्गमनस्वभावत्वान्मारुतस्य । नन्वेवमूर्ध्वगतिस्वभावस्यात्मन ऊर्ध्वगत्यभावोपि बद्धा-

कर्मसंगोऽग्नेरौष्ण्यवत्, तदभावेऽभाववदिति चेन्न, गत्यंतरनिवृत्त्यर्थत्वात् तदूर्ध्वगतिस्वभावस्य ऊर्ध्वज्वलनवद्वा तद्भावे नाभावः । वेगवद्द्रव्याभिघातादनलस्योर्ध्वज्वलनाभावेपि तिर्यग्ज्वलनसद्भावदर्शनात् ।

नन्वेवं मुक्तस्य लोकात्परतः कुतो नोर्ध्वगतिरित्याह;—

## धर्मास्तिकायाभावात् ॥ ८ ॥

कः पुनर्धर्मास्तिकाय इत्याह;—

उक्तो धर्मास्तिकायोऽत्र गत्युपग्रहकारणं । तस्याभावाच्च लोकाग्रात्परतो गतिरात्मनः ॥ १ ॥
एवं निःशेषमिथ्याभिमानो मुक्तौ निवर्तते । युक्त्यागमबलाच्चस्याः स्वरूपं प्रति निर्णयात् ॥२॥

अथ किमेते मुक्ताः समानाः सर्वे किं वा भेदेनापि निर्देश्या इत्याशंकायामिदमाह;—

## क्षेत्रकालगतिलिंगतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनांतरसंख्याल्पबहुत्वतः साध्याः ॥ ९ ॥

केन रूपेण सिद्धाः क्षेत्रादिभिर्भेदैर्निर्देष्टव्या इत्याह;—

सिद्धाः क्षेत्रादिभिर्भेदैः साध्याः सूत्रोपपादिभिः । सामान्यतो विशेषाच्च भावाभेदेपि सत्वयैः॥१
क्षेत्रं स्वात्मप्रदेशाः स्युः सिध्यतां निश्चयाश्रयात् । व्यवहारनयाद्व्योम सकलाः कर्मभूमयः ॥२
मनुष्यभूमिरप्यत्र हरणापेक्षया मता । हृत्वा परेण नीतानां सिद्धेः सूत्रानिवारणात् ॥ ३ ॥
तेषामेकक्षणः कालः प्रत्युत्पन्ननयात्मनः । भूतप्रज्ञापनादेव स्यात्सामान्यविशेषतः ॥ ४ ॥
उत्सर्पिण्यवसर्पिण्योर्जाताः सिध्यंति केचन । चतुर्थकाले पर्यंतभागे काले तृतीयके ॥ ५ ॥
सर्वदा हरणापेक्षा क्षेत्रापेक्षा हि कालभृत् । सर्वक्षेत्रेषु तत्सिद्धौ न विरुद्धा कथंचन ॥ ६ ॥
सिद्धिः सिद्धिगतौ पुंसां स्यान्मनुष्यगतावपि । अवेदत्वेन सा वेदत्रितयाद्वास्ति भावतः ॥ ७ ॥
पुंल्लिंगेनैव तु साक्षाद्द्रव्यतोन्या तथागम- । व्याघाताद्युक्तिबाधाच्च स्यादिनिर्वाणवादिनां ॥८॥
साक्षान्निर्ग्रंथलिंगेन पारंपर्यात्ततोन्यतः । साक्षात्सग्रंथलिंगेन सिद्धौ निर्ग्रंथता वृथा ॥ ९ ॥
सति तीर्थकरे सिद्धिरसत्यपि च कस्यचित् । भवेदव्यपदेशेन चरित्रेण विनिश्चयात् ॥ १० ॥
तथैवैकचतुःपंचविकल्पेन प्रकल्पते । परोपदेशशून्यत्वात्सिद्धौ प्रत्येकबुद्धता ॥ ११ ॥
परोपदेशतः सिद्धो बोधितः प्रतिपादितः । ज्ञानेनैकेन वा सिद्धिर्द्वाभ्यां त्रिभिरपीष्यते ॥१२॥
चतुर्भिः स्वामिमुख्यस्यापेक्षायां नान्यथा पुनः । अवगाहनमुत्कृष्टं सपादशतपंचकं ॥ १३ ॥
चापानामर्धसंयुक्तमरत्नित्रयमप्यथ । मध्यमं बहुधा सिद्धिस्त्रिप्रकारेऽवगाहने ॥ १४ ॥
स्वप्रदेशे नभोव्यापिलक्ष्ये संप्रवर्तते । अनंतरं जघन्येन द्वौ क्षणौ सिध्यतां नृणां ॥ १५ ॥
उत्कर्षेण पुनस्तत्स्यादेतेषां समयाष्टकं । अंतरं समयोस्त्येको जघन्येन प्रकर्षतः ॥ १६ ॥
षण्मासाः सिध्यतां नाना मध्यमं प्रति गम्यतां । एकस्मिन् समये सिध्येदेको जीवो जघन्यतः १७
अष्टोत्तरशतं जीवाः प्रकर्षेणेति विश्रुतं । नाल्पेन बहवः सिद्धाः सिद्धक्षेत्रव्यपेक्षया ॥ १८ ॥
व्यवहारव्यपेक्षायां तेषामल्पबहुत्ववित् । समाल्पे हरणात्सिद्धा जन्मसिद्धसमूहतः ॥ १९ ॥

...सिद्धाः पुनस्तेभ्यः संख्येयगुणतास्मृताः । कर्मभोगधरा वार्धिद्वीपोर्ध्वाधस्तिरोद्भवाः ॥२०॥
...सूर्ध्वसिद्धाः स्युः सर्वेभ्योल्पे परेन्यथा । स्युः संख्येयगुणास्तेभ्योधस्तिर्यग्भिर्भवाः क्रमात् ॥
समुद्रे सर्वतः स्तोका द्वीपे संख्येयसंगुणाः । लवणोदे समस्तेभ्यः स्तोकाः सिद्धा विशेषतः ॥२२॥
कालोदे सागरे जंबूद्वीपे च परिनिर्वृताः । धातकीखंडसद्द्वीपे पुष्करद्वीप एव च ॥ २३ ॥
ते संख्येयगुणाः प्रोक्ताः क्रमशो बहवोन्यथा । प्रत्येतव्याः समासेन यथागममशेषतः ॥२४॥
एक एव तु सिद्धात्मा सर्वथेति यके विदुः । तेषां नानात्मनां सिद्धिमार्गानुष्ठा वृथा भवेत् ॥२५
क्षेत्राद्यपेक्षया चोक्ता संसार्येकत्वमंजसा । एकात्मवादिना चैवं तत्र वाचोऽप्रमाणता ॥२६॥
निःशेषकुमतध्वांतविध्वंसनपटीयसी । मोक्षनीतिरतो जैनी भानुदीप्तिरिवोज्ज्वला ॥ २७ ॥
एवं जीवादितत्त्वार्थाः प्रपंच्य समुदीरिताः । सम्यग्दर्शनविज्ञानगोचराश्चरणाश्रयाः ॥ २८ ॥
ततः श्रेयसी मोक्षमार्गव्याख्या प्रपंचतः । सर्वतत्त्वार्थविधेयं प्रमाणनयशक्तितः ॥ २९ ॥

तदेवं शास्त्रपरिसमाप्तौ परममंगलं निःश्रेयसमार्गमेव मंगलमभिष्टोतुमनाः प्राह;—

जीयात्सज्जनताश्रयः शिवसुधाधारावधानप्रभु-
ध्वस्तध्वांततत्तिः समुन्नतगतिस्तीव्रप्रतापान्वितः ।
प्रोजेज्योतिरिवावगाहनकृतानंतस्थितिर्मानतः
सन्मार्गस्त्रितयात्मकोऽखिलमलप्रज्वालनप्रक्षमः ॥ ३० ॥

इति दशमाध्यायस्य द्वितीयमाह्निकम् ।

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे दशमोऽध्यायः समाप्तः ॥ १० ॥

